यावन्न चालयेद्योगी ह्यक्षसूत्रकरस्थितम् ।
सप्तकोटिजपं कृत्वा हंसस्त्वेवं निवर्तते ॥ १५ ॥

एवं विश्वगतश्चारः प्राणिनां शुभदायकः ।
हंसरूपे स्थिताः प्राणाः प्राणास्तत्त्वैः प्रकीर्तिताः ॥ १६ ॥

हृदये सहजं पद्ममष्टपत्रं सबिन्दुकम् ।
इच्छाशक्तिस्तथा मध्ये दलान्ते कुलदेवताः ॥ १७ ॥

शृङ्गारहास्यकरुणारौद्रवीरभयानकाः ।
बीभत्साद्भुतशान्ताश्चाल्पाष्टौ ? कमले स्थिताः ॥ १८ ॥

कुलदेव्यष्टकोपेतमिच्छाशक्तिर्हृदि स्थिता ।
ऊर्ध्वाकारैः स्थिता ख्यातेन्द्रियैर्बुद्धिरनुक्रमात् ॥ १९ ॥

शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः ।
मनो बुद्धिरहंकारः सत्त्वं रजस्तमस्तथा ॥ २० ॥

कामः क्रोधश्च मोहश्च लोभो हर्षो मदो भयम् ।
विषादश्चाष्टमः प्रोक्त इत्यष्टौ च गुणाः स्मृताः ॥ २१ ॥

क्षुधा तृषा भयं द्वेषो मोहश्चिन्तानुरागकाः ।
जरा मृत्युश्च दोषाश्च विस्मयं जननं तथा ॥ २२ ॥

निद्रा शोकोद्वेग एग हीच्छाशक्तिसमुद्भवाः ।
गुणदोषाः शरीरस्था अष्टादश प्रकीर्तिताः ॥ २३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
कर्मज्ञानोद्भवाधिकारो नाम त्रयोदशं सूत्रम् ॥

---

## (१४) शिवशक्तिब्रह्मज्ञानं चतुर्दशं सूत्रम् ॥

अपराजित उवाच-

कश्चन्द्रश्च कथं सूर्यः कथं ब्रह्मासनं स्मृतम् ।
कथं कामाख्यनिलयोऽञ्जनिलयं कथं विदुः ? ॥ १ ॥

कथं ग्रहणसङ्क्रान्ती कथं कालकलास्तथा ।
काम (य)रूपं कथं प्रोक्तं कामाख्यनिलयः कथम् ॥ २ ॥

विश्वकर्मोवाच-

ब्रह्मरन्ध्रस्थितश्चन्द्रो ह्यग्निमध्ये रविस्तथा ।
कामाख्यनिलयः प्रोक्तश्चन्द्रपीठे च संस्थिता ? ॥ ३ ॥

प्रविष्टा पद्मनालेऽपि सूर्यपीठे लयं गता ।
संस्थिता कामरूपान्ते सूर्येन्दुग्रहणे रता ॥ ४ ॥

रविचन्द्रयुते काले शक्तिः संक्रमते यदा ।
तत्काले ग्रहणं प्रोक्तं संक्रान्तिर्विष्णुसम्भवा ॥ ५ ॥

ग्रहणान्ते पराशक्तिः पद्मतन्तुनिभा स्थिता ।
सृजति स्वेच्छया कामः भूतग्रामं चतुर्विधम् ॥ ६ ॥

कर्मकर्तृमणिर्बन्धुः करहीनोऽपि कर्षति ।
सृजति ज्ञानतस्तद्वच्चक्षुर्हीना जगत्त्रयम् ॥ ७ ॥

भ्रामको (की) भ्रामयेद् बन्धुः करहीनोऽपि भागशः ? ।
सृष्टिमार्गस्थिता शक्तिः करहीना करोति च ॥ ८ ॥

चन्द्रः कोऽपि मणिर्बद्धो नष्टचन्द्रः प्रमुञ्चति ? ।
मुखहीना तथा शक्तिर्वाङ्मयं दर्शयेत् खलु ॥ ९ ॥

अद्रवाऽपि द्रावयति यत्किञ्चित्काञ्चनादिकम् ।
ज्ञानशक्तिस्तथा चैवं निद्रवेत्सृष्टितोऽम्बरम् ॥ १० ॥

अग्नितेजोगुणा यद्वत् सूर्यरश्मिगुणा यथा ।
रवेरिव गुणास्तद्वत् सहजाः शक्तिसंस्थिताः ॥ ११ ॥

निर्गुणाऽपि गुणैर्युक्ता रूपहीनाऽपि रूपिणी ।
संचरेत्पादहीनाऽपि कर्णहीना शृणोति च ॥ १२ ॥

जिघ्रति घ्राणहीनाऽपि वक्त्रहीनाऽपि जल्पति ।
चक्षुर्हीना लोकते च त्रैलोक्यं च करस्थितम् ॥ १३ ॥

एवं सा सर्वरूपस्था ह्यमूर्ता मूर्तिचारिणी ।
पराशक्तिरितिख्याता ह्येका त्रैलोक्यनायिका ॥ १४ ॥

एषा सा परमा शक्तिरिच्छाज्ञानक्रियात्मिका ।
पृथगेकाष्टकैर्युक्ता ह्यज्ञानां ज्ञानदा स्मृता ॥ १५ ॥

अनेकभाविकं कर्म दग्धबीजमिवाम्भसि ।
भविष्यदपि संरुद्धं ज्ञानकं भुवि गोचरम् ॥ १६ ॥

सहजं भोगजं कर्मानर्गलं भविष्यत्तथा ।
शक्तित्रयविभागेन दद्यात् सर्वं शुभाशुभम् ॥ १७ ॥

कारणे च क्रियाशक्तिरिच्छाशक्तिः प्रवर्तते ।
ज्ञानशक्तिस्तथाचारे संचरेत्सचराचरम् ॥ १८ ॥

सर्वाङ्गसन्धिसंचारे नखकेशाग्रमध्यके ।
व्यापिनी संस्थिता देहे रेणुमात्रस्वरूपिणी ॥ १९ ॥

बीजरूपा तु सा देवी जगन्माता व्यवस्थिता ।
तां ज्ञात्वा मुच्यते पाशैस्सर्वज्ञस्तु नरो भवेत् ॥ २० ॥

क्रियेच्छयोस्तथा ज्ञाने त्रिकरूपे व्यवस्थिता ।
प्रातर्यस्तु प्रबुद्धात्मा विन्द्यात् शक्तिपतिं तु सः ॥ २१ ॥

एवं शारीरिकं चक्रं शक्तित्रयसमन्वितम् ।
शक्त्यन्ते च शिवं विंद्याद्यो दशान्ते कलैर्विना ? ॥ २२ ॥

एकः शिवः परं ब्रह्मपदमेव निराश्रयम् ।
पश्येत् संसारबीजं यो रम्भास्तम्भपुटं यथा ॥ २३ ॥

यस्य शिवशक्तिज्ञानं तस्य मुक्तिर्विधीयते ।
शक्तित्रयविमुक्तस्य भुक्तिर्मुक्तिविमोचनम् ॥ २४ ॥

दर्पणेषु यथा छाया पिण्डः पिण्डाकृतिर्भवेत् ।
तथा सर्वगतः शम्भुर्दृश्यते जलचन्द्रवत् ॥ २५ ॥

स्वयं देवी स्वयं देवः स्वयं शिष्यः स्वयं गुरुः ।
स्वयं ध्यानं स्वयं धाता स्वयमेव परात्परम् ॥ २६ ॥

यत्र यत्र मनो याति ( यायात् ) तत्र तत्र परः शिवः ।
वेदो वेद्यं जपो मौनमाचारः प्रार्थना क्रिया ॥ २७ ॥

व्रतं स्नानं तीर्थयात्रा चोपवास्यं त्रिरात्रिकम् ।
इत्येतदाश्रयस्थानं मुक्तिस्थानं निराश्रयम् ॥ २८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
शिवशक्तिब्रह्मज्ञानाधिकारो नाम चतुर्दश सूत्रम् ॥

---

## (१५) गीतामङ्गावोऽपरेऽपराजितबोधनार्थं पञ्चदश सूत्रम् ॥

---

अपराजित उवाच–

बीजरूपा कथं जाता वृद्धियाता परेश्वर ।
क्रियाशक्तिः कथं भूता बीजयोनिरथाम्भसि ॥ १ ॥

गुरुमार्गाः कथं प्रोक्ताः कुलाकुलोभयोद्भवाः ? ।
कथयस्व महाभाग मम भ्रान्तिहरं प्रभो ॥ २ ॥

विश्वकर्मोवाच–

वटो यथा च बीजस्थस्तथा शुक्रगता तनुः ।
संघाटे काञ्चनं यद्वत् क्रियादीपेन दृश्यते ॥ ३ ॥

क्रियामाध्यात्मिकीं विद्यात् क्रियाशक्तेरनुक्रमात् ।
देहस्थं दीपकं दिव्यं शक्तिरूपेण बोधितम् ॥ ४ ॥

तेन बोधितमात्रेण पश्यन्ति भुवनत्रयम् ।
त्रैलोक्यदीपकं दिव्यं तत्त्वोद्योतकरं परम् ॥ ५ ॥

मूढात्मानो न बुध्यन्ति गुरुमार्गविवर्जिताः ।
गुरुवक्त्रे स्थितं तत्त्वं प्राप्यते तत्प्रसादतः ॥ ६ ॥

तस्मात्सर्वप्रयत्नेन गुरोराराधनं कुरु ।
गुरुपूजा प्रकर्तव्या गन्धपुष्पाक्षतादिभिः ॥ ७ ॥

पुष्पधूपैश्च नैवेद्यैर्वस्त्रालङ्कारभूषणैः ।
गृहक्षेत्रपुरग्रामैर्गजाश्वशयनासनैः ॥ ८ ॥

तस्मात् पूजा प्रकर्तव्या ह्यात्मना च धनेन च ।
गुरुलोपो न कर्तव्यः स्वच्छन्दो यदि वा भवेत् ॥ ९ ॥

यावत्कालं भवेद्देहस्तावदेव गुरुं स्मरेत् ।
गुरुर्माता पिता देवो गुरुर्ज्ञानं कुलाकुलम् ॥ १० ॥

यस्यैवं संस्थितो भावस्तस्य देवसमं कुलम् ।
आसनं शयनं यानं मणिकाञ्चनभूषणम् ॥ ११ ॥

साधकेन न कर्तव्यं गुरो( र्वै )चाधिकं ननु ।
गुरोः शय्यासने यानं पादुकोपानहौ पदम् ॥ १२ ॥

स्नानोदकं तथाच्छायां लङ्घयेन्न कदाचन ।
कर्मणा मनसा वाचा यैश्च नाराधितो गुरुः ॥ १३ ॥

तस्माद् ज्ञानं महारत्नमत्यन्तं गूढतां गतम्
योगिनी शाकिनी कर्म ? यस्य भक्तिस्तु निश्चला ॥ १४ ॥

तस्य प्रवर्तते शीघ्रं निर्वाणं परमं पदम् ।
इत्थं समययुक्त्या च गुरुभक्तो यतेन्द्रियः ॥ १५ ॥

दृढचित्तेन चादद्याद् ज्ञानं त्रैलोक्यपूजितम् ।
मूलसूत्रमहारत्नं रत्नपीठविनिर्गतम् ॥ १६ ॥

सारभूतं महातत्त्वं मुक्तिमार्गप्रकाशकम् ।
आदेयं गुरुभक्ताय वज्रकपाटमुत्तमम् ॥ १७ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां गीतासद्भावोऽपरेऽपराजितबोधनाधिकारो नाम पञ्चदश सूत्रम् ॥

---

## (१६) सत्त्वरजस्तमः षोडश सूत्रम् ॥

अपराजित उवाच-

सत्त्वं रजस्तमः कीदृक् कथं तेषां समुद्भवः ।
संसारस्य समस्तस्य जननी जगमालिनी ? ॥ १ ॥

समुद्भूता कथं देव संसारसृष्टिमालिका ।
सत्त्वं रजस्तमश्चैवं कथयस्व प्रसादतः ॥ २ ॥

विश्वकर्मोवाच-

उत्पत्तिर्जगतो हेतुर्निर्मिता किल विष्णुना ।
स्रष्ट्रा वै सर्वशिल्पानां शङ्खशार्ङ्गादिधारिणा ॥ ३ ॥

तत्रोद्भूतं रजः सत्त्वं तमश्चापि तृतीयकम् ।
तदुद्भवा च सृष्टिस्तु जनसन्तानसन्ततिः ॥ ४ ॥

रजो ब्रह्मा तमो विष्णुः सत्त्वं चैव महेश्वरः ।
ततस्त्रिकं समुत्पन्नं संसारसृष्टिकोद्भवम् ॥ ५ ॥

चतुरशीतिलक्षाणि जीवयोनिरनेकधा ।
तमसस्तामसी शक्तिस्तपस्तेजोविवर्द्धिनी ॥ ६ ॥

रजसो राजसी ख्याता रजो ज्ञाने ब्रह्मात्मजा ।
माया मोहश्च तत्कार्यं वैष्णवी मोहशालिनी ॥ ७ ॥

सत्त्वाच्च सात्त्विकी शक्तिः सत्त्वज्ञाने शिवात्मजा ।
संसारप्रीतिमुक्तानां मोक्षदा सत्त्वसात्त्विकी ॥ ८ ॥

तमः पिता रजो माता गुरुः सत्त्वं प्रतिष्ठितम् ।
एवं प्रवर्तते सृष्टिः संसारे मोहशालिनी ॥ ९ ॥

रजो रक्तं समाख्यातं तमः शुक्रं प्रतिष्ठितम् ।
सत्त्वं पवन इत्युक्तं संसारे सृष्टिमालिका ॥ १० ॥

रजः सूर्यः समाख्यातस्तमश्चैवं तु चन्द्रमाः ।
सत्त्वं पवनमित्याहुः संसारमोघमालिका ॥ ११ ॥

रजः पृथ्वी समाख्याता तमश्चाकाशसम्भवम् ।
सत्त्वं पवनमित्युक्तं वर्तते मोघमालिनी ॥ १२ ॥

रज आपस्तथा ख्याता तमस्तेजः समुद्भवम् ।
सत्त्वं मारुतमित्याहुस्त्रिभिः संसारसम्भवः ॥ १३ ॥

इच्छाशक्ती राजसी स्यात् तामसी तु क्रियात्मिका ।
सात्त्विकी ज्ञानशक्त्याख्या शम्भुसंसारसम्भवाः ॥ १४ ॥

**शक्तिरूपे रजः ख्यातं शिवरूपे तमो मतम् ।**
**बीजरूपे स्थितं सत्त्वं त्रिभिः संसारसम्भवः ॥ १५ ॥**

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां सत्त्वरजस्तमोऽधिकारो नाम षोडश सूत्रम् ॥

---

## (१७) ग्रहादिध्रुवमण्डलं सप्तदश सूत्रम् ॥

अपराजित उवाच–

कथं दिनं कथं रात्रिः संसारसृष्टिकोद्भवः ।
केन साऽऽक्रमते चेत्थं चन्द्रसूर्यभ्रमणे रता ॥ १ ॥

नक्षत्राणि ग्रहाश्चैव ध्रुवाद्याश्च समस्तकाः ।
तेषां मृत्युः कथं प्रोक्तः कथयस्व प्रसादतः ॥ २ ॥

विश्वकर्मोवाच–

तेजसः काश्यपस्यार्कचन्द्रमृत्युसमुद्भवः ।
शिवशक्तिसमायोगात् संसारसृष्टिसम्भवः ॥ ३ ॥

शिवः सूर्यः शशी शक्तिः संसारसृष्टिकोद्भवः ।
दिवाकरः शिवो भूत्वा शशी चैव निशाकरः ॥ ४ ॥

दिवारात्रिसमायोगो योगश्च चन्द्रसूर्ययोः ।
तेजसो मृत्युसंयोगः संयोगः सृष्टिकारकः ॥ ५ ॥

सूर्यवंशोद्भवाश्चैव चन्द्रवंशोद्भवा नृपाः ।
प्रवर्तते मही राज्यं नृपश्च पृथिवीपतिः ॥ ६ ॥

सूर्यवंशे पृथूराजा बुधः शशिकुलोद्भवः ॥

सूर्यवंशसमृद्धौ तु क्षीयते सोमवंशकः ।
सोमवंशसमृद्धौ च क्षीयते सूर्यवंशकः ॥ ७ ॥

एकोत्तरशतं यावत् क्षीयेते वंशकावुभौ ।
पृष्ठोरुस्पर्शभूतश्च संप्रवेत द्वंसाधिपः ? ॥ ८ ॥

ब्रह्मपुत्रो मरीचिश्च तज्जातः कश्यपो मुनिः ।
सूर्यो जातः कश्यपाच्च सूर्यपुत्रो मनुस्तथा ॥ ९ ॥

मनोश्चेक्ष्वाकुरुत्पन्नस्ततश्च कुक्षिसम्भवः ।
कुक्षिपुत्रो विकुक्षिश्च विकुक्षेर्वेनसम्भवः ॥ १० ॥

वेनो नाम महाराजो महावीर्यो महाबलः ।
शरीरमथनात्तस्य तथा पृथुः समुद्भवः ॥ ११ ॥

पृथुश्चैवं समुद्भूतस्तथा ख्यातः कुलाधिपः ।
रामश्च रघुवंशे ऽभूत् सूर्यवंशे महाबलः ॥ १२ ॥

सूर्यपुत्रः शनिर्जातः केतुकश्च समुद्भवः ? ।
अष्टोत्तरशतं चैव केतुकश्च ब्रह्मकोद्भवः ? ॥ १३ ॥

शम्भुतेजोभवं चोर्ध्वं दृश्यते ज्ञानचक्षुषा ।
नक्षत्रयोगा राशिश्च तिथयः करणादिकम् ॥ १४ ॥

तारकालिङ्गमित्युक्तं मातृमण्डलसम्भवम् ।
वैष्णवे च पदे चैव भ्राम्यतीत्थं ध्रुवावृतम् ॥ १५ ॥

दिवाकरः शशाङ्कश्च भौमश्च बुध एव च ।
त्रिदशाचार्यशुक्रौ च शनिश्च राहुकेतुकौ ॥ १६ ॥

सूर्याद्यं च समं त्वेवं ध्रुवग्रहादिकं तथा ।
भ्राम्यति दक्षिणावर्तमचाल्यं ध्रुवसत्पदम् ॥ १७ ॥

प्रदक्षिणं तथर्क्षाणां सम्पूर्णा सप्तविंशतिः ।
ऋक्षमध्ये यथा राशौ ग्रहास्तिथ्यादयस्तथा ॥ १८ ॥

चारः क्रामति योगेन मेरुमावृत्य दक्षिणम् ।
मण्डलानि पृथुत्वं च बिम्बमानं च कथ्यते ॥ १९ ॥

क्षारार्णवोदकं भूमौ कथ्यते ग्रहमण्डलम् ।
योजनैर्व्योमसङ्ख्यातं कथयामि समासतः ॥ २० ॥

चतुर्दशलक्षाणां च योजनानां तु सङ्ख्यया ।
ध्रुवचक्रसमुत्थाध्वा चक्षुर्ज्ञानेन व्योम्नि च ॥ २१ ॥

सप्तलक्षार्धमादित्यं सहस्राणां द्विसप्ततिः ।
भूमिक्षारार्णवोर्ध्वे च योजनान्यर्कमण्डलम् ॥ २२ ॥

तत्परं चन्द्रमण्डलं पञ्चाशत्सहस्रैः स्थितम् ।
अष्टाशीतिसहस्राणि सोमोर्ध्वे भौमसंस्थितिः ॥ २३ ॥

लक्षं त्रिषष्टिसहस्राणि भौमोर्ध्वे बुधमण्डलम् ।
चतुर्विंशसहस्राणि बुधोर्ध्वे च बृहस्पतिः ॥ २४ ॥

सूर्योर्ध्वे चैव लक्षार्द्धं शुक्रस्य मण्डलं विदुः ।
शुक्रलोकात्तथा चोर्ध्वं षट्षष्टिभिः सहस्रकैः ॥ २५ ॥

सूर्यतश्च परे ख्यातः सूर्यपुत्रशनैश्चरः ।
सूर्याधः षष्टिसहस्रे राहुमण्डलमास्थितम् ॥ २६ ॥

रवेः समन्तात् केतुश्च रथपृष्ठेऽनुगच्छति ।
शतकोटियोजनानां ब्रह्माण्डस्य प्रमाणकम् ॥ २७ ॥

मेरुर्लिङ्गं समाख्यातं पृथ्वी च जलधारिका ।
वितानं व्योमचाख्यातं लम्बतीत्थमुमापतिः ॥ २८ ॥

ध्रुवमण्डलमुत्पन्नं ब्रह्माण्डाकाररूपकम् ।
तारामण्डलमित्युक्तं कथ्यते तच्च सङ्ख्यया ॥ २९ ॥

सप्तदशार्बुदमेवं लक्षाणां षष्टिरेव च ।
षष्टिश्च तारकायुक्तं सङ्ख्यातं ध्रुवमण्डलम् ॥ ३० ॥

**अरुन्धती विष्णुपदी सप्तर्षयस्तथोत्तमाः ।**
**ध्रुवाद्यं तारकालिङ्गमेतेषां बाह्यतो ध्रुवम् ॥ ३१ ॥**

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
ग्रहादिध्रुवमण्डलाधिकारो नाम सप्तदश सूत्रम् ॥

---

## (१८) ग्रहगतिमानमुहूर्तादिप्रमाणमष्टादश सूत्रम् ॥

अपराजित उवाच–

कथितानि मण्डलानि ध्रुवादेर्ग्रहसङ्ख्यया ।
अतस्तेषां पुनस्त्वेवं बिम्बमानं निबोधय ॥ १ ॥

बिम्बमानगतिश्चैव ग्रहाद्याः क्रमयोगतः ।
भ्रमन्ति दक्षिणावर्ते ह्यध्वनि स्वप्रमाणतः ॥ २ ॥

तिथिसङ्ख्याप्रमाणं च पक्षमासौ तथैव च ।
ऋतुकालं वत्सरांश्च कथयस्व समासतः ॥ ३ ॥

विश्वकर्मोवाच–

बिम्बमानं ततस्तात शृणुचैकाग्रमानसः ।
अनुक्रमेण कथये सूर्यादीनामथोऽधुना ॥ ४ ॥

सूर्यादीनां ग्रहाणां तु कथ्यन्ते बिंबकानि तु ।
वक्तव्यासौ बिम्बमाने कथयामि समासतः ॥ ५ ॥

षट्सहस्रपञ्चशतयोजनैः स्याच्च विस्तरः ।
सूर्यबिम्बप्रमाणं तु विद्युत्कोटिसमप्रभम् ॥ ६ ॥

चतुर्भिश्च सहस्राणां ह्यष्टाशीत्या च योजनैः ।
सोमबिंबप्रमाणं तत् सुधातेजःसमुद्भवम् ॥ ७ ॥

भौमस्य बिम्बमानं तु पृथु योजनविंशतिः ।
बुधस्य बिम्बमानं च विस्तृतं शतयोजनैः ॥ ८ ॥

द्वाचत्वारिंशच्च सार्धं गुरुबिम्बं प्रमाणतः ।
पञ्चसप्ततिः शुक्रस्य शतार्धं पञ्च वै शनैः ॥ ९ ॥

अष्टसहस्रयोजनप्रमाणं राहुमण्डलम् ।
केतोश्च भौमतुल्यं स्यात् कथितं च प्रमाणतः ॥ १० ॥

गतिक्रमं च वक्ष्यामि ध्रुवमेकं प्रदक्षिणम् ।
योजनैश्च गतिस्त्वेवं गम्यते च प्रदक्षिणम् ॥ ११ ॥

निमिषे द्विशतं भानुः ग्लौः सार्धद्विसहस्रकम् ।
त्रयस्त्रिंशदधिकशतयोजनै भौमगतिः ॥ १२ ॥

बुधश्च सूर्यमानेन भ्रमति ध्रुवदक्षिणम् ।
गुरुश्च क्रमते चैव योजनैर्दशपञ्चभिः ॥ १३ ॥

शुक्रसूर्यगतिश्चैव द्विशतं निमिषान्तरे ।
सप्तयोजनत्रिभागं निमिषात्तु शनैश्चरः ॥ १४ ॥

योजनैकादशभी रात्रौश्च निमिषे गतः ।
केतुर्भानोःसमन्ताच्च भ्रमते दक्षिणावृतम् ॥ १५ ॥

आमध्याह्नमुदयतो ह्यष्टधा च दिनार्धकम् ।
चत्वारिंशत्त्वेकहीनं सहस्राण्याद्यसङ्क्रमे ॥ १६ ॥

तदूर्ध्वं च षड्विंशत्या त्वेकत्रिंशत् सदा क्रमः ।
चतुर्विंशतिरूर्ध्वे तु दशपञ्च तथोत्तरे ॥ १७ ॥

अग्रे गतिश्च दशभिः पञ्चभिर्मध्यमाश्रिते ।
त्रिभिः सहस्रैर्मध्याह्ने योजनैर्गतिमादिशेत् ॥ १८ ॥

पूर्वाह्णे च गतिं ज्ञात्वा विपरीता परेऽहनि ।
एवं क्रमः युक्तियोगो ग्रहाणां च गतिस्तथा ॥ १९ ॥

भुक्तिमानं गतिश्चैवं सूर्यादिग्रहमण्डले ।
प्रयुक्तश्च ध्रुवो मध्ये भ्रमते दक्षिणावृतम् ॥ २० ॥

प्रदक्षिणीकृते तस्मिन्नहोरात्रमितिस्मृतम् ।
प्रदक्षिणार्द्धमावृत्ते दृष्टे सूर्ये तथा दिवि ॥ २१ ॥

तथा रात्रिरथाख्याता सूर्ये चादृष्टतां गते ।
तस्यैव षष्टिकांशस्तु प्रोच्यते घटिकाभिधा ॥ २२ ॥

ताभिर्दिनं षष्टिभिश्च मासस्त्रिंशद्दिनैर्भवेत् ।
घटिकाषष्टिपलैर्निमेषः पञ्चदशपलैः ॥ २३ ॥

निमेषषोडशांशस्तु कला कलार्धे लम्बकः ।
लम्बकार्धे लम्बकाक्ष्यो लम्बकार्धे पादैस्त्रिभिः ? ॥ २४ ॥

उभौ करगृहीत अलम्बं त्रुटिशब्दतः ? ।
द्वे घट्यौ च मुहूर्तं स्यात् लग्नं पञ्चघटीभवम् ॥ २५ ॥

सूर्यादि सप्तवाराश्च क्रमेण तिथयस्तथा ।
एवं प्रोक्तं मुहूर्तादि ह्यहोरात्रादिमध्यतः ॥ २६ ॥

क्रमयुक्तिर्विधातव्या कालसङ्ख्यामतः परम् ।

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां ग्रहगतिमान मुहूर्तादिप्रमाणनिर्णयाधिकारेऽष्टादश सूत्रम् ॥

---

## (१९) तिथिमासर्तुकालसंवत्सरो नामैकोनविंशं सूत्रम् ॥

अपराजित उवाच–

कालसङ्ख्या कथं देव ह्यष्टयामादिकं तथा ।
तिथिसंवत्सराद्यं च कथयस्व प्रसादतः ॥ १ ॥

संवत्सराभिधानानि पृथक् चैवं प्रमाणतः ।
कथयस्व प्रसादेन विश्वेश जगतांपते ॥ २ ॥

विश्वकर्मोवाच–

अहोरात्रादितः सङ्ख्या दृष्टे सूर्योदये मता ।
अष्टौ यामाश्च सम्प्रोक्ता अहोरात्रसमुद्भवाः ॥ ३ ॥

जयो विजय आख्यातो महाशङ्कुश्च शङ्कुकः ।
उदयाद्रि समाख्याताश्चत्वारश्च निशापतेः ॥ ४ ॥

अहोरात्रैस्तिथेर्नाम प्रोक्तं नन्दादिपञ्चकम् ।
नन्दा भद्रा जया रिक्ता पूर्णा वै पञ्चमी स्मृता ॥ ५ ॥

पञ्च पञ्च पुनः पञ्च मासार्धे तिथयस्तथा ।
तिथिभिः पञ्चदशभिः पक्षो मासो द्विपक्षतः ॥ ६ ॥

आदौ नन्दादिकश्चैवं कालः स्याद् दशपञ्चभिः ।
नन्दा प्रतिपदा ज्ञेया द्वितीया भद्रिका मता ॥ ७ ॥

तृतीया च जया रिक्ता चतुर्थी सम्प्रकीर्तिता ।
तिथिः पूर्णा पञ्चमी स्यादेवं हि तिथयो मताः ॥ ८ ॥

षष्ठी च सप्तमी चैव ह्यष्टमी नवमी तथा ।
दशम्येकादशी चैव द्वादशी च त्रयोदशी ॥ ९ ॥

चतुर्दशी पौर्णमासी तिथयश्चन्द्रसम्भवाः ।
चन्द्रस्तु षोडशकलस्तिथयो दशपञ्चभिः ॥ १० ॥

शशिनी शान्तिनी चैव लक्ष्मिणी कामिनी तथा ।
पुष्पिणी च शुभा शान्ता चाल्हादा कुमुदा तथा ॥ ११ ॥

शस्याशिनी मानिनी च तथा विद्याविशोधिनी ।
महिषी द्वीपिनी सौम्या चामृता षोडशी तथा ॥ १२ ॥

सितपक्षे वर्द्धते च क्षीयते कृष्णपक्षके ।
पूर्णिमा पूर्णचन्द्रेऽमावास्या क्षीणविधौ स्मृता ॥ १३ ॥

पूर्णमासे उभौपक्षावथ मासाभिधेयकम् ।
कार्तिको मार्गशीर्षश्च पौषो माघोऽथ फाल्गुनः ॥ १४ ॥

चैत्रो वैशाखज्येष्ठौ च ह्याषाढश्चैव श्रावण: ।
भाद्रपद आश्विनश्च मासा एते प्रकीर्तिता: ॥ १५ ॥

कार्तिकाद्या द्वादशस्युर्याभ्यां द्वाभ्यामृतूद्भव: ।
अभिधानानि कथये षड्ऋतूनामनुक्रमात् ॥ १६ ॥

वसन्तग्रीष्मौ वर्षाश्च शरद्धेमन्त एव च ।
शिशिरश्च षड् ऋतवश्चैत्रिकादिद्विमासका: ॥ १७ ॥

द्वौ ऋतू भवत: काल: शीतोष्णवार्षिकात्मक: ।
कार्तिकादिभव: शीतो ग्रीष्म: फाल्गुनत: स्मृत: ॥ १८ ॥

तथाषाढादित: प्रावृट् सर्वबीजहितात्मिका ।
एवं स्यात्त्रिविध: काल: शीतोष्णप्रावृडात्मक: ॥ १९ ॥

कालत्रयं षड्ऋतवो माससङ्ख्यातु द्वादश ।
चतुर्विंशति पक्षाश्च षष्ट्युत्तरशतत्रयम् ॥ २० ॥

दिनानि स्युस्तथा चैवं वर्षं चैव प्रवर्तते ।
इत्यादियुक्तियोगेन प्रोक्त: संवत्सराभिध: ॥ २१ ॥

संवत्सराभिधानानि षष्टि: स्यु: प्रभवादित: ।
प्रभवो विभवश्चैव शुक्लो मोद: प्रजापति: ॥ २२ ॥

अङ्गिरा: श्रीमुखो भावो युवा धाता तथेश्वर: ।
बहुधान्य: प्रमाथी च विक्रमो वृष एव च ॥ २३ ॥

चित्रभानु: सुभानुश्च तारण: पार्थिवो व्यय: ।
सर्वजित् सर्वधारी च विरोधी विकृति: खर: ॥ २४ ॥

नन्दनो विजयो जयो मन्मथो दुर्मुखस्तथा ।
हेमलम्बो विलम्बश्च विकारी शार्वरी तथा ॥ २५ ॥

प्लवश्च शुभकृच्चैव शोभन: क्रोधनस्तथा ।
विश्वावसु: पराभव: प्लवङ्ग: कीलको मत: ॥ २६ ॥

सौम्य: साधारणश्चैव तथैवं च विरोधकृत् ।
परिधावी प्रमादी च ह्यानन्दो राक्षसोऽनल: ॥ २७ ॥

पिङ्गल: कालयुक्तश्च सिद्धार्थो रौद्रदुर्मती ।
दुन्दुभी रुधिरोद्गारी रक्ताक्षी क्रोधन: क्षय: ॥ २८ ॥

इत्थं संवत्सराणां च षष्टीभेदा: प्रकीर्तिता: ।
ब्रह्मसृष्टिर्विंशतिश्च प्रभवादि व्ययान्तगा ॥ २९ ॥

विष्णो: सर्वजिदाद्याश्च विंशतिश्चापराभवम् ।
प्लवङ्गादि क्षयान्तं च तथास्याद्रुद्रविंशति: ॥ ३० ॥

गुणा यथाभिधानं च शस्ताशस्ते विदुर्बुधा: ।

**युगमानं च कल्पान्तमथ मन्वन्तरं तथा ।**
**दिनसङ्ख्या प्रमाणेन तथा युगचतुष्टयम् ॥ ३१ ॥**

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
तिथिमासर्तुकालसंवत्सराद्यधिकार एकोनविंशं सूत्रम् ॥

---

## (२०) कल्पान्तो नाम विंशं सूत्रम् ॥

अपराजित उवाच-

संवत्सरास्तु कथिता मन्मनोभ्रान्तिहारकाः ।
युगानां तु प्रमाणं च कथयस्व परेश्वर ॥ १ ॥

मन्वन्तरप्रमाणं किम् कथं युगचतुष्टयम् ।
कल्पान्तं च कथं देव प्रसादं कुरु मे प्रभो ॥ २ ॥

विश्वकर्मोवाच-

अतस्तात प्रवक्ष्यामि प्रमाणं तु युगोद्भवम् ।
चतुर्दशमन्वन्तरैः कल्पमेकं तु सङ्ख्यया ॥ ३ ॥

येन सङ्ख्याप्रमाणं च वत्सरादि प्रवर्तते ।
अनुक्रमेण वक्ष्यामि यथा प्रोक्तं पृथग्विधम् ॥ ४ ॥

अष्टाविंशतिसहस्राण्यग्रे चाष्टशतानि च ।
संवत्सरैश्च गुणयेत् कृतसङ्ख्याप्रमाणतः ॥ ५ ॥

सहस्राण्यष्टाविंशतिर्लक्षाणि दशसप्त च ।
प्रमाणं कृतयुगस्य देवज्ञैश्च प्रभाषितम् ॥ ६ ॥

तस्य पादत्रयं त्रेता द्वापरं तत्पदद्वयम् ।
पादमेकं कलियुगं प्रमाणमुदितं त्विदम् ॥ ७ ॥

तथा युगचतुष्कं च चतुर्भिश्च युगैर्भवेत् ।
चतुष्कस्य प्रमाणं च कथयामि यथाक्रमम् ॥ ८ ॥

त्रिचत्वारिंशल्लक्षाणि सहस्राणां च विंशतिः ।
चतुष्कस्य प्रमाणं च सृष्टिकालसमुद्भवम् ॥ ९ ॥

द्वासप्ततिचतुष्काणि मनुश्चैव प्रवर्तते ।
कालसङ्ख्या मनोः प्रोक्ता पृथक् सङ्ख्या चतुर्दश ॥ १० ॥

संभूक्षे तलाभिधानं च प्रागमुनिस्तृतीयकम् ? ।
संकल्पभाव सांतश्च सावर्णिकस्यानु सप्तमम् ? ॥ ११ ॥

समनु ध्रुवसौम्याश्च आल्हादश्च सूर्यात्मकः ।
त्रिदशाक्ष पूर्णस्य तु सप्तभि र्न चतुर्दश ? ॥ १२ ॥

मनुभिश्चतुर्दशभिः कल्पसङ्ख्या प्रमाणतः ।
एवमुक्तं च कल्पान्तं पुनरेवं समुद्भवः ॥ १३ ॥

अपराजित उवाच--

कल्पान्तश्च कथं तात कैश्चिह्नैरुपलक्षितः ।
देवेशाहं न जानामि कल्पान्ते सृष्टिच्छन्दकम् ॥ १४ ॥

विश्वकर्मोवाच–

कल्पान्तो प्राप्यते वत्स ह्युल्कापातैरनेकशः ।
तस्य चिह्नानि रूपाणि कथयामि समासतः ॥ १५ ॥

उल्कापाताद् वज्रघाताद्ग्राभावाज्जनात्ययः ।
सादित्ये च विनामेघैर्वज्रविद्युत्पातोद्भवः ॥ १६ ॥

अब्दान्ते भूमिकम्पश्च ह्यब्दार्धे तु पुनः पुनः ।
पांशुवृष्टिश्च पतति सादित्ये रजनी यथा ॥ १७ ॥

यमदंष्ट्रासमं रौद्रं भूतलं च प्रदृश्यते ।
आन्ध्यं घोरं भवेन्मेघैः सर्पवृष्टिः प्रजायते ॥ १८ ॥

स्वर्गतः पतति त्वेवं पुरुषो विकृताननः ।
सर्वेशो सो रसं भूया मनुजा वीरविक्रमाः ? ॥ १९ ॥

यक्ष किन्नरगन्धर्वाः पिशाचोरगराक्षसाः ।
सर्वे ते प्रलयं यान्ति कल्पान्ते च समुत्थिते ॥ २० ॥

पर्वताः सागरा द्वीपाः सरितः सागरादिकम् ।
भक्षन्ति सर्वभूतानि कालाग्निश्च यमो यथा ॥ २१ ॥

चतुर्दशमन्वन्ते च दिने प्राप्ते यथा ध्रुवम् ।
रजन्यन्ते च सम्प्राप्ते ह्युदिते सूर्यमण्डले ॥ २२ ॥

बिम्बमध्यसमास्त्वेवं पुरुषाननसंनिभाः ।
विकृताननरूपाश्च दंष्ट्रायुक्ताः करालिनः ॥ २३ ॥

द्वौ सूर्यौ पूर्वदिग्भागे द्वौ च दक्षिणदिक्स्थितौ ।
सूर्यद्वयं पश्चिमे चोत्तरे सूर्यद्वयोदयः ॥ २४ ॥

द्वौ सूर्यौ नागलोकस्थौ द्वौ सूर्यावुपरि स्थितौ ।
इत्थं ते द्वादशादित्याः कल्पान्ते सर्वतो दिशम् ॥ २५ ॥

दहन्ति पृथिवीं कृत्स्नां सशैलवनकाननाम् ।
सर्वभूतानि दहति कालाग्निश्चापरस्तथा ॥ २६ ॥

देवदानवगन्धर्वान् पिशाचोरगराक्षसान् ।
पृथिव्यां दह्यमानायां हविर्गन्धः प्रजायते ॥ २७ ॥

अस्तंगते सूर्यबिम्बे द्रोणमेघोद्भवस्तथा ।
वर्षन्ते च महामेघा धारा करिकरानिव ॥ २८ ॥

अष्टादशैव मेघाश्च महाद्रोणघनोदये ।
पृथिवीत्थं समन्ताच्च समुद्रैश्चार्णवीकृता ॥ २९ ॥

चतुर्दशलक्षयोजनानि ध्रुवं रक्षतु उदकोद्भवाम् ।
तमस्रौ विशीर्यन्ते अंभोर्भव तनो वृता ? ॥ ३० ॥

अन्धकारे तथा घोरे नष्टे स्थावरजङ्गमे ।
चन्द्रार्कपवने नष्टे ज्योतिषि प्रलयं गते ॥ ३१ ॥

एवं जाते तदाकाले विष्णौ क्षीरोदसंस्थिते ।
क्षीरोदस्थितविष्णोश्च शेषपर्यङ्कशायिनः ॥ ३२ ॥

नाभेर्ब्रह्मा समुत्पन्नः पद्मयोनिश्च सृष्टिकृत् ।
ततः सर्वं समुत्पन्नं जगत्स्थावरजङ्गमम् ॥ ३३ ॥

योऽसौ क्षीरोदमध्ये तु सप्तलोकजलाम्बुधौ ।
शेषे च नागपर्यङ्के शेषस्याहेश्च तद्विधिः ? ॥ ३४ ॥

..............फणिमणिकिरणैर्व्यज्यते श्वासवातैः ।

..............ऋषिमुनिगणैर्ऋग्यजुः साममन्त्रैः ।

..............स्तूयमानो...........ब्रह्मादि देवैः ।
विष्णुस्त्रैलोक्यनाथः कलिकलुषहरः पातु वः पद्मनाभः ॥ ३५ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
कल्पनाधिकारो नाम त्रिंशं सूत्रम् ॥

## (२१) अक्षयलिङ्गसृष्ट्युद्भवो नामैकविंशं सूत्रम् ॥

अपराजित उवाच–

पूर्वसृष्ट्युद्भवो यद्वत्तथा तन्नाम देवता ।
अन्यथा वा भवेदिन्द्रस्तथा च त्रिदशोद्भवः ॥ १ ॥

उपस्थिते च कल्पान्ते किं पुनः सृष्टिरुद्भवेत् ।
पूर्वाभिधानयुक्ता चान्यथा वा कथय प्रभो ॥ २ ॥

विश्वकर्मोवाच–

कल्पान्ते च गते त्वेवं जीवरूपा नु चेतसा ।
सर्वे ते प्रलयं यान्ति गङ्गेव हरमस्तके ॥ ३ ॥

कल्पे कल्पे प्रलीयन्ते यत्र यत्रापि देवताः ।
आत्मरूपे पञ्चलिङ्गे सर्वभूतात्मकेषु च ॥ ४ ॥

अविमुक्तं च केदारं ओंकारामरकंटके ।
पञ्चमं श्रीमहाकालं कल्पान्ते लिङ्गमव्ययम् ॥ ५ ॥

ततः काले समुद्भूता भरतक्षेत्रदेवताः ।
बदरीमथुरायोध्या योगेशं विश्वसम्भवः ॥ ६ ॥

पञ्चाक्षयानि कल्पान्ते हरिक्षेत्राणि वै विदुः ।
एषु भव्यकलाः सर्वा विष्णोश्चामोघमालिनी ॥ ७ ॥

भूर्भुवं भुवनेशं च भवोद्भवं तृतीयकम् ।
अट्टहासं तत्पुरुषं केतुमालं स्वयंभुवम् ॥ ८ ॥

ईश्वरं शङ्करं श्रेयं श्रीकण्ठं च उग्रोहरम् ।
अक्षयपञ्चलिङ्गस्य इलावर्ते समुद्भवः ॥ ९ ॥
पुष्करं पुष्कराख्यं च शङ्कुतेजं महाबलम् ।

गोकर्णं पञ्चमं लिङ्गं पुष्कराख्येऽक्षयोद्भवम् ॥ १० ॥

सद्यं शान्तं महाकान्तं विश्वतेजो महोद्भवम् ।
पञ्चाक्षयानां लिङ्गानां पौरुषे स्यात्समुद्भवः ॥ ११ ॥

शङ्कुंशशङ्करंभू च सिद्धेशं चन्द्रशेखरम् ।
पञ्चाक्षयानि लिङ्गानि शङ्कुक्षेत्राधिपानि च ॥ १२ ॥

वामदेवं महादेवं कान्तं कमललोचनम् ।
अक्षयं कल्पजं लिङ्गं सागराक्षे ? त्वपराजित ॥ १३ ॥

सद्योवामस्तथाघोरस्तत्पुरुष ईश एव च ।
अक्षये वक्त्रजा देवा रम्यके सृष्टिसंभवे ॥ १४ ॥

लीयन्ते सर्वदेवाश्च कल्पान्ते लिङ्गमध्यगाः ।
कल्पान्ततोऽक्षयं लिङ्गं सागरे ? क्षेत्राधिपम् ।। १५ ॥

द्वीपे द्वीपे पुनस्त्वेवं रुद्रलोकलिङ्गोद्भवम् ।
तेभ्यो जाता पुनः सृष्टिर्जगत्स्थावरजङ्गमम् ।। १६ ।।

सजलाम्भोधिसंसारे एकार्णवीभूतसंस्थितौ ।
विशीर्णानुमार्गाख्यात तत्प्रवाहेन समुद्भवाः ? ।। १७ ।।

वर्षाश्रयासमुद्राश्च सृष्टिकालसमुद्भवाः ।
प्रदक्षिणं स्थितास्त्वेवं मेरोश्च परिखार्णवाः ।। १८ ॥

क्षीरोदे संस्थितो विष्णुः सजलांभोधिनिःस्वने ।
शेषपर्यङ्कशायी च पादौ लग्नौ तथा श्रिय ॥ १९ ॥

क्षीरोदसंस्थितो विष्णुः सजलाम्भोदनिस्वनः ।
शेषपर्यङ्कशयनः पादलग्नश्रियोत्तमः ॥ २७ ॥

ब्रह्माऽभवद् विष्णुनाभेः स्वयम्भूः सृष्टिकारणम् ।
ब्रह्मसूनुस्ततो जातः काश्यपो मुनिपुङ्गवः ।। २१ ॥

ख्याता तदुद्भवा सृष्टिर्जगत् स्थावरजङ्गमम् ।
ताभ्यां च शक्तिराख्याता संसारसृष्टिकोद्भवा ॥ २२ ॥

दैत्यासुरी च गन्धर्वी यक्षी विद्याधरी तथा ।
वैदेवी नागराजेन्द्री नरेन्द्री नाम चाष्टमी ॥ २३ ॥

दितेश्च देवाः सम्भूता असुर्यांश्चासुरोद्भवः ।
गन्धर्वीजाश्च गन्धर्वा यक्ष्या यक्षसमुद्भवः ॥ २० ॥

विद्याधर्यास्तद्भिन्नाः वदेव्याश्चैव देवताः ।
विहगा नागराजेन्द्रा जाता नागेन्द्रकास्तथा ॥ २५ ॥

नरेन्द्राश्च नरा विप्र – क्षत्रविट्शूद्रसंज्ञकाः ।
षट्त्रिंशच्च कुलान्येवं प्रकृतीनामनेकधा ॥ २६ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
अक्षयलिङ्गसृष्टयुद्भवाधिकारो नामैकविंशं सूत्रम् ॥

## (२२) पञ्चलिङ्गोद्भवकाश्यपसृष्ट्युद्भवो नाम द्वाविंशं सूत्रम् ॥

अपराजित उवाच–

कथं लिङ्गभवा सृष्टिः समस्ता सचराचरा ।
कथं ब्रह्मोद्भवा चैव कथयस्व प्रसादतः ॥ १ ॥

ब्रह्माद्यप्रभवाः के चाक्षयलिङ्गोद्भवाश्च के ।
के च ज्योतिर्भवाश्चैव कथयस्व प्रसादतः ॥ २ ॥

विश्वकर्मोवाच–

एकादशकोटिरुद्रा भैरवाश्चाष्टकोटयः ।
योगिन्यो द्विरद् कोट्यो लिङ्गेभ्यश्च समुत्थिताः ॥ ३ ॥

खेचरी भूचरी विद्या स्तम्भिनी मोहिनी तथा ।
विद्वेषिणी त्रोटिनी च एता लिङ्गसमुद्भवाः ॥ ४ ॥

अणिमा लघिमा ख्याता महिमा सहजा तथा ।
अष्टसिद्ध्युद्भवा विद्याक्षयलिङ्गसमुद्भवा ॥ ५ ॥

मन्त्रमुद्राः समस्ताश्च योगिनोर्योगनिर्मलाः ।
अर्चा पूजा प्रतिष्ठाश्च सर्वा लिङ्गसमुद्भवाः ॥ ६ ॥

वेदागमपुराणानि ग्रन्थादिदर्शनानि च ।
अक्षयलिङ्गोत्पन्नानि तथान्यच्च वदामि ते ॥ ७ ॥

निघण्टुर्व्याकरणानि ह्यष्टौ स्थानानि वै तथा ।
वेदोद्भवश्च लिङ्गेभ्यस्तथान्ये च दिवौकसः ॥ ८ ॥

सप्तस्वरास्त्रयो ग्रामा मूर्च्छनास्त्वेकविंशतिः ।
एकोनपञ्चशत्तानाः सर्वे लिङ्गसमुद्भवाः ॥ ९ ॥

सर्वाणि यानि तीर्थानि ह्युद्भवन्तीह भूतले ।
तान्युत्पन्नानि लिङ्गेभ्यो वर्तन्ते सचराचरम् ॥ १० ॥

मन्त्रसिद्धिक्रियायोग – तीर्थधर्मसत्यानृतम् ।
पृथिव्यापस्तथा तेजो वायुराकाश एव च ॥ ११ ॥

लिङ्गोद्भवानि चैतानि जगदुत्पत्तिकारणम् ।
सर्वात्मलीला भूतानां लिङ्गानां लिङ्गतो भवः ॥ १२ ॥

क्षेत्राणि च तथा द्वीपाः संसारसृष्टिकोद्भवाः ।
एवमक्षयलिङ्गेभ्यः सर्वभूतालयस्तथा ॥ १३ ॥

शेषोद्भवास्तथा पुत्र जीवा वै काश्यपादयः ।
मानसेभ्यः समुत्पन्ना मानस्याः पुत्रिकादयः ॥ १४ ॥

अश्वी गजा शुकी शृङ्गी वृक्ष्यंबु सरली तथा ।
स्थालिकां शालिध्वानं च तृणीव लतिकोद्भवा: ? ॥ १५ ॥

शृङ्गी नखी मीन क्रौंचा पद्मान्तादिकसम्भवा: ।
एवं काश्यपसंभूता: सृष्टिजीवा अनेकधा ॥ १६ ॥

कृमिकीटपतङ्गाश्च व्यन्तराश्चोरगादय: ।
भूमिर्बीजोदकाद्यैश्च सम्भूता जीवयोनय: ॥ १७ ॥

भूम्युच्छ्वासे समुद्भूते संयोगे तेजसस्तथा ।
उदके सर्वबीजानि रूपत: सम्भवन्ति च ॥ १८ ॥

केचिच्च काश्यपोत्पन्ना: केचित्पातालसम्भवा: ।
केचिद् भूम्युद्भवास्त्वेवं त्रिविध: सृष्टिसम्भव: ॥ १९ ॥

चतुर्विधास्तथा चैवं स्वेदाण्डोद्भिज्जरायुजा: ।
चतुर्विधभूतग्रामे जीवयोनिरनेकधा ॥ २० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
पञ्चलिङ्गोद्भवकाश्यपसृष्टयुद्भवाधिकारो नाम द्वात्रिंशं सूत्रम् ॥

---

## (२३) प्रथमहरि-मत्स्यावतारो नाम त्रयोविंशं सूत्रम् ॥

अपराजित उवाच-

मत्स्यादिकावतारांश्च विष्णुरूपसमुद्भवान् ।
कथयस्व प्रसादेन ज्ञानदाल्हादकारकान् ॥ १ ॥

यत्स्मृतौ पापमुक्तिः स्यात् संसारभयनाशनम् ।
छिद्यन्ते सर्वविघ्नाश्च स्वर्गादिभोगसाधनम् ॥ २ ॥

विश्वकर्मोवाच-

सर्वतीर्थभवं पुण्यं यस्य तु स्मरणे ननु ।
सर्वदेवमयं दृष्ट्वा सर्वयज्ञफलं भवेत् ॥ ३ ॥

शृणु त्वं च महानन्दं विष्णोर्जन्मरहस्यकम् ।
दशावतारजननं पठितं पापनाशनम् ॥ ४ ॥

तदहं कथयिष्यामि प्रादुर्भावं च वैष्णवम् ।
पठन्ति प्रयता भक्त्या यास्यन्ति परमां गतिम् ॥ ५ ॥

मत्स्यः कूर्मो वराहश्च नारसिंहोऽथ वामनः ।
रामो रामश्च कृष्णश्च बुद्धः कल्की च ते दश ॥ ६ ॥

तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे ।
चन्द्रार्कपवने नष्टे ज्योतिषि प्रलयं गते ॥ ७ ॥

एवं जाते तदा काले ध्यानयुक्तः पितामहः ।
संभूतो दानवः शङ्खो हृतवान् वेदमर्णवे ॥ ८ ॥

गतश्च विष्णुपार्श्वे च क्षीराब्धौ च पितामहः ।
महासुरोऽनन्तरूपो वेदान् हृत्वा गतोऽर्णवे ॥ ९ ॥

कृतेऽष्टलक्षसहस्रशताब्देषु गतेषु च ।
शताब्दान्ते तथा ख्याते माघे कृष्णप्रतिपदि ॥ १० ॥

पुष्यान्ते च मुहूर्ते च मनुर्नाम शुभप्रदः ।
महामीनो भविष्यामि सहस्रयोजनायतः ॥ ११ ॥

घनवन्नीलवर्णश्च रक्ताक्षश्च महोत्कटः ।
भृकुटिस्फुरद्दशनः कृत्वा कोपं जनार्दनः ॥ १२ ॥

क्रीडन्तमब्धिमध्यस्थं निहितां च कूपकर्तरि ।
स्यात्कलित लग्नाम्बु पद्म पुष्पोद्भवमालिका ? ॥ १३ ॥

मत्स्यपुच्छाच्च निहतस्तदा चोच्छलिता छटा ।
छोम्न धाराकुलोत्तरं भगं सुरा कुलावर्तपदम् ? ॥ १४ ॥

स्थललता फेनवर्णा ग्रन्थावर्णतकम् दोद्भवा ? ।
यथा अन्न कुलावर्त भंगात् पुरतो वनमालिका ! ॥ १५ ॥

हतो महासुरः शङ्खो हतैर्वेदैस्ततस्तदा ।
आसनं कृतमुत्सङ्गे ब्रह्मणश्चेव नन्दतः ॥ १६ ॥

पटहाद्या अवाद्यन्त वेदे प्राप्तेऽनु पञ्चमम् ।
महोत्सवे ब्रह्मलोके विष्णुलोके तथैव च ॥ १७ ॥

धर्मः प्रस्थापितो लोके सत्यं ज्ञानं च भूतले ।
लक्ष्म्यायुष्का नराश्चैवमक्लेशा दृढयौवनाः ॥ १८ ॥

एकच्छत्रं नृपो राज्यं प्राप्तवान् वेदसंगतौ ।
चक्रवर्तित्व विज्ञेयो शिवभट्टं सुदर्शनम् ? ॥ १९ ॥

देवाग्निगुरुपूजा च सतीसत्यं तथोत्तमम् ।
अग्राह्यं च प्रजादण्डं अद्रास्यता कृषि वेश्मता ? ॥ २० ॥

न शोकदुःखदुर्भिक्षं न चौराश्चाभवंस्तदा ।
धर्मेण पालयन्धात्रीमाज्ञां चक्रे च मेदिनी ॥ २१ ॥

ईप्सितोदकं च मेघात् सर्वसस्या च मेदिनी ।
लक्षात्परेऽनल्पधना अतिरूपा नराः स्त्रियः ॥ २२ ॥

कामिन्य ऋतुगम्याश्च ह्यायुष्काः कान्तिभिर्युताः ।
लोकाः शास्त्रविशेषज्ञा अग्निहोत्रं गृहेगृहे ॥ २३ ॥

त्रिदशातिथिपूजा च नित्यमेव प्रतिगृहम् ।
न विषं नैव दुःस्थानं गृहे तु धनधान्यकम् ॥ २४ ॥

भुञ्जन्ते काञ्चने पात्रे ददते नास्ति गृद्धता ? ।
सन्तुष्टाः सर्वलोकास्तु धनधान्यैश्च काञ्चनैः ॥ २५ ॥

ईप्सितं तु गवां क्षीरं क्षीरे सर्पिस्तथाधिकम् ।
इच्छारसश्चेक्षुदण्डे मधुपानं घटैस्तथा ॥ २६ ॥

त्रिलक्षाब्दं मीनरूपो विष्णुः पर्येति सागरम् ।
पुनर्जन्म करिष्यामि उद्धरिष्येऽमृतं यतः ॥ २७ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
प्रथमहरि–मत्स्यावताराधिकारो नाम त्रयोविंशं सूत्रम् ॥

---

## (२४) कूर्मावतारे मन्दरार्णवमन्थनं चतुर्विशं सूत्रम् ॥

विश्वकर्मोवाच–

कल्पान्ते रत्नजातं यद् श्रीधेनुरमृतादिकम् ।
अभ्योपस्करजातानि क्षीराब्धौ स्थापितानि तु ॥ १ ॥

याचमानाः समस्तास्तु सुरासुरनरोरगाः ।
ददस्व भो विभो सर्वं स्थापितं विष्णुना च यत् ॥ २ ॥

इन्द्र उवाच–

काष्ठे चाग्निस्तिले तैलं क्षीरमध्ये यथा घृतम् ।
उद्धरिष्यामि तान् सर्वान् क्षीराब्धित उपस्करान् ॥ ३ ॥

चक्रुस्ते मन्थनारम्भं सुरासुरनरोरगाः ।
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वाऽथ वासुकिम् ॥ ४ ॥

उद्धरिष्यति कस्तत्र क्षीरार्णवे तु मन्दरम् ।
गतास्ते विष्णुपार्श्वे तु सुरासुरनरोरगाः ॥ ५ ॥

चतुर्लक्षसहस्रादि शतान्ताब्दे कृते गते ।
फाल्गुने कृष्णपक्षे च द्वितीयायां तिथौ तथा ॥ ६ ॥

मुहूर्ते कार्मुके चैव हस्तान्ते घटिकाद्वयम् ।
कूर्मावतारो मेदिन्यां मुहूर्ते तत्र चाभवत् ॥ ७ ॥

तले तु कूर्मरूपेण हेमकूटनिभं गिरिम् ।
मन्दरं धारयिष्यामि ह्यमृतार्थेऽपराजित ॥ ८ ॥

पीतवर्णो महादिव्यो दृश्यतेऽथानुवर्तुलम् ।
हारिद्रकश्वेतपादैर्ज्योतिर्दृष्टोऽथ निर्मलैः ? ॥ ९ ॥

शैलेन्द्रस्योत्तरे पार्श्वे क्षीरोदो नाम सागरः ।
प्रारब्धं मन्थनं तत्र सुरासुरनरोरगैः ॥ १० ॥

मन्दरं मन्थनं कृत्वा नेत्रं कृत्वा तु वासुकिम् ।
एकतश्च सुराः सर्वे बलिमेकत्र संस्थिताः ॥ ? ११ ॥

क्षीरार्णवे मथ्यमाने सफेनोर्मिमहोत्कटे ।
समुद्भूतानि रत्नानि गुणतेजोमयानि च ॥ १२ ॥

मौक्तिकं वज्रवैडूर्ये पद्मरागश्च नीलकम् ।
हिरण्याद्यष्टलोहानि मथ्यमाने तदुद्भवः ॥ १३ ॥

तदोद्भूता कामधेनुर्घृतदध्युद्भवस्ततः ।
क्षीरं च गोमयं मूत्रं पञ्चगव्यं प्रकीर्तितम् ॥ १४ ॥

सर्वसृष्ट्युद्भवा धेनुः सर्वकामफलप्रदा ।
सर्वकाममवाप्नोति कामधेनुनमस्कृतिः ॥ १५ ॥

ऐरावतो गजेन्द्राणां चन्द्रश्चाप्सरसस्तथा ।
उच्चैःश्रवास्तुरङ्गाणां सूर्यादीनां च वाहनम् ॥ १६ ॥

अमृतानां सप्तकुम्भा अमृतत्वं च दायिनः ।
सप्तस्थाली च पात्राणां तलिकातां वा(वो)लुकोद्भवाः ? ॥ १७ ॥

पर्यङ्कमासनं चैव तथा सिंहासनानि च ।
छत्रचामरालङ्कारा धूपामोद आरार्त्तिकम् ॥ १८ ॥

सिंहासनरुद्रासनवेत्रासनमसूरकम् ।
गद्दिका पट्टपं गिद्दि प्रोक्तान्यासनकानि च ॥ १९ ॥

षोडशाभरणं दिव्यं पादादि मुकुटान्तकम् ।
षट्त्रिंशच्चैव शस्त्राणां निर्गतानि क्षीरार्णवात् ॥ २० ॥

कवचानि च रत्नानि बलीवर्दोत्सवास्तथा ।
पुष्पकादिविमानानि श्रीवत्सस्वस्तिकानि च ॥ २१ ॥

क्षीरार्णवे मथ्यमाने निमज्जद्भिः सुरासुरैः ।
तत्रोत्पन्नो महावृक्षो नाम्नासुरतरुस्तथा ॥ २२ ॥

नानापुष्पसमाकीर्णो नानापत्रसमाकुलः ।
नानाफलसमायुक्तो पञ्चशाखासमन्वितः ॥ २३ ॥

पुण्यानि तस्य पत्राणि दृष्ट्वा तीर्थमहाफलम् ।
तस्यानुक्रमरूपं च जातिभेदं च लक्षणम् ॥ २३-१ ॥

देशजातिकुलस्थानं वर्णभेदमतः परम् ।
शाखानुक्रमयुक्तिं च कथयामि समासतः ॥ २३-२ ॥

नागरं द्राविडं चैव कालिङ्गं यामुनं तथा ।
विश्वेश्वरं समाख्यातं पञ्चपत्रसमुद्भवम् ॥ २३-३ ॥

नागरा चोत्तरा शाखा द्राविडा दक्षिणोद्भवा ।
कालिङ्गा पश्चिमा शाखा यामुना पूर्वदिग्भवा ॥ २४ ॥

विश्वेशा ऊर्ध्वशाखायां पञ्चजातिमहोत्सवाः
एकैकं पञ्चभेदाश्च कथयाम्यपराजित ॥ २५ ॥

पञ्चजातिर्दशभेदास्तथा षोडश वै कलाः ।
मासपत्रं चतुर्जातमर्बुदादिसमुद्भवम् ॥ २६ ॥

जलजं स्थलजं पत्रं मेघजं गिरिकोद्भवम् ।
जीवपत्रं निभाकारं भेदभिन्नं व्यवस्थितम ॥ २७ ॥

सर्वाभरणसंस्थानं हारकेयूरकादिकम् ।
स्तम्भे द्वारे गृहे शुद्धं प्रासादेषु च सर्वतः ॥ २८ ॥
शुद्धस्थानेषु सर्वेषु पत्रं पट्टचित्रादिकम् ।
× × × × × × × × ॥ २९ ॥
यत्र तद् दृश्यते पत्रं स्त्रियस्तत्र हितेक्षणाः ।
तत्रोत्पन्नं तु कलशमष्टमाङ्गल्यसम्भवम् ॥ ३० ॥
संछन्नं फलपुष्पैश्च पत्रैश्च वलयीकृतम् ।
अभिषेके पट्टबन्धे प्रतिष्ठोद्वहनादिषु ॥ ३१ ॥
प्रासादे राजभवने कलशं विनिवेदयेत् ।
षोडशाभरणैर्युक्ता लक्ष्मीस्तत्र विनिर्गता ॥ ३२ ॥
द्वादशादित्यसंकाशास्त्रैलोक्यम(पि)णिर्दीपिका ।
× × × × × × × × ॥ ३३ ॥
अमृतं सर्वदेवेषु ह्यैरावतः सुराधिपे ।
अश्वश्च भास्करे देवेऽपस्करः सर्वतः समः ॥ ३४ ॥
पुनश्च मन्थनं कृत्वा अलक्ष्मीस्तत्र निर्गता ।
समुपेता पञ्चगुणैर्दत्ता या तु पितामहे ॥ ३५ ॥
अतिक्षुधा च दीनत्वं याचनं भ्रमणं तथा ।
अलक्ष्म्याः पञ्चमुद्राश्च करपात्रं च यष्टिकम् ॥ ३६ ॥
पुनर्मन्थनं कृत्वा तु विषं तत्र विनिर्गतम् ।
न तद् गृह्णन्ति वै देवा दानवैर्नैवगृह्यते ॥ ३७ ॥
नीलकण्ठे मयूरे च तद्रूपं वृषभध्वजे ।
तद्रूपेण तथेशेन तस्मात्तद्भक्षितं परम् ॥ ३८ ॥
पुनर्विनिर्गता चैव मदिरा कलिकोद्भवा ।
तां च पीत्वा कलिर्जातो मथनस्य विसर्जनम् ॥ ३९ ॥
अर्थक्षया शौचभ्रंशा गूढमन्त्रप्रकाशिका ।
नष्टकार्या तनुकृष्टा चागम्यागमपापदा ॥ ४० ॥
अधर्मकलिकोद्भावा गृहच्छिद्रादिकारिका ।
तथा त्यक्तोत्तमस्नेहा मृतनिर्गतचेतना ॥ ४१ ॥
एवं निन्द्यगुणैर्युक्ता मदिरा पानतः कृता ।
मुक्ता यैः सा स्वहितैश्च तेषां श्रीर्बलवर्द्धिनी ॥ ४२ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
कूर्मावतारे मन्दरमथनाधिकारो नाम चतुर्विंशं सूत्रम् ॥

## (२५) वराहावतारो नाम पञ्चविंशं सूत्रम् ॥

अपराजित उवाच—

पृथिव्यां सागरा द्वीपाः सशैलवनकाननाः ।
केराधारैरुध्रियन्ते कथयस्व परेश्वर ॥ १ ॥

विश्वकर्मोवाच—

नागराजभृताः शैलाः पृथिव्यां द्वीपसागराः ।
भाराक्रान्ता च वसुधा भीता याता रसातले ॥ २ ॥

तदाक्षीरार्णवे सर्वे विष्णुपार्श्वं गताः सुराः ।
रक्ष रक्ष परं विष्णो जगत्स्थावरजङ्गमम् ॥ ३ ॥

रक्षरक्षाऽऽर्यलोकांश्च पादोऽधर्मस्य वर्तते ।
तेन सा च भराक्रान्ता भूतधात्री ह्यधोगता ॥ ४ ॥

विष्णुरुवाच—

रसातले गमिष्यामि भूताधारधरा मही ।
आत्मस्थाने स्थापयिष्ये तामधो गम्यते मया ॥ ५ ॥

कृतार्धे च समायाते चैत्रकृष्णजयातिथौ ।
सूर्यनाममुहूर्तान्ते हस्तान्ते घटिकाद्वयम् ॥ ६ ॥

वराहरूपमास्थाय अप्रमाणं महोत्कटम् ।
भृकुटिस्फुरद्दशनं तेजःपुञ्जसमुद्भवम् ॥ ७ ॥

दंष्ट्राग्रे वसुधां धृत्वा सशैलद्वीपसागराम् ।
संपूजितः सर्वदेवैरागतः पृथिवीधरः ॥ ८ ॥

पुष्करे परमेश्वरो नासाग्रे पवनात्मकः ।
वलिका ऊर्ध्वकेशेषु शम्भुसृष्टिसमुद्भवा ॥ ९ ॥

अधरैश्चाधकोद्भूतं ? दंष्ट्रायां शैलसंभवः ।
सरस्वती च जिह्वायां तालुकेऽमरकोटयः ॥ १० ॥

ग्रीवायां सुरसंघाश्च ओष्ठयोश्चासुरास्तथा ।
कपाले कार्मुककरश्चन्द्रार्कौ चैव नेत्रयोः ॥ ११ ॥

कर्णयोश्चैव गन्धर्वास्त्रिकोटिः सार्धमस्तके ।
पृष्ठोपरि तथा मेरुर्लिङ्गाकारेण संस्थितः ॥ १२ ॥

पञ्चवक्त्रो महादिव्यो व्योमव्यापी सदाशिवः ।
तस्य प्रदक्षिणे मेरुर्भुवनानि चतुर्दश ॥ १३ ॥

स्थिताश्चैकादश रुद्रा द्वादशादित्यकास्तथा ।
चतुर्दशमनवश्च त्रिदशास्स्युरनेकधा ॥ १४ ॥

उभयोर्गिरिगोत्राश्च भुजयोः शैलजास्तथा ।
कर्णिकायां च संसारो मणिबन्धे महोत्कटाः ॥ १५ ॥

इन्द्रः खुरेषु गन्धर्वाः क्षुररन्ध्रेषु पन्नगाः ।
क्षुराग्रे चाश्विनौ देवौ जानुसन्धौ च रुद्रव्ययः ॥ १६ ॥

अहिला ? हृदयदेशे जठरे जगतो धृतिः ।
कुक्षौ सप्तार्णवाः प्रोक्ताः पुच्छे सृष्टिकरस्तथा ॥ १७ ॥

तदूर्ध्वे कूर्मरूपं तु कूर्मोर्ध्वे गरुडो मतः ।
पञ्च द्वे तत्त्वानि यतः स्मृतः सृष्टिसमुद्भवः ॥ १८ ॥

पञ्चतत्त्वोद्भवा सृष्टिः ख्यातः संसारसागरः ।
एवमाद्योद्भवो देवः संसाराच्च समुद्धरेत् ॥ १९ ॥

पापात्समुद्धरेद्येन लीलया धार्यते महीम् ।
खुणमध्यगतो यस्य मेरुः खुणखुणायते ॥ २० ॥

पातालं यस्य कुक्षौ सकलशिखरिणो मन्दरो मेरुकायाः
दंष्ट्राग्रे यस्य लग्ना त्रिभुवनसहिता मेदिनी सागरान्ता ।
आरक्ते यस्य नेत्रे सुरभिसुरदितं घर्घरं यस्य काले
द्वौ कर्णौ भुजगदृष्टि कपट तनुकृत ? पातु वः श्रीवराहः ॥ २१ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
वराहावतारनिर्णयाधिकारो नाम पञ्चविंशं सूत्रम् ॥

---

## (२६) वामनावतारो नाम षड्विंशं सूत्रम् ॥

अपराजित उवाच–

हिरण्यकशिपुर्घोरो जातः कस्मादुपायतः ।
अफलं वर्धितं केन ? कथयस्व प्रसादतः ॥ १ ॥

विश्वकर्मोवाच–

हिरण्यकशिपुं पूर्वं कथयिष्यामि साम्प्रतम् ।
महोत्कटश्च येनाऽसाववध्यो देवदानवैः ॥ २ ॥

तेनस्ववशमानीताः देवासुरनरोरगाः ।
ससुतं वैष्णवं दिव्यं विष्णुपादसुचिन्तकम् ॥ ३ ॥

हिरण्यकशिपुर्हन्तुं प्रल्हादं प्राञ्जलिं सुतम् ।
कृत्वा चैवाग्निमध्यस्थं पर्वताद् विनिपातितम् ॥ ४ ॥

निबध्य च जयस्तम्भे शुभं वै वज्रशृङ्खलैः ।
तेनाऽसौ स्तूयमानश्च विष्णुः स्तम्भार्दनांचितः ॥ ५ ॥

त्रयोदशलक्षाब्देषु गतेषु च कृते युगे ।
राधशुक्लचतुर्दश्यां ज्येष्ठान्ते च मुहूर्तके ॥ ६ ॥

ऊर्ध्वं सिंहतनुं कृत्वा चाधो नरतनुं तथा ।
स्तम्भं संस्फोट्य तं घोरं सूदयिष्यति दानवम् ॥ ७ ॥

प्रल्हादस्य तथा राज्यं विष्णुर्दास्यति भूतले ।
एकच्छत्रां स दत्तां च पालयेद्धृतधारिणीम् ॥ ८ ॥

यं दृष्ट्वा नारसिंहं विकृतनखमुखं तीक्ष्णदंष्ट्राकरालम्
पिङ्गाक्षं स्तब्धकर्णं हुतवहसदृशं कुञ्चिताग्रोऽग्रकेशम् ।
भीतास्ते दानवेन्द्रा असुरवरभटाः शस्त्रमुद्गीर्यहस्तात्
हाहा किं किं किमेतत् क्षुभितजनपदः पातु वो नारसिंहः ॥ ९ ॥

यः स्तम्भाद् गर्जमानो गगडगडगडद् बालचन्द्रार्कदंष्ट्रः
व्योमाभुव्याप्यमानः पपटपटपटत् पोस्यमानः शटाभिः ।
दंष्ट्राभिः खाद्यमानः ककटकटकटत् स्तूयमानः सुरेन्द्रैः
निष्क्रान्तो हास्ययुक्तः कहकहकहकहत् पातु वो नारसिंहः ॥ १० ॥

इति नृसिंहावतारश्चतुर्थः ॥

सन्धौ च समनुप्राप्ते त्रेतायाश्च कृतस्य च ।
अयुक्ताश्च नरा नार्यश्चाल्पशस्या तु मेदिनी ॥ ११ ॥

तीर्थात् पुण्यानि गच्छन्ति लोको दानानि वाञ्छति ।
दासन्ति विप्राः शूद्रेषु वैश्याश्च नृपपावनाः ॥ १२ ॥

भुञ्जते रौप्यपात्रेषु स्मरार्ता विप्रजातयः ।
नैव साङ्ख्यं नास्ति भाट्टं न दर्शनचतुष्टयम् ॥ १३ ॥

नृपा युद्धानि कुर्वन्ति भूम्यर्थे च परस्परम् ।
त्रिपादो वर्तते धर्मः पादश्चैकस्त्वकर्मणि ॥ १४ ॥

दैत्यवंशोद्भवो राजा बली स्याद् दानगर्वितः ।
गर्वहा संभविष्यामि विष्णुर्वै बलिवञ्चने ॥ १५ ॥

अदितेः कश्यपसुतः सम्भविष्यामि भूतले ।
भाद्रशुक्लद्वादश्यां वै श्रवणे सुमुहूर्तके ॥ १६ ॥

अदितेश्च समुत्पन्नो लघुकायो दृढात्मकः ।
तत्रोद्भविष्यदेवं च विष्णुर्वै वामनाकृतिः ॥ १७ ॥

ततो वामनरूपेण स्तूयमानो द्विजोत्तमैः ।
स्वागतः सिंहद्वाराग्रे बलिर्यत्र धरापतिः ॥ १८ ॥

समुच्चार्य वेदशास्त्रं द्विजसहस्रध्वनिर्यथा ।
बलिस्तुष्टोऽथ विप्रेन्द्र ददामि यत्तवेप्सितम् ॥ १९ ॥

विष्णुरुवाच–

ममपादत्रयं भूमेर्याचनीयं नृपोत्तम ।
नैवाऽकाङ्क्षे च राजेन्द्र महादानानि भोगिनाम् ॥ २० ॥

हस्तोदकं मया दत्तं यावच्चन्द्रार्कतारकम् ।
तं दिव्यरूपमास्थाय क्रमिष्यामि वसुन्धराम् ॥ २१ ॥

बलिं चैव करिष्यामि पातालतलवासिनम् ।
देवांश्चैव करिष्यामि स्वस्वस्थानेषु शाश्वतम् ॥ २२ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
वामनावतारनिर्णयाधिकारो नाम षड्विंशं सूत्रम् ॥

## (२७) रामावतारो नाम सप्तविंशं सूत्रम् ॥

---

विश्वकर्मोवाच–

त्रेतार्द्धे चाब्द् आद्ये च ह्याषाढे कृष्णषष्ठिका ।
नाम प्रोक्तं पुण्डरीकं धनिष्ठान्ते मुहूर्तके ॥ १ ॥

जमदग्निसुतो भूत्वा रामः शस्त्रभृतां वरः ।
क्षत्रियांश्च वधिष्यामि पृथ्वी निःक्षत्रयी कृता ॥ २ ॥

एकविंशतिवारांश्च समुद्रान्ता च मेदिनी ।
तेन दत्ता द्विजवरे कश्यपे च त्वकण्टका ॥ ३ ॥

विप्रयुक्ताश्च राजेन्द्रा उत्पन्ना च वसुन्धरा ।
समुद्रः शाम्यते येन आसिद् द्वादश योजनैः ॥ ४ ॥

प्रवृत्ताश्चैव देशाश्च कोङ्कणाश्च चतुर्दिशम् ।
क्षत्रमुत्पादयिष्यामि सभृत्यबलवाहनम् ॥ ५ ॥

जमदग्निसुतो रामः पुनर्जन्म करिष्यति ।
तेनाहं प्रहरिष्याम्ययोध्यायां सप्तमो हरिः ॥ ६ ॥

षष्ठं परशुरामं च हरिर्हन्ति च सप्तमः ।
सन्धौ च समनुप्राप्ते त्रेताया द्वापरस्य च ॥ ७ ॥

रामोदाशरथिर्भूत्वा कौशल्यानन्दवर्धनः ।
विश्वामित्रयज्ञधुर्यस्ताडकां राक्षसीं हत्वा
जमदग्निसुतं जित्वा धनुर्भङ्गे सीतापतिः ॥ ८ ॥

वनवासं करिष्यामि सीतालक्ष्मणसंयुतः ।
चित्रकूटे तथा सीता पर्ययुक्ता न लक्षणैः ? ॥ ९ ॥

रामगिर्य्याश्रमे प्राप्ते तत्र वै दण्डकावने ।
लङ्केशेन हृता सीता कपटैर्मृगरूपतः ॥ १० ॥

हतो मृगश्च सीतार्थे त्रिशिराः खरदूषणौ ।
वेपमाना शूर्पणखा धृतास्तु राक्षसी कृता ॥ ११ ॥

सुग्रीवस्य समक्षं च हतो वाली महाबलः ।
तैश्चापि वानरैः सार्धं करिष्यामि यथा सुखम् ॥ १२ ॥

दशयोजनविस्तीर्णमायतं शतयोजनैः ।
सेतुबन्धनमावृत्तं जले शैलसमाकुलम् ॥ १३ ॥

हत्वा तु रावणं घोरं सभृत्यं देशकण्टकम् ।
विभीषणाय दास्यामि राज्य निहतकण्टकम् ॥ १४ ॥

सीताशुद्धिं समानीय पुष्पवृष्टिः सुरैः कृता ।
दत्ते विभीषणे राज्ये प्रत्यागच्छत् स्वकां पुरीम् ॥ १५ ॥

दशवर्षसहस्राणि दशवर्षशतानि च ।
धर्मेण पालयेद् राज्यं समुद्रान्तां च मेदिनीम् ॥ १६ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
रामावतारनिर्णयाधिकारो नाम सप्तविंशं सूत्रम् ॥

## (२८) हरेरष्टमः कृष्णावतारो नामाष्टाविंशं सूत्रम् ॥

विश्वकर्मोवाच-

पुनर्जन्म करिष्यामि धर्मार्थे त्वपराजित ।
मथुरायां चापरं तु द्वापरान्ते कलौ युगे ॥ १ ॥

जातोऽवतारो विष्णोश्च दानवानां वधार्थकः ।
कृष्णपक्षे भाद्रपदे ह्यष्टम्यां च तिथौ तथा ॥ २ ॥

रोहिणी नाम नक्षत्रे ह्यर्धरात्रे तथागते ।
वसुदेवसुतः श्रीमान् वासुदेव इति श्रुतः ॥ ३ ॥

तस्य कर्माणि चाख्यास्ये शृणु चैकाग्रमानसः ।
पूतनां घातयिष्यामि दुष्टां वै बालघातकीम् ॥ ४ ॥

गोकुले च गतो देवो वर्तमानं महाधनम् ।
गवार्थे चोद्धरिष्येऽहं गिरिं गोवर्द्धनं तथा ॥ ५ ॥

प्रवृत्तायां महावृष्टौ गिरिपृष्ठनिवासिनाम् ।
कालीयकं वशीकृत्य यमुनायां महार्णवे ॥ ६ ॥

समानीष्टा ? (हा)नि पद्मानि कंसस्यार्थे तु विग्रहे ।
मल्लयुद्धं करिष्यामि सह तैस्तु महोत्कटम् ॥ ७ ॥

मथुरायां वधिष्यामि कंसं च केशिनं तथा ।
चाणूरं च तथा बाहुं मुष्टिकं च महाबलम् ॥ ८ ॥

प्रलम्बं धेनुकं चैव ह्यरिष्टं वृषरूपिणम् ।
कालनेमिं हनिष्यामि त्रिषु लोकेषु विश्रुतम् ॥ ९ ॥

कुशस्थलीं गमिष्यामि तीर्थे चावन्तिकाश्रिते ।
नरकं च वधिष्यामि कुण्डलार्थे महासुरम् ॥ १० ॥

शोणिताख्यां पुरीं गत्वा करिष्ये कदनं महत् ।
भुजच्छेदं करिष्यामि बाणस्य रणमूर्धनि ॥ ११ ॥

शंकरं योधयिष्यामि बाणस्यार्थे परं तप ।
शोणिताख्यां पुरीं गत्वा जरासन्धेन विग्रहः ॥ १२ ॥

जरासन्धो हतो भ्रात्रा शोणितस्थे जनार्दने ।
जरासन्धभयत्रस्तान् रक्षिष्यति च पार्थिवान् ॥ १३ ॥

जरासन्धसुतं बाला वृद्धा पृष्ठाश्च यादवाः ।
नवकोटयः सङ्ख्यया दन्तिनां लक्षविंशतिः ॥ १४ ॥

रथानां सार्धकोटिश्च तदर्धं च पदातयः ।
कोटयोऽष्टादश तथाऽग्रे निगच्छन्ति यादवाः ॥ १५ ॥

कृष्णकुलमध्ये भवा मध्यतलान्तरस्थिताः ।
तेभ्यो कपटचिताज्वालाय देवो (वां)भिधानको विदुः ? ॥ १६ ॥

प्रविष्टस्तत्र वै काले प्रतिज्ञातो महारथी ।
शेषाश्च विनिवर्तन्ते जरासन्धभयार्दिताः ॥ १७ ॥

ये देवगिरिमाश्रित्य सौराष्ट्रदेशवासिनः ।
वारुण्यां च दिशायां च प्रभासक्षेत्रमागताः ॥ १८ ॥

समुद्राभ्यर्थनं कृत्वा कृष्णो वा बलदेवकः ।
सद्रोगेन्द्र भूमिसेना स्थितावुभौ दन्तकाष्ठादिभिः ? ॥ १९ ॥

वरुणेषु यत्र द्वारं चतुर्विंशतियोजनैः ।
शक्रेण प्रेषितास्तत्र निधयो धनदेन च ॥ २० ॥

तेभ्यः समुद्भवा सृष्टिः काञ्चनै रत्नसंचितैः ।
दिनानां त्वेकविंशत्या संबद्धाः कुलयादवाः ? ॥ २१ ॥

तत्राष्टादशकोटीनां निवासाश्च महोत्सवाः ।
सा पुरी च महारम्या हेमप्राकारसम्भवा ॥ २२ ॥

पुरप्राकारपरिखाप्रतोलीमार्गगोपुरम् ।
प्रासादप्रतिमासद्मामाडोत्तुङ्गमहोत्सवम् ॥ २३ ॥

हिन्दोलकैस्तोरणैश्च रत्नैश्चैव विभूषिता ।
रत्नोद्योतकुलाकीर्णा हेमरौप्यादितो भवा ॥ २४ ॥

स्फटिकैर्दिव्यसोपानैस्तडागैर्विविधैस्तथा ।
पुष्परागेन्द्रनीलाढ्यपदकैः सूर्यरश्मिभिः ॥ २५ ॥

श्वेतरक्तहरित्पीतैः प्राकारैरिन्द्रकोपमैः ।
अनेकोद्यानवाटीभिर्दिव्यवृक्षलतागृहैः ॥ २६ ॥

एकाद्येकविंशत्यन्तभूम्युद्भवगृहाणि च ।
मालमौलिशुद्धशृङ्गहर्म्याणि च तथैव च ॥ २७ ॥

राजालयस्य मध्ये च सद्मानि विष्णुतेजसा ? ।
तानि द्व्यष्टसहस्राणि माणिक्यादियुतानि च ॥ २८ ॥

मण्डपैः सुवितानैश्च चन्द्रार्कद्युतिसन्निभैः ।
वसन्तोत्सवसंप्राप्तौ गोपीक्रीडार्थमेव च ॥ २९ ॥

तथा त्रिवलिकैस्तालैस्तथा च पटहोत्तमैः ।
स्वरैश्च मधुरैर्वंश्या हुडक्कैश्च सलीलया ॥ ३० ॥

विष्णोर्महोत्सवश्चैवं द्वारकापुरमण्डनः ।
वर्णितो देवदैत्याद्यैर्विष्णुराजमहोत्सवः ॥ ३१ ॥

ध्यष्टयोजनविस्तारा ह्यायता ऽयष्टयोजनैः ।
समुद्रेण च तद्द्वारमुत्तमा द्वारिकाभिधा ॥ ३२ ॥

सर्वश्रेष्ठा पुरीणांच द्वारिका विष्णुभक्तिदा ।
चत्वारिंशत्सहस्राणि दन्तिनश्च महोत्कटाः ३३ ॥

चतुर्लक्षाणि सङ्ख्याता अश्वास्तेजस्विनस्तथा ।
रथाः सपादकोट्यश्च चोष्ट्राः सार्धत्रिकोटिकाः ॥ ३४ ॥

तथाष्टादशकोट्यश्च यादवाश्च महाबलाः ।
सुभटाश्च महावीरा असङ्ख्याताः पदातयः ॥ ३५ ॥

द्वारिका या पुरी ख्याता पूज्या सुरनरोरगैः ।
सिद्धचारणसंगीता ह्यप्सरोगणसेविता ॥ ३६ ॥

विद्याधरैश्च गन्धर्वैर्नागेन्द्रैश्चोपसेविता ।
तपोधनैश्च दिव्यैश्च ऋषिवृन्दैः समावृता ॥ ३७ ॥

माया च मथुरा चैवायोध्या वाराणसी तथा ।
काञ्ची जयन्ती द्वारका ह्येता मुक्तिप्रदायिका ॥ ३८ ॥

जरासंधं वधिष्यामि हेतुमात्रेण भीमतः ।
शिशुपालं वधिष्यामि यज्ञे धर्मसुतस्य वै ॥ ३९ ॥

ततः पश्चात्करिष्यामि साहाय्यमर्जुनस्य च ।
विष्णोर्वाक्यसहायेन हनिष्यामि कुरून् रणे ॥ ४० ॥

शस्त्रहस्ता मृता ये ऽत्र स्वर्गं यास्यन्ति क्षत्रियाः ।
कलौ च समनुप्राप्ते चतुर्थे युगपर्यये ॥ ४१ ॥

नेमिनाथाभिधानस्तु समुद्रविजयात्मजः ।
गिरिमस्तकसंभूतो द्वाविंशश्च तीर्थंकरः ॥ ४२ ॥

पाण्डवांश्च करिष्यामि केदारे तु हिमाश्रयान् ।
गमयिष्यति स्वर्गं तान् केदारः प्रकटीकृतः ॥ ४३ ॥

पृथिव्यां यानि तीर्थानि यानि तिष्ठन्ति भूतले ।
केदारं प्रति गत्वा च तदनुग्रहदायकम् ॥ ४४ ॥

भारते च महापुण्यं न तीर्थं केदारात्परम् ।
यदिच्छन्ति नरा मोक्षमाश्रयन्तु हिमाचलम् ॥ ४५ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां हरेरष्टमः कृष्णावतारनिर्णयाधिकारो नामाष्टाविंशं सूत्रम् ॥

---

## (२९) विष्णोर्जन्मरहस्यदशमोऽवतारो नाम नवविंशं सूत्रम् ॥

विश्वकर्मोवाच-

कलौ युगे तु सम्प्राप्ते आश्विने कृष्णपक्षके ।
नवम्यां च तिथौ चैव मृगान्ते सुमुहूर्तके ॥ १ ॥

शुद्धोदनसुतो भूत्वा मोहयिष्यामि मानवम् ।
युगे तत्र भविष्यन्ति मुण्डाः काषायवाससः ॥ २ ॥

शूद्राः शूद्रेषु दास्यन्ति विष्णौ बुद्धत्वमागते ।
तेषामल्पतरो धर्म इह लोके परत्र च ॥ ३ ॥

दिगम्बरवृत्तिकास्तत्र बुद्धयुक्तकलौ युगे ।
श्वेताम्बरास्तथान्ये च तथा नीलाम्बराः क्वचित् ॥ ४ ॥

जिनोक्ताः केवलिनश्च चतुर्विंशतितीर्थगाः ।
अनन्तरं चर्षभाद्याश्चतुर्विंशति रेव च ॥ ५ ॥

हुताशनः पद्मनाभो जिनानां तु च सङ्ख्यया ।
उक्ताः शासनदेव्यश्च यक्षाणां च तथैव च ॥ ६ ॥

पृथगेकैकशः प्रोक्ता अष्टौ वै प्रतिहारिणः ।
वणिग्धर्मेण मुदिता ज्ञानार्णव उदाहृताः ॥ ७ ॥

तेषां न स्नानहोमानि पितृपिण्डो न दीयते ।
पाखण्डिनो विकर्मस्थाः पाणिपात्रेषु भक्षकाः ॥ ८ ॥

दर्शनेऽपण्डिताश्चैव गमिष्यन्ति च नारकान् ।
तेषां दत्तं च भुक्तं च भस्मीभवति काष्ठवत् ॥ ९ ॥

स्वाध्याये चैव सीदन्ति ब्राह्मणाः शौचवर्जिताः ।
वेदविक्रयिणश्चैव लोभिनोऽस्थिरचेतसः ॥ १० ॥

न स्निह्यन्ति पिता पुत्रा योषितो भ्रातरस्तथा ।
न भृत्या नैव मित्राणि भविष्यन्ति न शान्तिदाः ॥ ११ ॥

धर्मो जितो ह्यधर्मेण सत्यं चैवानृतेन च ।
जिताश्चोरैश्च राजानः स्त्रीभिश्च पुरुषा जिताः ॥ १२ ॥

सीदन्ति चाग्निहोत्राणि गुरुपूजा प्रणश्यति ।
दशमे द्वादशे वर्षे नारी गर्भवती भवेत् ॥ १३ ॥

कन्याश्चैव प्रसूयन्ते तस्मिन्कलियुगे सदा ।
सम्प्राप्ते षोडशे वर्षे नरा गलितयौवनाः ॥ १४ ॥

अल्पोदकास्तथा मेघा अल्पशस्या तु मेदिनी ।
अल्पक्षीरास्तथा गावः क्षीरे सर्पिर्न विद्यते ॥ १५ ॥

एकवर्णाभविष्यन्ति वर्णाश्चत्वार एव च ॥
वर्णान्तराणि भिद्यन्ते यास्यन्ति प्रलयं प्रजाः ॥ १६ ॥

दुर्भिक्षाणि भविष्यन्ति राज्ञां दुर्दयचेतसाम् ।
वर्णान्तर वि राज्ञां ते विदुर्दुर्गे शून्यचेतसा ? ॥ १७ ॥

अधर्मीभवत् समस्तं दयाधर्मविवर्जितम् ।
कीर्तितो बुद्धावतारः कलौ च नवमो हरिः ॥ १८ ॥

ततः कलियुगान्ते चोत्पत्स्यति दशमो हरिः ।
ब्राह्मणो हरिपिङ्गलः याज्ञवल्क्यपुरोहितः ॥ १९ ॥

ततो हरिः कलेरन्ते दशमः संभविष्यति ।
कुम्भलग्नभवो देवो ह्यश्वारूढो जगत्पतिः ॥ २० ॥

म्लेच्छानां छेदनं कृत्वा यजेद् देवं सुवर्णकम् ।
एकच्छत्रं धराराज्यं लक्ष्म्याः कृतयुगे पुरा ॥ २१ ॥

इदं जन्मरहस्यं तु कीर्तयिष्यन्ति ये नराः ।
सुलभश्च हरिस्तेषां नित्यं वै सर्वजन्मसु ॥ २२ ॥

ॐ नमो वासुदेवाय नमो नारायणाय च ।
नमः कृष्णायेतिमन्त्राः सर्वपापप्रणाशनाः ॥ २३ ॥

शृणोति जन्मरहस्यं ब्रह्महा गुरुतल्पगः ।
स्त्रीबालघातकश्चैव सुरापो वृषलीपतिः ॥ २४ ॥

मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ।
यः पठेत् परया भक्त्या विष्णुजन्मप्रकीर्तितम् ॥ २५ ॥

मर्त्यलोकपरिभ्रष्टो विष्णुलोकं स गच्छति ।
ईप्सितं लभते राज्यं स्वर्गे वा भूमिशासने ॥ २६ ॥

गतागता निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः ।
अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः ॥ २७ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां विष्णोर्जन्मरहस्यदशावताराधिकारो नाम नवविंशं सूत्रम् ॥

---

## (३०) विष्णुवाक्योद्भवारण्ये श्रीसोमेश्वरनिर्णयो नाम त्रिंशं सूत्रम् ॥

---

विश्वकर्मोवाच-

अथातोऽनन्तरं तत्र पर्वते गन्धमादने ।
आगतश्च स्वयं विष्णुर्जगदाल्हादकारकः ॥ १ ॥

उद्धृत्याम्ब्वर्थपात्रं तु त्वष्ट्राद्यैर्मुनिसत्तमैः ।
सुरासुरैः समस्तैश्च स्तूयमानं जगत्पतिम् ॥ २ ॥

स्थित्वासने महोत्सवे सिंहरूपाद्यलङ्कृते ।
प्रहृष्टं च जगन्नाथं शङ्खचक्रगदाधरम् ॥ ३ ॥

त्वष्ट्राद्याश्च मुनीन्द्राश्च हरिपार्श्वे तु संस्थिताः ।
सिंहासने निविष्टं तमादितेजोभयं प्रभुम् ॥ ४ ॥

ॐ नमो भगवते वासुदेवाय ॐ नमो नारायणाय । ॐ नमः कृष्णाय इति
मूलमन्त्राः सर्वपापप्रणाशनाः ॥ तानुच्चार्य ॥

दण्डवत् प्रणतो भूत्वा पृच्छति त्वपराजितः ।
दशावताराः श्रीविष्णोः कथिता विश्वकर्मणा ॥ ५ ॥

त्वष्टा चैव कथं देव कथं तस्य समुद्भवः ।
कस्मिन्कालेऽवतारश्च कथयस्व जगत्पते ॥ ६ ॥

विष्णुरुवाच-

सरस्वत्यर्णवाभ्यां च पुण्यप्रभास आश्रमः ।
प्रयतात्मा महातीर्थे गत्वा तु हरजन्मदम् ॥ ७ ॥

दृष्ट्वा तु हरते पापं स्नात्वा देवत्वदायकम् ।
समागतः सोमराजो दृष्ट्वाश्रममथोत्तमम् ॥ ८ ॥

विविधैर्वनजैः कीर्णं तथा पुष्पैः समाकुलम् ।
सुरभितामृतोपेतं नानाफलैश्च संकुलम् ॥ ९ ॥

पारिजातप्रभृतिभिः कङ्कोलैश्चैव पादपैः ।
देवदारुभिराकीर्णं तथा वै रक्तचन्दनैः ॥ १० ॥

तालतमालाशोकैश्च रम्भाप्रियङ्गुचम्पकैः ।
पुन्नागनागबकुलैः पाटलैर्बिल्वचन्दनैः ॥ ११ ॥

जातीतगुरुकुमुदानेकपुष्पैः सुपुष्पितम् ।
विविधैश्च तथा वृक्षैः शोभितं दिव्यमाश्रमम् ॥ १२ ॥

विचित्रं हेमरचितं निर्मलं कुमुदेशवत् ।
विपुलजलं – ? स्फटिकशङ्खवेदी ? ॥ १३ ॥

तरङ्गभङ्गुरावर्तमुग्रं मीनैरनेकशः ।
शिशुमारैश्च नक्रैश्चाऽनन्तं दुर्गं शुक्त्यादिभिः ॥ १४ ॥

योजनायुतविस्तीर्णं भीषणीयं ग्रहाकुलैः ।
भयावहं च गहनं गम्भीरावर्तव्याकुलम् ॥ १५ ॥

इमं समुद्रतीरस्थं माहेन्द्रं विन्ध्यगामिनम् ?
रम्याश्रमं प्रभासस्य प्रविष्टस्तारकाधिप: ॥ १६ ॥

प्रणिपत्य तदा देवं प्रभासं भुक्तिमाप्नुयात् ।
अस्माकमीश्वरं भक्त्या राधयामि च संयतः ॥ १७ ॥

तदाज्ञया चाश्रमेऽस्मिन् निष्ठाराध्यमहेश्वरम् ।
तदा लब्ध्वाश्रमं श्रेष्ठं दत्तं प्रभासतुष्टिदम् ॥ १८ ॥

मन्वन्तरं शतं सार्धं सोमोऽकार्षीत् तपो नृप: ।
तोषयित्वा महादेवं प्रत्यक्षं शिवसम्भवम् ॥ १९ ॥

आल्हादितमना भूत्वा दृष्ट्वा च परमेश्वरम् ।
राजेन्द्र क्षिति कृत्वा तु निश्चलं देवसम्भवम् ? ॥ २० ॥

ईश्वर उवाच–

तुष्टो ऽहं तव राजेन्द्र भक्त्या च परया त्वयि ।
वरं ब्रूहि च दास्यामि यथेच्छं तारकाधिप ॥ २१ ॥

धर्मार्थकाममोक्षाणां ददामि यत्त्वदीप्सितम् ।
नासत्यं नान्यथा चैवं त्वद्भक्तया रोहिणीपते ॥ २२ ॥

चन्द्र उवाच–

अस्माकमात्मनः पार्श्वे मानसाङ्गं सुधार्यकम् ? ।
ममाभिधानतश्चैवाऽवतारस्तव साम्प्रतम् ॥ २३ ॥

देव्युवाच–

शशाङ्क देवदेवेश तिलकत्वमवाप्नुहि ।
अथातस्त्वं तत्तिलके तथा तिष्ठ मम प्रिय ॥ २४ ॥

ईश्वर उवाच–

त्वयेप्सितं वरं यच्च प्रयच्छामि हितैषिणे ।
इच्छयात्मसुखेनैवाऽसारसंसारमोक्षदम् ॥ २५ ॥

निश्चितात्मसुखैरेवं शान्तावस्थो सुखबोधिनी ? ।
स्वप्नावस्थायां न सौख्यमात्मनो रोहिणीपतेः ॥ २६ ॥

स्वप्नावस्थो यदा दृष्टो भस्मोद्धूलिततापसः ।
स्कन्धारुह्य हतं चारै ? अस्मत्त्वयि विनिवेदयेत् ? ॥ २७ ॥

तापस उवाच–

अहं सोम जगत्कर्ता वैरं स्यात्तु लङ्काधिपे ।
त्वद्भक्तयाऽऽगतोऽहं वत्स चन्द्रनामाऽवतारतः ॥ २८ ॥

योगावस्थास्थितस्त्वेवं चिन्तात्मा रोहिणीपते ।
उदकोल्लङ्घनं कृत्वा ऐन्द्रीं गतो दिशां प्रति ॥ २९ ॥

कैलासाल्लिङ्गमानीय दानवेन्द्रो लङ्काधिपः ।
आगमिष्यामि ? क्षेत्रेषु तस्य वाचा प्रबलोद्भवम् ? ॥ ३० ॥

ददामि ते त्वहं सोम सोमे वदति दुर्धरः ।
क्षणार्धे तु धृतं विप्र यदाहं भो क्षितौ ततः ? ॥ ३१ ॥

गृहीत्वा सोमराजेन्द्रो लङ्कावधि वनैः स्थितः ? ।
उक्तं लिङ्गं तु राजेन्द्र क्षितौ भूत्वा तु निश्चलम् ? ॥ ३२ ॥

पूजितं लिङ्गराजेन्द्रं लङ्कावधि स्वस्थचेतसा ? ।
सोमाभिधानदेवत्वं सोमनाथ इति श्रुतम् ॥ ३३ ॥

शशाङ्कं मुकुटे धृत्वा तन्नाम शशिभूषणः ।
ईश्वरः सोमनाथाख्योऽवतरितः सोमेश्वरः ॥ ३४ ॥

तदा सुरतरोर्वत्स प्रभासे भक्तिस्वागतः ।
जगन्नाथः सोमनाथस्त्रैलोक्ये चाऽपि दुर्लभः ॥ ३५ ॥

आरामनगरे रम्ये जगदाल्हादकारकः ।
जगन्नाथः सोमनाथस्त्रैलोक्ये चाऽपि दुर्लभः ॥ ३६ ॥

नाम्ना कैलासनगरे सोमनाथो महेश्वरः ।
संसारतारणो देवः संसारपाशछेदनः ॥ ३७ ॥

धर्मार्थकाममोक्षाणां वाञ्छितार्थफलप्रदम् ।
सर्वतीर्थे महोत्साहं स्वर्गादिभोगभुक्तिदम् ॥ ३८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
विष्णुवाक्योद्भवारण्ये श्रीसोमेश्वरनिर्णयाधिकारो नाम त्रिंशं सूत्रम् ॥

---

## (३१) विष्णुवाक्योद्भवसोमनाथोक्तद्वादशशिवरात्रिनिर्णयो नामैकत्रिंशं सूत्रम् ॥

विष्णुरुवाच–

ततश्चानन्तरं वत्स प्रभासे भुक्तिमुक्तिदे ।
कृत्वा सोमेश्वरे भक्तिं पूजा स्यात्तु महोत्सवः ॥ १ ॥

चन्दनागुरुकङ्कोलकर्पूरैः कुङ्कुमादिकैः ।
पञ्चामृतादिस्नानैश्च धूपाद्यैश्च सुगन्धिभिः ॥ २ ॥

मन्त्रस्तोत्रगीतवाद्यैर्नृत्यैश्च सुरयोषिताम् ।
इन्द्राद्याश्च सुराः सर्वे ब्रह्माद्याश्च मुनीश्वराः ॥ ३ ॥

विष्णुश्च भगवान् देवो मरीचिः काश्यपो गणाः ।
सूर्याद्याश्च ग्रहाश्चैव तथा चैवं गणोत्तमाः ॥ ४ ॥

अष्टौ च वसवः सिद्धा वासुक्याद्याश्च पन्नगाः ।
पृथिव्यां यानि तीर्थानि पार्थिवाश्चैव भूतले ॥ ५ ॥

पातालस्वःसप्तके च पृथिव्यां सप्तकं तथा ।
आनीताश्च त्रयो लोकाः सुरासुरनरोरगैः ॥ ६ ॥

प्रभासेन कृता पूजा देवदेवजगद्गुरोः ।
तुष्टः प्रभासं देवेशः पुत्रत्वं समुपागमत् ॥ ७ ॥

वाचस्पतेर्भागिनेयं वसुहृन्नन्ददायकम् ।
प्रोवाच वचनं पुत्र एकादश ममांशकाः ॥ ८ ॥

सोमनाथः प्रभासश्च कर्दमः शशिभूषणः ।
निष्कदाख्यः सहस्राक्ष ऋणमुक्तिः पापान्तकः ॥ ९ ॥

अर्कस्थाल्यमनार्कस्वरं ? तवपुत्रा एकादश ।
एकादशैते रुद्राश्च प्रभासक्षेत्रसम्भवाः ॥ १० ॥

विश्वकृद् विश्वकर्मा च त्वष्टा स्याद् देववर्धकिः ।
भूर्भुवर्भुवनेशश्च तथा भुवनदेवकः ॥ ११ ॥

पुनरुच्चार्य नामानि विश्वेशः त्रिदशेश्वरः ।
विश्वश्च विश्वनिरतस्स्वयं च सृष्टिकोद्भवः ॥ १२ ॥

नासत्यावश्विनौ दस्रौ प्रोक्तौ देवचिकित्सकौ ।
जगत्कर्ता च रुद्रश्च प्रभासो वसुनन्दनः ॥ १३ ॥

सृष्टा च सर्वशिल्पानां जगन्नेत्रस्तदुद्भवः ।
चतुर्दश्यां समुत्पन्नः स्रष्टा विश्वपतिस्तथा ॥ १४ ॥

कार्तिक्यां कृष्णपक्षे तु दीपोत्सवसमुद्भवः ।
महोत्सवास्तथा पञ्च तृतीयां यावनोदिनी ? ॥ १५ ॥

स्वयं साक्षाद् रुद्रमूर्तिर्विश्वकृद् विश्वशेखरः ।

विश्वकर्मोवाच–

दीपोत्सवः कथं देव किमर्थश्च तदुद्भवः ।
सुरोरगासुरनराः कुर्वन्ति कथमुत्सवम् ॥ १६ ॥

ईश्वर उवाच–

द्वादशदीपोत्सवानां श्रेष्ठाः स्युः कार्त्तिकादितः ।
शिवरात्रयो द्वादश व्रतानामुत्तमा मताः ॥ १७ ॥

आद्या मार्गशिरे कृष्णचतुर्दश्यां तिथौ भवेत् ।
त्रयोदश्यामेकभोजी ह्युपोष्या च चतुर्दशी ॥ १८ ॥

स्नानं कृत्वा चोदकेन यस्तिष्ठेल्लिङ्गमाश्रितः ।
दिनान्ते च निशाप्राप्तौ कुर्याद् वै दन्तधावनम् ॥ १९ ॥

ततः शिवालये गत्वा पुष्पधूपादिसंयुतः ।
पञ्चामृतैः स्नापयित्वा धूपैर्वै लेपनादिभिः ॥ २० ॥

पूजां कृत्वा त्रिरात्र्यन्तं स्तोत्रमन्त्रकगीतकैः ।
वादित्रैर्विविधैश्चैव स्वेच्छया चात्मशक्तितः ॥ २१ ॥

स्वयंभुवि तथा बाणे प्रास्ये स्वगृहलिङ्गके ।
यामे यामे गते रात्रौ पूजां कृत्वा महोत्सवम् ॥ २२ ॥

शिवरात्र्युत्सवे चाल्यं शिवं स्तुत्वा समस्तकम् ।
पुराणश्रवणं कृत्वा दानं चैव समानयेत् ॥ २३ ॥

प्रतियामोत्सवं कृत्वा स्वगृहं भावतो व्रजेत् ।
दन्तधावनस्नानार्चाः कृत्वा चैव महोत्सवम् ॥ २४ ॥

अग्निपूजां ततः कृत्वा दत्वा चाहुतिपञ्चकम् ।
द्वे द्वे कृत्वा मण्डले च बाह्ये मध्ये गृहेऽथवा ॥ २५ ॥

आत्मपादौ च प्रक्षाल्य तापसानां तथैव च ।
भुक्तिस्थानं गृहमध्ये मण्डलेषु प्रदीयते ॥ २६ ॥

सम्प्राश्य शिवनैवेद्यं ततो दद्यात्तु भोजनम् ।
भोजनानन्तरं दद्याद् दक्षिणां वस्त्रसंयुताम् ॥ २७ ॥

यज्ञोपवीतं पट्टं च पादुकां छत्रसंयुताम् ।
क्षमापयेच्छिवं देवं मठं संप्राप्य तापसम् ॥ २८ ॥

एवमुक्ता कृष्णचतुर्दशी मार्गशिरादिका ।
मार्गादि कार्तिकान्तं च तासां नामानि द्वादश ॥ २९ ॥

शिवा शान्ता सिद्धिदा च जया चैव मनोरमा ।
कान्ताल्हादा च सौम्या च शुभा स्यात्तु मणिप्रभा ॥ ३० ॥

विश्वा विश्वकृदुद्भवा चेत्थं नामानि द्वादश ।
मार्गादि कार्तिकान्तं च कृष्णपक्षे चतुर्दशी ॥ ३१ ॥

मार्गपौषयोर्मध्ये च शिवा स्वर्गादिभोगदा ।
पौषमाघयोर्मध्ये च शान्ता कल्याणकारिणी ॥ ३२ ॥

माघफाल्गुनयोर्मध्ये सिद्धिदा सर्वसिद्धिदा ।
ख्याता जया फाल्गुनान्ते विजयस्वर्गराज्यदा ॥ ३३ ॥

मनोरमा च चैत्रार्धे मनोरथप्रदायिनी ।
वैशाखज्येष्ठयोर्मध्ये कान्ता च स्वर्गभुक्तिदा ॥ ३४ ॥

ज्येष्ठाषाढयोर्मध्ये च आल्हादाऽऽल्हाददायिनी ।
आषाढार्धे तथा ख्याता सौम्या देवत्वदायिनी ॥ ३५ ॥

श्रावणार्धे शुभा ख्याता तेजःसौभाग्यवर्द्धिनी ।
मणिप्रभा भाद्रपदे संसारे च मणिप्रदा ॥ ३६ ॥

आश्विने च तथा मासे विश्वा त्रैलोक्यतोषदा ।
कार्तिके कृष्णपक्षे तु तथा विश्वकृदुद्भवा ॥ ३७ ॥

तास्तु समस्तदेशेषु दीपोत्सवसमुद्भवाः ।
कैलासे च पुरेरम्ये विख्याताश्च महीतले ॥ ३८ ॥

शिवरात्रिसमं पुण्यं नास्ति यज्ञसहस्रकैः ।
मासे मासे कृष्णपक्षे या भवेच्च चतुर्दशी ॥ ३९ ॥

शिवरात्रिस्तु सा ज्ञेया व्रतानामुत्तमोत्तमा ।
त्रिरूपा कृष्णवर्णा सा देवी कल्याणवर्द्धिनी ॥ ४० ॥

ललाटे मुकुटे लिङ्गे कर्णयोः स्कन्धयोस्तथा ।
प्रकोष्ठे मणिबन्धे च कण्ठे ऊर्वोः स्तने तथा ॥ ४१ ॥

मेखलायां कटिसूत्रे कटिमालादितस्तथा ।
लिङ्गाधारमयाः सर्वे ऊर्ध्वाः करपुटैः कृताः ॥ ४२ ॥

तद्रूपा शिवसामर्थ्यात् शिवरात्रिः शिवशासना ।
द्वादशोद्भवन्ति मर्त्ये नाम्नैवं शिवरात्रयः ॥ ४३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां विष्णुवाक्योद्भवसोमनाथोक्तद्वादशशिवरात्रिनिर्णयाधिकारो नामैकत्रिंशं सूत्रम् ॥

---

## (३२) विश्वकर्मावतारो नाम द्वात्रिंशं सूत्रम् ॥

विश्वकर्मोवाच–

नमस्कृत्वा सोमनाथमज्ञानां ज्ञानदो भवान् ।
तव प्रसादाद् देवेश तथाऽस्माभिश्च दृश्यते ॥ १ ॥

कथं चान्यब्रह्माण्डसृष्ट्युत्पत्तिप्रलयादिकम् ।
ब्रह्मा विष्णुः शशी सूर्य इन्द्राग्नी चान्यसम्भवः ॥ २ ॥

कुर्वेतं देवदेवेश प्रसादं पार्वतीपते ।
ज्ञानोपदेशं सन्देहच्छेदनं च जगत्प्रभो ॥ ३ ॥

ईश्वर उवाच–

पूर्वं ब्रह्मभवा सृष्टिर्जगत्स्थावरजङ्गमम् ।
समांशेन समुत्पन्नावुभौ ब्रह्मा तथा हरिः ॥ ४ ॥

ब्रह्मा तु सृष्टिकर्ता च पालकस्तु जनार्दनः ।
तस्मात्तथाऽपरे नैव ब्रह्मविष्णुसदाशिवाः ॥ ५ ॥

गन्तव्यं ब्रह्मलोकेषु यत्र तौ परमेष्ठिनौ ।
तत्रोद्भूता च या सृष्टिस्त्वमेवाग्रतो भवेत् ? ॥ ६ ॥

पुष्पकारूढः स्रष्टा च युक्तः पुत्रैश्च मानसैः ।
जयश्च विजयश्चैव सिद्धार्थश्चापराजितः ॥ ७ ॥

पुष्पकस्य च स्रष्टा वै स्वयं त्वं सृष्टिसम्भवः ।
पुष्पविमानमारूढश्छत्रादिझल्लरीयुतम् ॥ ७–१ ॥

कलशकनकदण्डै रत्नैर्नैकैर्विभूषितम् ।
घण्टारवकोपेतं वै नैकविद्याधराकुलम् ॥ ७–२ ॥

तरुणादित्यसंकाशं तप्तकाञ्चनसप्रभम् ।
प्रभासक्षेत्रसम्भूतं द्वितीयमिव भास्करम् ॥ ८ ॥

विष्णुः शक्रश्च सूर्यश्च स्वामी चैव गणाधिपः ।
रुद्रतेजःसमुद्भूताः स्वयं वा सृष्टिकर्मणा ? ॥ ९ ॥
जटामुकुटशोभाढ्यः कुण्डलाभ्यामलङ्कृतः ।
चतुर्भुजो महातेजा दिव्यहंसकवाहनः ॥ १० ॥

अक्षसूत्रं करे याम्ये वामे चैव कमण्डलुः ।
पुस्तकं वामहस्तोर्ध्वे दक्षोर्ध्वे कम्बिका तथा ॥ ११ ॥

विश्वकर्मा सदागौरस्तेजःपुञ्जसमुद्भवः ।
बृहस्पतेर्भागिनेयस्तेजःकूट इवापरः ॥ १२ ॥

सम्प्राप्तो ब्रह्मलोके तु महौजा विश्वकर्मकः ।
ब्रह्मणा चासनं त्यक्त्वा करयुग्मं च योजितम् ॥ १३ ॥

तस्मै तदासनं दत्त्वा स्थितावासनयोरुभौ ।
चत्वारो मानसाः पुत्रा विश्वकृत्पार्श्वतः स्थिताः ॥ १४ ॥

एकैके च यथाशक्ति स्वयं वै सृष्टिकारकाः ।
जयो विजय आख्याताः सिद्धार्थश्चापराजितः ॥ १५ ॥

ब्रह्मोवाच–

स्वयं रुद्रस्त्वमाख्यातो मया सृष्टो महेश्वरः ।
न्यूनाधिकां तथा सृष्टिं पूरयामि च साम्प्रतम् ॥ १६ ॥

स्वयं रुद्रो विष्णुः शिवो मम सृष्टिकृतोऽभिधाः ।
त्रैलोक्येऽमरपदं च सृष्टव्यं विश्वकर्मणा ॥ १७ ॥

त्रैलोक्ये चामरपदं सृष्टव्यं विश्वकर्मणा ।
जानासि त्वं विश्वकर्मन् न किं ब्रह्मसमुद्भवम् ॥ १८ ॥

भुवनसृष्ट्यादिर्देवो भुवर्देवस्स उच्यते ।
समीपगताथ तत्र पृथिवी तु भयातुरा ।
तत्पृष्ठतश्चागतो वै पृथुश्च पृथिवीपतिः ॥ १९ ॥

इत्युक्त विष्णुमाख्यातं ? विश्वकर्म प्रकथ्यते ।
पक्षिराजं समारुह्य शङ्खशार्ङ्गादिधारिणम् ॥ २० ॥

सप्तकोटिगणैर्युक्तविमानैश्चैव संकुलम् ।
सिद्धचारणगन्धर्वैर्ऋषिभिः परिवेष्टितम् ॥ २१ ॥

सुरदुन्दुभिसंनादैर्नैकवादित्रसंकुलम् ।
पुष्पकैश्छत्रमाच्छाद्यं पृथिव्यान्तक्षीरार्णवम् ॥ २२ ॥

अकस्मादागतो विष्णुर्ब्रह्मलोकेऽमृतार्णवात् ।
गन्धमादनशैलेन्द्रे विश्वकर्मा जगत्पतिः ॥ २३ ॥

पुनः पृच्छति तं पुत्रः कनिष्ठस्त्वपराजितः ।
विश्वकर्मा पुनर्वाक्यं श्रुत्वोवाच मुनीन्द्रकः ॥ २४ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां विश्वकर्मावताराधिकारो नाम द्वात्रिंशत्तमं सूत्रम् ॥

———

## (३३) पृथुपृथिवीसंवादे भूर्लोके विश्वकर्मागमनं त्रयस्त्रिंशं सूत्रम् ॥

---

विश्वकर्मोवाच-

शृणु वत्स महाप्राज्ञ संवादं च पृथोः क्षितेः ।
जम्बूद्वीपे पृथो राज्यमेकच्छत्रं समस्तकम् ॥ १ ॥

तेनावलोकिता चैव समुद्रान्ता च मेदिनी ।
पर्वतैः स्थलजैः सर्वैः सूत्रारम्भे समीकृता ॥ २ ॥

रसया सर्वबीजानि ह्यात्मन्येव धृतानि च ।
प्रजाश्च क्लेशितास्तस्माद् गृहीतात्मेच्छया तु सा ॥ ३ ॥

तदुच्छेदे समारब्धे निःसृता सा भयातुरा ।
ततः पृथ्वी भयोद्विग्ना पृथोश्च पृथिवीपतेः ॥ ४ ॥

तथागताऽब्रवीत्तत्र यत्र तौ परमेश्वरौ ।
रक्ष रक्ष महाभूत त्वमेव शरणं प्रभो ॥ ५ ॥

पृष्ठतश्च ततः प्राप्तः पृथुर्बाणधनुर्धरः ।
ब्रह्मणश्चाग्रतः स्थित्वा धनुर्बाणौ निवेदितौ ॥ ६ ॥

भूराज्यं च समस्तं च ह्यर्पितं ते हितैषिणः ।
अस्माभिश्च परित्यक्ता सम्प्राप्ता चाऽत्र मेदिनी ॥ ७ ॥

धनुर्बाणौ स्वर्पयित्वा पृथुस्त्वं पृथिवीपतिः ।
मा भीस्त्वं वत्स राजेन्द्र राज्यं च तव मेदिनी ॥ ८ ॥

धरित्री कम्पिता तत्र ब्रह्मा प्रोवाच सान्त्वयन् ।
मा भीर्धरे च पुत्री त्वं ज्ञातं कष्टं निवेदितम् ॥ ९ ॥

पृथो शृणु त्वं राजेन्द्र स्वयं रुद्रस्तु विश्वकृत् ।
करिष्यति द्वयोर्योग्यं धात्री स्यादभगावती ॥ १० ॥

त्वत्पार्श्वे पुत्रि बीजानि तिष्ठन्त्वाकल्पमेव च ।
विषया रक्षणीयाश्च विश्वेश्वर तथा त्वया ॥ ११ ॥

पालनीयावुभौ त्वेवं पृथू राजा च मेदिनी ।
विश्वज्ञ हस्तकर्तस्त्वं श्रियमाधत्स्व चेतयोः ॥ १२ ॥

उभावेवं च स्थाप्येतां विश्वकर्मन् जगत्पते ।
ब्रह्मणे च तथोभाभ्यां करयुग्मे च योजिते ॥ १३ ॥

विश्वकर्मा समुत्थाय चतुर्भिर्मानसैः सुतैः ।
संस्थितः पुष्पविमाने पृथु धरे च मानसे ? ॥ १४ ॥

जयो विजय आख्याताः सिद्धार्थस्त्वपराजितः ।
ततो हिमवतः पृष्ठे भूर्लोके तु समागताः ॥ १५ ॥

पृथिवी प्रेषिता स्थाने संबोध्य भूतधारिणि ।
विना कथं त्वया ग्राह्यं कारयिष्ये तु निश्चलाम् ॥ १६ ॥

नृपश्च प्रेषितः स्थाने पृथुः सम्बोधितस्तथा ।
यथाभगवती चैव त्वदर्थे मेदिनी कृता ॥ १७ ॥

पृथो चागम्य स्वस्थाने यावत्त्वं पालयेर्महीम् ।
निर्जलान् सजलान् देशांस्तावत्त्वमवलोकय ॥ १८ ॥

पुष्पकेऽस्माकमारुह्य मेरुमावृत्य दक्षिणम् ।
आलोकय भूतधात्रीमासमुद्रान्तमेदिनी ॥ १९ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां पृथुपृथिवीसंवादे विश्वकर्मभूर्लोकागमनाधिकारो नाम त्रयस्त्रिंशत्तमं सूत्रम् ॥

———

## (३४) जयविजयसिद्धार्थपृच्छा नाम चतुस्त्रिंशं सूत्रम् ॥

अपराजित उवाच–

जयपृच्छागमश्चैव कस्मिन् स्थाने जगत्पते ।
विजयपृच्छागमश्च कुत्रस्थाने बभूव च ॥ १ ॥
सिद्धार्थपृच्छागमश्च किं स्थाने च तथाभवत् ।
एवमस्मत् प्रसादं तु कुरु शास्त्रार्थकौशल ॥ २ ॥

विश्वकर्मोवाच–

ततो हिमवतः पृष्ठे ब्रह्मलोकात्समागतौ ।
शृङ्गाकुले घवनाकीर्णे हिमवन्तश्रियोद्भवे ॥ ३ ॥
नैकगुहाश्रमरम्ये गन्धर्वगणसेविते ।
सिद्धामरकुलाकीर्णे क्रीडामणिगुहागृहे ॥ ४ ॥
जयः पृच्छति तत्रेदं वास्तुविद्योद्भवं तदा ।
तदिदं कथनीयं च शृणु संवादमुत्तमम् ॥ ५ ॥
चतुर्विंशतिसाहस्रसङ्ख्यग्रन्थस्तदा कृतः ।
लिङ्गपीठार्चानिलयवेश्मराजवेश्मादिकम् ॥ ६ ॥
पुरप्राकारपरिखाप्रतोलीमार्गगोपुरम् ।
अन्योपस्करजातानि वास्तुवेदोद्भवानि च ॥ ७ ॥
जयपृच्छादिशास्त्रं च विश्वकर्मप्रभाषितम् ।
जयस्य कथितं चैतद् भक्तिवात्सल्यतः पुरा ॥ ८ ॥
हेमकूटे महाशैले शतयोजनमुच्छ्रिते ।
विरूपाख्याश्रमे रम्ये विचित्रशिखरोद्भवे ॥ ९ ॥
नानाद्रुमलताकीर्णे रत्नधातूपशोभिते ।
सुरविद्याधरारम्ये गन्धर्वगणसेविते ॥ १० ॥
विजयेन ततः पृष्टो वत्साहं भक्तवत्सलः ।
श्लोका विजयपृच्छायां सहस्राणि च द्वादश ॥ ११ ॥
ततघनमुरजादिवादित्रैर्विविधैस्तथा ।
लास्यहास्यताण्डवाद्यैस्तालमूलसमुद्भवाः ॥ १२ ॥
सप्तस्वरास्त्रयो ग्रामा मूर्च्छनास्त्वेकविंशतिः ।
ताना एकोनपञ्चाशदित्येतत्स्वरमण्डलम् ॥ १३ ॥
रागाः षट् समुत्पन्नाः षट्त्रिंशच्चैव तत्स्त्रियः ।
एतत्सर्वं विजयस्य कथितं भरताभिधम् ॥ १४ ॥
मन्दरस्थं सुखासीनं सिद्धार्थः पृष्टवान् पुरा ।
ताडिकण्ठस्वरशास्त्रं गणितं ज्योतिषं तथा ॥ १५ ॥

निघण्टुश्च व्याकरणं छन्दोलङ्कारसंयुतम् ।
मनुसाध्यसमुद्भूतं संसारपाशछेदनम् ॥ १६ ॥

मुक्तिमार्गरहस्यं च कथितं भक्तवत्सलैः ।
तुर्योऽयं मानसः पुत्रः पृच्छति त्वपराजितः ॥ १७ ॥

अपराजित उवाच-

अस्मच्चित्ते प्रबोद्धव्यं जयाय पृच्छते च यत् ।
विजयश्च सिद्धार्थश्च पृच्छायां यत्तथैतयोः ॥ १८ ॥

भवान् पुष्पकमारुह्य प्रोक्तवान् यदनुग्रहात् ।
पूर्वं सर्वं प्रसादेन कथयस्व जगत्पते ॥ १९ ॥

पुष्पकं तु समारुह्य मेरुमार्गप्रदक्षिणम् ।
अवालोकि तथा चैषा समुद्रान्ता च मेदिनी ॥ २० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां जयविजयसिद्धार्थपृच्छाधिकारो नाम चतुस्त्रिंशं सूत्रम् ॥

---

## (३५) एकविंशतिस्वर्गो नाम पञ्चत्रिंशं सूत्रम् ॥

विश्वकर्मोवाच–

पुष्पकं तु समारुह्य मेरुमाश्रित्य दक्षिणम् ।
विलोकिता भूतधात्री समुद्रान्ता च मेदिनी ॥ १ ॥

अथातो भूतधात्रीणां प्रमाणं च प्रवक्ष्यते ।
विष्कम्भः परिधिश्चैव बाहुल्यं– – –शृणु ॥ २ ॥

योजनानि तु विष्कम्भो दशकोट्यः प्रकीर्तितः ।
लक्षस्याग्रे सहस्राणामेकोनाविंशतिस्तथा ॥ ३ ॥

विष्कम्भे च त्रिगुणिते तदश्वांशसमन्विते ।
परिधिश्च समस्तोऽसौ समुद्रान्तक्षितेः स्मृतः ॥ ४ ॥

एकविंशतिकोटीनां सप्तलक्षाणि चाग्रतः ।
ततः परं सहस्राणि सङ्ख्यया सप्तविंशतिः ॥ ५ ॥

एवं समस्तपरिधिर्वृत्ताकारा च मेदिनी ।
त्रैलोक्यमध्ये चैवं सा तलाद्याश्चैव बाह्यतः ॥ ६ ॥

एकविंशतिस्वर्गाश्च मेरुमावृत्य दक्षिणम् ।
परितश्चार्णवाः सप्त रचिताश्च समस्तकाः ॥ ७ ॥

तलश्च वितलश्चैव सुतलो नितलस्तथा ।
तलातलो रसातलः पातालः सप्तमस्तथा ॥ ८ ॥

आदौ मेरुः क्रमोद्भूताः पात्रे पात्रमिवापरम् ।
एते च सप्तपातालाः सृष्टिकालसमुद्भवाः ॥ ९ ॥

उद्भूतश्चादितो मेरुर्द्विसहस्रैश्च योजनैः ।
द्विद्विसहस्रान्ते पुनः पातालाः सप्तधोदिताः ॥ १० ॥

अधस्तात्तु तथा द्व्यष्टसहस्रैर्योजनैर्गतः ।
मेरुर्वै चतुरशीतिसहस्रयोजनोच्छ्रितः ॥ ११ ॥

पृथगेकैकपाताले नवनागकुलानि च ।
नवकानि सप्त चेत्थं त्रिषष्टिः कुलपन्नगाः ॥ १२ ॥

प्रोक्तानि पृथगेवं च नवनागकुलानि च ।
उरगाः सप्तपातालसंस्थिताः सप्त वै क्रमात् ॥ १३ ॥

पद्मः कर्कोटकश्चैव पुण्डरीकोऽथ तक्षकः ।
आनकः शङ्खचूडश्च वासुकिः सप्तमस्तथा ॥ १४ ॥

सप्तपातालाधिराजा महोत्कटमहाबलाः ।
रौद्राश्च विद्रुताः सर्वे ह्यगम्या वीरविक्रमाः ॥ १५ ॥

तले तु पद्मको राजा वितले स्यात्कर्कोटकः ।
सुतले पुण्डरीकश्च नितले स्यात्तु तक्षकः ॥ १६ ॥

तलातले आनकश्च शङ्खचूडो रसातले ।
वासुकिर्नागराजेन्द्रः पाताले सर्वतोऽधिपः ॥ १७ ॥

एकैके नवकुलकास्त्रिषष्टिः कुलपन्नगाः ।
सप्तपातालतश्चोर्ध्वं द्वीपाः स्युर्द्वीपतः परे ॥ १८ ॥

जम्बूः प्लक्षः कुशः क्रौञ्चः शाकः शाल्मलिकस्तथा ।
सप्तमः पुष्कराख्यश्च सप्तद्वीपा तु मेदिनी ॥ १९ ॥

नृपाभिधानतः प्रोक्तं सप्तद्वीपाभिधानकम् ।
पुष्कराख्यो महाराजा द्वीपे सप्तमकेऽधिपः ॥ २० ॥

गोमेदेशश्च गोमेदः शाल्मलिके च शाल्मलिः ।
शाकस्तु शाकद्वीपेशः क्रौञ्चः क्रौञ्चाधिपस्तथा ॥ २१ ॥

कुशेशस्तु कुशः प्रोक्तो महोत्कटो महाबलः ।
महाविक्रमभूपालाः संस्थिता मेरुदक्षिणम् ॥ २२ ॥

मेरुदक्षिणकुक्षौ च महाजम्बुतरूद्भवः ।
यस्य नाम्ना तु विख्यातो जम्बुद्वीपः स उच्यते ॥ २३ ॥

एकछत्रं पृथो राज्यं जम्बुद्वीपे प्रकीर्तितम् ।
क्षीरार्णवमध्ये चैवं पृथुत्वं लक्षयोजनः ॥ २४ ॥

समस्ताः समभूयास्तु प्रयुक्ता द्वीपसागराः ।
अभिधानानि चैतेषां कथ्यन्ते त्वपराजित ॥ २५ ॥

क्षारोदं चैव क्षीरोदं सागरौ दधिसर्पिषोः ।
मध्विक्षूदं तथा ख्यातं रसोदं सप्तमं तथा ॥ २६ ॥

सप्तैते द्वीपान्तरेषु स्थिता मेरुप्रदक्षिणम् ।
सप्तद्वीपार्णवाश्चैवं सृष्टिकाले समुद्भवाः ॥ २७ ॥

भुवर्लोकश्च स्वर्लोको महर्लोकस्तथा जनः ।
तपश्च सत्यलोकश्च ज्ञानलोकश्च सप्तमः ॥ २८ ॥

इत्येकविंशतिस्वर्गा अधिरचित ? शम्भूद्भवाः ।
सृष्टिकाले सुदृष्टाश्च स्वर्गाणामेकविंशतिः ॥ २९ ॥

पातालाश्च ब्रह्मभागे सप्तैवं तु सुसंस्थिताः ।
तदूर्ध्वे सप्त चाख्याता विष्णुभागे द्वीपार्णवाः ॥ ३० ॥

पुष्करोर्ध्वे भुवर्लोकः स्वर्लोकश्च तदूर्ध्वतः ।
तथा चैवमन्यलोकाः शम्भुभागे व्यवस्थिताः ॥ ३१ ॥

बाह्यतः सप्तलोकानां शिवलोकस्तदूर्ध्वतः ।
इत्युच्छ्रिते महामेरौ स्वर्गा एवं सुसंस्थिताः ॥ ३२ ॥

लोकाश्च सप्त चाख्याता मृत्युलोके द्वीपार्णवाः ।
पातालाः सप्तधा चैव त्रैलोक्यमिति प्रोच्यते ॥ ३३ ॥

एकविंशतिस्त्रैलोक्ये स्थिताः स्वर्गा यथाक्रमम् ।
ऊर्ध्वे चैव भवस्थानं पात्रे पात्रमिवापरम् ॥ ३४ ॥

मध्ये च जम्बुद्वीपस्य प्रमाणमपि कथ्यते ।
मेर्वाद्या मुख्यशैलाश्च क्षेत्राणि च समासतः ॥ ३५ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छाया-
मेकविंशतिस्वर्गाधिकारो नाम पञ्चत्रिंशत्तमं सूत्रम् ॥

---

## (३६) महापर्वतप्रमाणं षट्त्रिंशं सूत्रम् ॥

विश्वकर्मोवाच–

जम्बूद्वीपप्रमाणं च विस्तारे लक्षयोजनैः ।
तस्यान्ते वृत्तपरिधौ समस्तं च क्षीरार्णवम् ॥ १ ॥

क्षेत्राणां क्षेत्रमानं च पर्वताश्च मेघोपमाः ।
महापर्वतोद्भवाश्चाप्रमाणा मानवर्जिताः ॥ २ ॥

जम्बूद्वीपस्य मध्ये तु मेरुश्च पर्वतो महान् ।
स्थितौ मेरोः पूर्वतश्च मन्दरो गन्धमादनः ॥ ३ ॥

हिमवान् हेमकूटश्च महाशैलस्य दक्षिणे ।
पश्चिमे पर्वतौ रम्यौ निषधो नील एव च ॥ ४ ॥

श्वेतश्च शृङ्गवांश्चैव मेरोरुत्तरतः स्थितौ ।
एते चाष्टकुला रम्या दिक्षु चैवं व्यवस्थिताः ॥ ५ ॥

देशे समुद्रोपकण्ठे महाशैलाः पुरोभवाः ।
उदयाद्रिर्महाशैलः पूर्वायां च बलादिषु ? ॥ ६ ॥

वारुण्यां तु महावृद्धस्त्रिकूटाख्यश्च दक्षिणे ।
उत्तरे द्विपशैलाख्यः संस्थिताः स्युरनुक्रमैः ॥ ७ ॥

द्व्यष्टसहस्रमध्यस्थः सप्तपातालतो भवः ।
सपद्मकर्णिकाकारैर्मेरुः काञ्चनकन्दरैः ॥ ८ ॥

योजनैर्दशसाहस्रैः पृथुत्वं मेरुमस्तके ।
द्वात्रिंशद्भिः सहस्रैश्च जम्बूद्वीपस्य मस्तके ॥ ९ ॥

मन्दरो हेमकूटश्च निषधश्च श्वेताचलः ।
भूदण्डवत्प्रमाणाश्च सहस्रयोजनोच्छ्रिताः ॥ १० ॥

हिमवान् शृङ्गवांश्चैव नीलो वै गन्धमादनः ।
प्रमाणं योजनैः ख्यातं सार्धद्वयं समुच्छ्रितेः ॥ ११ ॥

मन्दरस्य तुलोदयाक्ष चतुराशी त्रिकूटो युतः ? ।
महाविन्ध्योदयतुल्यः शैलोऽन्यस्त्रिकूटस्तथा ॥ १२ ॥

उच्छ्रयो द्विगुणस्तारात् तदर्धं मध्यतुङ्गता ।
एवं मानं च शैलानां कथितं त्वपराजित ॥ १३ ॥

मन्दरो गन्धमादश्च याम्योत्तरे च दण्डवत् ।
हिमवान् हेमकूटश्च पूर्वापरे स्थितौ तथा ॥ १४ ॥

उत्तरे ? नीलनिषधौ श्वेतशृङ्गी पूर्वापरौ ? ।
कुलाचलाश्च कर्णस्था विदिशोद्भवसागरैः ? ॥ १५ ॥

क्षेत्रसीमा प्रमाणाख्यं मेरुमावृत्य दक्षिणैः ।
शैलान्तरेषु क्षेत्राणि कथयामि समासतः ॥ १६ ॥

उदयाद्रिश्च पूर्वे तु त्रिकूटः स्यात्तु दक्षिणे ।
महाविन्ध्योऽपरे चैवं द्वीपशैलाः पूर्वोत्तरे ॥ १७ ॥

तेषामन्ते समुद्राश्च संस्थिताः स्युः प्रदक्षिणम् ।
तेषामन्ते पुनर्द्वीपो द्वीपान्ते चैव सागराः ॥ १८ ॥

सप्तद्वीपाः समुद्राश्च क्रमेणापि सुसंस्थिताः ।
जम्बूद्वीपप्रमाणेन द्विगुणा द्विगुणोत्तराः ॥ १९ ॥

इयं युक्तिर्विधातव्या द्वीपे द्वीपे तु शैलजाः ? ।
संस्थिताः क्रमयोगेन पूर्वापरयाम्योत्तरे ॥ २० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
महापर्वतप्रमाणाधिकारो नाम षट्त्रिंशं सूत्रम् ॥

———

## (३७) विश्वकर्मावलोकितपृथ्वीनवखण्डानिं सप्तत्रिंश सूत्रम् ॥

---

विश्वकर्मोवाच-

राजेन्द्रस्य पृथोः पूर्वमष्टपुत्रा प्रकीर्तिताः ।
अष्टवर्णाधिपतय आत्मराज्यं तु मध्यतः ॥ १ ॥

तद्विभक्तानि क्षेत्राणि क्षारार्णवस्य मध्यतः ।
शैलान्तरेषु ख्यातानि क्षेत्राणि नव सङ्ख्यया ॥ २ ॥

इलाक्षं दिव्यकं चैव भारतं हरिवर्षकम् ।
किंपुरुषः केतुमालः सम्भवो मानदण्डकः ॥ ३ ॥

रम्यकं मध्यक्षेत्रं च मेरुमावृत्य दक्षिणम् ।
एतानि नवक्षेत्राणि जम्बूद्वीपस्य मध्यतः ॥ ४ ॥

मन्दरो हेमकूटाख्यो निषधः श्वेतपर्वतः ।
एतन्मध्ये रम्यकं च मेरुमावृत्य दक्षिणम् ॥ ५ ॥

मन्दरगन्धमादनमध्ये चेलावृतोद्भवः ।
गन्धमादनोदयाद्रिमध्ये दिव्यकमुच्यते ॥ ६ ॥

हिमवद्धेमकूटान्तर्वर्षो नाम्ना हरिस्तथा ।
त्रिकूटहिमवदन्तर्वर्षो भारत उच्यते ॥ ७ ॥

निषधनीलयोर्मध्ये किम्पुरुषो नाम्नोत्तमः ।
नीलाम्बुध्योर्मध्यतश्च केतुमालश्च नामतः ॥ ८ ॥

निषधनीलयोर्मध्ये किम्पुरुषः नाम्नोत्तमः ।
नीलाम्बुध्योर्मध्यतश्च केतुमालश्च नामतः ॥ ९ ॥

श्वेतशृङ्गवतोर्मध्ये रम्यको नाम नामतः ।
शृङ्गवद् द्वीपशैलान्तर्मानदण्डसमुद्भवः ॥ १० ॥

शुद्धस्फाटिकसंकाशा दिव्याभरणभूषिताः ।
चन्द्रकान्त्यमृताहारा नरा नार्योऽयुतायुषः ॥ ११ ॥

इलावर्ते ज्ञानयुता नरानारीस्वरूपिणः ।
अथातो दिव्यवर्षे च कथयामि समासतः ॥ १२ ॥

धूलिता भस्माङ्गरागाः क्रूरा उग्रा मलीकृताः ।
जटामुकुटशोभाढ्या दिव्यक्षेत्रेऽयुतायुषः ॥ १३ ॥

शतायुषो हरिवर्षे बौद्धाख्या हीनतेजसः ।
गौरश्यामा नरा नार्यो बुद्धधर्मप्रपालकाः ॥ १४ ॥

श्यामा गौराश्चतुर्वर्णा भरते च शतायुषः ।
देवाग्निगुरुभक्ताश्च वेदशास्त्रादपारगाः ॥ १५ ॥

चतुरशीतिविद्यासु सूत्रकर्मसु कौशला: ।
धर्मशास्त्रादिनिपुणा भोगयुक्ता विभूतिका: ॥ १६ ॥

नरा: श्वेता: किंपुरुषे महारूपास्तथा स्त्रियः ।
युक्ता: केशाद्यलङ्कारै रमन्ते कामवन्दका: ॥ १७ ॥

केतुमाले किन्नराणां नार्यो रूपसमन्विता: ।
सर्वे धर्मरताश्चैव त्रिशतायुष्कजीविना: ॥ १८ ॥

सम्भवे ब्रह्मतेजस्विवेदशास्त्रादिपारगा: ।
पञ्चशतवर्षायुष: पद्मरागनिभोदरा: ॥ १९ ॥

मानदण्डे प्रचण्डाश्च नरा नार्यो ज्ञानोद्भवा: ? ।
योगीन्द्राश्चायुतायुष्का दिव्या नार्योऽग्नितेजस: ॥ २० ॥

रम्यके दिव्यरूपाश्च नरा नारीगणास्तथा ।
देवलोके तत्पराख्या देवरूपानुरूपका: ॥ २१ ॥

नवक्षेत्रप्रमाणानि क्षेत्राणां क्रमतस्तथा ।
नवखण्डा इति प्रोक्ता जम्बूद्वीपस्य मध्यत: ॥ २२ ॥

षट् खण्डानां च भोक्तारो भवन्ति चक्रवर्तिन: ।
त्रिखण्डभूमिपो देव: सन्धावर्णवमण्डले ॥ २३ ॥

त्रिखण्डोर्ध्वे चक्रवर्ती द्विखण्डभुक् मतोऽधिप: ।
एकखण्डे भवेद्राजा शेषा: स्वल्पास्तु राजका: ॥ २४ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां विश्वकर्मावलोकितपृथ्वीनवखण्डाधिकारो नाम सप्तत्रिंशत्तमं सूत्रम् ॥

---

## (३८) भारतक्षेत्रग्रामसङ्ख्यानृपराज्यप्रमाणनामाष्टात्रिंशं सूत्रम् ॥

---

विश्वकर्मोवाच-

प्रोक्ता तु भारते वर्षे पवित्रे कर्मभूम्यसौ ।
पुण्यपापप्रभवाणि सर्वभूतानि वै तथा ॥ १ ॥

ग्रामाणां च तथा संख्या देशानां च प्रमाणतः ।
राज्ञां च युक्तिमानं च अलङ्कारैस्तद्रूपतः ॥ २ ॥

कान्यकुब्जे ग्रामसङ्ख्या षट्त्रिंशल्लक्षकाणि च ।
अष्टादशलक्षमानं राज्यं गौडेश्वरे मतम् ॥ ३ ॥

तदर्धं कामरूपाश्च तत्समं मण्डलेश्वरम् ।
कार्त्तिकपुरे तत्सङ्ख्या चौडे लक्षद्वासप्तति: ॥ ४ ॥

दक्षराज्ये सार्धसप्तलक्षाणि चैव सङ्ख्यया ।
अष्टादश च लक्षाणि सहस्राणि द्विनवतिः ॥ ५ ॥

उज्जयिन्यां वै सपादलक्षाणि च स्वयंभरे ।
ललाटे गुर्जरे कच्छे सौराष्ट्रे लक्षकद्वयम् ॥ ६ ॥

सार्धत्रयं मरुकोटे लक्षाणां मरुमण्डले ।
सिन्धुसागरदेशे तु सार्धलक्षत्रयं स्मृतम् ॥ ७ ॥

खुरपाणे चत्त्वारिंशल्लक्षाणि च तथैव च ।
त्रिगर्तके द्विलक्षाणि तथा ग्रामास्तु सङ्ख्यया ॥ ८ ॥

सूर्यलक्षाण्यहिराज्ये षट्सार्धानि गुडाद्वीपे ।
जलन्धरे सार्धत्रयं तथा लक्षाणि सङ्ख्यया ॥ ९ ॥

ग्रामाः षष्टिसहस्राणि तथा षष्टिशतानि च ।
षष्टित्रयस्तथा चैव चेत्थं काश्मीरमण्डलम् ॥ १० ॥

स्त्रीराज्यं च त्रिकूटाख्यं काश्मीरपूर्वगणाधिपः ? ।
हिमवान् दण्ड आख्यातो वर्षे भारतके तथा ॥ ११ ॥

महापर्वताश्रिताश्च सजलाशयवर्तिनः ।
पर्वतार्णवमध्यस्थाः सजला देशसम्भवाः ॥ १२ ॥

सिन्धुसागरतो देशाः काश्मीरान्ता जलैर्युताः ।
गौडवङ्गकामरूपाः सजलाः कार्तिकेश्वरे ॥ १३ ॥

महापर्वताश्रमा वै हिमाद्रौ गन्धमादने ।
श्वेतशृङ्गे हेमकूटे नीलनिषधमन्दरे ॥ १४ ॥

सौराष्ट्रकच्छकलाटा कोङ्कणानि चतुर्दश ।
श्रीशैलसमुद्रे च सजलाश्चोत्तमा मता: ॥ १५ ॥

महाराष्ट्रे सुरराज्ये गौडे रत्नपुरादिके ।
डहाले कान्यकुब्जे च मध्यमाश्च जलाश्रयाः ॥ १६ ॥

कान्यकुब्जे मथुरायामवन्त्यां च कालञ्जरे ।
गुर्ज्जरे सौराष्ट्रादिके मध्यमा अम्बुकाश्रयाः ॥ १७ ॥

मरुकोटे मरुचण्डयां गुर्ज्जरे सिन्धुपार्श्वगे ।
संकीर्णं जलमाख्यातमल्पवृष्टिः प्रवर्तते ॥ १८ ॥

आत्रिकूटं हिमाद्यन्तं योजनैः शतपञ्चभिः ।
पूर्वापरौतौ यविध्यौ हिमदण्डश्च भारते ॥ १९ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां भरतक्षेत्रग्रामसङ्ख्यानृपराज्यप्रमाणसङ्ख्याधिकारो नामाष्टात्रिंशत्तमं सूत्रम् ॥

---

## (३९) वनयात्रानामैकोनचत्वारिंशं सूत्रम् ॥

विश्वकर्मोवाच—

मेरुश्च मन्दरश्चैव पर्वतो गन्धमादनः ।
हिमवान् हेमकूटश्च निषधो नील एव च ॥ १ ॥

श्वेतश्च शृङ्गवांश्चैव महाशैलाः प्रकीर्तिताः ।
एते पर्वतराजाश्च महावननदीभवाः ॥ २ ॥

महेन्द्रो मलयश्चैव महाविन्ध्यस्तथैव च ।
हिमाद्रिः पारियात्रश्च श्रीशैलश्च तथाऽर्बुदः ॥ ३ ॥

महावनानि ख्यातानि शृणु चोपवनानि च ।
त्रिधोदितं च क्रमतो वनोपवनकाननम् ॥ ४ ॥

यत्र देशाश्च विरला वनकूलेषु संस्थिताः ।
उपवनानि ज्ञेयानि येषु ग्राह्या द्रुमाः शिलाः ॥ ५ ॥

कीर्तिमान् कीर्तयेद्यत्र रोप्यमाना द्रुमैर्लताः ।
काननं तच्च विज्ञेयं नृपक्रीडनहेतुकम् ॥ ६ ॥

क्रमागतं शम्भुभवं वनोपवनकाननम् ।
वनयात्रा तु कर्तव्या तेषां कुलसमाश्रितैः ॥ ७ ॥

योग्याः प्रासादप्रतिमालिङ्गगेहादिके तथा ।
प्रशस्ता दारुशैलाश्च ग्राह्या यत्र सदा स्मृताः ॥ ८ ॥

अशोकशोकखदिराः कदम्बा देवदारवः ।
श्रीपर्णास्तिनिशाश्चैव सरलाश्चन्दनास्तथा ॥ ९ ॥

भूर्जत्रिमिसश्रेण्यश्च ? शाल्मलीरक्तचन्दनाः ।
अन्येऽपि बहवो वृक्षा महत्यश्च शिलास्तथा ॥ १० ॥

संछन्ना बहुभिः पत्रैः प्रदेशा यत्र संस्थिताः ।
सरित्तीरं समाश्रित्य रविरश्मिविवर्जिताः ॥ ११ ॥

ईशान्यांत वादिनेत्रं पूर्ववातैः प्रपादिताः ।
अन्यवातैर्हताद्येषु अप्रशस्ताः शुभप्रदाः ? ॥ १२ ॥

सुप्रदेशाः सुसंग्राह्याः सर्वकामफलप्रदाः ।
अप्रशस्ता अन्यकाले निमित्तं चोपलक्षयेत् ॥ १३ ॥

दिव्यानि चैव भौमानि शुभानि चाशुभानि च ।
प्रशस्तानि शुभान्यत्र चाशुभानि विवर्जयेत् ॥ १४ ॥

निमित्तानि गजश्चाश्वो वृषभश्च रथो विदुः ।
घृतं पुष्पाक्षते विप्रः कन्या रम्भा च गौर्मृगः ॥ १५ ॥

शतपत्रं च वैश्या च नृपः कुम्भश्च दीपकम् ।
वस्त्रयुग्मं फलं छत्रं यानं झम्पानमासनम् ॥ १६ ॥

वसुन्धरा धृत्यमानाय ? बहलं धान्यं पत्रादिकम् ? ।
एतेषु दृश्यमानेषु निष्पत्तिः सुश्रियस्तथा ॥ १७ ॥

तैलाभ्यक्तस्तथाहिश्च मुक्तकेशाः स्त्रियस्तथा ।
काष्ठभारं चाग्रहीनं विधवा गुरुपादिकम् ? ॥ १८ ॥

उल्कापातो दिशादाहो महावातप्रवर्तनम् ।
तारापातोऽशनिघातः परितः पांशुवर्षणम् ॥ १९ ॥

एतेषु दृश्यमानेषु न भविष्यन्ति वै श्रियः ।
न गच्छेत् पदमेकं तु यदीच्छेच्च निवर्तनम् ॥ २० ॥

मेघगर्जनवृष्टी च मत्स्योदयादि शोभनम् ।
अन्तरिक्षे भवेच्छेदः फलपुष्पनिपातनम् ॥ २१ ॥

वायुकां सुरङ्गिकं वागि वामे वृक्ष्याग्रसंस्थिताम् ? ।
कौशिको वामतः श्रेष्ठो ह्यशुभो दक्षिणे तथा ॥ २२ ॥

कङ्कणं हारकेयूरौ मुकुटं कुण्डलादिकम् ।
एतेषु दृश्यमानेषु सर्वकामफलं भवेत् ॥ २३ ॥

एवं शुभैश्च शकुनैः प्रविष्टो वनमध्यतः ।
वृक्षं सम्पूज्य तु करे कुठारं पूर्वतो धरेत् ॥ २४ ॥

तत ॐ नमोरुद्राय पिङ्गलाय महात्मने ।
विश्वेदेवा विश्वरूप विश्वकर्मणे वै नमः ॥ २५ ॥

अनेन चैव मन्त्रेण कुठारमभिमन्त्रयेत् ।
तत्र क्षेत्रं बलिं दद्यात् समर्च्य सर्वदेवताः ॥ २६ ॥

तदा च छेदयेद् वृक्षं पतितं चोपलक्षयेत् ।
ईशानोत्तरपूर्वे च सर्वकामफलप्रदम् ॥ २७ ॥

अशुभश्चान्यदिशायां शाखापातस्तथोच्यते ।
दिशायां चाप्रशस्तायां तच्छाखां वर्जयेद् बुधः ॥ २८ ॥

एवं संगृह्यते वृक्षमानयेन्नगरादिके ।
वेशयेदुत्तरदिशि वादित्रैर्ब्रह्मघोषकैः ॥ २९ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
वनयात्राधिकारो नामैकोनचत्वारिंशत्तमं सूत्रम् ॥

---

## (४०) वनयात्राशिलापरीक्षा नाम चत्वारिंशं सूत्रम् ॥

---

विश्वकर्मोवाच-

लिङ्गार्चादिशिलानां च सम्प्रवक्ष्यामि लक्षणम् ।
पूजा पूर्वविधानेन शिलोद्धारं तु कारयेत् ॥ १ ॥

यो दक्षिणे शिलाभागस्तच्छीर्षं चोत्तरे पदम् ।
पूर्वापरक्रमेणैव ह्यपरं शिर उत्तमम् ॥ २ ॥

उद्धरेत्तु शिलां तत्र पूर्वमन्त्राभिमन्त्रिताम् ।
वलोकयेच्च तां प्राज्ञ मन्त्रैश्चापादमस्तकम् ॥ ३ ॥

पादोर्ध्वे कुक्षिदेशे च छेदं तत्र समारभेत् ।
परीक्ष्य सूत्रे चाकारं छेदश्चेत् पुरुषाकृतिः ॥ ४ ॥

निविडा निर्व्रणा तीव्रगम्भीरमधुरान्विता ।
शीतला च सुगन्धा च मृद्वी तेजसमन्विता ॥ ५ ॥

युव-नाम्नी शिला ज्ञेया सर्वकामफलप्रदा ।
पूजिता सर्वलिङ्गेषु ह्यर्चना सर्वशोभना ॥ ६ ॥

मत्स्यमण्डूकतरला यैतैश्चिन्हैः प्रदृश्यते ।
वृद्धा सा तु शिला ज्ञेया सर्वकार्यविनाशिनी ॥ ७ ॥

अतिमृद्वी भवेद् बाला मन्दपुष्पकवेष्टिता ।
टंकघातैः साधनीया छेदाद्यं च परीक्षयेत् ॥ ८ ॥

विमलैर्दूषिता या तु वर्जयेत्तां शिलां बुधः ।
विमलं त्रिविधं ज्ञेयं लोहकांस्यजहेमजम् ॥ ९ ॥

लोहविमलैर्दुर्भिक्षमनावृष्टिश्च कांस्यजैः ।
हेमजैर्विमलैः पीडा ह्युदितं च त्रिधा क्रमात् ॥ १० ॥

छेदने च कृते तस्या मण्डलं यत्र दृश्यते ।
तद् गर्भितं विजानीयात् जीवशिल्प-विचक्षणः ॥ ११ ॥

माञ्जिष्ठे चैव मण्डूको हरिते कर्कटो भवेत् ।
पीते गोधा विजानीयात् कृष्णे विद्याद् भुजङ्गमम् ॥ १२ ॥

पलिते मूषको ज्ञेयः कृकलाशश्च श्यामके ।
अतिरक्तेन वर्णेन चेन्द्रगोपकमादिशेत् ॥ १३ ॥

किंशुकाभे तु खर्ज्जूरोऽतसीपुष्पे पिपीलिकाः ।
गुडवर्णे तु पाषाणं कूर्मं स्यादापसन्निभे ॥ १४ ॥

भस्माभे तिमिरी ज्ञेयो वारला श्वेतभस्मभे ।
विचित्रे वृश्चिकं विद्यात् खद्योतं मधुवर्णके ॥ १५ ॥

पञ्चाल्यां खेचरा ज्ञेयाः श्वेतवर्णे नरो भवेत् ।
एतैर्दोषैस्त्यजेल्लिङ्गं प्रतिमादोषमेव च ॥ १६ ॥

उत्तमाधमवर्णैश्च पाषाणानुपलक्षयेत् ।
श्वेतश्च पद्मवर्णश्च कुमुदो मुद्गसन्निभः ॥ १७ ॥

पाण्डरो माक्षिकवर्णः कपोतो भृङ्गसन्निभः ।
श्वेते विप्राश्च वर्द्धन्ते राजन्याः पद्मवर्णके ॥ १८ ॥

वैश्याश्च कुमुदाभेन मुद्गभे शूद्रजातयः ।
अन्ये तु शेषवर्णेषु वृद्धिमेवं तु लक्षयेत् ॥ १९ ॥

आरोग्यं पाण्डुवर्णेषु माषाभे विजयः स्मृतः ।
कपोते चार्थवृद्धिश्च भृङ्गाभेषु प्रजाश्रियः ॥ २० ॥

अपराजित उवाच–

यदि तत्प्राप्यते चिह्नं यथोक्तं च द्रुमाः शिलाः ।
तेषां विधिं क्रियायुक्तं कथयस्व परेश्वर ॥ २१ ॥

विश्वकर्मोवाच–

पुनश्चेत्प्राप्यते चिह्नमानीत्वा नगरोत्तरे ।
आरोपयेत्ततो वृक्षं क्षिपेद् भूमध्यतः शिलाम् ॥ २२ ॥

शिलोपरि स्थण्डिलं च वृक्षं चोत्तरमाश्रितम् ।
मृत्युंजयजपं चाष्टाधिकं कुर्यात्तथायुतम् ॥ २३ ॥

अष्टोत्तरसहस्रं च हुत्वापामार्गसमिद्भिः ।
दिक्षु चिन्हैः पूरितं च समुद्धरेत्पुनर्नवम् ॥ २४ ॥

अनेन विधिना वत्स उद्धरेच्च शिलाद्रुमम् ।
अप्रशस्तं प्रशस्तं स्यादनेन विधिनान्वितम् ॥ २५ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
वनयात्राशिलापरीक्षाधिकारो नाम चत्वारिंशत्तमं सूत्रम् ॥

## (४१) हस्तकर्म्मप्रमाणमेकचत्वारिंशं सूत्रम् ॥

विश्वकर्मोवाच-

हस्तलक्षणमानं च गायत्रीमानसम्भव: ।
मानोन्मान-प्रमाणं च सर्वकर्मसु कारणम् ॥ १ ॥

विज्ञेयं सूत्रधारेण हस्तमानं च लक्षणम् ।
मानोन्मानप्रमाणाख्यं वास्तुशास्त्रादिदीपकम् ॥ २ ॥

भास्करोदयनाद् दिष्ट: किरणैश्च प्रकाशित: ।
जालान्तरगते रश्मौ सूक्ष्मरेण्वष्टमांशक: ॥ ३ ॥

परमाणु: प्रमाणं तत् समुद्दिष्टं समन्तत: ।
परमाणुरष्टगुणमेकत्र पिण्डलक्षणम् ॥ ४ ॥

रजोभिरष्टगुणितं केशाग्रं च प्रसिद्ध्यति ।
केशाग्रैरष्टगुणितैर्लिक्षाकमं तु योजयेत् ॥ ५ ॥

केशाग्रैश्चाष्टगुणितैर्लिक्षा चैका तु सिद्ध्यति ।
लिक्षाभिरष्टभिर्यूका यूकाभिश्चाष्टभिर्यव: ॥ ६ ॥

तथाष्टगुणितैश्चैव यवैर्मानं प्रसिद्ध्यति ।
निर्दोषं मानमेतं च स्यात्परमाणुमूलकम् ॥ ७ ॥

उत्तममध्यमाधमं त्रिविधो माननिर्णय: ।
न्यूनाधिके कृते हस्ते दोष: स्याच्च महाभयम् ॥ ८ ॥

ज्येष्ठं चाष्टयवै: प्रोक्तं मध्यमं सप्तभिर्यवै: ।
स्यात्कनिष्ठं षड्यवैस्तच्चतुर्विंशतिभि: कर: ॥ ९ ॥

एवं मानोद्भवो हस्त उदितश्च त्रिधा क्रमात् ।
अङ्गुष्ठाग्रे पर्वरेखा पुष्पकं त्रिभिरङ्गुलै: ॥ १० ॥

ऑं तत्पुरुषाय विद्महे महादेवाय धीमहि ।
तन्नो रुद्र: प्रचोदयात् ॥ ११ ॥

एते अङ्गुलाक्षराणि क्रमतश्चैव संस्थिता: ।
पुष्पके देवतास्तिस्र: प्रतिष्ठाप्या यथाक्रमम् ॥ १२ ॥

आदौ विष्णुरग्रे रुद्रो ब्रह्मा मध्ये च संस्थित: ।
भूर्भुव:स्वर्बीजत्रयं स्युरायस्वरदेवता: ॥ १३ ॥

ईश्वरो वायुविश्वे च वन्हिर्ब्रह्मा दिवाकर: ।
रुद्रो यमो विरूपाख्यो वसुरिन्द्रो जलाधिप: ॥ १४ ॥

स्कन्द इच्छा क्रियाज्ञानं धनदो विजयस्तथा ।
वासुदेवो बलभद्र: प्रद्युम्नश्चानिरुद्धक: ॥ १५ ॥

एते च वासुदेवांशाः कम्बिकानिश्चला स्मृताः ।
आगमैर्वेदमन्त्रैश्च पूज्याश्च परमाः कलाः ॥ १६ ॥

रुद्रश्च पवनस्त्वष्टाऽनलो ब्रह्मा तथा यमः ।
वरुणो धनदो विष्णुर्मूलतश्चान्ततः स्थिताः ॥ १७ ॥

अञ्जनैः खदिरैर्वंशैः कनिष्ठाः सर्जपादपैः ।
हेमरौप्यताम्रमयाः श्रेष्ठा लौहाश्च मध्यमाः ॥ १८ ॥

आयामश्चतुर्विंशत्या त्रिविधाङ्गुलतः स्मृतः ।
ज्येष्ठमध्यकनिष्ठानां प्रत्येकं हस्तसङ्ख्यया ॥ १९ ॥

नगरग्रामपूःखेटकूटानां कर्वटस्य च ।
मानसङ्ख्या योजनैश्च ज्येष्ठहस्तेन मापयेत् ॥ २० ॥

प्रासादप्रतिमालिङ्गजगतीपीठमण्डपान् ।
गर्भां निवेशं भवनं मापयेन्मध्यमानतः ॥ २१ ॥

शय्यासनं स्थालीपात्रं छत्रसिंहासनादिकम् ।
शस्त्रं यानं च अम्पानं मापयेच्च कनिष्ठतः ॥ २२ ॥

सिद्धार्थाङ्गुलपृथुत्वे पिण्डं कुर्यात् तदर्धतः ।
चतुर्विंशत्यङ्गुलानां क्रमेण नवदेवताः ॥ २३ ॥

रुद्राद्या ब्रह्मपर्यन्तं देवाः स्थानेषु पुष्पके ।
ब्रह्मतो विष्णुपर्यन्तं रेखाः स्युर्द्वादशाङ्गुलैः ॥ २४ ॥

ब्रह्मादिस्थानपञ्चकं द्विभक्तं चाङ्कितं त्रिधा ।
अष्टमङ्गुलं कार्यं चतुर्धा द्वादशाङ्कितम् ॥ २५ ॥

इत्युक्तमानप्रमाणं प्रयुक्तं वास्तुवेदिभिः ।
वास्तोरुत्तरपार्श्वेऽर्च्यं कम्बिकाकलशादिकम् ॥ २६ ॥

आच्छादयेद्वस्त्रयुग्मैः कम्बिकां कलशांस्तथा ।
सुगन्धधूपपुष्पैश्च देवतार्थार्चनादिकैः ॥ २७ ॥

समुद्धरेत् पूजयित्वा स्तोत्रैर्याम्यकरोत्तमैः ।
उच्चाटनं व्याधी रोगस्तथा सन्तापकारणम् ॥ २८ ॥

अग्निभयं प्रजापीडा मृत्युर्व्याधिः पुनस्तथा ।
निधनं नरकपातं रुद्रादि विष्णुतस्तथा ॥ २९ ॥

एकाङ्गुलो मानप्रयोग एवं सङ्ख्याशब्दादिकोत्तमः ? ।
पर्यायशब्दा व्यवहारयोगे समीरिताः सूत्रकलाप्रवीणैः ॥ ३० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
हस्तकम्बीप्रमाणाधिकारो नामैकचत्वारिंशत्तमं सूत्रम् ॥

---

# (४२) गणितशब्दनिघण्टुर्नाम द्विचत्वारिंशं सूत्रम् ॥

विश्वकर्मोवाच-

शब्दा उक्ता अङ्गुलाद्या निघण्टौ भाषितानि च ।
भूयोजनप्रमाणानि प्रवक्ष्यामि यथार्थतः ॥ १ ॥

क्ष्माक्षितितनुशब्दरूप-मन्त्रचन्द्राश्चैकपर्यायाः ।
पक्षयुग्मनेत्रद्वन्द्वगोलकं दस्राश्विन्योर्विषाणचरणा द्वयोः ॥ २ ॥

अग्नयो गुणरामाश्च कालसङ्ख्याविधिस्तथा ।
शक्तयो हरनेत्राणि त्रयाणां वाचका इमे ॥ ३ ॥

कृतकोणयुगविद्यास्य तुर्याम्बुधि दिग्विदिग्मङ्गला ।
गोचरणमार्गाख्यार्त भागाः श्रुतयश्च सङ्ख्या चतुर्णाम् ॥ ४ ॥

इषुविषयतत्त्वेन्द्रियभूषण ? शम्भुवक्त्र क्षेत्राणि ।
वास्तुलिङ्ग प्रतीता व्रत ? भवमुखानि च पञ्चानाम् ॥ ५ ॥

गायत्रीदर्शनखण्डरसर्तुयान कर्णिक ? रागषण्मित्रम् ।
द्विशक्ति कोणगण रत्नशक्त्या ननामृतग्रन्थ स्कन्दवक्त्रं षण्णाम् ॥ ६ ॥

समुद्राद्रिद्वीपनगा कन्या यक्ष स्वर नाद खण्डाग्रम् ? ।
ऋषिमुनीन्द्रसप्तलोकसूर्याश्च पातालानि सप्तानाम् ॥ ७ ॥

शैलान्वय वसुपद्मदल जातिक्रमच्छन्दांसि ? ।
व्यक्तिगम स्वगप्रमानशंभव अष्टानाम् ? ॥ ८ ॥

अङ्कार रन्ध्र प्रदेश अङ्कस्थान कन्याहस्तांगलवण
भू वरिष्ठं ताराग्रैक क्रमोद्भव नवानाम् ? ॥ ९ ॥

निस्वरादिकविष्णवतारप्रदेशैकनखार्धस्वरताल दशानाम् ?
दशैकरुद्रभूताद्विगोकर्णशातत्वेकादशानाम् ?
तालवितस्तिमुखवदनसूर्यमासा केशं च भानु
रुद्रैक शिव द्वादशानाम् ?
दैत्यादि सुरेन्द्रादित्या सूर्यैक खात त्रिदशास्त्रयोदशसुवाचकाः ?
भुवनमनुव्यक्ति शाकुतेन्द्र खण्डल द्विसप्तमन्वन्तर चतुर्दशानाम् ?
तिथिर्मासार्धं पञ्चदशानाम् । कला द्विरष्ट नृपभृङ्गा
पक्षैक बिन्दुषोडशानाम् । जन्मपक्षं भोभ्यासश्चेति द्विरष्टैकन्यून सप्तदशानाम् । वेदाङ्गस्मृति शान्ति विभूति पौराण्यभवोद्भव महाव्रत मेघराजश्चाष्टादशानाम् । अधृति अतृप्ति विफला अमोघात्वेकोन विंशतिः । नखविश्वा विश्वपार स्वंती धृतीति स्याद्विंशतिः । त्रिषाकान्तामूर्च्छनास्तेकविंशतिः । कृष्णाकान्ता भूध्यानां त्वेकविंशतिः । तृसृतां स्वामारोप्या द्वाविंशत्तिः ? ।

त्रिकात्रीर्थंकास्तीर्णा त्रयोविंशतिः ।
तीर्था जिनमहाद्विशासनी चतुर्विंशतिः ।

तत्त्वगुणयुग्मात् पञ्चविंशतिः ।
एकाङ्गुलादि हस्तान्ता समाः शब्दाः प्रकीर्तिताः ।
निघण्टौ एतावन्तश्च पर्यायकाः सुदीपकाः ॥ १८ ॥

वास्तुशास्त्रोद्भवं वेदेशे मानसङ्ख्या मानं सङ्ख्यागाश्च प्रमाणतः ।
पञ्चपट्टकः ? प्रमाणशास्त्रतः वास्तुशास्त्रार्थदीपिकाः ॥ १९ ॥

हस्तः करो जिनाङ्गुलो द्वितालो मानदण्डकः ।
वर्णवभुजोमाख्याता तमुशाश्वास्तुया ग्रहस्ताना ? ॥ २० ॥

( वर्णचतुष्क विख्यातः तत्तु शाखासु या गृहस्थानाम् ? )
घन निबिड निर्घट शिलार्थे ? द्विकरो दण्डार्धः युग्महस्तावदार्धा ? ॥ २१ ॥

द्विगुण द्विहस्तानां तुत्र इषु जिनन्य इषु त्रिपाद् दण्ड पा (प्रा)दु(द)नश्च ।
द्वासमम्याङ्गुलं प्रोक्तं पक्षहस्तनि(द्वि)हस्तानाम् ? ॥ २२ ॥

दण्डश्चापो धनुः स्मृतभूमाप्य बृहद्करशिलायाम् ? ।
मविघ्न(घन)श्च (स्य) तु हस्तानामेव च ? ॥ २३ ॥

अन्वयसन्तानकश्च सन्तानोद्भव मानतः ।
सूत्रयुद्भवं दण्डाग्र आदिछन्द पर्वनिष्काशः ? ॥ २४ ॥

एकोद्भवमालाक्ष आद्योक्त माप्य घराक्ष घ (र)न्यम् ! ।
करतलवंश विंशतिहस्तानां च ? ॥ २५ ॥

यवान्तं प्रमाणं मध्यं प्रयुक्तं परमाणुतः ।
मध्याङ्गुलस्य कथये अंशाश्चैव प्रमाणतः ॥ २६ ॥

अङ्गुलस्याष्टमांशं यद् तन्मानं नित्यशो यवः ।
द्विरष्टांशो भवेर्लिख्या ? अंशानां चतुर्विंशतिः ॥ २७ ॥

अङ्गुलस्याष्टमांशेन यवो यूका तदंशतः ।
लिक्षा यूकाष्टमांशेन केशं तदष्टमांशकम् ॥ २८ ॥

रेणुः केशस्याष्टमांशः प्रमाणं तत्तदंशतः ।
तस्याष्टमांशे छाया च कथिताश्च क्रमेण तु ॥ २९ ॥

प्रयुक्तं मानमुद्दिष्टं प्रमाणशास्त्रदीपकम् ।
निघण्टु भाषोक्तमाख्या प्रयुक्ता वास्तुवेदिभिः ॥ ३० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
गणितशब्दनिघण्टवधिकारो नाम द्विचत्वारिंशं सूत्रम् ॥

---

## (४३) ज्योतिषपञ्चाङ्गवासना नाम त्रयश्चत्वारिंशं सूत्रम् ॥

विश्वकर्मोवाच

ज्योतिषं च प्रवक्ष्यामि पञ्चपदार्थकोत्तमम् ।
यतः समस्तमुत्पन्नं चन्द्रार्कद्युतिवेदनम् ॥ १ ॥

यथा दिनं विना सूर्यं शशाङ्कं शर्वरी विना ।
कुटुम्बिनो विना पुत्रं शास्त्रं वै ज्योतिषं विना ॥ २ ॥

तिथिर्वारश्च नक्षत्रं योगः करण एव च ।
चन्द्रार्कयोश्च सङ्क्रान्त्या वक्ष्ये पञ्चाङ्गवासनाः ॥ ३ ॥

कल्यन्तस्था कृताद्या च प्रतिष्ठाप्येव भुक्तिका ।
संवत्सरैर्हरेद्भागं लब्धं शेषक कृताः ? ॥ ४ ॥

संवत्सरैः पुनर्भागं लब्धं सूत्र समुद्धरेत् ।
एकनवत्याष्टशताभिष्ठं ? तदाङ्कः शाक उच्यते ॥ ५ ॥

तथाङ्कं नवाङ्कहीनमर्कगणस्त्रैत्रादियुक् ? ।
त्रिस्थानैः स्थापयेच्चैवं नन्दयुग्मयमैस्तथा ॥ ६ ॥

फलवेदगुणा मध्याः पातं चाष्टनियोजिताः ।
शून्यरामेन्दुभिर्भागैर्योजयेत् प्रथमं फलम् ॥ ७ ॥

अनष्टकारे शेषः ? पञ्चरामनिशाकराः ।
मासे घनोऽयनष्टहीना षष्टिभागैः शेषमृणम् ॥ ८ ॥

अमावास्या ध्रुवकस्य मासे मासे तथा पुनः ।
चारुभद्र ध्रुवकमासे छिधा छिरामधना ? ॥ ९ ॥

वेदानवेन्दुभिर्भागैः फलोनेक षष्टिभाग-
घटिकामाप्नोति तिथि विज्ञेय फलमासगुणामिश्रितः ? ॥ १० ॥

सप्तमे स्थितारन्येन्द्र वारउदये यमहरे मासगणे ? ।
छिसंगच्छेछिसार्धभाग पिण्डामग्निलबुद्धाछिके । युक्तोवसयमसेसा ? ॥ ११ ॥

इति नष्टध्रुवकायनम् ॥

अमावास्या ध्रुवमासे मासे मासे तथा पुनः ।
एवं युक्तिर्विधातव्या वर्तते चाङ्गवासना ॥ १२ ॥

एकोत्तरे ध्रुवमध्ये द्वात्रिंशद् घटिकायुतम् ।
पक्षपिण्डं च युग्मर्क्षे घटिके चन्द्रसङ्ख्यया ॥ १३ ॥

प्रथमं स्थापयेद्वारं वारघट्यस्तदूर्ध्वतः ।
पिण्डकेषु अधस्ताच्च ऋक्षं च घटिकार्धतः ॥ १४ ॥

एवं भुक्ती रवेःख्याता सन्क्रात्याद्युपलक्षयेत् ।
एषा त्वन्तरयुक्तीश्च लक्ष्याः पञ्चाङ्गवासनाः ॥ १५ ॥

मासान्ते पूर्वध्रुवके योज्याऽमावास्यिकान्ततः ।
वारसप्तभागं त्यक्त्वा घटिकाः षष्टि वारोच्यते ॥ १६ ॥

एवं वारो ध्रुवे साध्यो घटिकाःषष्टिरग्रतः ।
अष्टाविंशतिभिर्भाग्यं शेषैः स्याद् ध्रुवसाधका ॥ १७ ॥

अमावास्या ध्रुवमासे मासे मासे तथा पुनः ।
एवं युक्तिर्विधातव्या वृत्ता पञ्चाङ्गवासना ॥ १८ ॥

सप्तविंशतिभागैस्तु घटिकाः षष्टिरेव च ।
एवमृक्षं ध्रुवे साध्यं घटिकाषष्टिरग्रतः ॥ १९ ॥

एवं ध्रुवः क्रमात्साध्यो मासान्तेषु पुनः पुनः ।
अमान्ते च ध्रुवः साध्यस्तिथिं पश्चात् प्रवर्तयेत् ॥ २० ॥

वारस्थाने तिथिर्योज्या ? हरेद्भागं तु सप्तभिः ।
यच्छेषं लभ्यते वारस्तेषु तिथिं तद्भाषिता ? ॥ २१ ॥

तिथिपिण्डं पुनर्भक्त्या भागं स्याद्वै द्विसप्तभिः ।
भागमध्ये धनं ख्यातं लब्धिमध्ये ऋणं तथा ॥ २२ ॥

द्वितीयेऽर्ध्वे धनं ख्यातं तृतीयेऽर्ध्वमृणं तथा ।
चतुर्थोर्ध्वे धनं चैव षष्ठात्परं न विद्यते ॥ २३ ॥

भागात्परं वदेद्वाचः ? यच्छेषं तत्र तिष्ठति ।
शब्दयोगं च संत्यज्य शब्दाख्यं चैव स्थापयेत् ॥ २४ ॥

आद्ये त्रयोदशे पञ्च द्वितीये द्वादशे दश ।
एकादशे तृतीये च नाड्यः पञ्चदश स्मृताः ॥ २५ ॥

चतुर्थे दशमे तु स्यादेकोनविंशतिस्तु ताः ।
पञ्चमे नवमे नाड्यो द्वाविंशतिरुदाहृताः ॥ २६-१ ॥

षष्ठेऽष्टमे च घटिकाश्चतुर्विंशतिरीरिताः ।
प्रतिष्ठिता शब्दसंज्ञा सप्तमे पञ्चविंशतिः ॥ २६-२ ॥

धनं चैव ऋणं वापि कल्पयेच्छब्दमर्थतः ।
धने धनं प्रयोज्यं स्यात् मिश्रयेच्च ऋणे ऋणम् ॥ २७ ॥

तिथिः सदा ऋणं प्रोक्ता वारघस्यः सदा धनम् ।
स्यात् कर्कटाभिधमृणं धनं मकरराशिकम् ॥ २८ ॥

धनवृद्धिस्तिथिभुक्त्या ऋणवृद्धिरशोधिता ।
शेषाख्याता तिथिभुक्तिरन्या वारेषु भाषिता ॥ २९ ॥

धनाधिकेषु वारेषु तिथिभुक्तिरनुक्रमात् ।
यदा षष्ठ धनाक्रान्तिर्वारवृद्धिस्तु भाषिता ॥ ३० ॥

तिथिसंयोगभुक्ती च प्रयुक्ता विश्वकर्मणा ।
तिथित्रयादिनक्षत्रं महापर्व च तत्स्मृतम् ॥ ३१ ॥

तिथित्रयादि वारादि नक्षत्रत्रयकं विदुः ? ।
तिथित्रयं चैकवारं तद्वै तिथित्रयाभिधम् ॥ ३२ ॥

एवमादिगुणोपेतं भुक्त्यृद्धी तिथिवारयोः ।
त्रिपट्कं कर्कमकरे सिंहे कुम्भे चाष्टादश ॥ ३३ ॥

कन्यामीने रुद्ररुद्रास्तुलामेषे दशाष्टकम् ।
अष्टषड् वृश्चिकवृषे धनुर्युग्मे त्रिशून्यकम् ॥ ३४ ॥

सन्क्रान्तियोगे दातव्या रविका च विनिर्गता ।
युग्मसिद्धार्थपक्षे तु द्वौ पक्षौ शब्दतो न्यसेत् ॥
एवमादिकमोक्तश्च रविनाड्या अनुक्रमः ॥ ३५ ॥

इति तिथिभुक्त्यधिकारः ॥

युगादि साधयेत् पूर्वं नष्टानयनकं क्रमात् ।
तदङ्कं स्थापयेदेवं सन्क्रान्त्या ध्रुवसाधना ॥ ३६ ॥

तदाकं षट् अग्नि ऋतुदं सन्निभिः स्थापयेत् ?
अत्यंतिथी गुणमेथं अप्रयोजयेत् षष्टिभिर्भागः ? ॥ ३७ ॥

लब्धं फलं च मूलं च सर्वं शशिनियोजयेत् ? ।
सप्तप्रेसित संक्रान्तीवकयुगाद्याअङ्कतोद्भवा ? ॥ ३८ ॥

वेदा दिशाश्च विषया मालाश्चैवाग्निभास्कराः ? ।
ऋषयश्च तथादित्या अग्नयश्चन्द्विजश्चपरसम्मतिद्दंपत्योरिवजश्चं वेदरोस्थलो-
चनाश्च ? ३९ ॥

सरदिसा ९ रसमादिनी १० सत्यरजात्माश्च ११ विद्धिमासश्चद्वंशब्दार्थे-
आद्योतो पूर्वार्द्धं कटिकोत्तमौ धिकारो यत्र तं रणि वोपं धनं प्रकीर्तितम् ॥ ४० ॥

पूर्वा ध्रुवकं साध्यमानं च – यो पुनः साधयेत् ? ।
वर्णे वर्षे क्षिपेत्तार घटिकौ दशपञ्चाधिकम् ? ॥ ४१ ॥

शब्दार्थं च क्षिपेद्वारं सप्तभिर्भागमाहरेत् ।
यच्छेषं लभ्यते वारः सन्क्रान्तावेव भाषितम् ॥ ४२ ॥

ऋणं वाऽपि धनं वाऽपि घटिका मध्यतः क्षिपेत् ।
भुक्तिः स्याता ऋणे त्यक्ते धनमिश्रे च सोत्तमा ॥ ४३ ॥

इति सन्क्रान्तिवर्तमानाधिकारः ॥

उदयार्धे घटिकायाः पञ्चचत्वारिंशत्समाः ? ।
अभ्रमध्ये भवेत्तारा शेषं वै पूर्ववत्क्रमात् ॥ ४५ ॥

साध्यां तिथिं च द्विःकृत्य षड्भिर्भागैर्विवर्जिता ।
तिथिभुक्तिसमायुक्ता रविकां विपरीततः ? ॥ ४६ ॥

ऋणं त्यक्त्वर्क्षघटिका शेषा भुक्तिरथोच्यते ।
असाध्यघटिकामध्यं त्यक्ता शेषा च भुक्तिका ॥ ४७ ॥

ध्रुवं कृत्वा तिथिं युक्त्वा ऋक्षसङ्ख्याधिकं यदि ।
षष्ट्याधिके ऋक्षं त्यक्त्वा ऋणाधिको रिपवृद्धये ? ॥ ४८ ॥

इति दिननक्षत्राधिकारः ॥

तिथिं चतुर्गुणीकृत्य ऋक्षघटीविमिश्रितम् ।
रथिका तिथिं क्रमतः ऋक्षभुक्तिं प्रभाषते ॥ ४९ ॥

षष्ठिभागे लब्धमृक्षं शेषा भुक्तिः प्रकीर्तिता ।
ध्रुवं कृत्वा लब्धं योऽयं शेषं वै ऋक्षभुक्तिभिः ॥ ५० ॥

इति महानक्षत्रभुक्त्यधिकारः ॥

चन्द्रभुक्तिर्दिनर्क्षं च सूर्यस्यात महारिपम् ? ।
सदा धनं चन्द्रभुक्ति ? सूर्यभुक्तिर्ऋणं तथा ॥ ५१ ॥

चन्द्रभुक्तेर्मध्यतश्च रथे(थ) युक्तिं विशोधयेत् ।
चन्द्रसूर्यर्क्षमेकत्र योगसङ्ख्या ह्यनुक्रमात् ॥ ५२ ॥

इति योग आनयनाधिकारः ॥

साध्यां तिथिं च द्विःकृत्य तदेकं तु परित्यजेत् ।
सप्तभिस्तु हरेद्भागं शेषं करणमुद्धरेत् ॥ ५३ ॥

इति करणाधिकारः ॥

सप्तैव करणाः ख्याताः वाराः सप्तैव कीर्तिताः ।
तिथयः पञ्चदश च योगर्क्षं सप्तविंशतिः ॥ ५४ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
ज्योतिषपञ्चाङ्गवासनाधिकारो नाम त्रयश्चत्वारिंश सूत्रम् ॥

---

## (४४) अवकहडाचक्रज्योतिषं चतुश्चत्वारिंशं सूत्रम् ॥

विश्वकर्मोवाच–

आदित्यसोमभौमाश्च बुधश्चाथ बृहस्पतिः ।
शुक्रः शनिश्चरश्चैते सप्तसूर्यादिवासराः ॥ १ ॥

नन्दा भद्रा जया रिक्ता पूर्णा स्यात् पञ्चमी तथा ।
पञ्च पञ्च तथा पञ्च मासार्धेषु यथातिथि ॥ २ ॥

प्रतिपद्वष्ठ्येकादशी नन्दा भद्रा द्वयश्वार्कका: ।
जया त्र्यष्टत्रयोदश्यो रिक्ता वेदाङ्कशक्रतः ॥ ३ ॥

पञ्चमी दशमी चैव पूर्णमासी तथैव च ।
एषा पूर्णा तिथि र्ज्ञेया दैवज्ञैर्जल्पिता हि सा ॥ ४ ॥

अश्विनी भरणी च कृत्तिका रोहिणी तथा ।
मृगार्द्रे च पुनर्वसुः पुष्याश्लेषा मघा तथा ॥ ५ ॥

पूर्वोत्तरे च फाल्गुन्यौ हस्तश्चित्राथ स्वातिका ।
विशाखानुराधाज्येष्ठा मूलं पूर्वोत्तराषाढे ॥ ६ ॥

श्रवणश्च धनिष्ठा च शतभिषा च पूर्विका ।
उत्तराभाद्रपदा च रेवती सप्तविंशतिः ॥ ७ ॥

इति नक्षत्र नामानि ॥

विष्कुम्भः प्रीतिरायुष्मान् सौभाग्यः शोभनस्तथा ।
अतिगण्डः सुकर्मा च धृतिः शूलस्तथैव च ॥ ८ ॥

गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा ।
वज्रसिद्धी व्यतीपातो वरीयान् परिघः शिवः ॥ ९ ॥

सिद्धः साध्यः शुभः शुक्लो ब्रह्मेन्द्रौ वैधृतिः क्रमात् ।
सप्तविंशतिसङ्ख्याका योगाश्चन्द्रार्कयोगतः ॥ १० ॥

इति योगनामानि ॥

बवश्च बालवश्चैव कौलवस्तैतिलस्तथा ।
गरो वणिजविष्टी च सप्तकरणाभिधाः स्मृताः ॥ ११ ॥

चुचेचोला चाश्विनी स्याल् लिलूलेलो भरण्यपि ।
कृत्तिका स्यादईऊए रोहिण्यूवाविवु स्मृता ॥ १२ ॥

वेवोकाकी मृगश्चार्द्रा कुघाङछा प्रकीर्तिता ।
केकोहाही पुनर्वसुर्हुहेहोडा च पुष्यभम् ॥ १३ ॥

अश्लेषा तु डिडूडेडो मामीमूमे मघाह्वयम् ।
मोटाटीटू तु पूर्वाख्या मुफाटेटो पपि स्मृता ॥ १४ ॥

प्रोक्तः पूषणठो हस्तः पेपोरारी तु चित्रका ।
रूरेरोता तथा स्वाती तितूतेतो विशाखिका ॥ १५ ॥

अनुराधा ननीनूने ज्येष्ठा नोयायियुर्मता ।
तथा येयोभभी मूलं पूर्वाषाढा भुधाफढा ॥ १६ ॥

भेभोजज्युत्तराषाढा जुजेजोषा तथाभिजित् ।
खिखूखेखो श्रवो ज्ञेयो गगीगूगे धनिष्ठिका ॥ १७ ॥

गोसासिसू शताख्यं च पूभा सेसोददी मता ।
ऊभा दूथाझञा ज्ञेया देदोचाची च रेवती ॥ १८ ॥

अष्टोत्तरशतं वर्णाः (नक्षत्र चरणोद्भवाः ।
सम्भवन्त्यवकहोडाचक्रानुक्रमतः किल ) ॥ १९ ॥

अश्विनीभरणीधिष्ण्ये कृत्तिकाप्रथमांघ्रिकम् ।
मेषः स्यात् कृत्तिकापादत्रितयं रोहिणी तथा ॥ २० ॥

वृषभो मृगपूर्वार्धे तदर्धे च तथार्द्रभम् ।
पादत्रयं पुनर्वस्वोः स राशिर्मिथुनाभिधः ॥ २१ ॥

तदन्त्योऽघ्रिस्तथा पुष्यो ह्यश्लेषा कर्कटाभिधः ।
मघापूर्वोत्तरार्योऽघ्रिः सिंहस्तच्चरणत्रयम् ॥ २२ ॥

हस्तचित्राभपूर्वार्धे कन्या चित्रोत्तरं दलम् ।
स्वातिभं च विशाखायाश्चरणत्रितयं तुला ॥ २३ ॥

तदन्त्योंघ्र्यनुराधाख्ये ज्येष्ठाभं वृश्चिकः स्मृतः ।
मूलं पूर्वोत्तराषाढाप्रागंघ्रिः कथितो धनुः ॥ २४ ॥

उत्तरांघ्रित्रयं कर्णे धनिष्ठाप्रथमार्धकम् ।
मकराख्यो धनिष्ठाद्धिर्दलं च शततारका ॥ २५ ॥

पूर्वापादत्रयं कुम्भस्तदन्यश्चरणस्तथा ।
ऊभाभं रेवती चैव मीनराशिः प्रकीर्तितः ॥ २६ ॥

मेषो वृषोऽथ मिथुनं कर्कटः सिंहकन्यके ।
तुलाथ वृश्चिको धन्वी मकरः कुम्भमीनकौ ॥ २७ ॥

द्वादशैवं राशयः स्युर्मेषाद्याः संप्रकीर्तिताः ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छाया-
मवकहोडाचक्रज्योतिषाधिकारो नाम चतुश्चत्वारिंशं सूत्रम् ॥

## (४५) ज्योनिषफलं पञ्चचत्वारिंशं सूत्रम् ॥

---

विश्वकर्मोवाच -

दस्रो यमोऽनलो धाता चन्द्रः शिवस्तथादितिः
वाक्पतिर्नागपितरौ भगार्यमदिवाकराः ॥ १ ॥

त्वष्टा च वायुरिन्द्राग्नी मित्र इन्द्रश्च नैर्ऋतिः ।
जलं च विश्वेदेवाश्च विधिर्विष्णुस्तथा वसुः ॥ २ ॥

वरुणोऽजैकपाच्चैव तथाहिर्बुध्न्यपूषणौ ।
इत्यश्विन्यादिनक्षत्रदेवनामानि सन्ति हि ॥ ३ ॥

योनिवैरं च कथये गणानां च समुद्भवम् ।
अश्वोगजश्छागसर्पौ सर्पश्वानविडालकाः ।
मेषो विडालकश्चैव मूषको मूषकश्च गौः ॥ ४ ॥

महिषी च ततो व्याघ्रो महिषो व्याघ्रकः क्रमात् ।
मृगो मृगस्तथा श्वा च कपिर्नकुल एव च ॥ ५ ॥

नकुलो वानरः सिंहस्तुरगो मृगराट् च गौः ।
इभ एताः क्रमेणैव ह्यश्विन्यादिभयोनयः ॥ ६ ॥

स्थिरचरद्विस्वभावमृदूग्रातुरतेजसः ।
अष्टाविंशतिकं यावद् भचतुष्कनिबन्धनम् ॥ ७ ॥

गोव्याघ्रं गजसिंहं च महिषाश्वं श्वहारिणम् ।
बभ्रुसर्पं कीशमेषं विडालोंदुरकं तथा ॥ ८ ॥

चतुर्दश भद्रिकानां योनिवैरं च सप्तधा ।
अष्टवर्गं तथा चैषां कथयाम्यपराजित ॥ ९ ॥

अकचट तपयशा अष्टवर्णाः ॥ आऽऽद्याः शान्ता अष्टवर्णा देवज्ञवचनैः शुभाः ।
दम्पती स्वामिभृत्ये च ग्रहग्रामाधिपे गणाः ॥ १० ॥

साध्यवर्गे दशगुणे परवर्गेण मिश्रिते ।
वसुभिश्च हरेद्भागं यच्छेषं लभ्यमादिशेत् ॥ ११ ॥

एवं वर्गं पुनः शोध्यमनेनानुक्रमेण च ।
शेषोद्धरितमध्यपात्य वृद्धयर्थे दैवदैत्यकः ? ॥ १२ ॥

तस्य लभ्यं च योऽग्रतः पृष्ठोऽसौ ददते ध्रुवम् ।
लाभालाभौ चैव येषां कथये त्वपराजित ॥ १३ ॥

अईऊए तार्क्ष्यः पूर्वे आग्नेय्यां च कखादिकाः ।
दक्षिणे च छवर्गाश्च नैर्ऋते च टठादिकाः ॥ १४ ॥

पश्चिमे तथादिवर्गा वायव्ये च पफादिका: ।
उत्तरे च यरलवा ईशाने शषसास्तथा ॥ १५ ॥

इति वर्गाष्टकम् ॥

रविचन्द्राङ्गारबुधशनिवाक्पतिराहव: ।
तथा शुक्र: समाख्याता: प्राच्यादिषु प्रदक्षिणम् ॥ १६ ॥

षट् तथा तिथयश्चैव वसवश्च सप्तदश ।
दश चैकोनविंशतिर्द्वादश त्वेकविंशति: ॥ १७ ॥

सूर्यादे: क्रमयोगेन प्राच्यादिषु प्रदक्षिणम् ।
भुक्तिमार्गदशाश्चैव वर्णाणां सङ्ख्यया तथा ॥ १८ ॥

यस्य नामाक्षरं प्रोक्तं विभक्ती ? चर्क्षभुक्तया ।
तेषामनुक्रमेणैव कथयेऽन्तर्दशाफलम् ॥ १९ ॥

एकैकदशयुक्तांश्च प्रवर्तन्ते चाग्रौ दशा: ।
भुक्तमानभुक्तायुक्ता ? दशाश्चैव दशोद्भवा: ? ॥ २० ॥

वरिष्यन्ते दि (द)शासाध्य दिनान्ते चारुवर्द्धनम् ? ।
अष्ट द(त्रिं)श कृत्वानां भक्ते ग्रहाग्रौ भुक्त व दशा ? ॥ २१ ॥

सङ्क्लेशा: कार्यहीनाश्च गृहसन्तापवर्द्धनम् ।
शत्रुक्षयस्तेजोवृद्धिर्भास्करस्य दशाफलम् ॥ २२ ॥

शत्रुश्च जायते मित्रममृतवाग् जनप्रिय: ।
लभते चोत्सवं नित्यं शैत्यं चन्द्रदशाफलम् ॥ २३ ॥

क्रूररोगा जना: सर्वे ह्यग्निदाहोद्भवादिकम् ।
अर्थक्षयो दिने नित्यमङ्गारकदशाफलम् ॥ २४ ॥

बुद्धिवृद्ध्यर्थवृद्धी च सस्नेहं शोकशान्तिकम् ।
धनपुत्रभार्यामित्रं बुधग्रहदशाफलम् ॥ २५ ॥

देशत्यागो भयं पीडा मित्रै: सह विरोधनम् ।
पुत्रबन्धुस्त्रीवियोग: शनिश्चरदशाफलम् ॥ २६ ॥

आरोग्यं राज्यसन्मानमर्थवृद्धि: सदाजय: ।
पूज्यन्ते गुरुतुल्याश्चाशोका गुरुदशाफलम् ॥ २७ ॥

सदा पीडा गृहबन्धुस्थानत्यागोऽथ जायते ।
राजगृहदण्डदु:खं प्रोक्तं राहुदशाफलम् ॥ २८ ॥

तेज: सदा च सन्मानं पुत्रलाभो धनागम: ।
सुखमाप्नोति शारीरं शुभं शुक्रदशाफलम् ॥ २९ ॥

इति दशाफलम् ।

चन्द्रस्यापि तथावस्था द्वादशैव भवन्ति च ।
तथा राशिगते चन्द्रे रुद्रघस्त्र्यः सपादिका: ॥ ३० ॥

प्रवासा च तथा नष्टा मृता जया च हसिता ।
कम्पिता ज्वरिता स्वस्था भुक्तस्वप्ना जाग्रता ? भोग्या ॥ ३१ ॥

प्रवासायां प्रवास: स्यात् नष्टायां हानिमादिशेत् ।
मृतायां मृत्युसंभूतिर्जयायां जयमादिशेत् ॥ ३२ ॥

हसितायां च हास्यं स्यात् कम्पितायां च कम्पनम् ।
ज्वरितायां ज्वरपीडा स्वस्थायां स्वस्तिकोद्भव: ॥ ३३ ॥

भुक्तायां भोजनप्राप्ति: सुप्तायां चैव निद्रितम् ।
जागर्तिर्जाग्रतायां च भोग्यायां बहुभोग्यता ॥ ३४ ॥

पञ्चत्रिंशोत्तरशतं घटिका राशिकोद्भवा: ।
राशिद्वादशके चैव शुभश्चन्द्रो यथाबलम् ॥ ३५ ॥

जन्मस्थ: कुरुते पुष्टिं जन्मनक्षत्रवर्जितम् ।
तथानुक्रमतश्चैव द्वितीये चैव निर्वृति: ॥ ३६ ॥

तृतीये राजसन्मानं चतुर्थे कलहागम: ।
पञ्चमेऽर्थपरिभ्रंश: षष्ठे चैव धनागम: ॥ ३७ ॥

सप्तमे राजपूजा च ह्यष्टमे प्राणनाशनम् ।
नवमे शोच्यता चैव दशमे कार्यसिद्धिद: ॥ ३८ ॥

बलं च बुद्धिं सन्मानं चन्द्र एकादशे स्थित: ।
द्वादशस्थे शशाङ्के च मृत्युरेव न संशय: ॥ ३९ ॥

शुक्लपक्षे चन्द्रबलं कृष्णे ताराबलं शुभम् ।
द्विपञ्चनवमे चन्द्र: शुक्लपक्षे तु कामद: ॥ ४० ॥

तिथिस्त्वेकगुणा प्रोक्ता नक्षत्रं च चतुर्गुणम् ।
करण: षोडशगुणो वारश्चाष्टगुणो मत: ॥ ४१ ॥

द्वात्रिंशद्गुणको योगस्ताराश्चतु:षष्टिगुणा: ।
चन्द्र: शतगुण: प्रोक्तस्तस्माच्चन्द्रबलं बलम् ॥ ४२ ॥

न सूर्यवेधो दशाचक्रसंकुलम् गण्डेऽतिशूले परिघे च वैधृते ।
न राहुपृथ्वीग्रहयोग – – – (यथैव) हनते चन्द्र सहस्रदोषम् ॥ ४३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
ज्योतिषलक्षणाधिकारो नाम पञ्चचत्वारिंशं सूत्रम् ॥

## (४६) ज्योतिषलक्षणात्मकं षट्चत्वारिंशं सूत्रम् ॥

---

विश्वकर्मोवाच—

रेवती चाश्विनी चित्रा हस्तः स्वातिपुनर्वसू ।
अनुराधा मृगो ज्येष्ठा नवैताः पार्श्वतोमुखाः ॥ १ ॥

गजोष्ट्राश्वाजमहिषवृषादेर्दमनं शुभम् ।
कुर्याद्वेश्मप्रवेशादि गमनागमने तथा ॥ २ ॥

अरहट्टचक्रयन्त्रं रथप्रभृतियापनम् ।
प्रमाणं प्रेरणं चैव कार्यं वै पार्श्वतोमुखैः ॥ ३ ॥

कृत्तिका भरणी चैव मघा मूलविशाखिके ।
तिस्रः पूर्वास्तथाश्लेषा ह्यधोवक्त्राः प्रकीर्तिताः ॥ ४ ॥

वापी कूपतडागानि तथा भूमिगृहाणि च ।
विद्यारम्भं निधानं च पातालादिप्रवेशनम् ॥ ५ ॥

पुष्यार्द्रे रोहिणी चैव धनिष्ठा चोत्तरात्रयम् ।
श्रवणं शततारा च नवैवोर्ध्वमुखाः स्मृताः ॥ ६ ॥

आसु राजाभिषेकं च पट्टबन्धं महोत्सवम् ।
प्रासादं च गृहं चैव पताका छत्रचामरम् ॥ ७ ॥

आरामनगरारंभं निधीनां तु निषेवणम् ।
ऊर्ध्ववक्त्रेषु कर्माणि तानि सर्वाणि कारयेत् ॥ ८ ॥

मघाश्लेषा विशाखा च कृत्तिका शततारका ।
चित्रायुक्ता धनिष्ठा च ज्येष्ठा मूलं च राक्षसः ॥ ९ ॥

पूर्वास्तिस्रो रोहिणी च ह्यार्द्रा च भरणी तथा ।
तिस्रश्चैवोत्तराश्चैवं मनुष्यः सम्प्रकीर्तितः ॥ १० ॥

मृगाश्विनी रेवती च हस्तः स्वातिपुनर्वसू ।
पुष्यानुराधाश्रवणमिति देवगणः स्मृतः ॥ ११ ॥

स्वगणे चोत्तमा प्रीतिर्मध्यमा देवमानुषे ।
देवासुरे च कलहो मरणं नरराक्षसे ॥ १२ ॥

आदित्ये द्वादशे ऋक्षे वर्जयेद् रविपातशः ।
मृत्युरष्टादशाश्चैव कम्पो वै एकोनविंशतिः ? ॥ १३ ॥

एकविंशतिमे ऋक्षे निर्घातं पतते सदा ।
योगानेतान् रविपातान् वर्जयेच्छुभकर्मसु ॥ १४ ॥

ग्रहाणां जन्मनक्षत्रं वर्जयेच्छुभकर्मसु ।
एते कलंकयोगाः स्युर्ग्रहजन्मसु दूषिताः ॥ १५ ॥

त्रीणि च त्रीणि चार्क्षाणि रविभौमशनिश्चराः ।
आलिङ्गितं धन्विनं चैव ? तृतीय मवलोकितम् ? ॥ १६ ॥
मेषवृश्चिकयोर्भौमः शुक्रो वृषतुलाधिपः ।
बुधः कन्यामिथुनयोः सोमो वै कर्कटाधिपः ॥ १७ ॥
सूर्यक्षेत्रं भवेत्सिंहो धनुर्मीनाधिपो गुरुः ।
शनिर्मकरकुम्भेश एते क्षेत्राधिपा ग्रहाः ॥ १८ ॥
न पीडयन्ति स्वक्षेत्रे स्वमित्रे च ग्रहास्तथा ।
विषमस्थाः पीडयन्ते भस्मीकुर्वन्ति विग्रहे ॥ १९ ॥
सोमश्च सूर्यभौमौ च त्रिदशाचार्य एव च ।
स्नेहानुगाश्च चत्वारो मैत्री स्यात्तु परस्परम् ॥ २० ॥
भार्गवः सूर्यपुत्रश्च बुधश्चापि तृतीयकः ।
स्नेहानुगास्त्रयः प्रोक्ता मैत्री स्यात्तु परस्परम् ॥ २१ ॥
ग्रहा एकत्र चत्वारस्त्रिभिरेकत्र संस्थिताः ।
तेषां मध्ये रौद्रं घोरं महद्वैरस्य कारणम् ॥ २२ ॥
रविक्षेत्रे गते जीवे जीवक्षेत्रे गते रवौ ।
विवाहं व्रतबन्धं च कुर्याद् देशान्तरं तथा ॥ २३ ॥
× × × × ।
उद्वेगं कलहो हानिः सुखं नैव कदाचन ॥ २४ ॥
वक्ष्ये द्वादश लग्नानि घटिकानां प्रमाणतः ।
सप्तपञ्चाशत्पलानि त्रिघट्यो मीनमेषयोः ॥ २५ ॥
वृषे कुम्भे चतस्रश्च षड्विंशति पलानि च ।
मिथुने मकरे पञ्च घट्यो नव पलानि च ॥ २६ ॥
धनुःकर्कटयोः पञ्च सप्तत्रिंशत् पलैः सह ।
सिंहवृश्चिकयोः पञ्च द्वात्रिंशच्च पलानि च ॥ २७ ॥
पञ्चैव कन्यातुलयोरेकोनविंशतिपलैः ।
इत्थं लग्नप्रमाणानि प्रोक्तानि द्वादशैव च ॥ २८ ॥
कर्कटादि निशालग्नं नक्रादि दिनलग्नकम् ।
लग्नानि षट् तथा रात्रौ दिने स्युः षट् तथैव च ॥ २९ ॥
वृश्चिकः कर्कटो मीनो ब्राह्मणाः परिकीर्तिताः ।
धनुर्मेषस्तथा सिंहो राजानश्च शुभाः स्मृताः ॥ ३० ॥
कन्या वृषश्च मकरश्चैते वैश्या उदाहृताः ।
मिथुनं च तुला कुम्भः शूद्रा एते प्रकीर्तिताः ॥ ३१ ॥
विप्रः कार्यो द्वादशभिः क्षत्रियो नवभिस्तथा ।
षड्लग्नैश्च भवेद् वैश्यस्त्रिभिः शूद्रः प्रशस्यते ॥ ३२ ॥

सिंहाली च घटवृषौ लग्नवेलासु चोत्तमाः ।
प्रासादप्रतिमालिङ्गजगतीपीठमण्डपात् ॥ ३३ ॥

नगरारामनिर्वेशं प्रतिष्ठाऽम्बुनिधेस्तथा ।
गढदुर्गाणि गृहाश्च स्थिरलग्नेऽतिशोभनाः ॥ ३४ ॥

कन्याधनुर्मीनयुग्मे स्वभावा लग्न वै दिवे ? ।
महोत्सवाभिषेकं च विवाहव्रतबन्धनम् ।
तथा गृहप्रवेशश्च शोभनानि विनिर्दिशेत् ॥ ३५ ॥

तुलाकर्कमेषनक्रे लग्नाश्चत्वार उत्तमाः ।
यात्राद्या विविधा एषु राजकटकादिशोभनाः ॥ ३६ ॥

सप्तपञ्चशलाकाश्च मद्रभिश्चक्रकोत्तमम् ? ।
स्वरे स्वामिकान्तारेषु ग्रहवेधविशोधनम् ॥ ३७ ॥

रविवेधे च वैधव्यं चन्द्रे भृत्यं न जीवति ।
कुजे प्रजाक्षयं विद्याद् वन्ध्या सोमसुते मता ॥ ३८ ॥

प्रव्रज्या गुरुवेधे तु अपुत्रा शुक्रवेधतः ।
दुःखदा सूर्यपुत्रेण ग्रहवेधविशोधनम् ॥ ३९ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
ज्योतिषलक्षणाधिकारो नाम षट्चत्वारिंशं सूत्रम् ॥

## (४७) गणितक्षेत्रनिर्णयो नाम सप्तचत्वारिंशं सूत्रम् ।

---

विश्वकर्मोवाच—

उद्धृत्य गणितात्सारं सर्वशास्त्रादिदीपकम् ।
वेदाश्रः क्षेत्रवास्तुश्च वृत्तश्चायताश्र एव च ॥ १ ॥

ज्ञेयो द्वात्रिंशदश्रश्च शिलायां विविधोत्तमः ।
षट्कोणश्च त्रिकोणश्च चन्द्रार्धो गोलकः परम् ॥ २ ॥

आदौ गणितपादं च कथयिष्याम्यनुक्रमात् ।
तदन्तराणि क्षेत्राणि कथये विविधानि च ॥ ३ ॥

एकं दश शतमस्मात् सहस्रमनुचायुतम् ।
नियुतं प्रयुतं तस्मादर्बुदन्यर्बुदे अपि ॥ ४ ॥

वृन्दं खर्वनिखर्वाणि शङ्कुपद्मास्बुराशयः ।
ततः स्यान्मध्यमन्त्यं च परं चापरमप्यतः ॥ ५ ॥

परार्धं चेति विज्ञेयं दशवृद्धयोत्तरोत्तरम् ।
अधोयोगे संकलितास्तत् संकलितमुच्यते ॥ ६ ॥

अग्रेऽङ्काङ्कः स्थापनीयस्तद्गुणैः पृष्ठपादतः ।
ऊर्ध्वमूर्ध्वं क्रमान्मूलं सङ्ख्या सङ्कलिता भवेत् ॥ ७ ॥

एवं पादाश्च चत्वारो गणिताङ्कमुच्यते ।
संकलितं करणसूत्रमार्याद्वयंत्तेकोवृद्धिश्च ? ।
अधोयोगे संकलीकृता तस्माद्भेदशोत्तरां च ? ॥ ८ ॥

अग्रपृष्ठो अग्रकोत्तरा वा शून्यपृष्ठोक्त ? ।
भवेद् दशोत्तरा वृद्धी ? ॥ ९ ॥

एकराशिस्तु गणिते मूलं वर्गो द्विराशिकः ।
त्रिराशिकोऽथवोक्तश्च घनो वै कर्णसंपुटे ॥ १० ॥

पदद्वयं हते पादे पदैस्तद् गुणितं तथा ।
पदघ्नं च पदहतमित्यभिख्यं च राशिकम् ॥ ११ ॥

द्वाभ्यां तु द्विगुणीकृत्य मूलभागोद्भवं पदम् ।
एवं मूलाभिधानं च वास्तुविद्भिरुदाहृतम् ॥ १२ ॥

एवं यद् द्विगुणीकृत्य चतु ? र्द्विगुणमेव च ।
प्रख्यातं द्विगुणं चेति प्रयुक्तं गुणितादिके ॥ १३ ॥

कर्मान्तर व्यवहार क्षेत्रं चाऽपि प्रदापयेत् ।
दीर्घं हन्यात्पृथुत्वेन वेदाश्रस्य फलं भवेत् ॥ १४ ॥

खातमानं तु पाषाणे गोलपिण्डैस्तु ताडयेत् ।
तदसंख्याता कर्माणं पाषाणस्य तदन्तरम् ? ॥ १५ ॥

नवत्यङ्गुलदैर्घ्ये च पृथुत्वे चतुर्विंशतिः ।
द्वादशाङ्गुलपिण्डं च शिलामानप्रमाणतः ॥ १६ ॥

यच्छिलायाः समानं च गणित्वा क्रमयोगतः ।
तेषां गुणितसङ्ख्याश्च पाषाणाश्च क्रमोदिताः ॥ १७ ॥

दीर्घे द्वादशको भागः षड्भागश्चैव विस्तरः ।
पिण्डस्य तुर्यो भागश्च अन्योन्यमपि ताडयेत् ॥ १८ ॥

दीर्घहस्तान् पृथुत्वेन पुनः पिण्डेन ताडयेत् ।
द्व्यष्टाशीतिशतैर्भागं लब्धिरङ्गुलसङ्ख्यका ॥ १९ ॥

पृथुपिण्डे ताड्यमाने वृद्धिह्रासससमुद्भवे ।
शिलानां क्रमयोगे तु खातमानं तथोच्यते ॥ २० ॥

पिण्डाङ्गुलैर्दीर्घहस्ता गुणितव्याः प्रयत्नतः ।
पृथुह्रस्ववृद्धयार्धा च धत्ते मानं शिलादिकम् ॥ २१ ॥

इति शिलामानः ॥

व्यासे त्रिगुणे परिधिः षष्ठभागविमिश्रिते ।
व्यासार्धे च परिध्यर्धे गुणे वृत्तफलं भवेत् ॥ २२ ॥

समस्ता वृत्तपरिधिर्गुणिता व्यासपादतः ।
हरे चतुर्विंशतिभिर्लब्धमङ्गुलतत्फलम् ॥ २३ ॥

व्यासे वर्गस्य ? गुणिते चतुर्थांशं तु पातयेत् ।
शेषेऽष्टादशके भागे क्षिप्ते वृत्तफलं भवेत् ॥ २४ ॥

व्यासवर्गहस्तैकोनपञ्चाङ्गुलानि पातयेत् ।
शेषं यल्लभ्यते तच्च वृत्तस्यापि फलं भवेत् ॥ २५ ॥

तस्यास्तु(स्तु)वेलेनहितं खातकूपफलं भवेत् ।
पाषाणपिण्डहतं वा शिलामानं तु सङ्ख्यया ॥ २६ ॥

भूवदन समासार्धे च लम्बकेनात्र गुणितम् ? ।
कुद्दलं लम्बहतं च जायते क्षेत्रफलम् ॥ २७ ॥

तविवेधगुणितं च खातफलं प्रसिद्धयेत् ।
समविषमाधवेधैः पदैर्विषमवेधकैः ? ॥ २८ ॥

गोलव्यासवर्गगुणं ताड्यं व्यासार्धपिण्डकम् ।
द्विशताष्टाशीतिहृतं लब्धं गोलफलं भवेत् ॥ २९ ॥

व्यासवर्गे तु गुणितं फलमेकं ? प्रकीर्तितम् ।
षड्भागं द्विरसं त्यक्त्वाऽष्टाश्रे क्षेत्रफलं भवेत् ॥ ३० ॥

इत्यष्टाश्रक्षेत्रम् ॥

षड्ंशामेकशेषं च त्यक्त्वा सूत्रापरः शिखा ? ।
दीर्घे पृथुत्वे गुणितं षडश्रे क्षेत्रजं फलम् ॥ ३१ ॥

इति षडश्रक्षेत्रम् ॥

वर्गमूलफलं त्यक्त्वा षड्भागं शकांशं त्यजेत् ।
शेषं फलं विजानीयात् क्षेत्रे वै षोडशाश्रके ॥ ३२ ॥

इति षोडशाश्रक्षेत्रम् ॥

चापाकारे यदा क्षेत्रे पृथुत्वं मध्यपादतः ।
त्रिभागं द्विगुणं कृत्वा पृथुत्वं चैव साधयेत् ॥ ३३ ॥

पादान्तं गुणिताग्रं च मध्ये गुणं पृथु मध्यम् ? ।
वामे च द्विगुणं दीर्घे चापाकारे क्षेत्रफलम् ॥ ३४ ॥

इति चापाकारक्षेत्रम् ॥

षड्बृहद्भुजार्धवासं भिन्नैः शीर्षे शिखान्तकैः ।
पृथुदीर्घगुणिते त्रिकोणे क्षेत्रफलं भवेत् ॥ ३५ ॥

इति त्रिकोणक्षेत्रम् ॥

दीर्घे समभुजान्ते च पृथुत्वं मध्यस्थानके ।
पृथुपादं परित्यज्य षडंशं च पुनर्ददेत् ॥ ३६ ॥

इत्यर्धचन्द्रक्षेत्रम् ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां गणितक्षेत्रनिर्णयाधिकारो नाम सप्तचत्वारिंशं सूत्रम् ॥

---

## (४८) भूपरीक्षाग्रहपूजा नामाष्टचत्वारिंशं सूत्रम् ॥

विश्वकर्मोवाच—

महेन्द्रो मलयश्चैव सिंहश्च विक्रमस्तथा ।
समुद्रः पारिजातश्च श्रीशैलश्च तथार्बुदः ॥ १ ॥

नीलश्च श्वेतशृङ्गश्च चन्द्रः प्रभासमम्भवः ।
गन्धमादनोज्ञयन्तौ प्राप्ता श्वेतसम्भवः ? ॥ २ ॥

गङ्गाया यमुनायाश्च नर्मदायास्तटे तथा ।
गोदावर्याः सरस्वत्याः सिन्धौ पृष्ठे तथैव च ॥ ३ ॥

तापी मही तुङ्गभद्रा कावेरी चन्द्रभागिका ।
पयस्वती साभ्रमती कृष्णा नीरा च निर्मला ॥ ४ ॥

भीमाक्षी सिंहिका ख्याता नीलोद्भवा च वेत्रकी ।
रेवती मधुरा ख्याता विश्वामित्री च मूलका ॥ ५ ॥

कुरुक्षेत्रे च गङ्गायामन्तर्वेद्यां तथैव च ।
नैमिषे कुब्जाम्रकेषु महाकालवने तथा ॥ ६ ॥

सिद्धायतनतीर्थेषु नदीनां सङ्गमेषु च ।
उर्वरीषु श्मशानेषु चत्वरे उदकाश्रिते ॥ ७ ॥

सुप्रदेशे शुभे रम्ये गह्वरे गिरिमाश्रिते ।
वने चोपवने चैव यत्र वा रोचते मनः ॥ ८ ॥

नगरग्रामपूर्मध्ये खेटके चैव कर्वटे ।
तडागकूपमाश्रित्य प्रसिद्धनृपमार्गके ॥ ९ ॥

प्रपादे कुलसम्भवे कुर्याद्वै शवमण्डपम् ।
जनालयदिक्कुडयानि वापिद्वारयुता तथा ॥ १० ॥

शुभे दिने शुभे ऋक्षे सुलग्ने सुमुहूर्तके ।
आदौ च भूपरीक्षायां शकुनं हि विलोकयेत् ॥ ११ ॥

पूजाबलिविधानेन शकुनेशं तथा परम् ।
दुर्लभं लभते वत्स विश्वकर्मप्रभाषितम् ॥ १२ ॥

आदावुत्तरतो वत्स पश्चाद् दक्षिणतो भवेत् ।
उत्तरे सिद्धिसंपत्तिः क्षेमलाभस्तु दक्षिणे ॥ १३ ॥

पुनः शब्दोत्तरे स्थाने शकुनस्यापराजित ।
सर्वकामफलं तत्र शकुनेशे न संशयः ॥ १४ ॥

प्राप्ते शकुनराजे तु सुलग्ने सुमुहूर्तके ।
आचार्ये चागमैर्युक्ते बलिपूजां निवेदयेत् ॥ १५ ॥

सूत्रधारः शास्त्रयुक्तो वास्तुवेदोपलक्षकः ।
सूत्रकर्वीसमायुक्तः सर्वशास्त्रसुकौशलः ॥ १६ ॥
तदा क्षेत्रे प्रतिष्ठा तु पुण्यस्थाने सुशोभने ।
आचार्यसूत्रधारैश्च कृता पूजा महोदिता ॥ १७ ॥
आदौ तु पूजयेद् देवं गणनाथं विनायकम् ।
सिद्धिबुद्धिसमायुक्तं मुदा विधिविधानतः ॥ १८ ॥
ब्रह्मा विष्णुश्च रुद्रश्च पूजनीयाः प्रयत्नतः ।
येषां स्मरणमात्रेण सर्वसिद्धिः प्रजायते ॥ १९ ॥
क्षेत्रपालं ततोऽभ्यर्चेत् लाभार्थी सुजटाधरम् ।
योगिनीवटुकं देवीः कुमारीः सविशेषतः ॥ २० ॥
सर्वदेवास्ततः पूज्या दिक्पालांश्च ततोऽर्चयेत् ।
प्रतिदिक्पालदेवांश्च तज्जातीयसपर्यया ॥ २१ ॥
वास्तुपूजाविधानं तु कर्तव्यं दिशाकोत्तमैः ? ।
निर्विघ्नं च भवेत्तत्र हेतुकादिः समर्चने ॥ २२ ॥
वरुणार्चाविधानं तु विशेषात्कारयेत्ततः ।
आचार्यं पूजयेद्वत्स विप्रैश्च सह सुन्दरम् ॥ २३ ॥
सूत्रधारं ततोऽभ्यर्चेदष्टसूत्रप्रबोधकम् ।
हस्तपूजाविधानं तु कर्त्तव्यं त्वपराजित ॥ २४ ॥
भूमिदानं ततो दद्याद् गोमहिष्यश्वसंयुतम् ।
हिरण्यवस्त्रछत्राद्यैर्महादानैः क्षमापयेत् ॥ २५ ॥
वन्दितान् पूजयेद्वत्स सुभक्त्या क्षितिपालकैः ।
कृपा च सर्वजन्तूनां कर्त्तव्या सिद्धिमिष्यतैः ॥ २६ ॥
पश्चाद् दानं तथा कुर्याद् दीनान्धकृपणेषु च ।
ततः कामं समारभ्य चाष्टसूत्रं विधिक्रमम् ॥ २७ ॥
पूजा बलिविधानं च कृत्वा कर्म समारभेत् ।
सर्वं सिद्ध्यति तत्कर्म सर्वकामफलप्रदम् ॥ २८ ॥
स्थिरे चित्ते सुधीस्तत्र स्फुरति विपुलाऽमला ।
नित्यं पुंसां यदुक्तं गुरुणा विधानं देवेन या निर्मिता ? ॥ २९ ॥
शास्त्रगणितमूर्ध्नि मपरे स्वस्थे बुद्धिशोभना ।
नित्यं स्फुरति दर्पणे मनःस्था महतामपि न विसाङ्कृताः ? ॥ ३० ॥
तेनेदं सिद्ध्यते सर्वं वास्तुस्थानपरिग्रहम् ।
पूजादानैश्च सूत्रश्च संयोगैः प्रभुरभूत्तयोः ? ॥ ३१ ॥

**सर्वार्थे पोषयेद् भृत्यो ये केचित् कर्मदायकाः ।**
**कर्मकरांस्ततो वत्स सर्वार्थे नित्यं पोषयेत् ॥ ३२ ॥**

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
भूपरीक्षाग्रहपूजाधिकारो नामाष्टचत्वारिंशं सूत्रम् ॥

## (४९) सूत्रधारपरीक्षा नामैकोनपञ्चाशं सूत्रम् ॥

विश्वकर्मोवाच–

कर्माधिपस्य कर्तव्या परीक्षा शिष्यवत्तथा ।
त्रिभावे निःस्पृहो दक्षः कर्तव्यः कर्मनायकः ॥ १ ॥

यथा चतुर्भिः कनकं शिष्यवच्च परीक्ष्यते ।
ताडनच्छेदतापैश्च घर्षणैः पुरुषस्तथा ॥ २ ॥

उद्यमः साहसं धैर्यं बलं बुद्धिः पराक्रमः ।
यस्मिन् भृत्ये चिह्नषट्कं तस्माद् देवोऽपि शङ्कते ॥ ३ ॥

पूर्वं परीक्षितो भृत्यस्तस्य द्रव्यं निवेदयेत् ।
स्वामिकार्यकरो नित्यमसाध्यं साधयेद् ध्रुवम् ॥ ४ ॥

सुशीलः सुगुणो भृत्यः सुकुलः सत्यताधिकः ।
सोद्यमो विनयैर्युक्तो विभवे निःस्पृहो ध्रुवः ॥ ५ ॥

परदारधनत्यागी प्रियालापी च देशजः ।
स्वामिकार्यकरो नित्यं त्रैलोक्यं तस्य शङ्करम् ॥ ६ ॥

सुभृत्यः सुगुणैर्युक्तः शीलवांश्च विवेकवान् ।
क्रमजातकुले जातो महासत्यप्रियंवदः ॥ ७ ॥

संयमैर्नियमैर्युक्तस्त्रिभावे निःस्पृहो ध्रुवम् ।
स्वामिकार्यकरो नित्यं त्रैलोक्यं तस्य गोचरम् ॥ ८ ॥

प्रारब्धं तु भवेद् यावत्तावद् वंद्येषु भावना ।
तादृशं कारयेद्भावं खलु देवेषु यादृशम् ॥ ९ ॥

देवपादे स्वरूपेण पूर्णभावे सदास्थितः ।
अर्थसामर्थ्यदानेन स्वामिपुण्यं तु धार्यते ॥ १० ॥

सुदानेषु रतो नित्यं सुभृत्यः प्रभुकाम्ययोः ? ।
स्वामी सुहृत्संयोगे तु जल्पे किंकरतां व्रजेत् ॥ ११ ॥

स्वयं धराधिपो वत्स बहुकर्मसु संस्थितः ।
नित्यं सन्मानोद्यमनधर्मकर्मादिकारकः ॥ १२ ॥

दातव्यं वस्त्रताम्बूले खाद्यं पानं दिने दिने ।
सन्मानं जन्मतो दद्यात् प्रियालापैः सुनित्यशः ॥ १३ ॥

असहाये कुतः सिद्धिर्धनहीनः पराजितः ।
पुष्कलं साधनं यस्य सिद्धिस्तस्य करे स्थिता ॥ १४ ॥

बहुवित्तचयो वत्स बुद्धिसोद्यमसाहसैः ।
सूत्रमन्त्रं सुभृत्यैश्च स्यात्सदा च सुखी नृपः ॥ १५ ॥

सर्वकार्येषु निबन्धे त्रिकालज्ञः सदा भवेत् ।
वर्तमानं तथातीतं भाव्यं नित्यं विलोकयेत् ॥ १६ ॥

प्रारम्भे सर्वकार्याणां सर्वोपकरणैर्युतः ।
आदिमध्यान्ततः पृष्ट्वा कृत्यान्तं कारयेद् बुधः ॥ १७ ॥

बुद्धिकामी भवेन्नित्यं सर्वत्रैवापराजित ।
व्यवहारे निर्मला ये ते भृत्या वसुधाधिपाः ॥ १८ ॥

अर्थेन वर्धते चार्थ सन्मानैर्वन्दिता भया ? ।
व्यवहारे वर्धते लोकश्चतुरङ्गः प्रियागमः ॥ १९ ॥

तेषां सुसिद्धयति सर्वमसाध्यं साध्यं नित्यशः ।
दानसन्मानमात्रेण देवोऽपि च सन्मानयेत् ॥ २० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
सूत्रधारपरीक्षाधिकारो नामैकोनपञ्चाशं सूत्रम् ॥

---

## (५०) सूत्रधारलक्षणात्मकं पञ्चाशं सूत्रम् ॥

विश्वकर्मोवाच–

शृणु वत्स यथान्यायं सूत्रधारस्य लक्षणम् ।
शास्त्रज्ञः कुशलो दक्षो वास्तुविद्याविबोधकः ॥ १ ॥

सूत्रधारो महाप्राज्ञः षट्कर्मसु निरन्तरम् ।
यो नित्यं त्वमरतत्त्वं सामुद्रोऽपि तद्यालयम् ? ॥ २ ॥

माधुर्यवांस्तथालापे वास्तुविद्यादिकौशलः ।
ज्ञानचक्षुः सुहृदयः प्रारम्भादिरुजापहः ॥ ३ ॥

हस्तलाघवसम्पन्नो धाष्ट्यचित्रादिकौशलः ।
चक्षुः प्रत्यक्षकृच्चैव ह्यदृष्टं ज्योतिषो यथा ॥ ४ ॥

ग्रन्थार्थगुणसम्युक्तो वास्तुमर्मादिबोधकः ।
आत्ममत्युद्भवं रूपं ससूत्रं स च कर्मणा ॥ ५ ॥

सूत्रधारोपचारोर्थ ? वास्तुशास्त्रादिबोधनम् ।
भुवनकोशविज्ञानं प्रमाणं सूत्रकर्मणि ॥ ६ ॥ ?

समुद्रोपकण्ठदेशमहाशैलाश्रमादिकम् ।
भूमिभागैरनेकैश्च परीक्षा सूत्रकर्मणाम् ॥ ७ ॥

मर्मोपमर्मवेधाश्च वंशोपवंशकानि च ।
सन्धिरेखाषट्कशूलं लाङ्गलं पञ्चकादिकम् ॥ ८ ॥

षण्मर्मवेधा विज्ञेया वास्तुदेहसमुद्भवाः ।
निघण्टुं देवतानां च जानीयात् सूत्रकर्मणि ॥ ९ ॥

नगरग्रामखेटाद्यं वास्तुवेदसमुद्भवम् ।
कूटकर्वटकुप्यादि ज्ञायते सूत्रकर्मणा ॥ १० ॥

पुरप्राकारपरिखाप्रतोलीमार्गगोपुरम् ।
गृहं च राजवेश्माद्यं ज्ञायते सूत्रकर्मणा ॥ ११ ॥

प्रासादप्रतिमालिङ्गजगतीपीठमण्डपम् ।
वेदीकुण्डं स्रुचा चैव ज्ञायते सूत्रकर्मणा ॥ १२ ॥

प्रासादा विविधाकारा वैराज्यकुलसम्भवाः ।
विभक्त्यूर्ध्वतलच्छंदं ज्ञायते सूत्रकर्मणा ॥ १३ ॥

रेखानां विविधाकारा प्रासादशिखरोत्तमाः ।
घण्टाकलशध्वजाद्यं ज्ञायते सूत्रकर्मणा ॥ १४ ॥

द्वारशाखाविधिं ज्ञात्वा मूलप्रासादच्छन्दजम् ।
द्वारपालविधिश्चैव ज्ञायते सूत्रकर्मणा ॥ १५ ॥

द्वारदृष्टिपदस्थानं तथाग्रे वाहनादिकम् ।
दृष्टिस्थानं चान्तरं तु ज्ञायते सूत्रकर्मणा ॥ १६ ॥

लक्षणं च द्वारविधिं शिवलिङ्गेषु सर्वतः ।
मानोन्मानप्रमाणं च ज्ञायते सूत्रकर्मणा ॥ १७ ॥

वितानानि विचित्राणि क्षिप्तान्युत्क्षिप्तकानि च ।
मन्दारसभापद्मानि ज्ञायन्ते सूत्रकर्मणा ॥ १८ ॥

वितानानां संवरणा घण्टाकूटसमाकुलाः ।
सिंहसंघटनाकीर्णा ज्ञायन्ते सूत्रकर्मणा ॥ १९ ॥

शुक्लाम्बरधरः सूत्र स्वस्थचित्तः समाहितः ।
पूजापरिग्रहं दद्यादात्मचिन्ता तु दैवते ॥ २० ॥

तुष्टिदानं ततो दद्यात्सर्वकर्मसु वै तथा ।
सुभृत्यांस्तोषयेत्तत्र कर्मकारापरैः सह ॥ २१ ॥

तोषितैः सर्वसूत्रैश्च गुरुतः क्षेममाप्नुयात् ।
निर्विघ्नं च भवेत्तत्र सर्वकामफलं भवेत् ॥ २२ ॥

सिद्धिं विनायकं चादौ क्षेत्रपालांस्ततोऽर्चयेत् ।
पूजयेदुक्तविधिना योगिनीश्च कुमारिकाः ॥ २३ ॥

भूपरिग्रहणं प्रोक्तं शुभं धात्रीपरीक्षणम् ।
पूर्वं त्वेवं प्रवक्ष्यामि शृणु चैकाग्रमानसः ॥ २४ ॥

इति भूत्रमनन्तानगुणकीर्तिप्रकाशप्राक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
सूत्रधारलक्षणाधिकारो नाम पञ्चांशं सूत्रम् ॥

## (५१) भूपरीक्षाग्रहकीलकारोपणमेकपञ्चाशं सूत्रम् ॥

---

विश्वकर्मोवाच -

भूमेः परिग्रहं कृत्वा सभावनिमितिकर्मैः ।
दिव्यानि वीक्ष्य भौमानि शुभान्यशुभकानि च ॥ १ ॥

शुभेषु प्रस्थिते सिद्धिर्विजयः स्यान्महोत्सवः ।
अशुभेषु निवर्तेत न गच्छेत् पदमग्रतः ॥ २ ॥

तन्मध्ये तथा ध्यानं शाकुनानि न लक्षयेत् ।
चेष्टायुक्तिसमाख्यातं तत्फलं शाकुनोत्तमैः ॥ ३ ॥

आचार्यः सूत्रधारैश्च यजमानैश्च संयुतः ।
त्रयश्च साधकैश्चैव कर्मकारादिसंयुताः ॥ ४ ॥

आचार्यश्च स्वयं ब्रह्मा शिल्पी चैव जनार्दनः ।
यजमानस्तु शक्रः स्यात् त्रिभिः कर्म प्रवर्तते ॥ ५ ॥

तत्र भूमिं समीकृत्य त्रयः सह साहायकैः ।
दिशाक्षेत्रबलिं दद्युः कुर्युः खातपरीक्षणम् ॥ ६ ॥

हस्तमात्रं खनेद् भूमिं तस्यान्तर्धृतपांशुकम् ।
ततः खातं समाशोध्य पूरयेत् पांशुना वृतम् ॥ ७ ॥

अधिके पांशुके श्रेष्ठा मध्यमा समपांशुके ।
हीनपांशौ कनिष्ठा च ज्येष्ठा मध्याधमा त्रिधा ॥ ८ ॥

खातं तत्रोदकैर्भृत्वा शिल्पी शतपदं व्रजेत् ।
अर्धे समे च पादोने कनिष्ठोत्तममध्यमाः ॥ ९ ॥

पुण्योदकैर्भृतं खातमूर्ध्वं बाणं समुत्क्षिपेत् ।
भृते मही चोत्तमा स्यान्मध्यमाङ्गुलहीनतः ॥ १० ॥

द्व्यङ्गुलोने कनिष्ठा स्यात् त्रिविधं भूमिलक्षणम् ।
अल्पोदकेऽतिहीना स्याद्वर्जयेदधमाधमम् ॥ ११ ॥

ततः सम्पूरयेद्वत्स सुदिने सम्प्रधार्य ते ।
परीक्षयेच्च भूम्याद्यं वर्णगन्धैश्च स्वादतः ॥ १२ ॥

भूमीनामष्टप्लवादि गुणदोषान् ब्रवीमि ते ।
पूर्वप्लवा धरा श्रेष्ठा ह्यायुःश्रीबलवर्द्धिनी ॥ १३ ॥

सर्वसंपत्करी पुंसां प्रासादानां विभूतिदा ।
राज्यपूज्या सदानन्दा प्राक्प्लवाचेद्भवेन्मही ॥ १४ ॥

आग्नेयप्लवका भूमिरग्निदाहभयावहा ।
शत्रुसन्तापदा नित्यं कलिदोऽग्निप्लवः स्मृतः ॥ १५ ॥

नश्यन्ति पुरुषास्तत्र देवता च प्रणश्यति ।
धनहानिकरो नित्यं रोगकृद् दक्षिणः प्लवः ॥ १६ ॥

प्रवर्तयेद् गृहे पुंसां रोगांश्च मृत्युदायकान् ।
धनहानिं तथा नित्यं कुरुते नैर्ऋतिप्लवा ॥ १७ ॥

पश्चिमप्लवका भूमिर्धनधान्यविनाशिनी ।
शोकदाह्यं कुलं तत्र यत्र भूः पश्चिमप्लवा ॥ १८ ॥

शत्रुकर्त्री विरागा च गोत्रक्षयकरी तथा ।
गृहे च कन्यकाहन्त्री सदा दुःखभयावहा ॥ १९ ॥

भुक्तं न जीर्यते तस्य मह्यां तत्र तु यो वसेत् ।
एतान् दोषानावहति दोषदा वायुदिक्प्लवा ॥ २० ॥

पूज्या लाभकरी नित्यं पुत्रपौत्रविवर्धिनी ।
कामदा भोगदा चैव धनदा चोत्तरप्लवा ॥ २१ ॥

नरसौख्यसतीसत्यसौभाग्यादिविवर्द्धिनी ।
धनार्थैश्वर्यसंपन्ना धर्मदेशानकप्लवा ॥ २२ ॥

सा विद्या धनसंपन्ना सर्वलोकहितावहा ।
विनयाचारसम्पन्नपुत्रपौत्रादिसंकुला ॥ २३ ॥

नीरोगा दानशीला च विशिष्टजनसेविता ।
पूर्वप्लवा तु या भूमिः शोभना सा प्रकीर्तिता ॥ २४ ॥

गृहप्रासादयोर्भूम्याः कथ्यतेऽनुक्रमोऽधुना ।
मध्यप्लवा निकृष्टा स्यात् कनिष्ठा मध्यवर्तिका ॥ २५ ॥

सर्वनाशकरी पुंसां सा भूमिस्तु निवासिनाम् ।
वर्जयेच्छिद्रमां क्ष्मां तु कगलां मस्तकोन्नताम् ॥ २६ ॥

चौरेभ्यो भयदा नित्यं द्रव्यनाशकरी स्मृता ।
उच्छिन्ना च देवभूमी ऊर्ध्वसार्धास्यतव्यही ? ॥ २७ ॥

अजोष्ट्रखरसंसेव्यां वर्जयेत्तादृशीं महीम् ।
सशल्या बहुभक्ता च ह्यूषरा शोककारिका ॥ २८ ॥

त्रिविधा स्फुटिता मूर्द्धा वृष्टिशुष्का रिक्ताङ्किका ।
कापादैः ? भ्रमगम्भीरा घटिका त्र्यक्षसिद्धिदा ॥ २९ ॥

वेणुगुल्मलताच्छाया द्विगुणा मध्यदूषिता ।
त्रिगुणा पुन्नागवृक्षैः क्षीरवृक्षैश्चतुर्गुणा ॥ ३० ॥

पञ्चधाश्वत्थवृक्षैश्च षड्धा धात्री महीरुहैः ।
सप्तधा पूर्णवृक्षैश्च लिङ्गच्छाया तथाष्टधा ॥ ३१ ॥

एताश्छायाः परित्यज्य वेश्म कुर्याद्यथाभयम् ।
वृक्षप्रासादयोश्छायां गृहे त्यक्ता शुभप्रदा ॥ ३२ ॥

द्वयोः प्रहरयोश्छाया वृक्षप्रासादगुल्मजा ।
हर्म्यगृहे तथैवं स्यादधःस्तान्नैव निन्दिता ॥ ३३ ॥

अर्का अशोका अश्वत्थाः केतकीबीजपूरकाः ।
यस्मिन् गृहे प्ररोहन्ति तद् गृहं नैव वर्द्धते ॥ ३४ ॥

दाडिमं च हरिद्रां च श्वेतां च गिरिकर्णिकाम् ।
यदीच्छेदात्मनः श्रेयो गृहद्वारे न रोपयेत् ॥ ३५ ॥

त्यक्त्वा चोग्रतमं वृक्षं कटुकं कण्टकान्वितम् ।
अपि सौवर्णिकान्वृक्षान् गृहाश्रये न रोपयेत् ॥ ३६ ॥

न्यग्रोधोदुम्बरप्लक्षांस्तथा वै कार्मुकादिकान् ।
वर्जयेद् गृहमाश्रित्य हर्म्यवृद्धिर्न विद्यते ॥ ३७ ॥

खर्ज्जूरी दाडिमी रम्भा कर्कन्धू बीजपूरिका ।
यस्मिन् गृहे प्ररोहन्ति तद् गृहं नैव वर्द्धते ॥ ३८ ॥

नकुलश्चोरगो यत्र क्रीडतः स्नेहत उभौ ।
तत्रस्थाने महीं खात्वा द्रव्यं तिष्ठति निश्चयम् ॥ ३९ ॥

बिडाला मूषकाः स्नेहाद्रमन्ते च परस्परम् ।
तत्र स्थाने महीं खात्वा द्रव्यं तिष्ठति निश्चयम् ॥ ४० ॥

सर्पाश्च मूषकाः स्नेहात् क्रीडन्त्यानन्दरूपकाः ।
तत्र स्थाने महीं खात्वा द्रव्यं तिष्ठति निश्चयम् ॥ ४१ ॥

यत्र ना दृश्यते शल्यं द्रव्यं तत्र तथोच्यते ।
तत्र स्थाने महीं खात्वा द्रव्यं तिष्ठति निश्चयम् ॥ ४२ ॥

अष्ट पूर्वायता रेखा भिन्नाः पञ्च समुद्धरेत् ।
पदैरष्टाविंशतिभिर्ऋक्षसङ्ख्या तथैव च ॥
द्वारमध्ये कृत्तिका च शाखयोर्भरणीमघे ॥ ४३ ॥

चन्द्रे द्रव्यं तथा सूर्ये शल्यं चैव विनिर्दिशेत् ।
अहिबलचक्रे प्रोक्ता स्वसरो भृत्याश्च केवली ? ॥ ४४ ॥

अश्विन्यादि त्रिकं चैव आर्द्रादि पञ्चकं तथा ।
पूर्वाषाढा चतुष्कं च रेवती चोत्तरात्रयम् ॥ ४५ ॥

शशिभानि किलैतानि शिष्टानि रविभानि च ।
चन्द्रर्क्षे च स्थिते सूर्ये चन्द्रे सूर्यर्क्षसंस्थिते ॥ ४६ ॥

तत्र शून्यं भवेत्स्थानं द्रव्यशल्यविवर्जितम् ।
द्रव्यशल्यविना त्वेवं शल्यद्रव्यादि कथ्यते ? ॥ ४७ ॥

चन्द्रः पूर्वे परं भानुस्तत्र शल्यं विनिर्दिशेत् ।
भानुः पूर्वे परं चन्द्रस्तत्र शल्यं विनिर्दिशेत् ॥ ४८ ॥

गतघटि ऋक्षहताः षष्ठिहते च शेषकम् ।
रविशशिभुक्तकालं रविचन्द्रर्क्षलग्नकम् ॥ ४९ ॥

श्वेता च ब्राह्मणी भूमी रक्ता वै क्षत्रिया स्मृता ।
पीतवर्णा भवेद्वैश्या शूद्री तु कृष्णवर्णिनी ॥ १ ॥

घृतगन्धा भवेद्विप्री राज्ञी रक्तानुगन्धिनी ।
क्षारगन्धा भवेद्वैश्या शूद्री विष्ठानुगन्धिनी ॥ २ ॥

ब्राह्मणी मधुरास्वादा कषाया क्षत्रिया तथा ।
क्षारास्वादा भवेद्वैश्या शूद्री स्यात्कटुका तथा ॥ ३ ॥

एवं परीक्षयेद् भूमिं वर्णैर्गन्धैश्च स्वादतः ।
गोमयेन समालिप्य नन्द्यावर्तं तु स्वस्तिकम् ॥ ४ ॥

स्थापयेदामघटं वर्धमानेन संयुतम् ।
घृतेन ज्वालयेद्वर्तीश्चतस्रश्च चतुर्दिशम् ॥ ५ ॥

आद्योद्भवे यथा वर्तिस्तद्वर्णा सा मही मता ।
सूत्रधारस्य हस्ते तु कुद्दालं तु तथोत्तमम् ॥ ६ ॥

स्थित्वा पूर्वाभिमुखतः शुचिः स्नातो जितेन्द्रियः ।
शुक्लाम्बरधरो नित्यं शुक्लमाल्यानुलेपनः ॥ ७ ॥

प्रहारं दापयेत्तत्र लक्षयेद्रेणुमुच्छ्रितम् ।
पूर्वापरयाम्योत्तरं वर्णैः प्राच्यादिशास्तकम् ॥ ८ ॥

ततो वास्तुं च सम्पूज्य तत्तत्क्षेत्रेषु कल्पितम् ।
पुष्पाक्षतैः समालिख्य निलयाधः प्रमाणतः ॥ ९ ॥

सूत्रधारो महाप्राज्ञः शुक्लाम्बरधरः शुचिः ।
करे गृहीत्वा कुद्दालं दृढश्चैकाग्रमानसः ॥ १० ॥

तूर्यवादित्रनिर्घोषैर्मङ्गलैः शब्दसंकुलम् ।
प्रहारं दापयेत्तत्र तत्कुक्षौ वह्निगोचरे ॥ ११ ॥

उद्धृते चैव कुद्दाले ततो रेणुं निरीक्षयेत् ।
उत्तरे तु भवेत्क्षेमं पश्चिमे पुत्रपौत्रकम् ॥ १२ ॥

पूर्वे तथोत्तमं विद्यादीशाने मोक्षदायकम् ।
इतरासु चतुर्दिक्षु सर्वदोषसमुद्भवः ॥ १३ ॥

आनीय कीलकं सूत्रं रोपयेच्च चतुर्दिशम् ।
कीलकस्य च सूत्रस्य वर्णभेदांश्च लक्षये ॥ १४ ॥

प्रशस्यन्ते ब्राह्मणानां कीला आश्वत्थकीलकाः ।
उदाहृता क्षत्रियाणां खादिरा रक्तचन्दनाः ॥ १५ ॥

शिरीषशालतालानां वैश्यजातेः प्रकीर्तिताः ।
सर्जकार्जुनयोस्त्वेवं शूद्राणां च सुखावहाः ॥ १६ ॥

द्वात्रिंशदङ्गुलो विप्रे चाष्टाविंशतिः क्षत्रिये ।
चतुर्विंशाङ्गुलो वैश्ये शूद्रे विंशाङ्गुलो भवेत् ॥ १७ ॥

चतुरस्रो भवेद् विप्रे चाष्टास्रः क्षत्रिये मतः ।
षोडशास्रस्तु वैश्ये स्याद् वृत्तः शूद्रे प्रकीर्तितः ॥ १८ ॥

विप्रस्य दर्भजं सूत्रं मौञ्जं तु क्षत्रियस्य च ।
कासजं तु भवेद् वैश्ये शाणं शूद्रस्य कीर्तितम् ॥ १९ ॥

न काष्ठलोहाङ्गारैश्च नखपादैरुद्घाटनम् ।
शस्त्रे शस्त्रभयं विद्यात् सूत्रछेदे तु मृत्युदम् ॥ २० ॥

आलिख्य होमशालायां धर्मकामार्थसाधकम् ।
कृत्वा पुष्पाक्षतं पात्रे जलेरवां समुद्धरेत् ॥ २१ ॥

बलिं दद्याद्यथान्यायं शास्त्रदृष्टेन कर्मणा ।
आस्फालयेत् ततः कीलं प्रथमं वह्निगोचरम् ॥ २२ ॥

नैर्ऋत्यान्ते द्वितीयं च वायव्यं तदनन्तरम् ।
ईशान्यां च पुनर्दद्यात् सूत्रं यावच्चवह्निगम् ॥ २३ ॥

गृहीत्वा मुद्गरं शिल्पी प्रहारांस्त्रीन् प्रदापयेत् ।
चतुर्थांशे गते कीले सा मही चोत्तमा मता ॥ २४ ॥

मध्यमा स्यात्त्रिभागेन कनिष्ठार्धेन च स्मृता ।
अत ऊर्ध्वं गते कीले विद्यान्न शिवमालयम् ॥ २५ ॥

हन्यमानो यदा कीलो नमितः कां दिशां प्रति ।
तन्माहात्म्यमथाख्यास्ये नमिते कीलके फलम् ॥ २६ ॥

प्राच्यां स्यादर्थसम्पत्तिः सन्तापो ह्यग्निगोचरे ।
दक्षिणे विपुला भोगा नैर्ऋत्ये कलहः सदा ॥ २७ ॥

वारुण्यां धनधान्यं च वायव्यां स्त्रीप्रदूषणम् ।
उत्तरे सर्वभद्राणि हीशाने मरणं ध्रुवम् ॥ २८ ॥

प्राञ्जलः सिद्धिदः प्रोक्तोऽन्यथा चैवमसिद्धिदः ।
भग्नश्च मृत्युदः प्रोक्तः कीलकस्य महात्म्यकम् ॥ २९ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां भूपरिग्रहकीलकारोपणाधिकारो नामैकपञ्चाशं सूत्रम् ॥

## (५२) कूर्मप्रमाणपदप्रतिष्ठा नाम द्विपञ्चाशं सूत्रम् ॥

---

विश्वकर्मोवाच-

शस्ते मासे सिते पक्षे ह्यतीते चोत्तरायणे ।
ताराचन्द्रबले चैव योगे चामृतसम्भवे ॥ १ ॥

सूत्रपातस्तु कर्त्तव्यः प्राची साध्या ततो भवेत् ।
चतुरश्रं समं कृत्वा दिग्मूढं परिवर्जयेत् ॥ २ ॥

पूर्वपश्चिमदिग्मूढं वास्तु स्त्रीनाशकं स्मृतम् ।
दक्षिणोत्तरदिग्मूढं सर्वनाशकरं भवेत् ॥ ३ ॥

विसूत्रं च भवेत्तच्चेत् सूत्रसन्तापकारकम् ।
प्रासादस्य प्रमाणेन सूत्रैः क्षेत्रं प्रसाधयेत् ॥ ४ ॥

प्रासादे भित्तिसंयुक्तो गृहे भित्तिस्तु बाह्यतः ।
कर्त्तव्यो मण्डपैर्युक्तो जगत्यायाम एव च ॥ ५ ॥

अथाख्यास्ये पुनश्चान्यद् जीर्णप्रासादलक्षणम् ।
भग्नं द्रव्यादिकं वापि उद्धारेऽष्टगुणं फलम् ॥ ६ ॥

पूर्वमानप्रमाणं च कारयेत्तद्विचक्षणः ।
तद्रूपं तत्प्रमाणं च पूर्वसूत्रं न चालयेत् ॥ ७ ॥

चलिते चालिते वापि दिग्मूढे स्थानवास्तुषु ।
तस्मात्सर्वप्रयत्नेन पूर्वसूत्रं न चालयेत् ॥ ८ ॥

चलिते चालिते चैव सूत्रस्थाने च विग्रहम् ।
हीने हानिं प्रकुर्वीत चाधिके स्वजनक्षयम् ॥ ९ ॥

भूपरिग्रहणे चैव वास्तुविद्याविशारदैः ।
वास्तुस्थानं पुरा ज्ञात्वा खनेच्चैवं प्रदक्षिणम् ॥ १० ॥

पिता माता च पुत्राश्च नाशं गच्छन्ति मस्तके ।
पृष्ठे चात्मविनाशश्च देशत्यागश्च जायते ॥ ११ ॥

स्त्रीस्वगोत्रविनाशश्च चतुःपादेषु वै क्रमात् ।
जायते धननाशश्च मर्मवेधे कृते सति ॥ १२ ॥

शुभं पुत्रो धनं धान्यं ज्ञात्वा कुक्षिं यदा खनेत् ।
कृत्वा प्रदक्षिणं कुम्भं गृहीत्वा स्थापितं ततः ॥ १३ ।

कुक्षिं खातोदकैर्भृत्वा शान्तिमुच्चार्यशोभनाम् ।
तथोदकैर्वन्दनीयं वास्तुदेवं विसर्जयेत् ॥ १४ ॥

विदिक्षु दिक्षु खातानि प्राच्यादिषु प्रदक्षिणम् ।
तथा घटोदकैर्भृत्वा वन्दयेच्छान्तिपाठकैः ॥ १५ ॥

इत्यन्तं तु समुद्दिष्टं वास्तुस्थानविसर्जनम् ।
शिलान्तं वा जलान्तं वा खात्वा शल्यं समुद्धरेत् ॥ १६ ॥

जलान्तेषु यदा खातो गोविप्रोदक ? पालनम् ।
वास्तु पूजां ततः कृत्वा मध्ये कूर्मं तु स्थापयेत् ॥ १७ ॥

हिरण्मयो भवेत्कूर्मो वास्तुविस्तारधारणः ।
उरोरत्नैर्नेत्ररत्नैः पृष्ठरत्नैश्च शोभितः ॥ १८ ॥

समुपेतैः सर्वगात्रे रौप्यपादोपशोभितः ।
एवं वै सूत्रितं सर्वं रत्नकाञ्चनरूप्यकम् ॥ १९ ॥

तत्रैव स्थापिताः सूत्र पर्वता द्वीपसागराः ।
शिलाभिरिष्टिकाभिश्च ततः खातं प्रपूरयेत् ॥ २० ॥

इष्टकाचयनं कृत्वा पूरयेच्च स्तरं स्तरम् ।
कपिशीर्षे च पाषाणे मृदश्चाष्टाङ्गुला दहेत् ॥ २१ ॥

जलेन प्लावितास्ताश्च मुद्गरस्या हनेत्ततः ।
पालाशस्वस्थसंभूतैर्हनेत्ताः सुदृढं ततः ॥ २२ ॥

पादोनं पूरयेत्प्रान्तं तत्घनं च प्रादायिकम् ? ।
ह्रस्वं ह्रस्वं तु कर्तव्यं प्रासादस्य तलं तथा ॥ २३ ॥

एक हस्ते तु प्रासादे कूर्मः स्याच्चतुरङ्गुलः ।
अर्धाङ्गुला भवेद्वृद्धिः प्रतिहस्तं दशावधि ॥ २४ ॥

पादवृद्धिः पुनः कुर्याद्विंशतिहस्ततः करे ।
ऊर्ध्वं वै त्रिंशद्धस्तान्तं वसुहस्तैकमङ्गुलम् ॥ २५ ॥

ततःपरं शतार्धान्तं सूर्यहस्तैकमङ्गुलम् ।
अनेन क्रमयोगेन मन्वङ्गुलं शतार्धके ॥ २६ ॥

कनिष्ठं पादहीनं च ज्येष्ठं पादाधिकं तथा ।
साधारणमिदं मानं त्रिविधं कूर्ममानतः ॥ २७ ॥

हैमो रौप्यश्च कर्त्तव्यः सर्वपापप्रणाशनः ।
इत्थं कूर्मं यः करोति सर्वयज्ञफलं भजेत् ॥ २८ ॥

स्नानं पञ्चामृतैः कार्यं कूर्मस्य च यथाविधि ।
अर्चयित्वा प्रयत्नेन धूपयित्वा सुगन्धिना ॥ २९ ॥

तिलैर्यवैस्तथा होमं कुर्यात् पूर्णाहुतिं तथा ।
निवेशयेदिमं कूर्मं वेदवादित्रमङ्गलैः ॥ ३० ॥

इतिसूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां कूर्मप्रमाणपदप्रतिष्ठाधिकारो नाम द्विपञ्चाशं सूत्रम् ॥

## (५३) देवासुरसंग्रामादिवास्तूद्भवो नाम त्रिपञ्चाशं सूत्रम् ।

---

अपराजित उवाच—

गन्धमादनपृष्ठेऽथ शैलराजमहोत्सवे ।
सुरविद्याधरै रम्ये ऋषिसंघसमाकुले ॥ १ ॥

सिद्धचारणसंगीते ह्यप्सरोगणसेविते ।
दिग्विदिग्वासिभीरम्ये सरिताद्वयसङ्गमे ॥ २ ॥

तत्रस्थं च सुखासीनं विश्वकर्ममहौजसम् ।
वेदवेदाङ्गतत्त्वज्ञं सर्वशास्त्रविशारदम् ॥ ३ ॥

शिरसा प्रणिपत्याथ जानुभ्यां शरणागतः ।
दण्डवच्चाग्रतो भूत्वा पप्रच्छ त्वपराजितः ॥ ४ ॥

कथं वास्तु समुत्पन्नं निर्मितं वा कुतः कदा ।
वास्तोरुत्पत्तिस्तात देवादेश्च निघण्टुकम् ॥ ५ ॥

एकपादादिकं वास्तु यावत्पदसहस्रगम् ।
मर्मोपमर्मवंशांश्च रेखासन्धिसुरादिकम् ॥ ६ ॥

बलिकर्मविधिं चैव वास्तुपादनिवासिनाम् ।
एतत्सर्वं प्रयत्नेन कथयस्व जगत्पते ॥ ७ ॥

विश्वकर्मोवाच—

शृणु वत्स महाप्राज्ञ यत्त्वया परिपृच्छितम् ।
कथयामि न सन्देहो वास्तोरुत्पत्तिलक्षणम् ॥ ८ ॥

पूर्वं देवासुरे युद्धे महाघोरे सुदारुणे ।
संघट्टे नरसंकीर्णे श्रोणीगात्रैः परस्परम् ॥ ९ ॥

महारौद्रैः कटाक्षैश्च शस्त्रघातैः परस्परम् ।
महाबलोत्कटा वीराः संग्रामे हेतिकाङ्क्षिणः ॥ १० ॥

निर्जिताश्च ततो देवा दैत्येन्द्राः प्रबलाः स्थिताः ।
तथा किलकिलायन्ति पूर्वदेवात्मसम्भवाः ॥ ११ ॥

भूमिकम्पं प्रकुर्वन्ति ह्यचाल्याः पर्वता इव ।
अनन्तरं सुरा इन्द्रो मन्त्रयित्वा परस्परम् ॥ १२ ॥

ततः स्मृत्वात्मशक्तीश्च ज्ञानदेहसमुद्भवाः ।
त्रयस्त्रिंशत्कोटयश्च सुरास्ते च महोत्कटाः ॥ १३ ॥

पुनरायोज्यसंग्रामं दैत्येन्द्रैश्च परस्परम् ।
सकोपाश्चैव संग्रामे सुरासुरमहोत्कटाः ॥ १४ ॥

निर्जिता असुरा युद्धे देवाश्च प्रबलाः स्थिताः ।
तदाख्याय धराश्चैवं सुराज्यं महोत्सवम् ॥ १५ ॥

अनन्तरं महाभूता दैत्याश्चैव महोत्कटाः ।
यतरिताः शैलेन्द्रेषु दैत्येन्द्राश्च महोत्कटाः ॥ १६ ॥

शैलरूपैश्च सम्भूय सपक्षाः क्रोधपर्वताः ।
तथा पतन्त्युत्पतन्ति यत्र भूर्जनसंकुला ॥ १७ ॥

निर्दहन्ति धराधार्यं खेटग्रामपुरादिकम् ।
नरोरगसुरेन्द्राश्च पर्वतैर्भस्मसात्कृताः ॥ १८ ॥

ततो देवादिकाः सर्वे मरुत्वत्पुरमाश्रिताः ।
व्यज्ञापयन् सहस्राक्षं धराधरविनाशिनम् ॥ १९ ॥

क्रोधादिन्द्रेण वज्रेण स्थापिता भुवि पर्वताः ।
छेदिताश्च ततः पक्षा अचला यत्र संस्थिताः ॥ २० ॥

गङ्गायमुनयोर्मध्ये प्रारब्धो यज्ञ उत्तमः ।
निर्जिताश्च सुरैर्यज्ञरक्षा वज्रायुधैः कृता ॥ २१ ॥

असुराश्च ततः सर्वे चिन्तातुरतया स्थिताः ।
नैर्ऋत्ये कुण्डसंभूतं भार्गवोरुशक्त्यात्मकम् ॥ २२ ॥

दुर्जयं दुर्निरीक्षं च महाघोरं सुदारुणम् ।
स्फुरन्तं विद्रुमाकारं लोचनैरग्निसन्निभैः ॥ २३ ॥

हुताशनगर्भसम्भूतं प्रलयान्तसमप्रभम् ।
स्फुरत्स्फुलिङ्गं ज्वलन्तं दुर्निरीक्ष्यं भयप्रदम् ॥ २४ ॥

त्रिनेत्रं विकृतं रौद्रं जटिलं बाललोहितम् ।
दंष्ट्राकरालमत्युग्रं मुखे दावाग्निसन्निभम् ॥ २५ ॥

कृतान्ततुल्यं दशनैश्चण्डोष्ठकपुटान्तरे ।
भूतलान्ते तलं तस्य आलोके बाहुपञ्जरम् ॥ २६ ॥

स्कन्धग्रीवाकरा व्योम्नि ब्रह्माण्डे च गतं शिरः ।
तेजोरूपं स्फुरन्तं च प्रलये भैरवं यथा ॥ २७ ॥

निनदन्तं महाभीमं मन्ये कल्पान्तगर्जितम् ।
त्रस्तास्तु देवताः सर्वा रूपं दृष्ट्वा सुदारुणम् ॥ २८ ॥

ध्यानयुक्ताश्च चलिताः भयभीता महोरगाः ।
दिक्पाला लोकपालाश्च प्रणश्यन्ति महासुराः ॥ २९ ॥

ब्रह्मराक्षसवैताला आश्रयन्ति महेश्वरम् ।
आदित्याद्या ग्रहाः सर्वे आश्रयन्ति जनार्दनम् ॥ ३० ॥

देवराजः सुरैर्युक्तः समुपास्ते जगत्पतिम् ।
दुर्निरीक्ष्यं दुराराध्यं कालानलसमप्रभम् ॥ ३१ ॥

तं दृष्ट्वाद्भुतरूपं च विरञ्चिरपि विस्मितः ।
दुर्जयं दुर्निरीक्ष्यं च महाघोरं सुदारुणम् ॥ ३२ ॥

स्फुरन्तं विद्युदाकारं लोचनैरपि सन्निभैः ।
भूः क्रान्ता पादतलतो ब्रह्मलोकं गतं शिरः ॥ ३३ ॥

तस्य रूपभयाद् भीताः त्रिदशासुरराक्षसाः ।
नष्टाश्च ऋत्विजो ब्रह्मा शक्राद्या द्वारपालकाः ॥ ३४ ॥

तत्र देवा द्विजा राजा आश्रयन्ति महेश्वरम् ।
रक्ष रक्ष महादेव भयभीतान् जगत्प्रभो ॥ ३५ ॥

महद्भूतं मर्त्यलोके यज्ञे च रिपुक्रोधजम् ।
सुरराजद्विजानां च भूमौ रक्षाकरो भवान् ॥ ३६ ॥

प्रत्यक्षं भव ईशान सुरार्थे द्विजभूपते ।
महद्भूतं महादेवं दैत्यानां दहनं परम् ॥ ३७ ॥

ललाटनेत्रसंक्रुद्धं कालरूपमिवापरम् ।
वलोकितो भवो भद्रे असाध्ये वृद्धतांगतः ॥ ३८ ॥

मूलकल्पोद्भवं यत्र निराहारमस्तकोभवम् ।
वलोकितं तदा चक्रं त्रिषु लोकेषु मध्यतः ।
लीयते शिवदेहे तु यत्र स्यात्सुरसम्भवः ॥ ३९ ॥

इतिसूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
देवासुरसंग्रामादिवास्तूद्भवाधिकारो नाम त्रिपञ्चाशं सूत्रम् ॥

---

## (५४) वास्तूत्पत्तिर्नाम चतुःपञ्चाशत्तमं सूत्रम् ॥

रुद्र उवाच—

भो भार्गव महावीर कस्मात्स्थानादुपागतः ।
कृतं त्वया त्वद्भुतं हि भगधर्मविनाशनम् ॥ १ ॥

सामर्थ्यतो विसृजता पुरुषं यज्ञध्वंसकम् ।
इन्द्राद्या असुरपार्श्वे निग्राह्या इति निश्चयात् ॥ २ ॥

शुक्र उवाच—

पुरा चाऽऽराधितो देवो दिव्यं वर्षसहस्रकम् ।
तदाज्ञया मया लभ्या विद्यामरत्वदायिनी ॥ ३ ॥

रुद्र उवाच—

दिव्यं वर्षसहस्रं च तपः कृत्वा सुदारुणम् ।
तोषितोऽहं तथा विष्णुः शुक्रेण मुनिना त्वया ॥ ४ ॥

जरा ? लिङ्गोद्भवे व्योम्नि तुष्टो देवो जगत्पतिः ।
ध्यानं मन्त्रजपं कृत्वा प्रीणय त्वं परेश्वरम् ॥ ५ ॥

प्रासादान्मान्त्रिकी विद्या सप्ताक्षर्यथ संहिता ।
तुष्टेन कथिता विद्या सर्वकर्मानुसारिणी ॥ ६ ॥

साधयामि यत्कृते च सर्वदेवभयंकरम् ।
मन्त्रैः स्तुत्या च युद्धैश्च दायं दास्यन्ति देवताः ॥ ७ ॥

अहो ये मुनयः सर्वे रुद्रेशं पुरुषोत्तमम् ।
उपाश्रयन्ति देवेशं भयं जयन्ति निर्जराः ॥ ८ ॥

पद्मासन शृणु त्वं च विष्णुर्वचनमब्रवीत् ।
न त्वया वध्यते साधो अस्माभिर्न च दैवतैः ॥ ९ ॥

मन्त्रमूर्तिरियं वास्तू रुद्रदेहसमुद्भवः ।
इदं तु वास्तुरूपं च दुर्धरं च पुनः शिवात् ॥ १० ॥

इदं च वचनं श्रुत्वा पद्मभूः पुरुषोत्तमात् ।
शरणं वद देवानां विष्णुरद्भुतविक्रमः ॥ ११ ॥

रुद्रलोके ततो गत्वा ध्यात्वा देवं महेश्वरम् ।
अद्भुतं भूतमभ्यर्च्य भूतं दृष्ट्वा च भूतले ॥ १२ ॥

यदा सत्त्वं भवेद् ज्ञानं भवेत्तुष्टिर्भवो ? वृथा ।
तदा सुरासुरैर्वध्य आज्ञालोपो भवेत्प्रभोः ॥ १३ ॥

शास्त्रच्छेदो न च भवेत् म्रियते न तथोदके ।
अग्निदेवात्समुत्पन्नो ह्यवन्ध्यो देवदानवैः ॥ १४ ॥

ईश्वर उवाच—

शृणु भार्गव दैत्येन्द्र विद्याप्रस्तारनिर्णयम् ।
त्रिषु स्थानेषु प्रस्तार्य्य गुरुस्थाने नियोजितः ॥ १५ ॥

अविद्यागुरुलब्धाङ्गदोषपापानुसङ्ग्रहे ।

ज्ञानोन्मीलनं तद् भक्त्या विद्यासिद्धिश्च वृद्धतः ॥ १६ ॥

भार्गव उवाच—

इयं विद्या च देवेश सर्वपुण्यानुचेतसा ।
पुण्ये न सूक्ष्मतां याति प्रकाशात् पापविग्रहौ ॥ १७ ॥

पुण्यस्थानानि सर्वाणि यानि कुर्वन्ति भूतले ।
पृथगेकैकसंस्थाने पूजा चाऽस्य प्रदीयते ॥ १८ ॥

प्रतिष्ठा सप्तपुण्याह शान्तिकानि चतुर्दश ।
समस्तपुण्यस्थानेषु पूजा चास्य प्रदीयते ॥ १९ ॥

एषां वृद्धिं च संत्यज्य ? ततो यान्ति स सूक्ष्मतः ? ।
ब्रह्माद्याश्च सुराः सर्वे निवसन्त्यस्यदेहके ॥ २० ॥

यदा विमुक्तो देवैस्तु अस्य पूजा न दीयते ।
ततः काले समुद्भूतः सुरासुरभयंकरः ॥ २१ ॥

देवतागृहवावाद्यां ? शिवः साक्षाद्भृगूदितः ।
संकल्पपुण्यस्थानानि पूजा चास्य निवेदिता ॥ २२ ॥

तदा तत्सूक्ष्मतां याति विद्यारूपं महासनम् ।
सुरैराक्रम्यते स्मैवमधोवक्त्रं निपातितम् ॥ २३ ॥

संस्थाप्य मध्यपाताले सुहितैः सुरसंघटैः ।
तत्रैव संस्थिताः पूज्या ब्रह्माद्या देवतास्तथा ॥ २४ ॥

शिरस्तस्यैवमीशाने पादौ नैर्ऋत्यगोचरौ ।
अग्निकोणे च वायव्ये प्रकोष्ठजानुसंस्थितिः ॥ २५ ॥

पञ्चचत्वारिंशद्देवा देव्यष्टकमथापि च ।
त्रिपञ्चाशच्च त्रिदशाः पूज्यास्तत्र क्रमोदिताः ॥ २६ ॥

इतिसूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
महेश्वरशुक्रसंवादे वास्तूत्पत्त्यधिकारो नाम चतुःपञ्चाशत्तमं सूत्रम् ॥

———

## (५५) वास्तूत्पत्त्यधिकारे देवतान्यासो नाम पञ्चपञ्चाशत्तमं सूत्रम् ॥

विश्वकर्मोवाच—

ईशस्तु संस्थितो मूर्ध्नि पर्जन्यः कर्णयोर्दितिः ।
जयादिती स्कन्धयोश्च ह्युभयोर्वामदक्षिणम् ॥ १ ॥

आपस्तथा च गलके आपवत्सो हृदि स्थितः ।
मरीचिः पृथ्वीधरश्च संस्थितौ स्तनयोर्द्वयोः ॥ २ ॥

नाभिमध्ये स्थितो ब्रह्मा नाभिपृष्ठानुसंस्थितौ ।
सावित्री कुक्षिमध्ये तु रुद्रदासो द्वितीयके ॥ ३ ॥

इन्द्र इन्द्रजयश्चैव श्रोणीमध्ये तु संस्थितौ ।
अङ्गुष्ठाग्रे च पितरौ गुल्फे दौवारिको मृगः ॥ ४ ॥

अन्तरीक्षः कूर्पराग्रे नागश्चैव द्वितीयके ।
वामे जानौ स्थितो रोगो दक्षिणे चाग्निदेवता ॥ ५ ॥

महेन्द्रादित्यसत्यादि भृशान्ता दक्षिणे भुजे ।
मुख्यभल्लाटसोमादि गिर्यन्ता वामके भुजे ॥ ६ ॥

सविता याम्यतो बाहौ रुद्रश्चैव द्वितीयके ।
मित्रश्च वामत ऊरौ विवस्वांश्चैव दक्षिणे ॥ ७ ॥

सुग्रीवः पुष्पदन्तश्च वरुणासुरशोषकाः ।
पापयक्ष्मा षडेते वै नलके वामके स्थिताः ॥ ८ ॥

पूषा च वितथश्चैव गृहक्षतयमौ तथा ।
गन्धर्वभृङ्गा देवाः षड् दक्षिणे नलके स्थिताः ॥ ९ ॥

ईशोर्ध्वे चरकीं विद्यात् पावकोर्ध्वे विदारिकाम् ।
निर्ऋत्यूर्ध्वे पूतनां च रोगोर्ध्वे पापराक्षसीम् ॥ १० ॥

प्राच्यां तु पिलिपिच्छा स्याज्जृम्भा स्याद्याम्यतो दिशि ।
वारुण्यां विन्यसेत्स्कन्दामर्यमा चोत्तरस्थिता ॥ ११ ॥

नास्ति चासां पदविधिः पूजां गृह्णन्ति केवलम् ।
निवासः सर्वदेवानां वास्तु वै स्थानतो विदुः ॥ १२ ॥

अङ्गं सन्धि च सूत्रादिं विद्यात्पश्चाच्च वास्तुनः ।
समस्तपुण्यस्थानानि वास्तुपूजासु वै विदुः ॥ १३ ॥

द्व्यष्टसन्धि तथाष्टाङ्गं द्व्यष्टसूत्रं तथैव च ।
पञ्चक्षेत्रमिदं वास्तु स्वरूपं पुरुषाकृति ॥ १४ ॥

वास्तोत्पत्तिः पूर्वमङ्गं यक्षोत्पत्तिर्द्वितीयकम् ।
चतुर्थकं तथा सूत्रं तृतीयं भूपरिग्रहः ॥ १५ ॥

पञ्चमं वेश्माधिकारः षष्ठं च सुरसद्मकम् ।
सप्तमं लिङ्गमूर्त्याद्यं प्रतिष्ठाविधिरष्टमम् ॥ १६ ॥

इमान्यष्टाङ्गसूत्राणि वास्तुवेदोदितानि च ।
वास्तुवेदोद्भवं चाद्यं समस्तं सूत्रनिर्गतम् ॥ १७ ॥

इतिसूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
वास्तूत्पत्त्यङ्गे देवतान्यासाधिकारो नाम पञ्चपञ्चाशत्तमं सूत्रम् ॥

## (५६) वास्तुदेवतानिघण्टुर्नाम षट्पञ्चाशत्तमं सूत्रम् ॥

---

विश्वकर्मोवाच—

निघण्टुः प्रोच्यते नानावास्तुपदनिवासिनाम् ।
ईशादीनां च देवानां प्रदक्षिणमनुक्रमम् ॥ १ ॥

ईशश्च शङ्करो देवः पर्जन्यो वृष्टिकारकः ।
जयन्तः काश्यपो देवः स्वयं वृष्टिकरो मुनिः ॥ २ ॥

महेन्द्रश्च सुराधीश आदित्यश्च प्रभाकरः ।
सत्यश्चैव स्वयं धर्मो भृशो मन्मथ उच्यते ॥ ३ ॥

नभोऽन्तरीक्ष आकाशमग्निस्तेजःसमुद्भवः ।
पूषा मातृगणाश्चैव चाधर्मो वितथाभिधः ॥ ४ ॥

गृहक्षतो बुधश्चैव यमः प्रेताधिपस्तथा ।
गन्धर्वो नारदः प्रोक्तो भृङ्गीराण् निर्ऋतेः सुतः ॥ ५ ॥

मृगोऽनन्तः स्वभूर्धर्मो विश्वेदेवास्तु पितरः ।
दौवारिको भवेन्नन्दी सुग्रीवो मनुदेवता ॥ ६ ॥

महाजवः पुष्पदन्तो वरुणः सलिलाधिपः ।
असुरो राहुराख्यातः शोषः सौरिः शनिश्चरः ॥ ७ ॥

पापयक्ष्मा क्षयः प्रोक्तो ज्वरो रोगश्च दूषकः ।
नागस्तु वासुकिः प्रोक्तो मुख्यस्त्वष्टा च विश्वकृत् ॥ ८ ॥

भल्लाटश्चन्द्र इत्युक्तः सोमश्चैव कुबेरकः ।
गिरिश्च हिमवान् शैलो ह्यदितिः श्रीः प्रकीर्तिता ॥ ९ ॥

वृषध्वजो दितिः शर्व आपश्चैव धरार्णवः ।
आपवत्स उमापत्यं ह्यर्यमा स्याच्च भास्करः ॥ १० ॥

सविता जाह्नवी गङ्गा सावित्री वेदमातृका ।
विवस्वांस्तु भवेन्मृत्युरिन्द्र उक्तोऽमराधिपः ॥ ११ ॥

कालानल इन्द्रजयो मित्रश्च बलभद्रकः ।
रुद्रं तथेश्वरं विद्याद् रुद्रदासस्तदात्मजः ॥ १२ ॥

पृथ्वीधरो भवेद् विष्णुर्हेमगर्भः पितामहः ।
द्वादश ब्रह्मपरिधौ द्वात्रिंशद् बाह्यतस्ततः ॥ १३ ॥

चरकी च विदारी च पूतना पापराक्षसी ।
पिलिपिच्छा तथा जम्भा स्कन्दार्यमा दिशां प्रति ॥ १४ ॥

**विदिक्षु दिक्षु संस्थाने ह्यष्टौ कुर्याच्च शासनीः ।**
**आसां पदविधिर्नास्ति पूजां गृह्णन्ति केवलम् ॥ १५ ॥**

**इत्येवं च समाख्याता देवतानामनुक्रमात् ।**
**निघण्टुपरिभाषाश्च वास्तुवेदसमुद्भवाः ॥ १६ ॥**

इतिसूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
वास्तुदेवतानिघण्ट्वधिकारो नाम षट्पञ्चाशं सूत्रम् ॥

---

# (५७) वास्तुक्षेत्रात्मकं सप्तपञ्चाशं सूत्रम् ।

---

विश्वकर्मोवाच—

स्वस्तिकं पुष्पकं नन्दं षोडशाक्षं चतुर्थकम् ।
पञ्चमं कुलतिलकं सुभद्रं षष्ठमेव च ॥ १ ॥

सप्तमो मरीचिगणो भद्रकं स्यात्तथाष्टमम् ।
नवमं कामदं प्रोक्तं दशमं भद्रमुच्यते ॥ २ ॥

सर्वतोभद्रनामाख्यमतऊर्ध्वं न कारयेत् ।
वास्तून्येकादशैव स्युः प्रोक्तानि परमेश्वरैः ॥ ३ ॥

पदमेकं स्वस्तिकं स्यात्पुष्पकं पचतुष्टयम् ।
नन्दं नवपदं प्रोक्तं षोडशं षोडशपदैः ॥ ४ ॥

पञ्चविंशतिभिः कुलं षट्त्रिंशद्भिः सुभद्रकम् ।
एकोनपञ्चाशत्पादैर्मरीचिगण उच्यते ॥ ५ ॥

भद्रकं तु चतुःषष्टिरेकाशीतिश्च कामदम् ।
शतपदैस्तु भद्राख्यं सहस्रैः सर्वतोद्भवम् ॥ ६ ॥

पदसङ्ख्यास्तु कथिता वास्तुस्थानानि वच्म्यहम् ।
स्वस्तिकं पदसंस्थाने ध्रुवतः कथ्यते बुधैः ॥ ७ ॥

श्रीधरं राजगेहानां हर्म्यादीनां ध्रुवं यथा ।
चतुष्की देवताग्रे या विद्यारम्भे तत्स्वस्तिकम् ॥ ८ ॥

दीक्षा विविधयात्रासु कन्यालग्ने च पुष्पकम् ।
नन्दं प्रपूजयेद्यात्रासु वनयात्रादिशोभनम् ॥ ९ ॥

लतिने रुचकादीनां मण्डपेषु गृहादिके ।
जगती वसुधायुक्तं षोडशाख्यं तु पूजयेत् ॥ १० ॥

दक्षिणोत्तरपट्टकाद्यं शक्राद्यं ? कमलोद्भवम् ।
श्रीमात्रादिषु दीक्षासु तिलकं तु प्रपूजयेत् ॥ ११ ॥

सुकर्मणि च प्रस्थाने सुभद्रं च प्रशस्यते ।
समस्तजीर्णोद्धारेषु मरीचिगणमर्चयेत् ॥ १२ ॥

ग्रामखेटपुरादा च कूपे च कर्वटादिके ।
तथा राजनिवेशे च भद्रकं पूजयेत्सदा ॥ १३ ॥

गृहादिषु समस्तेषु तृणपट्टच्छन्दादिषु ।
पाण्डुवश्वपूर्णखण्डेषु कामदं वास्तु पूजयेत् ॥ १४ ॥

प्रासादा विविधाश्चैव विविधाश्चात्र मण्डपाः ।
जगतीलिङ्गपीठे च भद्राख्यं राजवेश्मनि ॥ १५ ॥

प्रासादाश्चैव मेर्वाद्या लिङ्गं षट्करतः परम् ।
महार्थां देशराष्ट्रे च सर्वतोभद्रमर्चयेत् ॥ १६ ॥

अधस्तात् सर्वतोभद्राद् भद्राख्योपरि वास्तुकम् ।
मध्ये च द्वाविंशतिभिर्गुणिता पदकल्पना ॥ १७ ॥

षट्क्षेत्राणि प्रवक्ष्यामि वास्तुपदनिवासिनाम् ।
संस्थानोन्मानसूत्रं च वास्तुवेदसमुद्भवम् ॥ १८ ॥

चतुरश्रमायतं च वृत्तं वृत्तायतं तथा ।
अष्टाश्रं चार्धचन्द्रं च वास्तुसूत्रं तु षड्विधम् ॥ १९ ॥

प्रासादेषु गृहाद्येषु पुरग्रामनिवेशने ।
क्षेत्राणि चतुरश्राणि चतुरश्रं समर्चयेत् ॥ २० ॥

तथायताश्च प्रासादाः पुष्पाक्षकुलसम्भवाः ।
यथायतानि क्षेत्राणि पूजयेच्च तथायतम् ॥ २१ ॥

वापीकूपक्षेत्रकाणि वृत्तानि प्रतिमास्तथा ।
कैलासच्छन्दोद्भवाश्च सर्वे वृत्ताः प्रकीर्तिताः ॥ २२ ॥

वृत्तायताश्चमणिका अष्टशाला अष्टाश्रकाः ।
तडागेषु समस्तेषु ह्यर्धचन्द्रं प्रपूजयेत् ॥ २३ ॥

क्षेत्रषट्कात्मके वास्तौ बाणवेदाश्च देवताः ।
त्रयोदश स्थिता मध्ये द्वात्रिंशद् बाह्यतस्तथा ॥ २४ ॥

सूत्रबाह्येऽष्टदेव्यश्च ईशादिषु प्रदक्षिणम् ।
तासां पदविधिर्नास्ति केवलं पूजनं स्मृतम् ॥ २५ ॥

इतिसूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
वास्तुक्षेत्राधिकारो नाम सप्तपञ्चाशत्तमं सूत्रम् ॥

---

# (५८) वास्तुपददेवताभिधाननिर्णयो नामाष्टपञ्चाशं सूत्रम् ॥

विश्वकर्मोवाच—

स्वस्तिकं च प्रवक्ष्यामि तच्चैकपदसंश्रितम् ।
त्रयोदश सुरा मध्ये द्वात्रिंशद् बाह्यतः स्थिताः ॥ १ ॥

तथा कूटं त्रिभिः कृत्वा मध्ये ब्रह्मा नवांशके ।
तृतीयांशेष्वर्यमाद्या ऽयंशेषु कर्णदेवताः ॥ २ ॥

तासामूर्ध्वे बाह्यतश्च द्वात्रिंशत्परिधौ क्रमात् ।
इदं च स्वस्तिकं प्रोक्तं सर्वशान्तिकरं नृणाम् ॥ ३ ॥

इति स्वस्तिकवास्तु ॥

अथातः पुष्पकं वक्ष्ये वेदाश्रं च चतुष्पदम् ।
ब्रह्मणः पदमेकं तु तत्पादेष्वर्यमादयः ॥ ४ ॥

अर्यम्णः पदमानेन चाष्टौ ताः कर्णदेवताः ।
मूलपदषोडशांशे शेषा बाह्ये प्रकीर्तिताः ॥ ५ ॥

इति पुष्पकवास्तु ॥

नन्दे ब्रह्मा पदं चैकं ब्रह्मऽयंशेन चार्यमा ।
तत्त्र्यंशैः कर्णदेवाश्च द्वात्रिंशाच्च तदर्धतः ॥ ६ ॥

इति नन्दवास्तु ॥

षोडशाख्ये पदं ब्रह्मा ह्यर्यमार्धे तु कर्णगाः ।
कर्णार्धे बाह्यतो देवास्तदर्धार्धे कर्णाष्टकम् ॥ ७ ॥

इति षोडशाख्यवास्तु ॥

ब्रह्मार्यमैकैकपदं तदर्धे कर्णषोडश ।
चतुर्थांशपदाः सर्वे तद्वास्तु तिलकं भवेत् ॥ ८ ॥

इति कुलतिलकवास्तु ॥

चतुष्पदो भवेद् ब्रह्मा द्विपदाश्चार्यमादयः ।
कर्णाश्चार्धपदाः सर्वे ऽयंशोनेषु च शेषकाः ॥ ९ ॥

इति सुभद्रवास्तु ॥

चतुष्पदो भवेद् ब्रह्मा त्रिपादा अर्यमादयः ।
कर्णाः सपादाश्चैकोनं कर्णबाह्येऽर्धपादकाः ॥ १० ॥

षडंशोनपदाः शेषाश्चतुर्विंशतिसङ्ख्यया ।
मरीचिगणमित्युक्तं सप्तसप्तपदात्मकम् ॥ ११ ॥

इति मरीचिगणवास्तु ॥

चतुःषष्टिपदं वक्ष्ये वास्तु पुरनिवेशने ।
विभक्तिपदसंस्थानं देवतानामनुक्रमात् ॥ १२ ॥

चतुष्पदो भवेद् ब्रह्मा तत्समा अर्यमादयः ।
अर्यमार्धे कर्णगाश्च कर्णार्धे चतुर्विंशतिः ॥ १३ ॥

बाह्यकर्णे स्थिताश्चाष्टौ लाङ्गले पदमर्धकम् ।
ईदृशं भद्रकं प्रोक्तं चतुःषष्टिपदस्थितम् ॥ १४ ॥

इति भद्रकवास्तु ॥

ब्रह्मा नवपदो मध्ये षट्पदा अर्यमादयः ।
द्विपदा मध्यकर्णाद्या द्वात्रिंशदेकपादकाः ॥ १५ ॥

इति कामदवास्तु ॥

ततः शतपदं वक्ष्ये पूज्यं प्रासादमण्डपे ।
ब्रह्माद्याः सकलाश्चैवाष्टपादा अर्यमादयः ॥ १६ ॥

द्विपदा ब्रह्मकर्णेऽष्टौ बाह्येऽष्टौ सार्धपादकाः ।
शेषाश्चैकपदा ज्ञेयाश्चतुर्विंशतिसङ्ख्यया ॥ १७ ॥

इति शतपदं भद्राख्यवास्तु ॥

चतुरश्रीकृते क्षेत्रे द्वात्रिंशद्भिर्विभाजिते ।
षट्पञ्चाशत्पदैर्युक्तान्येकादश शतानि हि ॥ १८ ॥

मध्यस्थाने लिखेत् पद्मं वेदगर्भ इति स्मृतम् ।
ब्रह्मान्ते च भवेद्वीथी चत्वारिंशत्पदैः क्रमात् ॥ १९ ॥

अर्यम्णोऽन्ते भवेद्वीथी शतं च द्वादशोत्तरम् ।
वीथीकर्णे समस्तैवं पदमुक्तिः क्रमोदिता ॥ २० ॥

सप्तदशमण्डलेषु चाद्ये पद्मं निपातयेत् ।
तदनन्तरपङ्क्तौ च ब्रह्मा षण्णवतिपदः ॥ २१ ॥

तदन्ते वीथिका कार्या चत्वारिंशत्पदान्विता ।
अशीतिभिश्च चत्वारोऽर्यमाद्याश्च चतुर्दिशम् ॥ २२ ॥

चत्वारिंशत्पदैरर्धैरष्टौ स्युर्ब्रह्मकर्णतः ।
तदन्तर्वीथिका कार्या शतं च द्वादशोत्तरम् ॥ २३ ॥

तद्बाह्ये च भवेद्वीथी द्वात्रिंशदधिकं शतम् ।
कोणे लोप्याश्च षट्पादाश्चतुर्षु चतुर्विंशतिः ॥ २४ ॥

ईशाद्या रुद्रदासान्ता लता वीथ्यन्तरे गताः ।
एवं पदानि जायन्ते षट्त्रिंशदधिकं शतम् ॥ २५ ॥

बाह्यकर्णे तु चत्वारः प्रस्थाप्या नवभिः पदैः ।
सप्त सप्त तदाश्रिता योज्या अष्टाष्टभिः पदैः ॥ २६ ॥

तन्मानानुक्रमाद्योज्याः शेषा अष्टपदास्तथा ।
एवं सहस्रपदैर्युक्तं सर्वतोभद्रलक्षणम् ॥ २७ ॥

इति सहस्रपदं सर्वतोभद्रवास्तु ॥

ईशस्तथा च पर्जन्यो जयो माहेन्द्र एव च ।
आदित्यः सत्यभृशौ चाऽन्तरिक्षान्ताऽष्ट पूर्वतः ॥ २८ ॥

अग्निः पूषा च वितथो गृहक्षतो यमस्तथा ।
गन्धर्वो भृङ्गराजश्च मृगान्ताश्चाष्ट दक्षिणे ॥ २९ ॥

पितरो दौवारिकश्च सुग्रीवः पुष्पदन्तकः ।
वरुणश्चासुरः शोपः पापयक्ष्मा तु पश्चिमे ॥ ३० ॥

रोगोनागस्तुमुख्यश्च भल्लाटः सोम एव च ।
गिर्यदितिर्दितिश्चैवाष्टावुत्तरदिशि क्रमात् ॥ ३१ ॥

ब्रह्मकर्णे तथा चाष्टावीशान्यादि क्रमेण तु ।
आपश्चैवापवत्सश्च ईशकर्णे तु संश्रितौ ॥ ३२ ॥

सविता चैव सावित्री आग्नेय्यां तु समाश्रितौ ।
इन्द्र इन्द्रजयश्चैव नैर्ऋत्यां ब्रह्मणः स्थितौ ॥ ३३ ॥

रुद्रश्च रुद्रदासश्च संस्थितौ वायवीदिशि ।
मरीचिश्च विवस्वांश्च मित्रश्च पृथिवीधरः ॥ ३४ ॥

पूर्वादिक्रमयोगेन संस्थिताश्च चतुर्दिशम् ।
एवमादिक्रमयोगः सर्वेषां वास्तुमण्डले ॥ ३५ ॥

इतिसूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां वास्तुपददेवताभिधाननिर्णयाधिकारो नामाष्टपञ्चाशत्तमं सूत्रम् ॥

## (५९) वास्तुमर्मोपमर्मनिर्णयो नामैकोनषष्टितमं सूत्रम् ॥

विश्वकर्मोवाच—

चतुःषष्टिपदैः क्षेत्रे पुरवास्तु प्रकल्पयेत् ।
मर्मोपमर्मसन्धींश्च वास्तुदेहसमुद्भवान् ॥ १ ॥

पूर्वापरायता वंशा उपवंशाः प्रभेदतः ।
मर्माणि वंशसम्पाता उपमर्माणि मध्यतः ॥ २ ॥

इन्द्रादित्यतस्त्रिरेखा वरुणपुष्पदन्तगाः ।
एते वंशाः समाख्याता उपवंशा याम्योत्तराः ॥ ३ ॥

सोमभल्लाटतस्तिस्रो गृहक्षतयमान्तगाः ।
पूर्वापरायता रेखाः पुनर्भिन्नाश्च तिसृभिः ॥ ४ ॥

ईशब्रह्मपितृतश्च शिरा रोगाग्निमध्यतः ।
शिरास्त्वेवं विकर्णस्था ईशाग्निपितृरोगतः ॥ ५ ॥

जयगन्धर्वसुग्रीवगिरिभिश्च प्रभेदिताः ।
सत्यमुख्यायता रेखा वितथाच्चासुरान्तगाः ॥ ६ ॥

एते च सूत्रसंपाता महामर्माणि कीर्तिताः ।
सूत्रसंपाताग्रपङ्क्तिषट्कं लाङ्गलमुच्यते ॥ ७ ॥

शिरासूत्रपातषट्कं तच्चापि लाङ्गलं स्मृतम् ।
चतुर्विंशति लाङ्गलानि पदार्धेषु त्रिकर्णगा ? ॥ ८ ॥

ब्रह्मणश्च चतुःपार्श्वेष्वष्टसूत्राणि पद्मकम् ।
पक्षेषु लाङ्गलं द्वंद्वं षड्रेखाभिर्विधीयते ॥ ९ ॥

चतुःकर्णेषु शूलानि षड्रेखाभिश्च वज्रकम् ।
त्रिशूललाङ्गलपद्म शिरानाडिविवर्जितम् ॥ १० ॥

बन्धूच्छेदश्चोपवंशे मर्मणि स्यात्कुलक्षयः ।
वज्रे च वज्रपाताः स्युस्त्रिशूले च रिपोर्भयम् ॥ ११ ॥

पद्मे पतिविनाशश्च लाङ्गलेषु प्रजाक्षयः ।
कर्णशिरा स्त्रीविनाशः सम्पाते चाग्रजातके ॥ १२ ॥

चतुर्षु ब्रह्मकर्णेषु महामर्म सुकीर्तितः ।
धनधान्यविनाशश्च सर्वनाशस्तथैव च ॥ १३ ॥

पदव्यासषोडशांशो भागो द्वादशकः पुनः ।
बालाग्रं सन्धिसम्पाते वर्ज्यते मर्मशिल्पिभिः ॥ १४ ॥

अष्टवर्गाः समाख्याताः कर्णपार्श्वाश्च कीर्तिताः ।
ब्रह्मकर्णे त्रिपद्मान्ते ? महामर्मचतुष्टयम् ॥ १५ ॥

मर्मोपमर्मणी रक्ष्ये महादोषभयावहे ।
वंशोपवंशौ सन्धिश्च रेखापट्टकं च लाङ्गलम् ॥ १६ ॥

भूपरिग्रहो वास्तुश्च मर्मादि कथितं तव ।
पित्रोर्घातो भवेच्चैवं कृते शिरसि खातके ॥ १७ ॥

भुजे स्कन्धे बन्धुनाशो हृदये च महाभयम् ।
धनधान्यसमृद्धिश्च जायते कुक्षिखातके ॥ १८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां वास्तुमर्मोपमर्मनिर्णयाधिकारो नामैकोनषष्टितमं सूत्रम् ॥



## (६०) दिक्पालादिवास्तुदेवपूजाबलिकर्मयुक्तिर्नाम षष्टितमं सूत्रम्।

---

विश्वकर्मोवाच—

अत ऊर्ध्वं पुनश्चान्यत् प्रवक्ष्यामि यथाक्रमम्।
वास्तुदेहे स्थिता देवाः सम्पूज्या वृद्धये तथा ॥ १ ॥

घृताक्षतानमीशाने पर्जन्ये चोत्पलोदकम्।
जये पीताम्बरं चैव वज्रं पिष्टमयं त्वथ ॥ २ ॥

माहेन्द्रे सर्वरत्नानि सूर्ये धूम्रवितानकम्।
गोधूमाः सघृताः सत्ये भृशे मत्स्यांस्तु दापयेत् ॥ ३ ॥

संकलिं चान्तरिक्षे तु शुचिं दद्याद्धुताशने।
धान्यकल्कं तथा पूष्णि वितथे चणकौदनम् ॥ ४ ॥

गृहक्षते गोरोचनं शमीपत्रं यमे तथा।
गन्धर्वे शतपत्रं च भृङ्गराजे तु पीठकम् ॥ ५ ॥

मृगे नीलयवं ख्यातं पितृषु गुलमोदकाः।
दौवारिके मातुलिङ्गं सुग्रीवे विविधं फलम् ॥ ६ ॥

शतपत्रं पुष्पदन्ते पद्मं स्यादब्धिनायके।
असुरे तु सुरा देया शोषे तैलं तिलस्तथा ॥ ७ ॥

पक्वमांसं राजयक्ष्माभिधे रोगे तथौषधम्।
नागे चैव क्षीरपानं श्रीखण्डं तु विश्वाधिपे ॥ ८ ॥

भल्लाटे काञ्चनं देयं सोमे दद्याच्च मण्डकान्।
गिरौ तु सक्तुतोयं तु चादितौ लपिकां तथा ॥ ९ ॥

दितौ कम्बलयुग्मं च ह्यापे दद्यात्तु मालतीः।
तथा गोदध्यापवत्से त्वर्यम्णि रक्तचन्दनम् ॥ १० ॥

शतपत्रं सवितरि सावित्रे सर्वपुष्पकम्।
विवस्वति मोदकानि ह्यीन्द्रे स्यात्पुष्पमालिका ॥ ११ ॥

चम्पकानि त्विन्द्रजये मित्रे स्यात्तु घृतोदनम्।
रुद्रे गन्धः गुग्गुलानां सिद्धान्नं रुद्रदासके ॥ १२ ॥

पृथ्वीधरे रत्नमाला ब्रह्मण्यमृतकुम्भकम्।
फलपुष्पयवाक्षतैः पञ्चगव्यैः पुनर्युतम् ॥ १३ ॥

चरक्यां चैव दातव्या अस्थिमांससुरास्तथा।
पीतौदनं पक्वमांसं विदारीपिलिपिच्छयोः ॥ १४ ॥

मद्यं मांसं च जृम्भायां पूतनायां रक्तोदनम् ।
अर्यम्णि चास्थिमांसं चास्थिमांसं पापराक्षसी ॥ १५ ॥

स्कन्दायां च पशुं मद्यं देव्योऽष्टौ सुप्रदक्षिणाः ।
आसां पदविधिर्नास्ति पूजां गृह्णन्ति केवलम् ॥ १६ ॥

आच्छाद्यन्ते वस्त्रयुग्मैरम्बिका भद्रकुम्भके ।
दिक्पालेभ्यो बलिं दद्यात्क्षेत्रपेभ्यो विशेषतः ॥ १७ ॥

ॐ पूर्वायां दिशापते वज्रहस्त महाबल ।
ऐरावतस्कन्धारूढ इन्द्रदेव यथाविधि ॥ १८ ॥

आवाहनमंत्रैः पूजां बलिं गृह्ण गृह्ण स्वाहा ।
अष्टगजारूढ क्षेत्रपालैः परिवेष्टित सुराधिराज नमोऽस्तुते ॥ १९ ॥

ॐ आग्नेय्यां दिशापते श्रुवाहस्त महाबल ।
मेषं चैव समारूढ अग्निदेव यथाविधि ॥ २० ॥

आवाहनमंत्रैः पूजां बलिं गृह्ण गृह्ण स्वाहा ।
अष्टमेषारूढ क्षेत्रपालैश्च परिवेष्टित प्रेतराज नमोऽस्तुते ॥ २१ ॥

ॐ याम्यायां तु दिशापते दण्डहस्त महाबल ।
महामहिषमारूढ यमदेव यथाविधि ॥ २२ ॥

आवाहनमंत्रैः पूजां बलिं गृह्ण गृह्ण स्वाहा ।
अष्टमहिषारूढ क्षेत्रपैश्च परिवेष्टित प्रेताधिराज नमोऽस्तुते ॥ २३ ॥

ॐ नैर्ऋत्यां च दिशापते खड्गहस्त महाबल ।
प्रेतस्कन्धसमारूढ बलिदेव यथाविधि ॥ २४ ॥

आवाहनमन्त्रैः पूजां बलिं गृह्ण गृह्ण स्वाहा ।
अष्टप्रेतारूढ क्षेत्रपालैश्च परिवेष्टित प्रेताधिराज नमोऽस्तुते ॥ २५ ॥

ॐ पश्चिमायां दिशापते पद्महस्त महाबल ।
नक्रं चैव समारूढ जलेश्वर यथाविधि ॥ २६ ॥

आवाहनमंत्रैः पूजां बलिं गृह्ण गृह्ण स्वाहा ।
अष्टनक्रसमारूढ क्षेत्रपैः परिवेष्टित जलाधिराज नमोऽस्तुते ॥ २७ ॥

ॐ वायव्यां तु दिशापते ध्वजहस्त महाबल ।
मृगपृष्ठसमारूढ वायुदेव यथाविधि ॥ २८ ॥

आवाहनमन्त्रैः पूजां बलिं गृह्ण गृह्ण स्वाहा ।
अष्टमृगारूढ क्षेत्रपालैश्च परिवेष्टित पवनाधिराज नमोऽस्तु ते ॥ २९ ॥

ॐ उत्तरस्यां दिशापते निधिहस्त महाबल ।
हस्तिस्कन्धसमारूढ निधिराज यथाविधि ॥ ३० ॥

आवाहनमन्त्रैः पूजां बलिं गृह्ण गृह्ण स्वाहा ।
अष्टगजारूढ क्षेत्रपालैश्च परिवेष्टित निधिराज नमोऽस्तु ते ॥ ३१ ॥

ॐ ईशान्यां तु दिशापते शूलहस्त महाबल ।
वृषपृष्ठसमारूढ रुद्रदेव यथाविधि ॥ ३२ ॥

आवाहनमन्त्रैः पूजां बलिं गृह्ण गृह्ण स्वाहा ।
अग्रवृषारूढ क्षेत्रपालैश्च परिवेष्टित भूतराज नमोऽस्तु ते ॥ ३३ ॥

ॐ अधस्तात्तु दिशापते चक्रहस्त महाबल ।
गरुडं च समारूढ विष्णुदेव यथाविधि ॥ ३४ ॥

आवाहनमन्त्रैः पूजां बलिं गृह्ण गृह्ण स्वाहा ।
अग्रगरुडस्थ क्षेत्रपालैश्च परिवेष्टित जगत्पते नमोऽस्तु ते ॥ ३५ ॥

ॐ ऊर्ध्वायां तु दिशापते अक्षहस्त महाबल ।
हंसे चैव समारूढ ब्रह्मदेव यथाविधि ॥ ३६ ॥

आवाहनमन्त्रैः पूजां बलिं गृह्ण गृह्ण स्वाहा ।
अग्रहंसारूढ क्षेत्रपालैश्च परिवेष्टित सृष्टिराज नमोऽस्तु ते ॥ ३७ ॥

स्थानदेवा जलदेवाः स्थलदेवास्तथैव च ।
तथाऽन्तरिक्षदेवाश्च भूमिदेवास्तथैव च ॥ ३८ ॥

तथा पातालदेवाश्च अमृतवृक्षदेवताः ।
तथा प्रासाददेवाश्च गृहदेवास्तथैव च ॥ ३९ ॥

वृहद्देवाः क्षेत्रदेवा दद्यादेभ्यो बलिं बुधः ।
क्षमापयेन्नमस्कृत्य तथैव सर्वदेवताः ॥ ४० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां दिक्पालादिवास्तुदेवपूजाबलिकर्मयुक्त्यधिकारो नाम षष्टितमं सूत्रम् ॥

---

# (६१) आचार्यसूत्रधारपूजानिर्णयो नामैकषष्टितमं सूत्रम् ।

विश्वकर्मोवाच—

आचार्यं पूजयेत्तत्र वस्त्रालङ्कारभूषणैः ।
स्वर्णपट्टैः कुण्डलाभ्यां कण्ठाभरणकङ्कणैः ॥ १ ॥

रत्नयुक्तमुद्रिकाभिः कटिसूत्रादिकैस्तथा ।
पादाभरणकैश्चैव हवेन्द्र साङ्गमात्रिकाः ? ॥ २ ॥

पर्णपट्टैरूर्णवस्त्रैः शिखरे मात्र ? छत्रकैः ।
वाहनैर्युक्तमेवाथ यानग्रस्थानकोत्तमैः ॥ ३ ॥

अश्वो गजो रथो वापि दातव्या भूमिसम्युताः ।
ग्रामो देशाः पृथगुक्तं गुरुपत्नीं विशेषतः ॥ ४ ॥

भूमिस्थानगेहदानमाचन्द्रार्के च तत्फलम् ।
वस्त्रालङ्करणैर्युक्तं गुरुं शिष्यस्तु भक्तितः ॥ ५ ॥

इति गुरुपूजा ॥

भूमेस्तले सूत्रधारो विश्वाधिपो द्वितीयकः ।
वेदवेदाङ्गसंभूतो हविष्याशी धिते ? द्विजः ॥ ६ ॥

सूत्रधारं ततः प्राज्ञः सर्वसूत्रादिबन्धकम् ।
वास्तुवेदप्रवक्तारं शास्त्रज्ञं प्रियवादिनम् ॥ ७ ॥

माधुर्यालापनोपेतं संसारमोहमुद्रकम् ।
यस्य नाशात्परं साध्यं धर्मार्थकाममोक्षकम् ॥ ८ ॥

तं शिल्पिनं पूजयेत आर्यदेशसमुद्भवम् ।
आर्यालापबालबोध्यं संसारार्णवतारणम् ॥ ९ ॥

वाग्मिनं च तथा हेतुज्ञानातर्कितकौशलम् ।
सर्वशास्त्रज्ञानवन्तं विज्ञानादिसमन्वितम् ॥ १० ॥

पूजयेद् दिव्यवस्त्रैश्च दिव्यालङ्कारभूषितैः ।
पृष्ठपट्टैर्नेत्रपट्टैः सुवर्णैर्दशाङ्गमात्रिकाः ? ॥ ११ ॥

पुत्रकलत्रसंयुक्तं भ्रातृयुक्तं तथोत्तमम् ।
सभृत्यं बलयुक्तं च शैलकर्माधिकारकम् ॥ १२ ॥

कुटुम्बगृहचिन्ताश्च खाद्यपेयादिकोद्भवाः ।
वस्त्रताम्बूलादि चिन्ता गृहेषु या भवन्ति च ॥ १३ ॥

ताश्चापहारणीया वै कर्मचिन्ता यथा भवेत् ।
ग्रामं वा भोग्यभूमिं वा कर्मकारोचितं यथा ॥ १४ ॥

बलीवर्दाश्च वाहिनीयानझम्पानकादिकम् ।
हलं सकूपं क्षेत्रं च पुष्पोद्यानं फलैर्युतम् ॥ १५ ॥

गृहं दिव्यं च भुवनं पञ्चभूम्यादिकं गृहम् ।
ध्वजाकलशसंयुक्तं कर्त्तव्यं शिल्पिने तथा ॥ १६ ॥

पादापत्यद्दे तस्या प्रेक्षनादिक्ष संतता: ? ।
तेन तत् ह्रियते चैव गृहचिन्तादि बाह्यत: ॥ १७ ॥

एकचित्ते समाधिष्ठे प्रासादकर्मकौशलम् ।
परब्रह्मानुष्ठानवत् लीयमानो यथा भवेत् ॥ १८ ॥

तस्माद्दाच्यं वृद्धिहेतु प्रारब्धकृतनिश्चयम् ।
तेनासौ लभते सिद्धिमिहलोके परत्र च ॥ १९ ॥

सूत्रधारं तथाचार्यं बद्धहस्त: क्षमापयेत् ।
पिता च मम त्वष्टा च इह लोके भवान् मत: ॥ २० ॥

परत्र च स्वयं स्रष्टा तथा मम भवान् गुरु: ।
त्वं माता च पिता चैव त्वं च पितृपितामह: ॥ २१ ॥

संसारपाशच्छेदं च त्वं कुर्या मम योगत: ।
भूषणार्थै: पूजनीया वस्त्रैश्च खातकारका: ॥ २२ ॥

विश्रामस्तद् दिने वास्तौ सर्वविघ्नोपशामक: ।
दीनान्धयाचकेभ्यस्तु तुलादानं समर्पयेत् ॥ २३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छाया-
माचार्यसूत्रधारपूजानिर्णयाधिकारो नामैकषष्टितमं सूत्रम् ॥

---

## (६२) वास्तुपरिभ्रमणादिगुणदोषनिर्णयो नाम द्वाषष्टितमं सूत्रम्

---

विश्वकर्मोवाच—

अतः परं प्रवक्ष्यामि ज्ञानं च धर्मदुर्लभम् ।
वास्तुविद्यापूर्वकं च सर्वसिद्धिप्रदायकम् ॥ १ ॥
ज्योतिःशास्त्रप्रणेतारं सर्वकामफलप्रदम् ।
प्रणम्य तं च पुरुषं राशिमध्ये तथा स्थितम् ॥ २ ॥
रवेःकन्यातुलालीच पूर्वे शिरः समाश्रितः ।
धनोश्च मकरे कुम्भे दक्षिणे तु व्यवस्थितः ॥ ३ ॥
मीने मेषे वृषे चैव पश्चिमे तु समाश्रितः ।
मिथुने सिंहकर्के च ह्युत्तरेण व्यवस्थितः ॥ ४ ॥
सर्वकालक्रमोऽयं च राशिमध्ये ह्यतःशृणु ।
देवताश्च क्रमयोगेन स वास्तुः सरते महीम् ॥ ५ ॥
यत्र भानुस्तत्र शिरं लक्षितव्यं रविक्रमात् ।
अन्यथा कुरुते दुःखं शिरो वास्तावलङ्कृतम् ॥ ६ ॥
देवागारं गृहं यत्र न कुर्याच्छिरः सन्मुखम् ।
मृत्युरोगभया नित्यं शस्तं च कुक्षिसन्मुखम् ॥ ७ ॥
कन्यातुलावृश्चिके च भास्करो यदि संस्थितः ।
पूर्वे मुखं न कर्त्तव्यं गृहं भवति निष्फलम् ॥ ८ ॥
मकरे चैव धनुषि कुम्भे वा च दिवाकरे ।
याम्यादिशि मुखं कुर्याद्राजचौराग्निजं भयम् ॥ ९ ॥
मीने मेषे वृषे चैव पश्चिमा दिग् च दूषिता ।
स्त्रीणां रोगं महाघोरं भवति ह्यतिदारुणम् ॥ १० ॥
मिथुने सिंहकर्के च वेश्म नैवोत्तराननम् ।
दोषशोकभयं तत्तु न कुर्याच्च विचक्षणैः ॥ ११ ॥
तत्र ना सर्पति वास्तु भ्रमणे?रश्मिमध्यतः ।
पूर्वदक्षिणतश्चैव पश्चिमोत्तरतो मुखम् ॥ १२ ॥
शिरो नेत्रे च बाहू च उदरं कटिजङ्घया ।
वेधयन्ते गृहे मर्म पूजाहानिर्महद् भयम् ॥ १३ ॥
कन्यादिसङ्क्रान्तियोगे प्राच्यादिक्रमतो दिशि ।
न कुर्वीत शिरो वास्तोर्न कार्यं तन्मुखं गृहम् ॥ १४ ॥
क्षपाकरेणैव गृहं पुरस्तात् कुर्यान्न वास्तु न च यातु कर्ता ।
पतन्ति खन्या न च दृष्टिसंस्थिता तस्मात्प्रयत्नेन त्विदं विचिन्त्यताम् ॥
इति वास्तुदिशामुक्तिमानम् ॥ १५ ॥

दिशायां विदिशायां च वास्तुवेधविशोधनम् ।
जीर्णे नवतरे वापि वेधदोषं विवर्जयेत् ॥ १६ ॥

वेधा नः कथिताः पूर्वं दोषांश्चैव ततः शृणु ।
एकपादादिकं वास्तु पर्यन्तं सहस्रान्तिकम् ॥ १७ ॥

सुरस्थानं यदा शून्यं पदं पूजां विना यदा ।
विघ्नोत्कटं महाघोरं कुरुते दारुणं भयम् ॥ १८ ॥

वीथिकान्तरबाह्येषु पदमेकं सुरैर्विना ।
विरोधं गोत्रकलहं मुक्तकोणस्य तत्फलम् ॥ १९ ॥

अभ्यपृष्ठे यदा चान्यं प्रासादं पुरमन्दिरम् ।
खादकं नाम तद्वास्तु परस्परविरोधकृत् ॥ २० ॥

कुक्षिद्वारं गृहे वापि कुर्याद्वा सुरसद्मनि ।
विभ्रमं नाम तद् वास्तु विभ्रमेत गृहाधिपम् ॥ २१ ॥

कुक्षिभागे यदा चान्यं गृहं च सुरसद्म वा ।
कुक्षिदं नाम तद्वास्तु विभ्रमे नैतद् दृश्यत ॥ २२ ॥

अग्रे द्वारोन्नतं गेहं निम्नगं मध्यसंस्थितम् ।
उच्छिन्नं नाम तद् वास्तु वृद्धिपूजादिकं हनेत् ॥ २३

समगृहं समरूपं द्वारमध्ये पद्माग्रजम् ।
बिन्दुकं नाम तद् वास्तु हनेच्च सन्तत्यादिकम् ॥ २४

गृहव्यासकर्णायतं त्रिपञ्चहस्तमुच्छ्रितम् ।
द्रव्यादिकं बहुकाष्ठं शाश्वतं न भवेद् गृहम् ॥ २५ ॥

कर्णशाला यदा लग्ना आग्नेय्यां दिशि संश्रिताः ।
अग्निदं नाम तद् वास्तु कुरुतेऽग्निभय ध्रुवम् ॥ २६ ॥

नैर्ऋत्ये च यदा लग्नाः शालाश्च वास्तुबाह्यतः ।
नैर्ऋत्यं नाम तद् वास्तु व्याध्याधिक्यं तु मृत्युकृत् ॥ २७ ॥

वायव्ये तु यदा लग्नाः शालाश्च गृहबाह्यतः ।
वायव्यं नाम तद् वास्तु गृहे वायुभयं भवेत् ॥ २८ ॥

ईशाने तु यदा लग्नाः शालाश्च गृहबाह्यतः ।
देवकं नाम तद् वास्तु देवदोषः सदा भवेत् ॥ २९ ॥

अधोभूम्यां तु ये दोषास्तथैव चोर्ध्वमादिशेत् ।
ऊर्ध्वभूमिदिशाश्चैतद्गुणं दोषमादहेत् ॥ ३० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां वास्तुपरिभ्रमणादिगुणदोषनिर्णयाधिकारो नाम द्वाषष्टितमं सूत्रम् ॥

# (६३) गृहारम्भप्रतिष्ठादिनमासनिर्णयो नाम त्रिषष्टितमं सूत्रम् ॥

विश्वकर्मोवाच—

इदानीमभिधास्यामः सूत्रपातविधिक्रमम् ।
शस्ते मासे सिते पक्षे सुलग्ने च शुभे दिने ॥ १ ॥

चैत्रे शोकाकुलो भर्ता वैशाखे च धनान्वितः ।
ज्येष्ठे गृहा निपद्यन्ते आषाढे पशुनाशनम् ॥ २ ॥

श्रावणे धनवृद्धिश्च भाद्रे तु न वसेद् गृहे ।
कलहश्चाश्विने मासे भृत्यनाशश्च कार्तिके ॥ ३ ॥

मार्गशीर्षे धनप्राप्तिः पौषे वै कामसंपदा ।
माघे चाग्निभयं कुर्यात् फाल्गुने श्रियमुत्तमाम् ॥ ४ ॥

तृतीया पञ्चमी चैव सप्तमी नवमी तथा ।
एकादशीत्रयोदश्यौ तिथयश्च सुखावहाः ॥ ५ ॥

चन्द्रताराबलं भर्तू राजमानं हि शस्यते ।
सूर्यपाततिथिं दद्याद् विष्टिगण्डान्तवर्जितम् ॥ ६ ॥

इह वै सूत्रपातैश्च क्रियाः प्रासादकर्मणि ।
कार्याः पुरनिवेशे तु प्रारम्भे भवनस्य च ॥ ७ ॥

भूम्यारम्भे शिलान्यासे द्वारस्तम्भोच्छ्रयादिषु ।
आदित्ये चोत्तरस्थे च शोभने लग्न एव च ॥ ८ ॥

इत्यारम्भादिशस्तमासाः ॥

प्रतिष्ठाद्यं प्रवक्ष्यामि प्रोक्तं यत्परमेश्वरैः ।
अहं तत्कथयिष्यामि प्राग्देवज्ञैश्च भाषितम् ॥ ९ ॥

दीक्षा च सर्वकालेषु प्रतिष्ठा पञ्चमासिकी ।
चैत्रश्रावणवैशाखे शिवरात्रौ च कार्तिके ॥ १० ॥

दीक्षाश्च द्वादश प्रोक्ता मासे मासे च शाश्वताः ।
धर्मार्थकाममोक्षाश्च शिष्यैर्वै गुर्वनुग्रहात् ॥ ११ ॥

फाल्गुने चाथ चैत्रे वा माघे वैशाख उत्तमा ।
ज्येष्ठे मासे तथाऽऽषाढे आदित्ये चोत्तरस्थिते ॥ १२ ॥

द्वितीया च तृतीया च पञ्चमी चाऽथ सप्तमी ।
दशम्येकादशी रम्या पूर्णिमा च त्रयोदशी ॥ १३ ॥

उत्तरात्रयरोहिण्य आर्द्रा चैव पुनर्वसू ।
पुष्यानुराधाश्रवणं मृगस्वात्यौ च हस्तकम् ॥ १४ ॥

मूलं च नक्षत्राणि हि गृहे विष्टिविवर्जितम् ।
एतत्प्रोक्तं प्रतिष्ठादौ देवानां देववेश्मनाम् ॥ १५ ॥

उत्तरायां सदा वृद्धिर्हस्ते सिद्धिर्यथेप्सिता ।
ज्ञानलाभश्च श्रवणे मूले नन्दन्ति मन्त्रिणः ॥ १६ ॥

आर्द्रायां चैव सौभाग्यं रोहिण्यां न च संशयः ।
स्वातिः शान्तिप्रदा नित्यमनुराधा वरप्रदा ॥ १७ ॥

पुनर्वस्वोः प्रजावृद्धिः पुष्ये नीरोगिताश्रियौ ।
एतावन्त्येव लग्नानि यानि पूर्वोदितानि च ॥ १८ ॥

इति द्वादशप्रतिष्ठाः ॥

प्राचीमतः प्रवक्ष्यामि दिङ्मूढभ्रान्तिनाशिनीम् ।
सा च पञ्चविधा उक्ता कथये यामनुक्रमात् ॥ १९ ॥

दिनादौ मेषतुलयोः कृत्तिकाश्रवणोदये ।
चित्रास्वात्यन्तरे चैव शङ्कुच्छाया ध्रुवेषु च ॥ २० ॥

कृत्तिकोदये या प्राची सा प्राची श्रवणोदये ।
चित्रास्वात्यन्तरे प्राची तत्र सूत्रान्तरोत्तरा ॥ २१ ॥

ध्रुवशङ्कूद्भवा प्राची सूत्रसूत्रान्तरोत्तरा ।
दिनादौ मेषतुलयोः सूर्यभुक्त्येकमार्गतः ॥ २२ ॥

स्यात्पलत्रयतो वृद्धिर्ह्रस्वे ह्रस्वानुवर्धयेत् ।
ह्रासवृद्धीअर्बुदार्द्धमयनं दक्षिणोत्तरम् ॥ २३ ॥

जलाग्रमस्तकभवा साधने स्यात् समक्षितिः ।
साधनीया क्षमा त्वेवं शङ्कुमूर्ध्वे च स्थापयेत् ॥ २४ ॥

भ्रमसिद्धाः समतला निर्व्रणा दोषवर्जिताः ।
द्वादशपर्वोद्भवाश्च शङ्कुच्छायाश्च पर्वभिः ॥ २५ ॥

द्वादश दशाष्टाभिश्च त्रिभिर्वृत्तं क्षिताङ्कितम् ।
शङ्कुच्छायस्त्रिगुणतो द्विपर्वयुक्तिकोत्तमा ? ॥ २६ ॥

परिधौ बाह्यवृत्तस्य व्यासे शङ्कुतुल्योत्तमा ।
कुलवंश पूर्वा छाया शङ्कुश्चरणाश्रितैः ? ॥ २७ ॥

छायाग्रे वृत्ततुल्या च छाया पूर्वापरोद्भवा ।
प्रवेशे निर्गमे छाया याति सूत्रं सदा भवेत् ॥ २८ ॥

याम्योत्तरं सूत्रपाते मत्स्यमुखं पुच्छाग्रसूत्रे ? ।
याम्योत्तरोद्गतं सूत्रं विकर्णैः कर्णसाधनम् ॥ २९ ॥

अथ रात्रौ ध्रुवसाध्यं ध्रुवाक्षा दक्षिणोत्तरम् ।
मण्डलोभयपक्षे च मध्ये स्थाप्यं त्रिदीपकम् ॥ ३० ॥

एकसूत्रे यदा त्रीणि दीपशिखाग्रकाणि च ।
पूर्वसंस्थं ध्रुवसाध्यमपरस्थं च दोपकृत् ? ॥ ३१ ॥

शस्तं तु मीनपातैश्च पूर्वापरादिसाधनम् ।
विकर्णकर्णगा साध्या ध्रुवशङ्कुप्राच्युद्भवः ॥ ३२ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां गृहारम्भप्रतिपादिनमासनिर्णयाधिकारो नाम त्रिपष्टितमं सूत्रम् ॥

---

# (६४) आयाधिकारो नाम चतुःषष्टितमं सूत्रम् ॥

विश्वकर्मोवाच—

आयव्ययांशका ऋक्षं ताराचन्द्रबलं गृहे ।
जीवितं मरणं ज्ञेयं वास्तुविज्ञानपूर्वकम् ॥ १ ॥

नगरे वा पुरे चैव मानं दण्डैर्विधीयते ।
वास्तुदण्ड इति प्रोक्तः सोऽत्र वै हस्तसङ्ख्यया ॥ २ ॥

चतुर्हस्तं च यत्क्षेत्रमङ्गुलैश्च फलप्रदम् ।
वस्वङ्गुलैश्च क्षेत्रं तु पादैर्वा प्रतिशोधयेत् ॥ ३ ॥

तत्क्षेत्रं तु यथाकारमश्मकार्ये विशोधयेत् ।
यत्र हस्तमितिः क्षेत्रे तद्गृहं हस्तसङ्ख्यया ॥ ४ ॥

क्षेत्रालाभे तु तत्रैव स्यात्स्वदेहाङ्गुलैर्गृहम् ।
अङ्गुलैः क्षेत्रमाने च अङ्गुलैस्तदलाभतः ॥ ५ ॥

पादैर्वापि यवैर्वापि गृहक्षेत्रानुसारतः ।
तृणच्छन्दे स्वामिहस्तैर्हर्म्यादौ कर्मिहस्ततः ॥ ६ ॥

राजवेश्मपुरादीनां वापीकूपादिकस्य च ।
प्रासादेषु च देवानां शास्त्रहस्तेन केवलम् ॥ ७ ॥

दैर्घ्यं हन्यात्पृथुत्वेन हरेद्भागं ततोऽष्टभिः ।
शेषमायं चैव विद्याच्छास्त्रदृष्टं ध्वजादिकम् ॥ ८ ॥

ध्वजो धूमश्च सिंहश्च श्वानो वृषखरौ गजः ।
ध्वाङ्क्षश्चेति समुद्दिष्टाः प्राच्यादिषु प्रदक्षिणाः ॥ ९ ॥

अन्योऽन्याभिमुखास्ते च क्रमच्छन्दानुसारतः ।
पूर्वं च ये समुद्दिष्टा आयुर्वृद्धिविधायकाः ॥ १० ॥

ध्वजः सिंहो वृषगजौ शस्यन्ते सुरवेश्मनि ।
अधमानां खरध्वाङ्क्षधूमश्वानः सुखावहाः ॥ ११ ॥

ध्वजः प्रायः कृतयुगे त्रेतायां सिंह एव च ।
द्वापरे वृषबाहुल्यं गज एव कलौ युगे ॥ १२ ॥

कल्याणं कुरुते सिंहो नृपाणां च विशेषतः ।
ध्वजः प्रशस्यते विप्रे वृषो वैश्ये उदाहृतः ॥ १३ ॥

उत्तरोत्तरमाख्याताश्चतुर्वर्णफलप्रदाः ।
ध्वजे चैवार्थलाभः स्याद् धूमे संताप एव च ॥ १४ ॥

सिंहे च विपुला भोगाः कलिः श्वाने सदा भवेत् ।
धनधान्यं वृषे चैव स्त्रीदूषणं च रासभे ॥ १५ ॥
गजे भद्राणि पश्यन्ति ध्वाङ्क्षे च मरणं ध्रुवम् ।
प्रासादप्रतिमालिङ्गे जगतीपीठमण्डपे ॥ १६ ॥
वेदीकुण्डशुचिष्वेवं पताकाछत्रचामरे ।
वापीकूपतडागानां कुण्डानां च जलाशये ॥ १७ ॥
ध्वजोच्छ्रयस्य संस्थाने ध्वजं तत्र निवेशयेत् ।
आसने देवपीठेषु वस्त्रालङ्कारयोजने ॥ १८ ॥
केयूरमुकुटाद्ये च वेशयेच्च ध्वजं शुभम् ।
अग्निकर्मसु सर्वेषु होमशालामहानसे ॥ १९ ॥
धूमोऽग्निकुण्डसंस्थाने होमकर्मगृहेऽपि वा ।
आयुधानां समस्तानां नृपाणां भवनेषु च ॥ २० ॥
नृपासने सिंहद्वारे सिंहं तत्र निवेशयेत् ।
श्वानश्च म्लेच्छजातौ च गेहे श्वानोपजीविनाम् ॥ २१ ॥
तथा चाऽशुद्धसंस्थाने प्रशस्तः श्वानको मतः ।
वणिक्कर्मसु सर्वेषु भोज्यपात्रेषु मण्डपे ॥ २२ ॥
वृषस्तुरङ्गशालायां गोशालायां च गोकुले ।
ततविततादिस्वरे वादित्रे विविधे तथा ॥ २३ ॥
कुलालरजकादीनां खरो गर्दभजीविनाम् ।
गजश्च गजशालायां यानझम्पानयो रथे ॥ २४ ॥
शय्यायां शिविकायां च गजमुद्रा चतुष्कतः ।
अन्तःपुरे गृहे प्रोक्तः पिण्डांवास्यादिकोद्भवः ? ॥ २५ ॥
अन्योपस्करकादौ च मदनागारके गजः ।
तथाऽरहट्टयन्त्रेषु जिनशालादिकेषु च ॥ २६ ॥
ध्वाङ्क्षः कल्याणकृच्चैवं शिल्पकर्मोपजीविनाम् ।
स्वके स्वके वै स्थाने च सर्वे कल्याणकारकाः ॥ २७ ॥
मित्रस्नेह्यानुगाश्चैव ते सर्वे हितकामदाः ।
वृषस्थाने गजं दद्यात् सिंहं वृषभहस्तिनोः ॥ २८ ॥
ध्वजः सर्वेषुदातव्यो वृषो नाऽन्यत्रदीयते ।
गजाभिदृष्टिः सिंहः स्याद् वारुणाभिमुखो ध्वजः ॥ २९ ॥
वृषभः प्राच्यभिमुखो गजो याम्यमुखस्तथा ।
सन्मुखा याम्योत्तराश्च अशस्ताः पृष्ठतोमुखाः ॥ ३० ॥
स्वके स्वके वै स्थाने च प्रशस्ताश्च त्रिदिक्षु च ।
ध्वजः पुरुषरूपश्च सिंहः सिंहस्वरूपकः ॥ ३१ ॥

वृषो वृषभरूपाढ्यो गजो हस्तिस्वरूपकः ।
धूमो मार्जाररूपश्च श्वानः श्वानाधिरूपकः ॥ ३२ ॥
खरो गर्दभरूपाढ्यो ध्वाङ्क्षः काकस्वरूपकः ।
सर्वे च वृषभारूढाः पुरुषाकारमुद्गलाः ? ॥ ३३ ॥
तद्रूपकाश्च हस्ताभ्यां पादाभ्यां विहगानुगाः ।
ग्रीवया सिंहरूपाश्च प्रबलाश्च महोत्कटाः ॥ ३४ ॥
महागणेश्वराः प्रोक्ता अष्टदिक्क्षेत्रपालकाः ।
वास्तुकर्मसु सर्वेषु आया दिक्पतयोऽष्ट हि ॥ ३५ ॥
पूजिताः पूजयन्त्येव निघ्नन्ति चापदस्थिताः ।
साध्यक्षेत्रं च त्रिपुटं प्रभिन्नं च नवांशकः ॥ ३६ ॥
अष्टौ तथाऽऽयस्थानानि मध्ये स्यात्कुलदेवता ।
गृहस्याऽभिमुखाः शस्ताः मध्यमाश्च पराङ्मुखाः ॥ ३७ ॥
नगराभिमुखाः शस्ताः पुरबाह्ये तु देवताः ।
देवानां प्रतिमा आया दिशापाला इति स्मृताः ॥ ३८ ॥
वसवः प्रतिदेवाश्च शिवयोगसमुद्भवाः ।
यावत्तु शिवदेवत्वं यावच्चन्द्रार्कमेदिनी ।
तावच्च वास्तुशास्त्रोक्ता आयाश्च समुदाहृताः ॥ ३९ ॥
साध्यक्षेत्रगुणाकारैरायाश्चैव प्रतिष्ठिताः ।
यावत्तु क्षेत्रभक्तिश्च तावदायः प्रपालयेत् ॥ ४० ॥
खण्डितं स्फुटितं जीर्णं विशीर्णं स्फुटस्फोटितम् ।
त्यक्त्वा च वास्तुदेवाद्यमायास्तेषु विवर्जिताः ॥ ४१ ॥
अपदं तस्य संस्थानं मासान्ते सन्धिशोधितम् ? ।
दिनाष्टके प्रलिप्ताङ्गं वर्जयन्ति च नित्यशः ॥ ४२ ॥
भानूदये मण्डलं च पुष्पप्रकरसंकुलम् ।
उदुम्बरोत्तरङ्गाढ्यं जलकुम्भादिपूजनम् ॥ ४३ ॥
गृह्णाति हुताशनं ? स्वस्तिकैश्च महोत्सवैः ।
एवं वास्तावायाद्यं च श्रियं चिन्तति नित्यशः ॥ ४४ ॥
शिवस्य पुष्पैश्चरणौ सुपूजितौ वराङ्गनासेवनमल्पभोजनम् ।
अनग्नशायित्वमपर्वमैथुनं चिरप्रनष्टां श्रियमानयन्ति ॥ ४५ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृ श्रीभुवनदेवाचार्योक्तापराजितपृच्छाया-
मायाधिकारो नाम चतुःषष्टितमं सूत्रम् ॥

## (६५) नक्षत्रराशिचन्द्रमैत्र्यनुक्रमो नाम पञ्चषष्टितमं सूत्रम् ॥

विश्वकर्मोवाच—

आयानां यच्चतुःक्षेत्रं च गुणितव्यं प्रतिष्ठयेत् ।
तत्क्षेत्रस्य फलं साध्यं गुणितं दैर्घ्यविस्तरैः ॥ १ ॥

फले चाष्टगुणे तस्मिन् सप्तविंशतिभाजिते ।
यच्छेषं लभ्यते तत्र नक्षत्रं तद्गृहस्य च ॥ २ ॥

देवनृराक्षसानां च नक्षत्राणां त्रिधा गणः ।
यस्य यस्याऽनुगा मैत्री वैरं स्याच्च परस्परम् ॥ ३ ॥

स्वगणे परमा प्रीतिर्मध्यमा देवमानुषे ।
मर्त्यराक्षसयोर्मृत्युः कलहो देवरक्षसोः ॥ ४ ॥

नव देवगणाः प्रोक्ता मानुषा नव कीर्तिताः ।
नव रक्षोगणाश्चैव नक्षत्राणां त्रिधा गणः ॥ ५ ॥

कृत्तिका मघा विशाखा आश्लेषा शततारका ।
चित्रायुक्ता धनिष्ठा च ज्येष्ठा मूलं च राक्षसाः ॥ ६ ॥

मृगोऽश्विनी रेवती च हस्तः स्वातिः पुनर्वसू ।
पुष्यानुराधाश्रवणमेते देवगणः स्मृतः ॥ ७ ॥

तिस्रः पूर्वाश्च भरणी आर्द्रा वै रोहिणी तथा ।
उत्तरात्रयसम्युक्तः कीर्तितो मानुषो गणः ॥ ८ ॥

इति नक्षत्राधिकारः ॥

अथ राशीः प्रवक्ष्यामि लब्ध्या क्षेत्रफलेषु च ।
तदनुक्रमयुक्तीश्च कथये तव साम्प्रतम् ॥ ९ ॥

गृहक्षेत्रेषु यदृक्षं पञ्चत्रिंशशताहतम् ।
षष्टिभिश्च हरेद् भागं भुक्तघस्यस्तु शेषतः ॥ १० ॥

ऋक्षभुक्तिक्रमयुक्ता स्वस्वराशिकसंज्ञिताः ? ।
स्युर्मेषाद्या राशयश्च अश्विन्यादिक्रमेषु च ॥ ११ ॥

वास्तुचक्रादिचक्रेषु ग्रहवेधविशोधनैः ।
अष्टाविंशतिरेवं च साभिजित् कृत्तिकादयः ॥ १२ ॥

चातुर्वर्ण्यप्रशस्तांश्च राशीनथ वदाम्यहम् ।
तत्र त्रयस्त्रयः प्रोक्ता विप्रशूद्रान्तमार्गतः ॥ १३ ॥

वृश्चिकः कर्कटो मीनो ब्राह्मणाः परिकीर्तिताः ।
धनुर्मेषस्तथा सिंहो राजन्याश्च शुभाः स्मृताः ॥ १४ ॥

वृषः कन्या च मकर एते वैश्या उदाहृताः ।
मिथुनं च तुला कुम्भस्त्रयः शूद्राः प्रकीर्तिताः ॥ १५ ॥

भवेद् द्वादशभिर्विप्रः क्षत्रियो नवभिस्तथा ।
षड्राशिभ्यो भवेद् वैश्यस्त्रिभिः शूद्रः प्रशस्यते ॥ १६ ॥
चातुर्वर्णान्तरभेद एवमुक्तोऽपराजित ।
प्रीत्यर्थं च पुनर्भेदं कथये तव साम्प्रतम् ॥ १७ ॥
षडष्टके ध्रुवं मृत्युः प्रीतिःस्यात् समसप्तमे ।
अनिष्टं पञ्चनवमे पुष्टिर्दशचतुर्थके ॥ १८ ॥
तृतीयैकादशे मैत्री तृतीयद्वादशे रिपुः ।
राशयः षड्विधा एवमन्योन्यं पतिवेश्मनोः ॥ १९ ॥
गृहाग्रे च यदा चन्द्रो क्षयं वेश्म करोति हि ।
राट्चौराग्निभयं घोरं चन्द्रे वै पृष्ठमागते ॥ २० ॥
धनधान्यक्षमारोग्यं कुरुते दक्षिणस्थिते ।
श्रीस्त्रीपुत्रा उत्तमाश्च चन्द्रे वै उत्तरे स्थिते ॥ २१ ॥
सप्तोर्ध्वे स्थापयेद्रेखाः पुनर्भिन्नाश्च सप्तभिः ।
रेखाः प्रोक्तानि साभिजिन्नक्षत्राण्यष्टविंशतिः ॥ २२ ॥
कृत्तिकादशमीशान्यां शेषर्क्षाणि प्रदक्षिणे ।
हर्क्षेशोक्तमृक्षं च तत्र चन्द्रमुदीरयेत् ॥ २३ ॥
वेश्मपत्योर्भवेच्चैव गृहमैत्री परस्परम् ।
द्वादशप्रोक्ता राशयश्च नवैव च ग्रहास्तथा ॥ २४ ॥
तथैकराशिकाः केचित् केचिच्चैव द्विराशिकाः ।
तदनुक्रमकं वक्ष्ये यदुक्तं परमेश्वरैः ॥ २५ ॥
भौमस्य वृश्चिको मेषो भार्गवस्य तुला वृषौ ।
बुधस्य कन्यामिथुने सोमस्यैवं तु कर्कटः ॥ २६ ॥
सिंहः सूर्यस्य क्षेत्रं स्याद् धनुर्मीनौ तथा गुरोः ।
शनेश्च कुम्भमकरौ गृहक्षेत्राधिपा इति ॥ २७ ॥
न पीडयन्त्यात्मक्षेत्रं स्नेहिनः क्षेत्रपालकाः ।
रिपुगृहं पीडयन्ति भस्मीकुर्वन्ति विग्रहे ॥ २८ ॥
स्यात्सूर्यमन्दयोर्वैरं तथा च कुजमन्दयोः ।
गुरुशुक्रयोः स्याद्वैरं चन्द्रेण च बुधस्य तु ॥ २९ ॥
रवेरङ्गारकस्यैव मैत्री च गुरुचन्द्रयोः ।
एषां त्रयाणां वै मैत्री अन्येषां तु न विद्यते ॥ ३० ॥
ग्रहाश्चत्वार एकत्र त्रय एकत्रसंस्थिताः ।
उभयोरन्तरं घोरं कालानल इवाऽपरः ॥ ३१ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
नक्षत्रराशिचन्द्रमैत्र्यनुक्रमाधिकारो नाम पञ्चषष्टितमं सूत्रम् ॥

## (६६) व्ययांशकनाराग्रहजीवमृत्युसर्वबलं षट्षष्टितमं सूत्रम् ॥

विश्वकर्मोवाच—

नक्षत्रे वसुभिर्भक्ते यच्छेषं व्ययमादिशेत् ।
अष्टौ व्ययास्तथाप्रोक्ता आयेष्वष्टसु योजिताः ॥ १ ॥

आयाश्च कथिताः पूर्वं व्ययानां लक्षणं शृणु ।
एकैका यस्य संस्थाने व्ययाश्च त्रिविधाः स्मृताः ॥ २ ॥

समो व्ययः पिशाचश्च राक्षसस्तु व्ययोऽधिकः ।
व्ययो न्यूनो यक्षश्चैव धनधान्यकरः स्मृतः ॥ ३ ॥

अनायव्यये कर्तरि आयहीने व्यये तथा ।
व्ययाधिक विनश्यन्ति अचिरेणैव सर्वदा ॥ ४ ॥

ध्वजादिष्वष्टस्वायेषु अष्टौ शान्तादिका व्ययाः ।
प्रत्येकव्ययसंस्थाने आयो न्यूनेतरः स्मृतः ॥ ५ ॥

शान्तः पौरः प्रद्योतश्च श्रियानन्दो मनोहरः ।
श्रीवत्सो विभवश्चैव चिन्तात्मा च व्ययाः स्मृताः ॥ ६ ॥

आयस्थाने व्ययो योज्यो ह्यप्रशस्तो व्ययोऽधिकः ।
व्ययो न्यूनस्तथा श्रेष्ठो धनधान्यकरः स्मृतः ॥ ७ ॥

स्मृतो ध्वजे शुभः शान्तः नित्यं कल्याणकारकः ।
भोज्यं पूजाफलं शान्तिर्नृत्यं गीतं सुरालये ॥ ८ ॥

धूमस्थाने यदा शान्तो हेमरत्नादिसम्भवः ।
अग्न्युपजीवकानां च धातुद्रव्यफलप्रदः ॥ ९ ॥

सिंहस्थाने च पौरश्चेत् सिंहवच्च पराक्रमैः ।
निहन्ति रिपुसैन्यानि ह्यात्मस्थाने महोत्सवाः ॥ १० ॥

प्रद्योतः श्वानसंस्थाने नित्यं भोगसुखावहः ।
शय्यासु वेश्मनि तथानेकभोगादिकामदः ॥ ११ ॥

श्रियानन्दो वृषस्थाने नित्यं श्रीसुखशान्तिदम् ।
व्यवहारोपस्करं च गुरुदेवार्चने रतिम् ॥ १२ ॥

मनोहरः खरे युक्तः सर्वमनोरथप्रदः ।
समस्तभोगयुक्तानां तीर्थयात्राप्रकाशकः ॥ १३ ॥

श्रीवत्सो गजसंस्थाने स्त्रीणां क्रीडात्मनः स्मृताः ।
शृंगारभोगयुक्तानां बलपुष्टिप्रदायकः ॥ १४ ॥

विभवो ध्वाङ्क्षसंस्थाने शिल्पिनां हितकामदः ।
सूत्रशास्त्रार्थसम्पन्ना भोगशृङ्गारनिश्चलाः ॥ १५ ॥

सर्वेषु शान्त आयेषु प्रशस्तः सर्वकामदः ।
षट्सु सिंहादिषु शुभः पौरो धूमध्वजौ विना ॥ १६ ॥

ध्वजे धूमे तथा सिंहे प्रद्योतादीन् विवर्जयेत् ।
शेषाणां सुप्रशस्ताश्च तथा स्थानेषु पञ्चसु ॥ १७ ॥

खरे वृषे श्रियानन्दो गजे ध्वाङ्क्षे च शोभनः ।
मनोहरं त्यजेत्सोऽथ खरे ध्वाङ्क्षे गजे शुभः ॥ १८ ॥

श्रीवत्सश्च गजे ध्वाङ्क्षे विभवो ध्वाङ्क्षके शुभः ।
व्ययो न्यूनतरः श्रेष्ठो ह्यधिकश्चैव राक्षसः ॥ १९ ॥

चिन्तात्मकं व्ययं चापि आयेष्वष्टसु वर्जयेत् ।
पिशाचकमायसमं न कुर्याच्छुभकर्मसु ॥ २० ॥

इति व्ययाधिकारः ॥

शृणु वत्स यथा चांशो वास्तुवेदे त्रिधा स्मृतः ।
एकैकक्रमयोगो वै शुभश्चाशुभ उच्यते ॥ २१ ॥

यदुक्ता मूलराशौ च आयार्थेषु फलं कृतम् ।
तत्र राशौ व्यये मिश्रे गृहनामाक्षराणि च ॥ २२ ॥

गुणैर्भक्ते व्यये शेषं अंशकं त्रिविधं विदुः ।
इन्द्रो यमश्च राजा च त्रिभिर्नामभिरंशकाः ॥ २३ ॥

प्रासादप्रतिमालिङ्गे जगतीपीठमण्डपे ।
वेदीकुण्डश्रुश्रु चैव इन्द्रश्चैव ध्वजादिषु ॥ २४ ॥

क्षेत्राद्रिसंक्षा ? नागेन्द्रे गणाध्यक्षे च भैरवे ।
ग्रहमातृगणे देव्यामादित्ये च यमांशकः ॥ २५ ॥

पुरप्राकारनगरखेटकूटे च कर्वटे ।
हर्म्ये च राजवेश्मादौ शस्तो राजा तथा मतः ॥ २६ ॥

स्वर्गादिभोगयुक्तानां नृत्यगीतमहोत्सवे ।
प्रजावने च पाण्डित्ये इन्द्रांशश्चोत्तमो मतः ॥ २७ ॥

विविधं च वणिक्कर्म मद्यमांसादिकं तथा ।
इत्युक्तं क्रमतश्चेत्थं प्रशस्तं च यमांशके ॥ २८ ॥

गजाश्वरथक्रीडायां यानजंभानकादिके ।
स्वर्गादितुल्यभोगाश्च राजांशक उदाहृताः ॥ २९ ॥

त्र्यक्षराणि त्रिभेदाश्च त्रिदेवास्त्रिहुताशनाः ।
त्रयः कालास्त्रिसन्ध्याश्च रजःसत्वतमस्त्रयम् ॥ ३० ॥

प्रमाणत्रयमेवं च ज्येष्ठमध्याधमैः क्रमात् ।
त्र्यंशकं तु समानीय वास्तुवेदभवं ततः ॥ ३१ ॥

इत्यंशकाधिकारः ॥

गणयेत्स्वामिनक्षत्राद्यावदृक्षं गृहस्य च ।
नवभिस्तु हरेद् भागं शेषास्ताराः प्रकीर्तिताः ॥ ३२ ॥

शान्ता मनोहरा क्रूरा विजया कलिका तथा ।
पद्मिनी राक्षसी वीरा ह्यानन्दा नवमी स्मृता ॥ ३३ ॥

शान्ता शान्तिकरी नित्यं मनोह्लादा मनोहरा ।
क्रूरा प्रवर्जिता प्राज्ञैश्चौराद्ग्याद्भिर्भयंकरी ॥ ३४ ॥

विजया जयकल्याणा कलिका कलहप्रदा ।
पद्मया प्राप्यते सौख्यं महत्तीर्थफलं तथा ॥ ३५ ॥

राक्षसी च तथा घोरा निशायां भयदायिनी ।
वीरा सौम्या भोगदा च ह्यानन्दानन्दकारिणी ॥ ३६ ॥

एवं नवविधाकारा निराकारा हि तारकाः ।
क्षीणश्चन्द्रो यदा वारे भवेत्तारा बलप्रदा ॥ ३७ ॥

क्रूरा च कलिका चैव राक्षसी तु तृतीयका ।
क्रूराद्या इति वै तिस्रो वर्जयेच्छुभकर्मसु ॥ ३८ ॥

शान्ता मनोहरा चैव विजया पद्मिनी तथा ।
वीरा नन्देति षट्तारा नित्यं कल्याणकारिकाः ॥ ३९ ॥

इतितारााधिकारः ॥

कराशिहतोस्तथा ये भागैर्हृष्टं तथोऽष्टभिः ।
आधिपत्यं भवेच्छेषं नाम्ना च सदृशं फलम् ॥ ४० ॥

वित्तत्य ? कनकश्चैव धूम्रको विजयः स्वरः ।
बिडालविजयोश्चैव दन्तः कान्तस्तथा मृगः ॥ ४१ ॥

विषमआया भवेत्सप्त आयहीना व्ययाः शुभाः ।
आधिपत्यं समं शान्तं शुभदं सर्वदा नृणाम् ॥ ४२ ॥

इत्याधिपत्यम् ॥

अष्टभिश्च हते क्षेत्रे फले षष्टिविभाजिते ।
लब्धे दशगुणे जीवो मृत्युर्वै भूतभाजिते ॥ ४३ ॥

पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।
पञ्च तत्त्वानि प्रोक्तानि विभक्तानि स्युरन्तके ॥ ४४ ॥

अप्सु चाद्भिर्भवेन्मृत्युस्तेजस्यग्निबलं भवेत् ।
वार् वायुकरो देहे त्वाकाशे शून्यता भवेत् ॥ ४५ ॥

धनधान्येषु नष्टेषु देहः पतति जर्ज्जरः ।
इत्थं मृत्युः प्रभवति पञ्चतत्त्वविनाशतः ॥ ४६ ॥

आयव्ययांशनक्षत्रं ताराचन्द्रमैत्र्यादिकम् ।
प्रीतिरायुश्च मृत्युश्च चिरं नन्दति चेच्छुभाः ॥ ४७ ॥

त्रिभिः श्रेष्ठैस्तु श्रेष्ठं स्यात् पञ्चभिश्चोत्तमोत्तमम् ।
सप्तभिः सर्वकल्याणं नवभिर्जयसंपदा ॥ ४८ ॥

न षट्काष्टकं त्रिकोणं द्वादशी द्वितीयाष्टमी ।
न चाष्टद्वादशे शशी तारा त्रिपञ्चसप्तमी ॥ ४९ ॥

न द्वितीयांशकं कुर्यात् तथा चाष्टममायकम् ।
न पृष्ठतस्तथा चन्द्रं नववास्तुककर्मणि ॥ ५० ॥

नाधिकस्तु व्ययः कार्यो न वेरा विमलाग्रहा ? ।
न स्वकुल अतिरिष्टं ? न राशिवर्णबाह्यतः ॥ ५१ ॥

पदे पूज्याः स्थिताः सर्वे हिंसन्ति त्वपदे स्थिताः ।
ग्रहा गावस्तथा विप्राः शापानुग्रहकारकाः ॥ ५२ ॥

इतिसूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
व्ययांशकताराग्रहजीवमृत्युसर्वबलाधिकारो नाम षट्षष्टितमं सूत्रम् ॥

---

## (६७) शास्त्रच्छन्दनिर्णयोनाम सप्तषष्टितमं सूत्रम् ॥

अपराजित उवाच—

छन्दश्च क्रमतः प्रोक्तं शाश्वतं शास्त्रकौशलम् ।
तदनुक्रमयुक्तीश्च कथयस्व प्रसादतः ॥ १ ॥

विश्वकर्मोवाच—

एकाक्षरा क्षरे भिन्नं व्याप्तं चेतच्चराचरम् ।
त्रैलोक्यस्योत्पत्तिकरं छन्दो मेरुसृष्ट्युद्भवम् ॥ २ ॥

तथा शम्भुश्चमेरुश्च चिन्तामणिर्वृत्तार्णवः ।
चतुर्विधं छन्दशास्त्रमेकाद्यक्षरतः क्रमात् ॥ ३ ॥

एकाक्षरोद्भवः शम्भुस्तथामेरुश्च युग्मतः ।
चिन्तामणिस्त्रिभिश्चैव वेदैर्वृत्तार्णवः स्मृतः ॥ ४ ॥

छन्दाश्चतुर्विधाःप्रोक्ता वेदान्ताश्चैकतः पृथक् ।
गुरुलघूद्भवा मात्रा प्लुतन्हस्वादिसंज्ञका: ॥ ५ ॥

सानुस्वारा विसर्गान्ता वेदान्तोद्भवकल्पना ।
भिन्नाभिन्नास्तथानेके भेदाश्छन्दसमुद्भवाः ॥ ६ ॥

एकाक्षरो द्रुतमात्रो भेदः सूर्यः स उच्यते ।
निबन्धपादाः पङ्क्ती च वेदसङ्ख्याः प्रकीर्तिताः ॥ ७ ॥

कलिकादिकवृत्तानां ज्यष्टकं प्रोच्यते तथा ।
तदभिधानपङ्क्तिं च कथयिष्याम्यनुक्रमात् ॥ ८ ॥

कलिकाविकास्यवज्राः कुमारललितानुष्टुप् ।
अक्षमश्चैव प्रणम्योपेन्द्रवज्राजलानि च ॥ ९ ॥

करणराज्यं वसन्ततिलका चैव मालिनी ।
तिलगर्जितं चाद्भूता तथा च गिरिकर्णिका ।
शार्दूलविक्रीडितं च तथा चैवातिवृत्तकम् ॥ १० ॥

स्रग्धरा मदना मदनलता च मधुकरा ।
निबन्धश्चाथ गोविन्दः प्रोक्ता मुक्ताफला तथा ॥ ११ ॥

शुद्धसमो विषमश्च विषमसमकस्तथा ।
समस्तुल्यपदैः ख्यातो विषमो विषमैः पदैः ॥ १२ ॥

विषमाश्[illegible] समवर्णगतस्तथा ।
विषमसमसंज्ञश्च दशभेदाः क्रमोदिताः ॥ १३ ॥

शान्तिः कर्णश्च संपातः सिंहो बाणश्च पल्लवः ।
कर्णकारः शुकः शङ्कुस्तथाधर्मो गुणा दश ॥ १४ ॥

जयमाला तथा नन्दा मेघा च सिंहगर्जना ।
तथा कल्लोलतरङ्गा रत्नावली पुष्पोद्गिरा ॥ १५ ॥

पद्मोद्भवा अत्युद्भुता अतिच्छन्दा दशोदिताः ।
एते दशाभिधानाश्च विषमा वाद्यकन्दतः ? ॥ १६ ॥

शान्ताद्भुता मुख्या सौम्या रम्या च रमणी पुरा ।
मुखोद्गीर्णा चपलाख्या भैरवी भुवनोत्तमा ॥ १७ ॥

शृङ्गारी हास्यकरणी तिलकारा पद्मोद्भवा ।
विकारास्या प्रज्ञावती प्रबला वीरसम्भवा ॥ १८ ॥

प्रकारणाक्षसंभूतिर्विकास्याथ प्रभामला ।
चतुर्विंशतिरार्याणां छन्दसां च समुद्भवाः ॥ १९ ॥

प्रकरणसूत्रसन्धिपरिच्छेदाध्यायास्तथा ।
अङ्ककाण्डसर्गखण्डवर्गाद्या ग्रन्थसम्भवाः ॥ २० ॥

स्वयंभूर्कं तलकीर्णं शान्ते च मनुमन्दिरः ? ।
प्रभामणिश्च ह्लादश्च ह्लाङ्गाष्टकमुदाहृतम् ॥ २१ ॥

एकाक्षरपदं चैव वृत्तं वेदाक्षरं भवेत् ।
चतुरक्षरपादं तु वृत्तं वै षोडशाक्षरम् ॥ २२ ॥

कलिकासंज्ञकं वृत्तं षोडशाक्षरमुच्यते ।
चतुरक्षरपादस्याष्टाक्षराण्यर्धसंज्ञकम् ॥ २३ ॥

पञ्चाक्षरं विकास्याख्यं तदर्धं तु दशाक्षरम् ।
विंशत्यक्षरवृत्तं च विकास्याभिधमुच्यते ॥ २४ ॥

पदं षड्भिरक्षरैश्च वृत्तं वज्रकमुच्यते ।
कुमारलतिका सप्तभिरष्टभिरनुष्टुपः ॥ २५ ॥

नवाक्षरैरक्षमं च प्रणम्यं च दशाक्षरैः ।
उपेन्द्रवज्रैकादशाक्षरैर्द्वादशभिर्जलम् ॥ २६ ॥

त्रयोदश कर्णराज्यं वसन्ततिलकेन्द्रतः ।
मालिनी पञ्चदशतः षोडशतिलगार्जितम् ॥ २७ ॥

अद्भुतं सप्तदशभिर्गिरिरष्टादशाक्षरैः ।
शार्दूलादि दिगङ्कैश्च विंशत्याश्चातिवृत्तकम् ॥ २८ ॥

स्रग्धरा चैकविंशत्या मदना द्वाविंशतिभिः ।
त्रयोविंशत्या मदन-लता मधुकरोऽर्कयोः ॥ २९ ॥

निबन्धः पञ्चविंशत्या गोविन्दश्च षड्विंशत्या ।
सप्तविंशतिभिर्मुक्ताफलेत्थं वृत्तकानि च ॥ ३० ॥

मयौ रसौ तजौ भो नो गणाश्चाष्टौ लघुर्गुरुः ।
छन्दस्सुदशकं चेति प्रोक्तं वै शास्त्रकौशलैः ॥ ३१ ॥

समाक्षरपादं वृत्तं यत्तच्छुद्धसमं भवेत् ।
असमाक्षरपादं च भवेद् विषमसंज्ञकम् ॥ ३२ ॥

समपादं तु पूर्वार्द्धमुत्तरार्द्धं च वृद्धिगम् ।
समविषमं तु तन्नाम अन्तपादोऽधिको भवेत् ॥ ३३ ॥

पूर्वार्द्धे च भवेद् वृद्धिः समवच्चोत्तरं समम् ।
पूर्ववच्चान्यविषमं विषमविषमं च तत् ॥ ३४ ॥

आदिस्तृतीयो विषमां द्वितीयो वा चतुर्थकः ।
एकवर्णगतावेवं सम्पुटं च दिशन्ति तत् ॥ ३५ ॥

अष्टाविंशत्यक्षरतः सप्तत्रिंशत्तथान्ततः ।
भवत्यक्षरवृद्धया तद् गद्यानां दशकं तथा ॥ ३६ ॥

यदा वृत्तेषु पूर्वार्द्धमुत्तरार्द्धसमं न हि ।
आर्याभिधानकं तच्च भिन्नं वृत्तं च पादतः ॥ ३७ ॥

कलिकाद्ये च नवमं मुक्ताफलकमन्ततः ।
त्यक्त्वा समानाक्षराणि शेषवृत्तानि सन्ति च ॥ ३८ ॥

एतानि वर्णवृत्तानि मात्रावृत्तं तु शेषकम् ।
द्विमात्रको गुरू ज्ञेय एकमात्रो लघुर्भवेत् ॥ ३९ ॥

सानुस्वारो विसर्गान्तो दीर्घो युक्तः परश्च यः ।
गुरुर्वा तु पदान्तस्थो द्विमात्रश्च लघुस्तथा ॥ ४० ॥

गुरोर्लघुगता मात्रा सूर्यभेदसमुद्भवा ।
एवं छन्दोगणाः प्रोक्ता विज्ञेयाः शास्त्रकोविदैः ॥ ४१ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां शास्त्रच्छन्दनिर्णयाधिकारो नाम सप्तषष्टितमं सूत्रम् ॥

## (६८) गृहप्रासादसंभूतच्छन्दभेदो नामाष्टषष्टितमं सूत्रम् ॥

अपराजित उवाच—

छन्दश्च कथितं देव सर्वशास्त्राद्यसंभवम् ।
अन्यत्र छन्दभेदांश्च कथयस्व परेश्वर ॥ १ ॥

गृहप्रासादसम्भूताश्छन्दाः षट्संज्ञकाः स्मृताः ।
कथयस्व प्रसादेन तेषां निर्णयमादितः ॥ २ ॥

मेरुश्च खण्डमेरुश्च पताका सूचिका तथा ।
उद्दिष्टं नष्टमित्युक्ताश्छन्दाः षड्बुधसम्मिताः ॥ ३ ॥

एषां प्रस्तारसन्दोहं मम भ्रान्तिहरं परम् ।
त्वत्प्रसादेन देवेश छन्दशास्त्रसमुद्भवम् ॥ ४ ॥

विश्वकर्मोवाच—

प्रोक्ता भेदाश्छन्दसां षट् रिपुरान्तवेदोद्भवाः ? ।
भेदे शून्यं त्रयशून्यं वेदाशू उपाङ्गवध्रकशवः ? ॥ ५ ॥

खशून्या भवेदमुक्ता सङ्ख्यामिति छन्दोद्भवा ? ।
प्रयुक्तशास्त्रछन्देषु भेदाश्च षड्विधाः क्रमात् ॥ ६ ॥

लक्षणालङ्कारयुता भिन्ना अर्थार्थतस्तथा ।
भिन्नास्तथैकाक्षरत इत्थं छन्दसमुद्भवः ॥ ७ ॥

श्रुतिस्मृतिपुराणानि मन्त्रमुद्राक्षराणि च ।
मेरुच्छन्दसमुत्पन्नमाब्रह्मभुवनान्तकम् ॥ ८ ॥

माडमौडशुद्धशृङ्गतुङ्गारसिंहकादिकाः ।
प्रोक्ता च राजवेश्मादौ मेरुच्छन्दसमुद्भवाः ॥ ९ ॥

आनकणाभि संघाटा ? गृहमालाकूटपञ्जरम् ।
संभूता मेरुछन्दाश्च गृहा हर्म्यादिसंज्ञकाः ॥ १० ॥

तृणपट्टवाजिपूर्णखण्डपाण्डव एव च ।
प्रयुक्ता मेरुच्छन्दादौ वास्तुविद्भिरुदाहृताः ॥ ११ ॥

लतिना नागरा भौमा द्राविडाश्च विराटकाः ।
सावन्धारा विमानाख्या मेरुच्छन्दसमुद्भवाः ॥ १२ ॥

स्तम्भगर्भतीर्यमाना खण्डा वेणुकलादिकम् ? ।
मेरुच्छन्दोद्भवा रेखाः प्रोक्ताश्च सुरवेश्मनाम् ॥ १३ ॥

तथैकत्रिपञ्चसप्तनवशाखसमुद्भवम् ।
प्रयुक्तं द्वारविधानं वास्तूपदेशका विदुः ॥ १४ ॥

गूढो नृत्यश्चद्रालोको भद्रावलोकनादिकाः ।
चतुःषष्टिः समाख्याता मण्डपा मेरुच्छन्दतः ॥ १५ ॥

पद्मनाभिसभामार्गमन्दारभिन्नमिश्रकम् ।
षड्विधं च वितानं स्यात् मेरुच्छन्दादुदाहृतम् ॥ १६ ॥

कर्णजा भ्रमजाश्चैव भद्रजा गर्भजास्तथा ।
मध्यजाः पार्श्वजाः ख्याताः शालाश्च मेरुच्छन्दतः ॥ १७ ॥

वेदीवन्धं श्रीवन्धाख्यं पङ्कजं भद्रकं तथा ।
सुभद्रं तारकं पीठं मेरुच्छन्दोविनिर्गतम् ॥ १८ ॥

सुरार्चितं चायनादि स्वभु बाणं चतुर्थकम् ।
शक्त्याख्यं वर्धमानं च लिङ्गं मेरुविनिःसृतम् ॥ १९ ॥

वेदाश्रा वर्तुलाख्या त्रिकोणा तु षडंशका ।
वेदिका पद्मिका चैव पीठिका मेरुच्छन्दतः ॥ २० ॥

सीमा गर्भस्तथा द्वारं तलकोर्ध्वविभक्तिकम् ।
अर्चा च षड्विधा प्रोक्ता मेरुच्छन्दसमुद्भवा ॥ २१ ॥

नगरं च पुरं ग्रामः खेटः कूटश्च कर्व्वटः ।
एते च षड्विधा ज्ञेया मेरुच्छन्दविनिर्गताः ॥ २२ ॥

वापीकूपतडागं च रथयन्त्रचक्रादिकम् ।
प्रयुक्तं मेरुच्छन्देषु वास्तुविद्भिरुदाहृतम् ॥ २३ ॥

वेदीसिंहासनं छत्रं शय्याःकवचमायुधम् ।
वास्तुवेदे समाख्यातं मेरुच्छन्दसमुद्भवम् ॥ २४ ॥

रथवीथ्यन्तरमार्गाश्च षट् पन्थान एव च ।
प्रयुक्ता वास्तुविद्भिश्च मेरुच्छन्दसमुद्भवाः ॥ २५ ॥

इति छन्दादिनिकाशसङ्ख्याधिकारः ॥

पृथ्व्याकारो यथा छन्दो मेर्वाकारसमुद्भवः ।
षड्विधं मेरुच्छन्दश्च षट्त्रिंशच्छन्दभेदकाः ॥ २६ ॥

भेदैस्तत्र त्र्यष्टशतैर्दशभिर्गुणितैस्ततः ।
चतुर्विंशत्सहस्राणि छन्दभेदाश्च सङ्ख्यया ॥ २७ ॥

इन्द्रोद्भवक्षमावृद्धी भूतकोणान्तमध्यमैः ? ।
इषु प्राणेषु भक्षन्ती प्रत्येकविषमेपदम् ? ॥ २८ ॥

षड्भिर्नभशद्वैः कोटिर्मेरुच्छन्दे तु सङ्ख्यया ।
तत्रोक्तमेवप्रमाणं सृष्टाऽम्भोजप्रकाशिना ॥ २९ ॥

मेरुर्मेरूपमः कार्यः शरावस्येव चाकृतिः ।
सृष्टिस्तदुद्भवा सूत्र पात्रे पात्रमिवापरम् ॥ ३० ॥

मेरुश्च खण्डमेरुश्च पताका सूचिका तथा ।
उद्दिष्टं नष्टमिति षट् छन्दांसीह प्रचक्षते ॥ ३१ ॥

मृत्युभीतैः पुरा देवैरात्मनश्छन्दनायकः ।
संस्मृतानीह छन्दांसि छादितैस्तैस्ततो महाः ? ॥ ३२ ॥

छन्दे छन्दं समुद्दिष्टं वाससी कृतिरेव च ।
छन्दोभिरावृतं सर्वं वन्द्यं सर्वत्र नान्यथा ॥ ३३ ॥

व्योम्नः पतते बिन्दु?पतितो सबिन्दुगर्भतो भवेत् ।
गुरुर्लघुर्लतायाश्च तस्य चाष्टौ समुद्भवाः ॥ ३४ ॥

आद्यगुरोरधोऽह्स्वं पुनः शेषं यथोपरि ।
अङ्कैभिः पूरयेत् पश्चाद् यावत् सर्वह्तं पदम् ॥ ३५ ॥

गुरोरधस्ताच्च गुरुं निधाय शेषं समानं परिलक्ष्य सम्यक् ।
खण्डं प्रकुर्याद् गुरुपूरणार्थं यावत्पदं सर्वलघुस्थमेते ॥ ३६ ॥

भवन्ति प्रस्तारगताश्च एते षट् सप्तमप्रत्यय वै गृहाणाम् ?
ये नैव जानन्ति गुरूपदिष्टान् ते सूत्रधारा रिपवः प्रजानाम् ॥ ३७ ॥

एकाद्येकोत्तरान् कोष्ठान् विन्यसेदिच्छयात्मनः ।
आद्यादारभ्य तद्वृद्धिर्यथास्यात्पार्श्वयोः समम् ॥ ३८ ॥

मेरोरेकाधिका संख्या शरावस्येव चाकृतिः ।
प्रथमे कोष्ठके रूपमन्तं यावच्च पार्श्वयोः ॥ ३९ ॥

आसनोर्ध्वस्थयोर्न्यस्येन्मध्ये सङ्कलितं पृथक् ।
तस्मिन्निष्टविकल्पानां सङ्ख्या स्यादन्त्यपङ्क्तिगा ॥ ४० ॥

इति मेरु छन्दः ॥

खण्डमेरुं तु विन्यस्येत् तद्वदेवैकपार्श्वतः ।
प्रवृद्धैः कोष्ठकैस्तत्राप्यङ्काः प्राग्वत् फलं यथा ॥ ४१ ॥

अथापरः खण्डमेरुः कोष्ठांस्तत्रेष्टसङ्ख्यया ।
कृत्वैकापचितान् वामविभगापचितानधः ॥ ४२ ॥

एकाद्येकोत्तरानङ्कानाद्यपङ्क्तौ निवेशयेत् ।
अन्यासु पङ्क्तिष्वाप्रान्तं शून्यानाद्येषु कल्पयेत् ॥ ४३ ॥

द्वितीयेषु च कोष्ठेषु तासामेकेक ? साधयेत् ।
द्वितीयायां तृतीयादिकोष्ठकेषु यथाक्रमम् ॥ ४४ ॥

विकर्णयोगजानन्यानूर्ध्वाधोयोगसम्भवान् ।
फलं विकर्णयोगोत्थमेकस्मिन् परिकल्पयेत् ॥ ४५ ॥

इति खण्डमेरुः ॥

एकाधिकानभीष्टायाः सङ्ख्यायास्तिर्यगालिखेत् ।
कोष्ठानेतांश्च रूपादींस्तन्मध्ये द्विगुणोत्तरान् ॥ ४६ ॥

एकोनं पृष्ठतस्तेषामेकं द्विगुणमग्रतः ।
नातिक्रमेत् परां सङ्ख्यां पताकाछन्द उच्यते ॥
गृहमालायुक्ताख्यातं पताकानामकं विदुः ॥ ४७ ॥

इति पताकाछन्दः ॥

तद्भिन्नेष्टाद्यगा सङ्ख्येत्येकाद्यैस्तैस्ततो गृहे ।
न्यस्ताङ्कसङ्ख्यया सङ्ख्या गुरुलघ्वाद्यैः प्रकल्पिताः ॥ ४८ ॥

एकैकमिष्टस्थानेषु लिखेत् सैकेष्वतः परम् ।
अन्त्याद्दते पूर्वपूर्वयुक्तेनायोजयेत् परम् ॥ ४९ ॥

अन्त्यादारभ्य तद्धानं ? द्वेकाद्येषु ? च पर्ययात् ।
अलिन्दादिषु यत्र स्यात् सङ्ख्या सूचीं तु तां विदुः ॥ ५० ॥

इति सूचीछन्दः ॥

उद्दिष्टे स्थापयेत् सङ्ख्यामुद्दिष्टां सम्भजेच्च ताम् ।
दलयेद् रूपयुक्तां तु दलयेन्नाम सम्भवैः ? ॥ ५१ ॥

लघुस्वरूपदलने सैकार्धे करणे गुरुः ।
यावदिष्टपदाप्तिः स्याल्लघवोऽलिन्दकोदयः ॥ ५२ ॥

कृत्वा छन्दः समुद्दिष्टं तदन्ते लघुनि द्विकम् ।
न्यसेदेकं गुरूणां च द्विगुणं द्विगुणं ततः ॥ ५३ ॥

व्यत्ययाल्लघुनः स्थाने द्विगुणादेककं गुरोः ।
कुर्यात् तमाद्यस्थानाङ्कसङ्ख्यं नष्टे गृहं भवत् ॥ ५४ ॥

इत्युद्दिष्टछन्दः ॥

प्राप्तस्यैकं कोष्ठमेकैकवृद्धया न्यस्येदूर्ध्वं पङ्क्यो यावदिष्टाः ।
इष्टानेकादीँल्लिखेदानुपूर्व्या कर्णेनाधः शून्यरूपे च दद्यात् ॥ ५५ ॥
कर्णस्थाङ्कश्लेषतोऽङ्के भवेद् यस्तं विन्यस्येत् कोष्ठकेषु क्रमेण ।
उद्दिष्टाङ्को भद्रसङ्ख्यानि मध्ये याभ्यः कर्णश्लेषतो मूषिकास्ताः ॥ ५६ ॥

एकादिषु द्विगुणितेष्विह यावदिष्टमूषाक्रमव्युपहितेष्वथ तेषु विद्यात् ।
उद्दिष्टवेश्मकृतनिर्गममार्गमूषासत्काङ्कसैकयुतिनिर्मितसङ्ख्यमोकः ॥ ५७ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां षट्छन्दनिर्णयाधिकारो नामाष्टषष्टितमं सत्रम ॥

# (६९) गृहोत्पत्तिहर्म्यादिराजप्रासादनिर्णयो नामैकोनसप्ततितमं सूत्रम् ॥

विश्वकर्मोवाच—

अथेदानीं प्रवक्ष्यामि गृहस्योत्पत्तिलक्षणम् ।
उत्पद्यते यथात्वाद्यं गृहादीनां तु सम्भवम् ॥ १ ॥

आचार्यैर्दिव्यज्ञानैश्च पूर्वानतपश्चासनैः ।
घडिका (घटिका ?) याम्यहस्तेषु त्रिपातहस्तोभृता ? ॥ २ ॥

घडिका संस्थिता पृथ्वी तत्र नाद्यबिन्दूद्भवाः ? ।
बिन्दूलया शिखा ज्ञेया सा सृष्टिश्चैवमुद्भवः ? ॥ ३ ॥

बिन्दु वामा कृता रेखा वामावर्ते पूर्वोदिताः ।
पूर्वापरगतास्त्वेवं सृष्टिसंज्ञाविधानकम् ? ॥ ४ ॥

ऐशान्या अग्निपर्यन्तमाश्रमं वस्तुसम्भवम् ।
आश्रयन्ति समस्ताश्च जीवा महितचेतसः ॥ ५ ॥

आग्नेयां निर्ऋतिर्यावत् सदा सृष्टिर्विनश्यति ।
इत्थमालयसंज्ञा स्यात् सृष्टितोऽयं समुद्भवः ॥ ६ ॥

आलयः सर्वसत्त्वानां सर्वभूतात्मनां हितः ।
तदेवं लीयते सर्वमालयादिसमुद्भवम् ॥ ७ ॥

नैर्ऋत्यनिलसंभूता सृष्टिस्त्वेवं समुद्गता ।
कोष्ठकाभिधानमेतत् चतुरस्रीकृतं शुभम् ॥ ८ ॥

आच्छादितं तथा चोर्ध्वे तच्च कोष्ठाभिधानकम् ।
कोष्ठकं चतुर्हस्तान्तमाच्छाद्यं छादकं विदुः ॥ ९ ॥

आच्छाद्यं तु यदा क्षेत्रमेकहस्ताच्छतार्धतः ।
आवेष्टितं खलीपाटं फलकं स्याद् गृहाङ्गणम् ॥ १० ॥

एकद्वित्रिसहस्रैश्च हस्तैर्मानसमन्वितम् ।
नगरेषु तथावेष्टकूटप्राकारसंज्ञितम् ॥ ११ ॥

चतुर्हस्तादितः क्षेत्रं शिरश्छाद्यं समोदये ।
पूर्वे चैकद्वारयुतं गृहसंज्ञं तदुच्यते ॥ १२ ॥

एकद्वारं भवेद्वेश्म पूर्वापरद्वार् निलयः ।
त्रिद्वारं करणं प्रोक्तं चतुर्भिश्चातुरं भवेत् ॥ १३ ॥

षड्जात्युत्पन्नच्छन्दा भेदैर्भिन्ना द्विरष्टभिः ।
इत्युक्तक्रमरूपाढ्या गृहसङ्ख्या त्वनेकधा ॥ १४ ॥

तृणपट्टौ छादने स्तः वाजिच्छन्दः शिलामयः ।
खण्डच्छन्दो गृहमध्ये पूर्णच्छन्दो ह्यधोगृहम् ॥ १५ ॥

पाण्डुच्छन्दस्तथाचैव भूम्यूर्ध्वे शैलजाश्रितः ।
षण्णां तु छन्दसां प्रोक्तः सृष्टिकाले समुद्भवः ॥ १६ ॥

एकभौमं द्विभौमं वा हर्म्यं स्याद्वा त्रिभौमकम् ।
षट्चच्छन्दादिका भेदा हर्म्यादिवेश्मसंज्ञकाः ॥ १७ ॥

शालालिन्दक्रमच्छन्दे भेदा भिन्नास्तु षोडश ।
चतुरुत्तरशतानि ह्येकशालप्रकारकाः ॥ १८ ॥

गुणितास्ते दशशतैर्लक्षमेकमतः परम् ।
चत्वारि च सहस्राणि एकशालादिषु क्रमात् ॥ १९ ॥

षट्चच्छन्दे यथा भेदाः शालालिन्दादितस्तथा ।
विपरीतास्तृणच्छन्दे षोडशैव प्रकीर्तिताः ॥ २० ॥

वाजिच्छन्दोऽभिकोच्छ्रायः पाण्डुहीनोदयात्मकः ।
चतुर्हस्तं फलकान्ते शेषच्छन्दाः प्रशंसिताः ॥ २१ ॥

द्विपञ्चाशद् द्विशालानां प्रत्येकं द्विसहस्रतः ।
स चतुःसहस्रं लक्षं द्विशालानां प्रकीर्तितम् ॥ २२ ॥

द्विसप्ततित्रिशालानां प्रत्येकं त्रिसहस्रतः ।
लक्षद्वयं त्रिशालानां तथा द्व्यष्टसहस्रकम् ॥ २३ ॥

चतुःशालगृहाणां षट्पञ्चाशच्च शतद्वयम् ।
प्रत्येकं चतुःसहस्रगुणितं च भवेदिदम् ॥ २४ ॥
चतुर्विंशतिसहस्रोत्तरं च दशलक्षकम् ।
चतुःशालकभेदे तु हर्म्याणि च भवन्ति हि ॥ २५ ॥

चतुर्दशलक्षाण्यष्टचत्वारिंशत्सहस्रतः ।
मेरुसङ्ख्या तथा चेत्थं हर्म्यादिगृहेषु च ॥ २६ ॥

तत्राष्टाष्टगता भेदा एकैकस्य तथैव च ।
कोटिः पञ्चदशलक्षा वेदाशीतिसहस्रकम् ॥ २७ ॥

एवं हर्म्यादिगृहाणां मेरुच्छन्दात् समुद्भवः ।
इषुच्छन्दोद्भवाश्चान्ये तत्तुल्याश्चैव सङ्ख्यया ॥ २८ ॥
इत्युक्तं हर्म्यादिवेश्म प्रासादानामतः परम् ।
प्रासादा देवभूपानामन्येषां हर्म्यमुच्यते ॥ २९ ॥

माडश्च मौडः शुद्धश्च शिखरं च चतुर्थकम् ।
तुङ्गारः सिंहकश्चैव षड् भेदा राजवेश्मनाम् ॥ ३० ॥

छाद्यघण्टाकूटैर्माडो मौडश्चोर्ध्ववरण्डिकः ।
वरण्डिकाः सर्वभूषु शुद्धो बाह्यचतुष्कतः ॥ ३१ ॥

माडच्छन्दोद्भवे भद्रे भूमिशृङ्गाणि सन्ति चेत् ।
तच्च मौडाभिधानं स्यात् प्रशस्तं राजवेश्मनि ॥ ३२ ॥

शिखरं शिखराकारं सुरसद्मादिसम्भवम् ।
भद्रे भद्रे तवङ्गानि तुङ्गारा द्विगुणं गता ॥ ३३ ॥

सिंहावलोकनं कुर्यात् सिंहकर्णैर्विभूषितम् ।
एवं वै षड्विधं प्रोक्तं राजवेश्म सुखावहम् ॥ ३४ ॥

मालिकानि यथोक्तानि कथयामि समासतः ।
द्विशतहस्तविस्तीर्णं पञ्चषष्टिकरोच्छ्रयम् ॥ ३५ ॥

द्वारं सप्तदशहस्तं मध्यमं रंग सत्करम् ? ।
याम्येपरे उत्तरेषु उच्छ्रयति विंशतिकरैः ? ॥ ३६ ॥

राजा वा चक्रवर्ती वा खण्डजा मण्डलाधिपाः ।
मुकुटध्वजा भूपालाः सामन्ता लघवस्तथा ॥ ३७ ॥

छत्रधाराः प्रतीहाराः खड्गधराश्चतुर्वराः ।
वंशोपानद्धराश्चैव अङ्गरक्षाचतुलिका ? ॥ ३८ ॥

सुभट्टैरभिभज्यन्ते साधु साधुजनाकुलैः ।
राजगृहं सदासेव्यमीशस्य चामरैर्यथा ॥ ३९ ॥

दासीदासाः सूपकाराश्च छत्रधाराश्चव्यञ्जनाः ।
महिषी कुरुते देवी चामरधारी त्वमासन्ना ? ॥ ४० ॥

तथा च केशबन्धाश्च जातीचम्पकग्रन्थिकाः ।
कुङ्कुमश्रीखण्डहस्ता उद्वर्तनोत्तरिनायिकाः ॥ ४१ ॥

अक्ष्णौ ? च त्रीमुने से सर्वे नेन्द्रीप्रतिचोरका ? ।
इन्द्राणीं सदा ध्यात्वा मुनियोडशां यथा ? ॥ ४२ ॥

त्रिभूमिमध्यकर्त्तव्या मालिका क्रमतः स्थिता ।
सूर्यवंशोद्भवाः शैवा घतरन्ति यदा महीम् ॥ ४३ ॥

तेषां वेश्मानि कार्याणि नान्येषां तु कदाचन ।
एवं तु राजवेश्मानि कर्त्तव्यानि च सर्वदा ॥ ४४ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां गृहोत्पत्तिहर्म्यादिराजप्रासादनिर्णयाधिकारो नामैकोनसप्ततितमं सूत्रम् ॥

---

## (७०) भूधरादिब्रह्मनगरं सप्ततितमं सूत्रम् ॥

विश्वकर्मोवाच—

गृहाणि नृपदेवानां स्वर्गपातालवासिनाम् ।
ब्राह्मणानां हितार्थाय नगरं वच्मि संप्रति ॥ १ ॥

भूधरं हेमकूटं च रत्नकूटं तृतीयकम् ।
त्रिषु लोकेषु विख्यातं पूज्यं सुरनरोरगैः ॥ २ ॥

सहस्रैरधमं हस्तैर्मध्यं सार्धसहस्रकैः ।
द्विसहस्रैर्भवेज्ज्येष्ठं त्रिविधं हस्तसङ्ख्यया ॥ ३ ॥

कनिष्ठं चाष्टभागैश्च मध्यं च दशभागतः ।
ज्येष्ठं द्विरष्टभागैश्च पदसङ्ख्या त्रिधोदिता ॥ ४ ॥

चतुःषष्टिः कनिष्ठं च शतं मानं तु मध्यमम् ।
द्विशतं तु भवेज्ज्येष्ठं षट्पञ्चाशत्पदायतम् ॥ ५ ॥

द्वात्रिंशद्धस्तमधमं द्विचत्वारिंशद्भिर्मध्यम् ।
ज्येष्ठं द्विपञ्चाशद्धस्तं गृहाणां तु प्रमाणतः ॥ ६ ॥

कनिष्ठं पञ्चशतकं मध्यं सार्धसप्तशतम् ।
सहस्रं तु भवज्ज्येष्ठं गृहसङ्ख्या यथाक्रमात् ॥ ७ ॥

कनिष्ठे नवमार्गाश्च मध्यमे च त्रयोदश ।
कुर्याज्ज्येष्ठे सप्तदश मार्गसङ्ख्या प्रकीर्तिता ॥ ८ ॥

एकद्वित्रिकमात्प्रोक्ताश्छन्दाश्च विबुधैर्युताः ।
मर्त्यलोकेषु सम्प्राप्ताः स्वर्गपातालभूषणाः ॥ ९ ॥

चतुरश्रं समं क्षेत्रमायव्ययविशोधितम् ।
आदिगर्भं प्रकुर्वीत भुजकर्णविशोधितम् ॥ १० ॥

भाजयेदष्टभागैस्तु आयामं विस्तरं समम् ।
एकांशं च त्रिधा कृत्वा चोभयोश्च समन्ततः ॥ ११ ॥

मध्यकोष्ठं परित्यज्य अष्टसप्तैश्च जायते ? ।
पूर्वापरे च द्वाराणां याम्यकौबेरसंस्थितौ ? ॥ १२ ॥

सर्वेषामीदृशं छन्दश्चतुःषष्टिपदेषु च ।
ब्रह्मस्थाने गृहाश्चैव पादानां च चतुष्टये ॥ १३ ॥

गृहाणां गृहसङ्ख्या च द्वात्रिंशद्भिः करैर्मता ।
ब्रह्मवंशयोर्द्वयोश्च चतुर्थांशकराः स्मृताः ॥ १४ ॥

चत्वरे द्वादशमार्गाश्चत्वरे षोडशान्विताः ।
नवमार्गकृता सङ्ख्या निर्मिता विश्वकर्मणा ॥ १५ ॥

सीमा करसहस्रं तु आयामो विस्तरः समः ।
चतुःषष्टिपदं कुर्याद् ब्रह्मरन्ध्रप्रमाणतः ॥ १६ ॥

चतुर्मुखं चतुर्द्वारं चतुर्वक्त्रं पितामहम् ।
कुर्यान्नगरकेन्द्रे च प्रासादं कमलोद्भवम् ॥ १७ ॥

चतुरो वरुणाद्यांश्च चतुर्दिक्षु यथाक्रमम् ।
महास्थानेषु चत्वाराश्चतुःकर्णेषु संस्थिताः ॥ १८ ॥

सीमान्तेषु च सर्वेषु चतुःषष्ट्यादिसाधिते ।
प्राकार उत्तमः कार्यो नवहस्तैः समुच्छ्रितः ॥ १९ ॥

द्विहस्तोच्छ्रिता च कार्या त्रिगूढा कण्डवारणी ।
तत्तुल्योदयमाना कपिशीर्षैर्घनाकुला ॥ २० ॥

कर्णे कर्णे तु कर्त्तव्या वृत्ताट्टालकशोभना ।
(त्रि)सहस्रान्ते पुनः कुर्याद्योधविद्याधरीं तथा ॥ २१ ॥

तत्तद्भागप्रमाणेन कुर्यात् सिंहावलोकनम् ।
प्रतोलीनां तु चत्वारि चक्रद्वाराणि कल्पयेत् ॥ २२ ॥

अष्टौ खटक्या द्वाराणि प्रशस्तानि शुभानि च ।
खटकी सर्वद्वारेषु कुर्यात् सोपानसंचयम् ॥ २३ ॥

रथमार्गोद्भवं शस्तं प्रतोलीषु प्रवेशनम् ।
कपाटाः सर्वद्वारेषु दृढार्गलयुतास्तथा ॥ २४ ॥

विस्वाद्विपेषुरा सर्वमाक्षातं सांशुभः निद्वौ ? ।
प्रोक्तस्तम्भो ध्वजास्तम्भः कीर्तिस्तंभो महान्तथा ॥ २५ ॥

षड्विधं तदधः पीठं मालिकास्त्वेकविंशतिः ।
तन्मध्ये देवताः सर्वे स्वर्गपातालवासिनः ॥ २६ ॥

मेरुच्छन्दभवः स्तम्भो ब्रह्माण्डसदृशः पुरः ।
तदुपरि शिवमूर्तिः शक्तिस्त्रिज्योतीरूपिणी ॥ २७ ॥

मेरुच्छन्दः समाख्यातः विभागान् शृणु साम्प्रतम् ।
चतुरश्रं समं कृत्वा तारकं पीठमुत्तमम् ॥ २८ ॥

उक्ताश्च चतुरशीतिः कीर्तिस्तम्भा विभागशः ।
समस्ता उत्सेधभागाः शतमष्टोत्तरं स्मृताः ॥ २९ ॥

तेन भागप्रमाणेन विस्तारः स्याच्चतुर्दश ।
तत्त्वभागैश्च भद्रार्धं कर्णश्चैव द्विभागकः ॥ ३० ॥

पूर्वभद्रे भवेद् ब्रह्मा दक्षिणे तु जनार्दनः ।
अनन्तः पश्चिमे भद्रे रुद्रश्चोत्तरतो दिशि ॥ ३१ ॥

कोणे भद्रे तथा स्तम्भे सप्तभागसमुच्छ्रिते ।
महाशृङ्गाणि चाष्टैव मेघाकाराणि तानि च ॥ ३२ ॥

सार्धं भागं तु परिधौ त्यजेच्छृङ्गक्रमेण वै ।
तदूर्ध्वे दशभागा च इल्लिका तोरणैर्युता ॥ ३३ ॥
कोणे भद्रे तथा शृङ्गे यक्षगन्धर्वपन्नगाः ।
भवन्ति ते स्वेच्छया च देवा वा दैत्यदानवाः ॥ ३४ ॥
परिधौ मत्स्यादिदेवाश्च तथैकादशरुद्रकाः ।
शिवशक्तयोऽनेकाश्च रूपभेदेन संस्थिताः ॥ ३५ ॥
सागराः पर्वता द्वीपा समस्ता भोगरूपका ।
समुद्रशैलवसना पृथ्वी च सप्तमातरः ॥ ३६ ॥
भूपालाश्च तथा कल्पवृक्षाश्च मुनिसत्तमाः ।
वायुश्च सूर्यचन्द्राद्याः सनक्षत्राः सराशयः ॥ ३७ ॥
इन्द्रो रुद्रस्तथोपेन्द्रो ब्रह्मा विष्णुस्तथैव च ।
शैलेयी – – – – – शंकरश्च सदाशिवः ॥ ३८ ॥
शान्ता– –शान्तातीता याति योत्यन्ती तत्र ।
तापर तत्स्वपेत कान्त तस्योपरि ? ॥ ३९ ॥
पूर्वद्वारे ध्वजस्थानं कीर्तिस्तम्भं तथोत्तमम् ।
तदूर्ध्वे च प्रतिष्ठाख्या कीर्तिस्तपताकिका ॥ ४० ॥
शिलोलूखलयन्त्राणि शय्यासनानि पट्टकाः ।
नित्यकर्मस्नानस्थानं सन्ध्यावन्दनकुण्डिकाः ॥ ४१ ॥
सर्वं गृहोपस्करं च आयसं काष्ठकादिकम् ।
द्विजदेवेषु दातव्यमात्मार्थे तु सनन्दनम् ॥ ४२ ॥
भूमिदानं गजाश्वाश्च देशा ग्रामं च पत्तनम् ।
मयूरलाक्षाभिच्छत्रं हेमरत्नादिभूषणम् ॥ ४३ ॥
पूजयेत्सपत्नीकान् विप्रान् पूर्वं देषु पूजिताः ? ।
इन्द्रतुल्योद्भवं राज्यं स्वर्गे वा भूमिशासने ॥ ४४ ॥
क्रमोऽयमत्र विप्राणां कथयामि द्विजोत्तम ।
वंशावंशेस्तदेवा ? इन्द्राद्या ईशकोणतः ॥ ४५ ॥
विष्णुदेवप्रधान्याविप्रा पूर्वदेशे तां स्थापयेत् ? ।
जिगमं पूजयन्ति विप्रा दक्षिणां दिशं द्विजोत्तमाः ? ॥ ४६ ॥
नैर्ऋत्यां दिशि पितृंश्च प्रावृषे पौरुषं तथा ।
उत्तरे पुनराचार्यं ईशं च प्रतिपूजयेत् ? ॥ ४७ ॥
कनिष्ठं च समाख्यातं नगरं नाम भूधरम् ।
देवलोकेषु विख्यातं पूज्यं सुरनरोरगैः ॥ ४८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
भूधरादिब्रह्मनगराधिकारो नाम सप्ततितमं सूत्रम् ॥

## (७१) हेमकूटाख्यनगरप्रमाणमेकसप्ततितमं सूत्रम् ॥

अपराजित उवाच—

चित्रकूटत्रिकूटादिनगराणां च सर्वशः ।
प्रमाणं गुणदोषांश्च कथयस्व प्रसादतः ॥ १ ॥

गृहाश्च कतिः सङ्ख्याता मार्गाश्च कतिधा स्मृताः ।
श्रेष्ठा वा निन्दिता वाथ प्रतोलीपरिखादिकाः ॥ २ ॥

कतिः स्थानानि देवानां कतिदेवाश्च संस्थिताः ।
एतत्सर्वं प्रयत्नेन तथा जनपदादिकम् ॥ ३ ॥

भोगाय भूमिपालानां भोगिनां चैव सर्वदा ।
विश्रामो वनितानां च यथा चेन्द्रपुरी तथा ॥ ४ ॥

विश्वकर्मोवाच—

अथातः सम्प्रवक्ष्यामि नगराणां च लक्षणम् ।
हेमकूटाभिधानं च विश्रुत भुवनत्रये ॥ ५ ॥

चतुरस्रं समं कृत्वा भुजकर्णविशोधितम् ।
भाजयेद् द्वादशांशैर्वा न्यूनाधिकपदैस्तथा ॥ ६ ॥

ब्रह्मस्थानेषु संगृह्य ह्येकांशं वामदक्षिणम् ।
द्विधा तथा पुनस्त्रीणि द्वे द्वे त्रीणि द्वयं तथा ॥ ७ ॥

इन्द्रयाम्यापरसौम्ये विभज्य पदसङ्ख्यया ।
जायन्ते तत्र सद्मानि ख्यातानि वसुधातले ॥ ८ ॥

निवसन्ति च सीमान्ते चतुर्वर्णा यथाक्रमम् ।
द्वादशाथमार्गाश्च द्वौ त्रयः सद्मनां तथा ॥ ९ ॥

अन्तरे कर्णभुजयोर्मार्गसङ्ख्या त्रयोदश ।
सद्ममानं समाख्यातं चत्वारिंशत्सहस्रकम् ॥ १० ॥

ब्रह्मरन्ध्रप्रमाणं च शतमष्टोत्तरं शुभम् ।
कर्णगर्भान् विजानीयाच्छतमष्टोत्तरं मतम् ॥ ११ ॥

चतुर्वक्त्रं महापद्मं प्रासादं सुरवल्लभम् ।
स्थापयेद् ब्रह्मकेन्द्रे च ब्रह्माणं तु पितामहम् ॥ १२ ॥

चत्वारः कर्णप्रासादाः कर्णगर्भे च संस्थिताः ।
आयान्तस्तु व्ययं कुर्यात् क्षेत्रमानानुसारतः ॥ १३ ॥

हस्तसङ्ख्याप्रमाणं च शतानां दशपञ्चतः ।
वेश्म सङ्ख्याप्रमाणं च सार्धसप्तशतानि च ॥ १४ ॥

प्रासादोपस्करं सर्वं प्रतोल्यादिसमन्वितम् ।
कीर्तिस्तम्भादिकं चैव कथितं पूर्वमेव हि ॥ १५ ॥

इति हेमकूटनगराभिधानम् ॥

अतःपरं प्रवक्ष्यामि नगराणां च लक्षणम् ।
नाम्ना तु रत्नकूटं तद् विज्ञातं वसुधातले ॥ १६ ॥
चतुरस्रं समं क्षेत्रं भुजकर्णविशोधितम् ।
भाजयेद्वा षोडशांशैर्विविधैर्वा पदैस्तथा ॥ १७ ॥
ब्रह्मस्थानं तु संगृह्य चैकांशं वामदक्षिणम् ।
तच्चैकं तु त्रिधा कृत्वा पुनर्द्वौ चैकमेव हि ॥ १८ ॥
द्वौ द्वौ तु भागसंस्थाने चैकद्वयं त्रयं तथा ।
चत्वारश्च चतुर्दिक्षु पदसङ्ख्यां विभाजयेत् ॥ १९ ॥
गृहाणां जायते सङ्ख्या त्वेकमेव सहस्रकम् ।
पदांशपट्कविस्तारं तदंशं निर्गमं विदुः ॥ २० ॥
चतुर्दिक्षु विधातव्यं भद्रस्थानं मनोहरम् ।
चतुःकर्णास्तु प्रासादे मार्गाः सप्तदश स्मृताः ॥ २१ ॥
द्विपञ्चाशत् सप्तहस्ता ज्ञातव्या अत्र पण्डितः ।
द्वात्रिंशन्मध्यवंशे तु चत्वारः षोडशान्विताः ॥ २२ ॥
सीमान्ते कर्णकर्णेषु चतुर्विंशतिकाः स्मृताः ।
अष्टौ मार्गा द्वादश च हस्तसङ्ख्या निगद्यते ॥ २३ ॥
चत्वारिंशच्च चत्वारो द्विशतं गर्भमध्यतः ।
कर्णे कर्णे च सीमान्ते शेषा विंशतिकान्विताः ॥ २४ ॥
नामपादप्रमाणं च संस्थानोन्मानलक्षणम् ।
सर्वेषामीदृशं मानं निर्मितं विश्वकर्मणा ॥ २५ ॥
चतुर्द्वारं तु कैलासं चतुःयष्ट ? समन्वितम् ।
स्थापयेद् ब्रह्मकेन्द्रेषु ब्रह्माणं च पितामहम् ॥ २६ ॥
सरस्वतीं तथेशान्यां वायव्यां तु जनार्दनम् ।
नैर्ऋत्ये च सहस्राक्षमाग्नेय्यां तु गणाधिपम् ॥ २७ ॥
सर्वेषामीदृशं स्थानं ज्येष्ठमध्यकनिष्ठकम् ।
कुर्यात् कनिष्ठके प्राज्ञो मध्यस्थाने चतुष्टयम् ॥ २८ ॥
ज्ञात्वा नगरचिह्नानि द्विरष्टैकेन ? शिल्पिभिः ।
न्यूनाधिकं च द्वाराणां सूत्र संबोध्य बोधकम् ? ॥ २९ ॥
रत्नकूटाभिधानं च गृहसङ्ख्या सहस्रतः ।
ज्येष्ठनागरमानं च सूत्रे चैव प्रसारिते ॥ ३० ॥
द्वारप्राकारकार्यं च गृहोपस्करमेव च ।
पूर्वोक्तं तु विधातव्यं द्विजदेवालयस्तथा ॥ ३१ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां हेमकूटाख्यनगरप्रमाणसूत्राधिकारो नामैकसप्ततितमं सूत्रम् ॥

---

## (७२) महाराजाधिराजपुरनिवेशो नाम द्वासप्ततितमं सूत्रम् ॥

विश्वकर्मोवाच—

चतुर्भिस्तु सहस्रैश्च कनिष्ठं विस्तृतं पुरम् ।
मध्यमं चाष्टसाहस्रम् हस्तानां मानतः स्मृतम् ॥ १ ॥

द्व्यष्टसाहस्रहस्तं च व्यासे ज्येष्ठं पुरं मतम् ।
चतुरष्टद्विरष्टं वा त्रिविधं चोदितं क्रमात् ॥ २ ॥

कनिष्ठज्येष्ठयोर्मध्ये सहस्रवृद्ध्यैकादश ।
चतुर्धापुनरेकैकं कनिष्ठं मध्यमुत्तमम् ॥ ३ ॥

साष्टमांशं सपादं वा सार्द्धं वास्तु समायतम् ।
कुर्यादेकैकमिश्रं च चतुरश्रीकृतं शुभम् ॥ ४ ॥

वेदाश्रं वेदभक्तं च वेदापर नृपवेश्मने ? ।
समस्तनृपगेहानां वेदवत् संस्थिता स्थितिः ॥ ५ ॥

एकस्यां द्वित्रिभिर्वंशास्त्रिधा पञ्चपदान्तगाः ।
प्रसिद्धराजमार्गाश्च षट् पन्थानो नवांशकाः ॥ ६ ॥

इत्यनुक्रमवंशाश्च यानमार्गप्रभेदतः ।
पुरान्तेषु समस्तेषु घण्टामार्गप्रसिद्धितः ? ॥ ७ ॥

सूर्यषोडशविंशत्यः प्राकारोर्ध्वं त्रिधोदितम् ।
द्वादशाष्टौ दश वापि प्राकारस्कन्धविस्तृतिः ॥ ८ ॥

सप्तादशकरोच्छ्रिता प्रासादं ? द्विहीनाधिकम् ? ।
द्विकराधिकैर्मध्यं च वोच्छ्रिता कण्डवारणी ॥ ९ ॥

कण्डवारणी स्थिता च पृथूदये च शिरोवापि ? ।
घनानि कपिशीर्षाणि ह्यष्टाङ्गुल्यन्तराणि च ॥ १० ॥

प्राकारान्ते रथाः कार्या दिग्भास्वच्छक्रविस्तरः ।
चत्वारिंशत्त्रिंशमध्यं शाश्वतं च रथान्तरम् ॥ ११ ॥

उत्संगः पूर्णबाहुश्च हीनबाहुस्तथापरः ।
प्रतिकायमिति प्रोक्तं प्रवेशानां चतुष्टयम् ॥ १२ ॥

आनन्दश्च तथोत्कण्ठो जयन्तो रिपुमर्दनः ।
कर्णालयश्च चत्वारो वृत्ताकारेण संस्थिताः ॥ १३ ॥

सिंहावलोकनाश्चैव योधविद्याधरीयकाः ।
एकान्तरप्रभेदेन क्रमेणापि सुसंस्थिताः ॥ १४ ॥

षट्त्रिंशत्तश्च षड्वृद्धौ विदुरष्टोत्तरं शतम् ।
पुरे प्रासादसंख्याभिर्देवस्थानानि चत्वरे ॥ १५ ॥

पुर्मानानि द्वादशैव चत्वरं देवसङ्ख्यया ।
अनुक्रमेण कर्त्तव्यं पुरच्छन्दानुरूपतः ॥ १६ ॥

नोत्तराभिमुखाः कार्या न देवा दक्षिणमुखाः ।
पूर्वापरमुखाः कार्या वास्तुशास्त्रेषु गीयते ॥ १७ ॥

पुरप्राकारबाह्ये तु देवा यत्र च संस्थिताः ।
नगराभिमुखास्त्वेव मध्यमे च पराङ्मुखाः ॥ १८ ॥

पराङ्मुखाः स्थिता ये तु शिवः सूर्यो विधिर्हरिः ।
हन्यते तत्पुरं राष्ट्रं राज्यध्वंसश्च जायते ॥ १९ ॥

प्राकारोच्छ्रयाद् द्विगुणं तदन्ते परिखात्रयम् ।
अम्भो ? विमार्गशस्तादिग्विदिक्षु च जलाश्रयाः ॥ २० ॥

कनिष्ठे च पुरे पादात् मध्यमे च पदार्धतः ।
षोडशांशात् पुरे ज्येष्ठे ह्यतिरिक्ते च बाह्यतः ॥ २१ ॥

प्रतोली राजगेहाग्रे राजमार्गस्तदग्रतः ।
विस्तीर्णा विंशतिकरैर्द्विरष्टद्वादशाधमा ॥ २२ ॥

हट्टश्रेणिस्ततः कार्या षोडशांशेन मार्गतः ।
बलिकर्मसमस्तानां हट्टोपरि गृहोत्तमम् ॥ २३ ॥

विदिशासु पुरं कार्यं जगत्यास्त्रिगुणं शुभम् ।
युग्मगृहाश्च कर्त्तव्याः पक्षयोश्चैव सन्मुखाः ॥ २४ ॥

प्रासादस्य प्रमाणेन पादोनेनाथवोच्यते ।
प्रासादार्धात्तु कर्तव्या ज्येष्ठमध्यकनिष्ठिकाः ॥ २५ ॥

एकभौमा द्विभौमा वा शाला निर्गमभूषिता ।
मत्तवारणसंयुक्ता निर्गताश्चित्रशालिकाः ॥ २६ ॥

जगत्यग्रे वामनं स्याद् भिट्टं तद्भुवि संस्थितम् ।
महोत्सवे च वासन्ते कुर्याद्धिन्दोलकं त्विह ॥ २७ ॥

देवस्य परतः कार्या निगूढा नृत्यशालिकाः ।
पूर्वस्यामथवाग्नेय्यां वायव्ये वारुणे शुभम् ॥ २८ ॥

शेषासु ह्यप्रशस्ताश्च आग्नेय्यां सत्रमण्डपम् ।
वास्तुवेदीसंस्थितं तन् मठः स्थाप्यस्तु दक्षिणे ॥ २९ ॥

गृहं पञ्चारिकायुक्तं मैत्रस्थानसमाश्रितम् ।
यतिध्यानालयं कुर्यात् प्रलीना यत्र शासने ॥ ३० ॥

पुरसीमान्तप्राकारे प्रतोलीहट्टमार्गयोः ।
जलाश्रयं जगत्यन्ते घटिमालासमुद्भवम् ॥ ३१ ॥

क्रय्यवस्तुयुतौकश्च तदग्रे विक्रयादिकम् ।
यतश्चागम्यते लोकैर्वर्तते जनसंकुलम् ॥ ३२ ॥

स्वर्णकारं सुगन्धं च गन्धिकं च तृतीयकम् ।
दन्तकर्म धान्यगृहमेतत्कुर्याच्च पूर्वतः ॥ ३३ ॥

ताम्बूलफलसंकीर्णं पुष्पमालादिसंकुलम् ।
राजद्वाराग्रतश्चैव यतः स्याच्च जनाकुलम् ॥ ३४ ॥

मंजिष्ठरङ्गशोभाढ्यं नारिकेलसमाकुलम् ।
त्रिगणोपस्कराद्यं च राजद्वारोत्तरे शुभाः ॥ ३५ ॥

आयसोपस्करं सर्वं शस्त्रादि विविधं तथा ।
व्यजनच्छत्रमायूरं शाश्वतं दक्षिणे शुभम् ॥ ३६ ॥

ईशाने च वस्त्रहर्यं पट्टिनेत्रपट्टाद्यकम् ।
स्वल्पवस्त्राद्याग्नेय्यां च वस्त्रबन्धस्तदग्रतः ॥ ३७ ॥

रक्तकाद्युत्तरे शस्तं कृष्णरङ्गादि दक्षिणे ।
पूर्वतः श्वेतवस्त्राद्यं राजवेश्माग्रकल्पितम् ॥ ३८ ॥

अष्टादशानां धान्यानां सर्वदिक्षु च विक्रयः ।
ताम्बूलानां च पूगानां विक्रयो देवताग्रतः ॥ ३९ ॥

(तां) दलाक्षं ? चित्रलेखाद्या गृहेषु पुरवासिनाम् ।
छिंपिका रजकास्त्रैणाः स्वदेवादिपुरे स्थिताः ॥ ४० ॥

ब्राह्मणाः पूर्ववास्तव्याः क्षत्रियाश्चैव दक्षिणे ।
प्रशस्ताश्चोत्तरे शूद्रा वैश्या मध्ये च संकुलाः ॥ ४१ ॥

पुरे पुरे च विप्राश्च क्षत्रिया वैश्यशूद्रकाः ।
तद् बाह्यतस्तथा चान्यास्तथा स्थपतिसंकुलाः ॥ ४२ ॥

विप्रक्षत्रियवैश्यानां प्राकारा वै निवासिनाम् ।
वणिक् कर्मकराणां च मध्यानां च सुखावहाः ॥ ४३ ॥

विदिक्षु दिक्षु वै कार्या नगरस्वस्तये यथा ।
अष्टद्विरष्टद्वात्रिंशदधमा मध्यमोत्तमाः ॥ ४४ ॥

चतुर्वर्णांश्च प्रकृतीरेकैकेषु पुरेषु च ।
सर्वत्र वासयेच्चैव नागरांश्च सुखावहान् ॥ ४५ ॥

पूर्वे ब्राह्मणलोकाश्च क्षत्रियाश्चैव दाक्षिणे ।
निवश्याश्चोत्तरे शूद्राः पश्चिमे तु जलाश्रयाः ॥ ४६ ॥

पूर्वयाम्योत्तरे शस्तं हट्टमार्गादिचत्वरम् ।
ईशाने शिल्पिनः सर्वे रजकाश्छिपकाः परम् ॥ ४७ ॥

चर्मकाराश्च वरुटा आग्नेयां दिशमाश्रिताः ।
नैर्ऋत्ये शौण्डिका ज्ञेया वायव्ये तन्तुवायकाः ॥ ४८ ॥

पुरमध्ये च सर्वत्र प्राकारस्य तथोपरि ।
स्थापयेत्सूत्रयंत्रं च विविधं कर्मरौद्रकम् ॥ ४९ ॥

यन्त्राणि चित्ररूपाणि विश्वकर्मेरितानि च ।
तेषां नामानुक्रमं च कथये तव साम्प्रतम् ॥ ५० ॥

प्रथमं भैरवं यन्त्रं द्वितीयं चैव भास्करम् ।
गौरीयन्त्रंचतुर्थंस्यात्तृतीयं महिषासुरम् ॥ ५१ ॥

वाराहं पञ्चमं चैव महायन्त्रं च षष्ठकम् ।
अचिन्त्यमुद्गराघातं ज्वालावलि शराकुलम् ॥ ५२ ॥

अक्षयं च दृढं युक्त्या नैकढिह्निकसंकुलं ।
एभिर्यन्त्रैः समायुक्तं प्राकारं भीमरूपकम् ॥ ५३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां महाराजाधिराजपुरनिवेशाधिकारो नाम द्वासप्ततितमं सूत्रम् ॥

---

## (७३) पुरलक्षणं त्रिसप्ततितमं सूत्रम् ॥

---

विश्वकर्मोवाच—

वक्ष्ये पुरस्य चाकारं साम्प्रतं लक्षणं पुनः ।
प्रशस्तं दोषरहितं पुरनामानि विंशतिः ॥ १ ॥

माहेन्द्रं सर्वतोभद्रं सिंहावलोकवारुणे ।
नन्द्यावर्तं च नन्दाख्यं पुष्पकं चैव स्वस्तिकम् ॥ २ ॥

पार्श्वदण्डं जयन्तं च श्रीपुरं रिपुमर्द्दनम् ।
स्नाहं दिव्यमुत्तरं च धर्मं कमलशाक्रदे ॥ ३ ॥

महाजयं पौरुषं च साम्प्रतं कथितं बुधैः ।
पुराणां विंशतिश्चैव ख्याता भुवनमण्डनम् ॥ ४ ॥

माहेन्द्रं चतुरश्रं च सर्वतोभद्रमायतम् ।
सिंहावलोकनं वृत्तं वृत्तायतं च वारुणम् ॥ ५ ॥

मुक्तकोणं च नन्दाख्यं नन्द्यावर्तं च स्वस्तिकम् ।
पुष्पकमष्टदलाख्यं स्वस्तिकं तु चाष्टाश्रकम् ॥ ६ ॥

यवाकृति जयन्तं च दण्डं स्यादतिदीर्घकम् ।
श्रीपुरं चैकप्राकारे द्वाभ्यां तु रिपुमर्द्दनम् ॥ ७ ॥

शैलकुक्षौ तथा स्नाहं दिव्यकं शैलमस्तके ।
नद्युत्तरं च सौम्याख्यं सरिद्याम्ये तु धर्मकम् ॥ ८ ॥

कमलं पश्चिमे नद्या नद्याः पूर्वे तु शाक्रदम् ।
पौरुषं पुरुषाकारं नद्योश्चैवं महाजयम् ॥ ९ ॥

पुरं विंशतिसङ्ख्याकं रम्यं सुरनरोरगैः ।
स्वस्तिशान्तिकरं नित्यं गोब्राह्मणधराभुजाम् ॥ १० ॥

माहेन्द्रं चतुरश्रं च प्रतापकीर्तिवर्द्धनम् ।
वृद्धिदं सर्वतोभद्रं नित्यं तद्भद्रशान्तिदम् ॥ ११ ॥

सिंहावलोकनं रम्यं हरे (ते) रिपुरिषाव(त)धी(वी) ? ।
वारुणे तु प्रजावृद्धिर्नन्दाख्ये नन्दनं चिरम् ॥ १२ ॥

नन्द्यावर्तं मङ्गलाख्यं त्रिदशानां च पुष्पकम् ।
स्वस्तिकृत्स्वस्तिकं प्रोक्तं जयन्तं च जयावहम् ॥ १३ ॥

वृद्धिदं पार्श्वदण्डं च श्रीप्रदं श्रीपुरं तथा ।
रिपुमर्द्दनं रिप्वन्तं स्नाहं चैवाभयप्रदम् ॥ १४ ॥

दिव्यकं देवभवनमुत्तरं चोत्तमोत्तमम् ।
धर्मं धर्मकरं नित्यं कमलं शान्तिदायकम् ॥ १५ ॥

इन्द्रराज्योद्भवं शक्रं पौरुषं भीमविक्रमम् ।
महाजयं पुरं नाम सर्वदानन्दकारकम् ॥ १६ ॥

इत्थमाकृतयो गुणाः कथितास्तव मयाधुना ।
शुभानां सुप्रशस्तानां पुराणां विंशतिस्तथा ॥ १७ ॥

इति पुरगुणाधिकारः ॥

अग्निदं वायवं चैव शकटं युग्मशाकटम् ।
वज्रं त्रिशूलमाख्यातं कर्णिकं चैव सप्तमम् ॥ १८ ॥

एताः सप्तपुरश्चैव महादोषभयावहाः ।
तासां रूपं तथाकारं कथये तव साम्प्रतम् ॥ १९ ॥

अग्निदं च त्रिकोणाख्यं षट्कोणं चैव वायवम् ।
शकटं शकटाकारं युग्मं द्विशकटाकृति ॥ २० ॥

वज्रकं वज्रसङ्काशं त्रिशूलं त्रिशूलाकृति ।
कर्णिकारं विकर्णं तु चाकाराः कथितास्तव ॥ २१ ॥

अग्निदेऽग्निभयं घोरं वायवं बहुक्लेशदम् ।
शकटं तु पुरं चैव प्रजाक्लेशावहं स्मृतम् ॥ २२ ॥

पुरे द्विशकटाकारे तस्करादि भयं भवेत् ।
वज्राकृति पुरं यत्र वज्रपातस्तदोद्भवेत् ॥ २३ ॥

त्रिशूले च पुरे चैव सदा युद्धं समुद्भवेत् ।
कर्णिकारे च दुर्भिक्षं प्रजा तत्र न नन्दति ॥ २४ ॥

इत्यादिसप्तदोषांश्च वर्जयेत् पुरदोषदान् ।
विंशतिः सुखदाः ख्याता दोषदाः सप्त एव च ॥ २५ ॥

पुरार्धेन भवेद् ग्रामो ग्रामार्धेन तु खेटकम् ।
खेटकार्धेन भवेत् कूटं कूटार्धेन तु कर्वटम् ॥ २६ ॥

पुरे सप्तदश मार्गा ग्रामो वै नवमार्गतः ।
खेटके पञ्च मार्गाः स्युस्त्रिभिर्मार्गैश्च कूटकम् ॥ २७ ॥

द्वौ मार्गौ कर्वटे ख्यातौ छन्दाः पञ्च प्रकीर्तिताः ।
पुरग्रामखेटकं च कूटं च कर्वटाभिधम् ॥ २८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
पुरलक्षणाधिकारो नाम त्रिसप्ततितमं सूत्रम् ॥

---

## (७४) वापीकूपतडागादिनिर्णयो नाम चतुःसप्ततितमं सूत्रम् ॥

---

विश्वकर्मोवाच—

पुरस्य बाह्याभ्यन्तरे विविधाः स्युर्जलाशयाः ।
वापीकूपतडागानि कुण्डानि विविधानि च ॥ १ ॥

दश कूपाश्चतुर्वाप्यश्चत्वारि कुण्डकानि च ।
तडागाः षड्विधाश्चैवं कथयाम्यपराजित ॥ २ ॥

श्रीमुखो विजयः प्रान्तो दुन्दुभिश्च मनोहरः ।
चूडामणिश्च दिग्भद्रो जयो नन्दश्च शङ्करः ॥ ३ ॥

चतुर्हस्तादितो वृद्धिर्यावद्धस्तस्त्रयोदशम् ।
श्रीमुखाद्याः शङ्करान्ता दश कूपाः प्रकीर्तिताः ॥ ४ ॥

चतुर्हस्तः श्रीमुखः स्याद् विजयः पञ्चहस्तकः ।
षड्भिर्हस्तैर्भवेत् प्रान्तो दुन्दुभिः सप्तहस्तकः ॥ ५ ॥

मनोहरश्चाष्टहस्तश्चूडामणिर्नवकरः ।
दिग्भद्रो दशहस्तश्च ह्येकादशकरो जयः ॥ ६ ॥

नन्दे च द्वादशकराः शङ्करे च त्रयोदश ।
एवमादिगुणोपेता वृत्तकूपा दशोत्तमाः ॥ ७ ॥

शेषास्तु कूपिका वत्स त्रिहस्ताश्चादिमादधः ।
द्विहस्ता वै प्रशस्ताश्च कर्त्तव्याः सर्वकामदाः ॥ ८ ॥

इति दशकूपाः ॥

नन्दा भद्रा जया चैव चतुर्थी विजया तथा ।
एकवक्त्रा त्रिकूटा च नन्दा नाम वरप्रदा ॥ ९ ॥

द्विवक्त्रा च षट्कूटा भद्रा नाम सुशोभिता ।
त्रिवक्त्रा नवकूटा च जया वै देवदुर्लभा ॥ १० ॥

चतुर्वक्त्रा सूर्यकूटा विजया सर्वतोमुखी ।
वाप्यश्च कथिता वत्स कुण्डानि शृणु सम्प्रति ॥ ११ ॥

इति चतुर्वाप्यः ॥

भद्रकं सुभद्रकं च नन्दाख्यं परिघं तथा ।
कुण्डानि देवताग्रेषु कार्याणि शान्तिमिच्छता ॥ १२ ॥

चतुरस्रं भद्रकं स्यात् सुभद्रं भद्रसंयुतम् ।
नन्दाख्यं प्रतिभद्रेषु परिघं मध्यभित्तिकम् ॥ १३ ॥

चतुर्द्वाराणि सर्वाणि सगवाक्षाणि मध्यत: ।
गवाक्षमस्तकान्येवं प्रवेशो वामदक्षिणे ।। १४ ।।

प्रवेशा निर्गमास्तत्र विधातव्या ह्यनेकधा ।
कर्णे चतुष्किका: कार्यास्तवङ्गपट्टशालिका: ।। १५ ।।

मध्ये भिट्टं तु कर्तव्यं माढं च तद्धि श्रीधरम् ।
तन्मध्ये जलशायी स्याद् वाराहो वा तथोच्यते ।। १६ ।।

भद्रे चैकादश रुद्रा: प्रशस्ता द्वारके तथा ।
दुर्वासा नारदश्चैव विविधा गणनायका: ।। १७ ।।

क्षेत्रपालो भैरवश्च तथा चोमामहेश्वर: ।
कृष्णशङ्कर: कर्तव्यो दण्डपाणिर्विशेषत: ।। १८ ।।

कात्यायनी चण्डिका च भल्लस्वामी च भास्कर: ।
हरिहरपितामहश्चन्द्रादित्यपितामह: ।। १९ ।।

हरिहरस्वर्णगर्भ: पट्टशाला वाराणसी ।
तदनुक्रमं वक्ष्यामि यदुक्तं परमेश्वरै: ।। २० ।।

चतुर्दशेशलिङ्गानि रुद्राश्चैकादशैव तु ।
सर्वे च द्वादशादित्या द्वादशाथ गणाधिपा: ।। २१ ।।

पञ्चलीला नवदुर्गा लोकपालाश्च पञ्चधा ।
त्रयोऽग्नयश्च दिक्पाला मातृणां च तथाष्टकम् ।। २२ ।।

अब्धयश्चैव चत्वारो गङ्गा च सरिदुत्तमा ।
तन्मध्ये तु प्रकर्तव्या वाराणसी पद्मासने ।। २३ ।।

यत्र वाराणसीवासं तत्पुण्यं नित्यदर्शनात् ।
नित्यमेव स्नानपूजा गङ्गास्नानादिकं फलम् ।। २४ ।।

तस्यार्चने भवेन्मोक्षो यथा गङ्गाजलान्मृतौ ।
पतन्ति नैव संसारे यावच्चन्द्रार्कतारकम् ।। २५ ।।

कृते च नैमिषं तीर्थं त्रेतायां पुष्करं तथा ।
द्वापरे च कुरुक्षेत्रं कलौ गङ्गा प्रशस्यते ।। २६ ।।

गङ्गाद्वारे कुशावर्ते बिल्वके नीलपर्वते ।
स्नात्वा कनखले तीर्थे पुनर्जन्म न विद्यते ।। २७ ।।

गङ्गा गङ्गेति यो ब्रूयाद् योजनानां शतैरपि ।
मुच्यतेसर्वपापेभ्य: स्वस्थानेऽपि वसन्नर: ।। २८

या गतिर्योगमुक्तानां मुनीनामूर्ध्वरेतसाम् ।
सा गति: सर्वभूतानामन्तर्वेदिनिवासिनाम् ।। २९ ।।

फलं तस्य दशगुणं प्राप्नोति चैव नित्यशः ।
नरोत्तमः स चाप्नोति नित्यं वाराणसीफलम् ॥ ३० ॥

तस्य तुलादिकपुण्यं स्थाने वाराणसी भवेत् ।
धर्मार्थकाममोक्षांश्च यथेच्छं प्राप्नुयान्नरः ॥ ३१ ॥

इति चतुःकुण्डवाराणसी ॥

सरो महासरश्चैव भद्रकं च तृतीयकम् ।
चतुर्थं यन्मया प्रोक्तं सुभद्राख्यं तदुच्यते ॥ ३२ ॥

परिघं युग्मपरिघं तडागं षड्विधं स्मृतम् ।
बकैकस्थलं परिघं युग्मपरिघं तद् द्वितः ॥ ३३ ॥

अर्धचन्द्रं सरः प्रोक्तं वृत्ताकारं महासरः ।
भद्रकं चतुरश्रं स्यात् सुभद्रं भद्रसंयुतम् ॥ ३४ ॥

दण्डसहस्रकं ज्येष्ठं मध्यमं च तदर्धकम् ।
मध्यमार्धे कनिष्ठं च त्रिविधं पालिदैर्घ्यतः ॥ ३५ ॥

पञ्चाशद्धस्तैर्ज्येष्ठं मध्यमं च तदर्धकम् ।
कनिष्ठं द्वादशकरः पालिमानं च विस्तरे ॥ ३६ ॥

वापीकूपतडागानि नैकश उदगाश्रयाः ।
जलाश्रयं च संपाद्य कुर्यात् पुण्यं महोत्सवम् ॥ ३७ ॥

यस्य गोपदमात्रं तु ह्युदकं धारयेन्मही ।
वर्षषष्टिसहस्राणि शिवलोकं स गच्छति ॥ ३८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
वापीकूपतडागादिनिर्णयाधिकारो नाम चतुःसप्ततितमं सूत्रम् ॥

---

# (७५) शस्यावतारो नाम पञ्चसप्ततितमं सूत्रम् ॥

---

अपराजित उवाच—

कृते पुण्यमयं सर्वं जगदेतत् चराचरम् ।
पुण्यात्मनः प्रजा राजा सुवृष्ट्या शोभना क्षितिः ॥ १ ॥

पुण्यं त्रिभागं त्रेतायां द्विभागं द्वापरे तथा ।
एकभागं कलियुगे मेघाः स्वल्पजलप्रदाः ॥ २ ॥

सम्प्राप्ते वै कलियुगे पुण्ये च प्रलयं गते ।
सर्वार्थनाशतो लोका व्याधिदुःखप्रपीडिताः ॥ ३ ॥

त्वं पिता जगतां नाथ प्रभो विश्वस्य पालक ।
प्राप्तो कलियुगो घोरः कथं लोकस्तरिष्यति ॥ ४ ॥

विश्वकर्मोवाच—

अधर्मस्थं शिवो हन्ति सृष्टिस्थितिप्रणाशकृत् ।
अधर्मस्य शिवः कालो नित्यं संहारहेतुकः ॥ ५ ॥

कलियुगे कृतयुगं शिवपादाब्जसेवनात् ।
अन्नं नराणामाधारो वाहनानां तु पोषणम् ॥ ६ ॥

अन्नं तत्र दयाहेतु भोगलिङ्गं महीतले ।
निग्रहानुग्रहे शक्तः स भवेत् पृथिवीपतिः ॥ ७ ॥

गृहे वा नगरे ग्रामे आधिपत्यं च दुर्लभम् ।
किं पुना राज्यलब्धौ तु चाधिपत्यं महीतले ॥ ८ ॥

राज्यार्थं धार्यते शस्यं शस्यार्थं तु जलाश्रयः ।
भूमिर्भागपरीक्षार्थं सूत्रधारं परीक्षयेत् ॥ ९ ॥

प्रजाहीनो ध्रुवं वत्स राजा दुःखस्य भाजनम् ।
शेषं भुङ्क्ते महादुःखे विषये स्वेऽपराजित ॥ १० ॥

लोको मूलं भूश्च वृक्षश्चाम्भो भूपालरक्षणम् ।
तेनाक्षयं भवेद्राष्ट्रं प्रजावांस्तु चिन्तामणिः ॥ ११ ॥

बहुपुण्यप्रभावेण प्रसन्नः साम्प्रतं शिवः ।
प्रजास्तु पीडिता येन तद्राष्ट्रं गच्छति क्षयम् ॥ १२ ॥

अन्यायद्रव्यनिरता न्यायं त्यक्त्वा तु लोभतः ।
कुलमूलविनाशार्थं राजा हन्ति प्रजां समाम् ॥ १३ ॥

वसुधायाः प्रजा मूलं धन्यो यस्तां विशेषतः ।
प्रतिपालयते भूपः सर्वकामफलप्रदः ॥ १४ ॥

वसुधा तु ध्रुवं पुष्पं फल राष्ट्रेषु वै प्रजा ।
तस्मात् सर्वप्रयत्नेन प्रजा पाल्या महीभृता ॥ १५ ॥

यत्र देशे प्रजाः स्वस्थाः सदा च धनिनो जनाः ।
तत्र देशे च कल्याणमिच्छासिद्धिर्भवेन्नृप: ॥ १६ ॥

यत्र देशे प्रजाः स्वस्था हेमरत्नविभूषिताः ।
स देशो दुर्लभो वत्स स्वर्गादिभोगदायकः ॥ १७ ॥

यत्र देशे प्रजाः स्वस्था उत्तमाधममध्यमाः ।
सर्वकार्येषु सोत्साहाः सद्देशो दुर्लभः सुरैः ॥ १८ ॥

यत्र देशे प्रजाः स्वस्था दिव्यवस्त्रविभूषिताः ।
दिव्यभोगा नष्टरिपुः सद्देशो देवदुर्लभः ॥ १९ ॥

यत्र देशे प्रजाः स्वस्था दिव्यलेपनलेपिताः ।
सर्वभोगप्रभोग्यश्च सद्देशो देवदुर्लभः ॥ २० ॥

सुभिक्षे तु सदा सौख्यं दुर्भिक्षे तत्कथं भवेत् ।
यस्य कीर्तिः सुराष्ट्रैश्च नित्यमिच्छन्ति तं नृपम् ॥ २१ ॥

लोकाः सुभद्रैर्युक्ताश्च गजैरश्वोष्ट्रवाहनैः ।
— — — — — — — — — — — — — — — — — — ॥ २२ ॥

दुर्भिक्षे तु प्रजाः स्वस्था राजा तत्र प्रमोदते ।
प्रजास्वास्थ्ये नृपाः स्वस्था आसमुद्रवसुन्धराम् ॥ २३ ॥

दुर्भिक्षे क्षीयते धर्मो धनधान्यक्षयो भवेत् ।
प्रजाराजक्षयश्चैव दुर्भिक्षा द्रक्षति प्रभुः ॥ २४ ॥

प्रजां पोषयते राजा राजानं पोषयेत् प्रजा ।
अन्योन्यपोषणान्नित्यं राष्ट्रं नन्दति तच्चिरम् ॥ २५ ॥

प्रजाहानौ ध्रुवं वत्स राजा स्याद् दुःखभाजनम् ।
सर्वाङ्गं क्षीयते राष्ट्रं जीवन्तोऽपि मृता नृपाः ॥ २६ ॥

स्वामी तु निर्दयः कालो दुर्भिक्षं चैव रौरवम् ।
अल्पोदकाश्च मेघाश्च अल्पशस्या च मेदिनी ॥ २७ ॥

अपराजित उवाच—

यदा मेघा न वर्षन्ति काले वा फल्गुवर्षणम् ।
अनावृष्टौ स्वल्पवृष्टौ कथं लोका भवन्ति ते ॥ २८ ॥

कथं प्रवर्तते राष्ट्रं सुखिनश्च नृपाः कथम् ।
कथं च धान्यनिष्पत्तिर्धनादिसुखिनो जनाः ॥ २९ ॥

शस्यहानौ कुतो लोकाः कुतो राष्ट्रं सराजकम् ।
कुतः प्रवर्तते सृष्टिर्विश्वेश कथयस्व मे ॥ ३० ॥

विश्वकर्मोवाच—

शृणु वत्स महागुह्यं त्वत्पृष्टमपराजित ।
वक्ष्यामि दुस्तरे काले तारणं समुदाहृतम् ॥ ३१ ॥

यच्छस्यानि प्ररोहन्ति स्वल्पवृष्टौ च पुत्रक ।
दुर्भिक्षं न भवेत्तत्र यदुपायेऽपराजित ॥ ३२ ॥

उत्पद्यते यतः शस्यं नराणां जलसंग्रहात् ।
जलाशये वन्धिते च क्षिप्रं शस्यं प्ररोहति ॥ ३३ ॥

केचिन्महानदीतीरे केचिच्च सरिदाश्रये ।
केचित्कूपोदके वत्स अष्टाष्टौ शस्यसम्भवाः ॥ ३४ ॥

नगरे च पुरे ग्रामे खेटे कूटे च कर्वटे ।
वापीकूपतडागानां नदीनां बन्धनादिकम् ॥ ३५ ॥

अरहट्टप्रवाहाणां सारणीनां तथैव च ।
संचये सर्वशस्यानि जलं वै भूमिसंस्थितम् ॥ ३६ ॥

पातालोद्भवा मेघाश्च घटिका मोघधारिणः ।
सेतुबन्धभवा नद्यः शस्योभयतटोद्भवाः ॥ ३७ ॥

अजलाश्च जलाकीर्णा अवृष्ट्यैकार्णवीकृता ।
धर्मस्त्राता च दुर्भिक्षे धर्मराजो महोत्सवः ॥ ३८ ॥

सम्प्राप्तो धर्मराजत्वं वरुणस्त्रिदशैः सह ।
तं देशं स्वर्गमाख्याति चेन्द्रतुल्यस्य भूपतेः ॥ ३९ ॥

रसो रसायणं ज्ञानं धनधान्यादिसंभवाः ।
सर्वं प्राप्तं फलं तेन येन वै सञ्चितं जलम् ॥ ४० ॥

स्वर्णपुष्पफलैर्युक्तो नित्यं स त्वपराजित ।
नृपेण सूत्रधारेण महीशस्यादिभूषिता ॥ ४१ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां शस्यावताराधिकारो नाम पञ्चसप्ततितमं सूत्रम् ॥

## (७६) महाराजनिवेशोनाम षट्सप्ततितमं सूत्रम् ॥

विश्वकर्मोवाच—

चतुःषष्टिपदैर्भक्ते राजवेश्मनि वास्तुनि ।
देववेश्यराजवेश्म मैत्रपदे समाश्रितम् ॥ १ ॥

प्रदक्षिणान्ते मार्गाच्च निवेशयेत्तु वेश्मनः ।
गजस्कन्धसमोत्सेधा प्रथमा ह्युच्चरंगिका ॥ २ ॥

इन्द्रेन्द्रजयोर्मध्ये च राजमातुर्निवेशनम् ।
रुद्रे रुद्रदासे चैव वेश्मनः पेटमादिकम् ॥ ३ ॥
वेदाक्षेन्द्रजयोर्मध्ये भ्रमणी पदमध्यगा ।
राजभुवनस्यार्धे तु भ्रमणी मार्गनिर्गता ॥ ४ ॥

तद्वीथ्यग्रसन्धौ च प्रतोलीः कारयेच्छुभाः ।
कार्याश्च भ्रमणीमध्ये गजशालास्तथोत्तमाः ॥ ५ ॥

पूर्वार्धे तु त्रिभिर्माडैः पङ्क्तिरेका तु संस्थिता ।
अपरयाम्योत्तराणि ? शालाकिन उदाहृताः ॥ ६ ॥

तद्बाह्यतोऽन्तर्मार्गश्च कर्तव्यं शुभलक्षणम् ।
महिषीगृहाल्पहीनं राजमातुर्गृहं भवेत् ॥ ७ ॥

मैत्रान्ते पुरतो भागे द्वारगर्भस्तथान्तरे ।
गोपुराकृतिः कर्तव्यो दृढार्गलसमन्वितः ॥ ८ ॥

तत्सूत्रेण कृतं द्वारं राजमातुर्गृहात्परम् ।
मैत्राग्निकर्णे कुर्याच्च सभामाडं सुशोभितम् ॥ ९ ॥

सिंहासनसमायुक्ता याम्यस्था चोत्तरानना ।
सिंहावलोकनयुक्ता महाराजसभा भवेत् ॥ १० ॥

सभामध्ये तु कर्त्तव्यं वेद्यां सिंहासनं महत् ।
श्रीधरोद्भवमाडं च सुवर्णरत्नभूषितम् ॥ ११ ॥

ब्रह्मस्थानार्धतः स्तम्भैः सिंहद्वारं गर्भोत्तरे ।
याम्योत्तरे तु कर्तव्या गजयुधा गजोत्तमाः ? ॥ १२ ॥

तदग्रे चाट्टालकानि प्राकारे स्याद्रथाकृतिः ।
राजगृहाद् द्वे प्रतोल्यौ प्राकारान्तर्विनिर्गते ॥ १३ ॥

राजमातुः पट्टराज्ञ्याः प्राकारो गृहतो भवेत् ।
सिंहद्वारसमानान्यनेकद्वाराणि कारयेत् ॥ १४ ॥

विवस्वत् पृथ्वीधरार्धे प्राकारः पूर्वनिर्गतः ।
ब्रह्मणोऽन्ते तु प्राकारो जयद्वारं गर्भोत्तरे ॥ १५ ॥

तत्प्राकारमध्यकर्णे गजशालावुभौ मतौ ।
तस्य बाह्ये गृहमन्यं राजपिण्डपाद्यादिकम् ॥ १६ ॥

आपवत्समरीच्यर्धे राजवेश्म गृहोत्तमम् ।
कपिशीर्षयुतश्चैव प्राकारो वास्तुबाह्यत: ॥ १७ ॥

पित्रग्नीशरोगकर्णेष्वट्टालकचतुष्टयम् ।
महाप्रतोल्या माहेन्द्रे गिरिसंस्था तथोत्तरे ॥ १८ ॥

भास्वतो यमदिग्भागे समस्ता च वल्लरिका ।
राजवेश्मान्तर्भागे च वाद्यशाला तथोत्तरा ॥ १९ ॥

वितथे गिरिसंस्थाने रथरन्ध्राणि कारयेत् ।
गिरौ काष्ठगृहं चैव वितथे चाम्भसां गृहम् ॥ २० ॥

सुग्रीवनन्दिसन्धौ च युद्धद्वारं पराङ्खम् ।
मु
असुरशोषसन्धौ च द्वारमंभोगृहैर्युतम् ॥ २१ ॥

सुग्रीवपुष्पदन्तयोर्वरुणासुरयोस्तथा ।
अश्वशाला द्वादशैव कर्तव्याश्च शुभोत्तमा: ॥ २२ ॥

अर्धे तवङ्गनिष्कास ? सैन्यविस्तरविस्ततम ।
प्राकारसमुत्सेधानि त्रिमाडानि तदूर्ध्वत: ॥ २३ ॥

कार्यं दौवारिके भिट्टं गजस्कन्धसमोच्छ्रितम् ।
द्वाराग्रे तु भवेन्माडं मल्लैरग्रे तु युध्यते ॥ २४ ॥

पूर्वापरद्वारद्वयं द्वात्रिंशत्स्तम्भभूषितम् ।
तद्वृत्तमाडं वृत्तं तु पञ्चविंशतिभि: करै: ॥ २५ ॥

स्तम्भे स्तम्भे पताका च द्विजालोककलोद्भवम् ।
रक्तपुष्पसमाकीर्णं द्वारिकं चतुरङ्गुलम् ॥ २६ ॥

खड्गविद्याविशयुद्धं छुरिकायुद्धमुत्तमम् ।
तथैव मल्लयुद्धं च गात्रभङ्गैरनेकधा ॥ २७ ॥

निरीक्ष्यते यत: सर्वं खड्गाद्यायोधनं तथा ।
एवं युद्धोद्भवा राजप्रासादे च महोत्सवा: ॥ २८ ॥

नियन्त्रितोभयद्वारं माडं रश्माक्ष्यमुन्नतम् ।
भिट्टे चापरद्वाराणि कार्याणि चासुरोन्मुखम् ॥ २९ ॥

बाह्यदेवपङ्क्तिमध्ये राजवेश्मान्तमार्गत: ।
मुख्यभल्लाटसौम्येषु गजशालपङ्क्तिद्वयम् ॥ ३० ॥

याम्योत्तरमुखं कार्यं प्रशस्तं सर्वकामदम् ।
सौम्यान्ते हस्तिनिवेश्म तद्द्वारमपरोन्मुखम् ॥ ३१ ॥

बुधे यमे च गन्धर्वे तद्रूपा च द्वितीयका ।
शोषे क्षये च रोगे च कोष्ठागारं तथादिमम् ॥ ३२ ॥

पित्रिमृगभृङ्गेषु च कोष्ठागारं द्वितीयकम् ।
गोष्ठागारं कार्यमित्थं प्रोक्तं च विश्वकर्मणा ॥ ३३ ॥

ईशादितिदितिषु च भाण्डागारमापार्थत: ।
पुष्पागारं सवित्रर्धे ह्यग्नौ भृत्यान्तरिक्षयो: ॥ ३४ ॥

तृणशाला प्रकर्तव्या प्रशस्ता शुभकर्मणा ।
पर्जन्ये चाधिकरणं राज्ञ: कार्यं पराङ्मुखम् ॥ ३५ ॥

शुभा प्रतोली माहेन्द्रे जये श्रीकरणादिकम् ।
आदित्ये वप्रकरणं सन्मुखं श्रीकरादिषु ॥ ३६ ॥

धर्माधिकरणं सत्ये कर्तव्यं चापराङ्मुखम् ।
कर्णोर्ध्वे भूमिकाश्चैव तदग्रार्धे चतुष्किका ॥ ३७ ॥

जयस्य बाह्यपक्षे तु कुर्यात् कारागृहं तथा ।
कात्यायनी च माहेन्द्रे प्रतोल्या: पुरतबधु: ? ॥ ३८ ॥

आदित्याग्रे च बाह्ये तु कुर्याद् द्वयकरणाद्यकम् ? ।
रूपकं दु:साध्यकानां चतुष्कं तु राजादिकम् ? ॥ ३९ ॥

मरीचिस्थ गर्भोत्तरे देवी राजकुलार्चिता ।
पृथ्वीजयाख्य: प्रासादस्तेज:प्रतापवर्धक: ॥ ४० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
महाराजनिवेशाधिकारो नाम षट्सप्ततितमं सूत्रम् ॥

---

## (७७) सभाष्टकवेदीनिर्णयो नाम सप्तसप्ततितमं सूत्रम् ॥

---

विश्वकर्मोवाच—

नन्दा भद्रा जया पूर्णा दिव्या यक्षी च रत्नजा ।
उत्पला तदनुज्ञेया सभा अष्टौ प्रकीर्तिता: ॥ १ ॥

चतुरश्रीकृते क्षेत्रे द्विरष्टपदभाजिते ।
मध्यमपदचतुष्केण चतुष्कोऽलिन्दशोपत: ॥ २ ॥

नन्दा नाम समाख्याता सर्वकामफलप्रदा ।
चतुष्के भद्रविस्तार एकोभागश्च निर्गम: ॥ ३ ॥

भद्रा त्वेवं समाख्याता तेज:प्रतापवर्धका ।
भद्रं भद्रं चतुष्के तु जया नित्यं जयावहा ॥ ४ ॥

अलिन्दैर्वेष्टितं सर्वं निर्यूहाच्छाद्यकं तथा ।
तथा पूर्णा भवत्येवं सर्वकल्याणकारिका ॥ ५ ॥

चतुरश्रं समं क्षेत्रं विभक्तं च नवांशकै: ।
केवला नवशालाश्च दिव्या नामापि सुन्दरी ॥ ६ ॥

निष्कान्ता च चतुर्भद्रैर्यक्षी कार्या सुशोभना ।
भद्रे भद्रे द्विशालानि सा मता रत्नसंभवा ॥ ७ ॥

तस्याश्च प्रत्येकशालं प्रतिभद्रविभूषितम् ।
उत्पला च समाख्याता महाराजेन्द्रवल्लभा ॥ ८ ॥

लम्बिन्याख्यवितानानि विचित्राणि च मध्यत: ।
अनेकाकाररूपाश्च राजक्रीडोचिता: स्थिता: ॥ ९ ॥

शालभञ्ज्यादि प्रतिमा स्तम्भविमानसम्भवा: ।
मुक्तलूमच्छाद्योपरि घण्टाकूटैरलंकृता: ॥ १० ॥

दिव्यसौवर्णकलशैर्मत्तवारणसम्युता: ।
सुरसद्मोपमाश्चैव नृपसद्माग्रमण्डपा: ॥ ११ ॥

इति सभाष्टकम् ॥

तन्मध्ये याम्यभद्रे तु वेदी सिंहासनान्विता ।
श्रीधर्याद्या तथा चैव वैराजकुलसम्भवा ॥ १२ ॥

स्वस्तिका भद्रिका चैव श्रीधरी पद्मिनी तथा ।
चतुर्विधा भवेद् वेदी सर्वशान्तिकरी नृणाम् ॥ १३ ॥

स्वस्तिका चतुरश्रा स्याद् भद्रिका भद्रसम्युता ।
श्रीधरी विंशतिकोणा प्रतिभद्रैर्विभूषिता ॥ १४ ॥

पद्मिनी वै पद्मदला ह्यष्टकोणैर्विभूषिता ।
विप्राणां सप्तहस्ता च क्षत्रियाणां तु षट्करा ॥ १५ ॥

वैश्यानां पञ्चहस्ता च शूद्राणां वेदहस्तिका ।
त्रिहस्ता कर्षकाणां च प्रकृतेद्व्यैकहस्तिका ॥ १६ ॥

विवाहेषु च सर्वेषु स्वस्तिका सर्वकामदा ।
भद्रा भद्रा नरेन्द्राणां सर्वकल्याणकारिका ॥ १७ ॥

देवतास्थापने चैव स्वस्तिका भद्रा श्रीधरी ।
देवानां च प्रतिष्ठादौ पूजायां चैव पद्मिनी ॥ १८ ॥

सिंहासनं तदूर्ध्वे च भद्रासनमथापि वा ।
पट्टप्रस्तारिका चैवं गदिकाद्यं तथोत्तरे ॥ १९ ॥

चतुःस्तम्भसमायुक्तं छाद्यत्रयविभूषितम् ।
ऊर्ध्वे च घण्टाकलशं मत्तवारणशोभितम् ॥ २० ॥

शुक्लपट्टैश्च शोभाढ्यं पुष्परागविभूषितम् ।
इन्द्रनीलसमं कान्त्या हेमरत्नैश्च शोभितम् ॥ २१ ॥

मुक्ताफलैरनेकैश्च सूर्यकान्तिमनोरमैः ।
एवं पुष्पकमाडं च वेद्यूर्ध्वे च नृपासनम् ॥ २२ ॥

उत्तराभिमुखं कृत्वा याम्यायां स्थापयेद् दिशि ।
तथाग्रे च समस्ताश्च भक्ता ये स्वामिनः स्थले ॥ २३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
सभाष्टकवेदीनिर्णयाधिकारो नाम सप्तसप्ततितमं सूत्रम् ॥

---

## (७८) महाराजाधिराजो नामाष्टसप्ततितमं सूत्रम् ॥

विश्वकर्मोवाच—

सभामध्ये तथा वेदी तत ऊर्ध्वे सिंहासनम् ।
पीठं ? पुष्पजाड्यकुम्भं सिंहवक्त्रं कनालिकम् ॥ १ ॥

गजाश्वनरपीठाढ्यं सिंहव्याघ्रैरलङ्कृतम् ।
अनेकसिंहरूपैश्च क्रमतो विकृताननाः ॥ २ ॥

सिंहासने महाराजः शोभते मणिदीप्तिभिः ।
यथा शक्रः सुरैर्युक्तो बालार्ककिरणोदितौ ॥ ३ ॥

चक्रवर्त्यर्धपतिश्च भूमिभक्त्या महीपतिः ।
एते वै तु महाराजा शेषाश्च मण्डलेश्वराः ॥ ४ ॥

मण्डलीकोऽधिसामन्तः सामन्तो लघुसंज्ञकः ।
चतुरंशिकाऽल्पराजाः शेषास्तु राजपुत्रकाः ॥ ५ ॥

स्वके स्वभुक्तानुसारे राज्यं कुर्वन्ति स्वेच्छया ।
अनेकभोगभोक्तारो राजक्रीडामनेकधा ॥ ६ ॥

तपसाराधितः पूर्वं महात्मभिरुमापतिः ।
तपसोऽर्थानुरूपैश्च राज्यं कुर्वन्ति भूतले ॥ ७ ॥

देवपूजार्चनं दानं पूज्यषड्दर्शनादिकम् ।
पुराणागमग्रन्थादि राजनीतिरनेकधा ॥ ८ ॥

पञ्चमात्रुद्भवं राज्यं नैककलादिकौशलम् ।
मातु(?)रेकैकोक्तगुणा नटेश्वरसमुद्भवाः ॥ ९ ॥

बृहच्छुश्रूषया माता द्वितीया पौरुषोद्भवा ।
स्त्रीणामङ्गोद्भवा माता गजमाता चतुर्थिका ॥ १० ॥

पञ्चमी चाश्वमाता च शेषा उपाङ्गवर्त्तिकाः ।
पञ्चमात्रुद्भवमिति इन्द्रराज्यसमं भवेत् ॥ ११ ॥

बृहच्छुश्रूषया वक्ष्ये प्रहरादिजयार्धकम् ?।
प्राप्ते प्रत्यक्षप्रहरे शय्यायां संस्थितो गतौ ? ॥ १२ ॥

शय्यास्थ उद्भवेद्राजा धर्ममूर्तिर्भवेत्सदा ।
गोदानयुक् स्वर्णपादं निक्षिपेत् प्रतिभूतलम् ॥ १३ ॥

दन्तकाष्ठादिकं स्नानमौषधादिकसंभृतम् ।
ततो देवार्चनं कृत्वा स्नापनालेप्य पुष्पतः ॥ १४ ॥

गन्धधूपनैवेद्यैश्च पूजां कृत्वा अरार्त्तिकम् ।
पुरोहिते ततो दानमपूर्वं सत्त्वादिकम् ॥ १५ ॥

राजा गुरूद्गतं दानं शैवशास्त्रेणपूजनम् ।
भटेन स्तुतितो बोध्यं येनान्ते दर्शनं भवेत् ॥ १६ ॥

गोपूजां च ततः कृत्वा योगिनीं च कुमारिकाम् ।
अनास्तिके कृपादानं शस्त्रार्थे तु निरोपणम् ॥ १७ ॥

वस्त्रशृङ्गारकं कृत्वा सिंहासनसुसंस्थितः ।
चतुष्कतिलकं कृत्वा प्रवृत्तस्तिलकेश्वरः ॥ १८ ॥

नरवीरभटाश्चैव प्रणमन्ति महीपतिम् ।
धर्मोपदेशं दत्वा च तथा जनसमाकुले ॥ १९ ॥

शृङ्गारं च ततः कृत्वा दिव्यालङ्कारशोभितम् ।
सभामण्डपे गवाक्षे महासिंहासने स्थितम् ॥ २० ॥

चतुष्कावसरे चैव वर्तते जनसंकुलम् ।
प्रणिपत्य समस्तैश्च मण्डलेश्वरकादिभिः ॥ २१ ॥

गजयुद्धं मेषयुद्धं विविधं मल्लयुद्धकम् ।
विधेयं छुरिकायुद्धं माहिषं कौर्कुटादिकम् ॥ २२ ॥

एषा पुरुषजा माता स्वीये स्वीये च राज्यके ।
वाटिकां च समाश्रित्य पूर्वाह्णे देवताश्रमम् ॥ २३ ॥

गजाश्वरथकोष्ट्रासिकिरीटच्छत्रसंकुलैः ।
अलम्बचिह्नपताकैः टका ? स्तम्भैरनेकशः ॥ २४ ॥

प्रतिष्ठाप्य पुरे प्रीत्या राजगेहे उमापतिम् ।
कण्ठस्नानादिकं कृत्वा मण्डपे च शनैः स्थितैः ॥ २५ ॥

प्रेक्षणीयं देवताग्रे वाद्यगीतनृत्यादिकम् ।
आरात्रिकं ततो दृष्ट्वा प्रदक्षिणविसर्जनम् ॥ २६ ॥

भुक्ताशनः स्थितो राजाऽग्रवृत्त्या जनसंकुलैः ।
भुक्त्वोत्तरं ततः स्थाने सैन्यावसरवर्त्तनम् ॥ २७ ॥

स्त्रीणामङ्गोद्भवा माता प्रवृत्तं जनसंकुलम् ।
अबला बाला स्त्रियश्च मुग्धाः प्रौढादिकास्तथा ॥ २८ ॥

एवं शय्यां महाराजः स्त्रीजनैः परिवेष्ठितः ।
निद्रानन्तरतो वत्स वर्तते जागृती दशा ॥ २९ ॥

तत्र रीत्युपयोग्यं च शृङ्गारं क्रियते पुनः ।
द्वादशादित्यसंकाशद्युतितोऽपि महान्परः ॥ ३० ॥

सभामध्ये समायातः स्थितः सिंहासने तथा ।
सर्वावसरकं तत्र प्रवृत्तं जनसंकुलम् ॥ ३१ ॥

द्वादशदण्डनायकाः प्रतीहारद्वयी तथा ।
अमात्यराजकरणाः श्रीकरणा वयस्कराः ॥ ३२ ॥

चत्वारो मण्डलेशाश्च मण्डलीकाश्च द्वादश ।
महासामन्ता द्विरष्ट सामन्ताश्च युगाष्टकाः ॥ ३३ ॥

लघवः षण्णुत्तरं चतुःशतं चतुरंशिकाः ।
शेषास्तु राजपुत्राश्च असङ्ख्यातास्तथैव च ॥ ३४ ॥

स्वर्णालङ्कारखचितैर्नैकरत्नैस्तु सङ्कुलैः ।
दिव्यशृङ्गारकैः सर्वे महाराजप्रत्यात्मिकाः ॥ ३५ ॥

गजाः शृङ्गारयुक्ताश्च आनीतास्तु महोत्कटाः ।
युध्यमानास्तथा कुर्यात्नवांश्च मारणे रतान् ॥ ३६ ॥

गजोद्भवा तत्र माता अश्वमाता संघोद्गमैः ? ।
परराष्ट्रोद्भवा ये च समये तत्र दर्शयेत् ॥ ३७ ॥

तस्यां ? मनोभवः कम्पः स्वराज्यं च स्वर्गात्पतिः ।
लघुराष्ट्रोद्भवा ये च प्रसङ्गे दर्शयेदपि ॥ ३८ ॥

महाराजाधिराजश्च परमेश्वरसंज्ञितः ।
भुवनैकनाथो महाराजचक्रचूडामणिः ॥ ३९ ॥

भूपालः सर्वकलाकुशलः उमापतिवरलब्धप्रतापतेजाः ।
तथाऽन्यनृपाद्यमुखदर्पणो धर्मादिप्रशस्यावतारः ॥ ४० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
महाराजाधिराजाधिकारो नामाष्टसप्ततितमं सूत्रम् ॥

———

## (७९) गजशालाप्रमाणहस्तिलक्षणकमेकोनाशीतितमं सूत्रम् ॥

विश्वकर्मोवाच—

लक्षणं गजशालानां कथयिष्याम्यनुक्रमात् ।
षट्त्रिंशद्भिः पदैर्भक्तं क्षेत्रं विंशतिभिः करैः ॥ १ ॥

वेदांशमध्यगर्भाढ्यं गजस्थानं महोत्तमम् ।
दृढस्तम्भं भवेन्मध्यं घटैर्नवकरैर्युतम् ॥ २ ॥

अलिन्दवेष्टितं भागे भागे भित्त्या च संयुतम् ।
विस्तरोच्छ्रयतुल्यश्च पट्टानामुदयो भवेत् ॥ ३ ॥

भित्तित्रयसमायुक्तं द्वारमग्रदिशान्तिके ।
छाद्यत्रयं क्रमयुक्तं घण्टाकलशभूषितम् ॥ ४ ॥

दन्तिनी नाम विज्ञेया शाला विघ्नहरी सदा ।
अलिन्दयुक्तं भूस्थानं भित्तिर्बाह्ये तु भागिका ॥ ५ ॥

तस्या द्वारप्रदेशे तु कर्त्तव्यौ कूर्परावुभौ ।
कर्णप्रासादिका कार्या द्वितीयालिन्दसंयुता ॥ ६ ॥

द्वे द्वे वातायने कुर्याद् द्विद्विदिक्षु त्रिभित्तिकाः ।
प्राग्ग्रीवोऽग्रे भवेच्छाला सुभद्रेयमुदाहृता ॥ ७ ॥

अस्या एव यदा स्यातां प्राग्ग्रीवौ पार्श्वयोर्द्वयोः ।
तदा सुभोगदा नाम तृतीया परिकीर्तिता ॥ ८ ॥

अस्या एव यदा पश्चात् प्राग्ग्रीवः क्रियतेऽपरः ।
भद्रिका नाम शाला सा तदा द्विरदपुष्टिदा ॥ ९ ॥

पञ्चमी चतुरश्रा स्याद् वर्धिणी नाम पूजिता ।
प्राग्ग्रीवालिन्दनिर्यूह-हीना षष्ठी तथा परा ॥ १० ॥

शाला प्रमारिका धान्यधनजीवितहारिणी ।
तदेतां वर्जयेदन्याः कुर्यात्सर्वार्थसिद्धये ॥ ११ ॥

प्रमाणमिति शालानां हस्तिशालाः क्रमोदिताः ।
षड्विधच्छन्दजा उक्ता वित्तजीवितवृद्धये ॥ १२ ॥

इति षड्विधा गजशालाः ॥

अथातः संप्रवक्ष्यामि हस्तिनां लक्षणं परम् ।
गजा भद्रो मृगो मन्द्रः सङ्कीर्णश्च चतुर्विधाः ॥ १३ ॥

मुखन्ये (स्य) द्विगुणा दैर्घ्यं दीर्घाजे जठरं भवेत् ? ।
जठरार्द्धं भवेद् गात्रं गात्रार्द्धं करमूलतः ॥ १४ ॥

मूलार्द्धं च भवेदग्रं तन्नल्या दंष्ट्रिकोत्तमा ।
दंष्ट्रास्थौल्यार्द्धनखाश्च क्रमेण परिकीर्तिताः ॥ १५ ॥

स्थिरास्थिरैर्न्यतस्यास्ता युग्मं कुम्भानुवृत्तोद्भवा ? ।
तस्याधो चाग्रगर्भे तु वायु (कतं) कुम्भास्तदोर्ध्वतः ? ॥ १६ ॥

कुम्भकारललिताङ्गुष्ठावुभौ दंष्ट्रानुमध्यतः ? ।
निम्न निम्ना दीर्घकरैर्भूप्राप्ते कदस्तकुण्डलीकृता ? ॥ १७ ॥

पद्मपत्रस्तदा तुङ्गं विपुलं कपोलं गम्भीरतः ? ।
सौम्यत्तमद् गण्डस्थलः श्रवणा शोपपर्णवाकृति ? ॥ १८ ॥

वायुकुम्भोभयपार्श्वे सूक्ष्म पिङ्गलोद्भवाः ? ।
हयखुराकारमेतद् दंष्ट्रावर्णश्च चम्पकः ॥ १९ ॥

अग्रे त चा द्रिसी पुच्छाग्रं पृष्ठ अधोन्नता ? ।
ग्रीवास्तु ललिताङ्गाश्च वृत्ता पादकोत्तमाः ? ॥ २० ॥

सुविस्तीर्णा यस्य कुक्षिरर्धचन्द्राकृतिर्नखः ।
सामान्यं मेढ्रमूलं च भद्राख्यः सर्वकामदः ॥ २१ ॥

वादित्रैश्च समुत्साही सङ्ग्रामे चैव दुर्धरः ।
सदानन्दोद्यतकरः प्रकरे सैन्यके पतिः ॥ २२ ॥

अविघ्नाक्षः साधुजने कालः क्रूरजने सदा ।
महोत्कटो हस्तिबिम्बे नृपदृष्टेऽतिनन्दकृत् ॥ २३ ॥

पूजनीयः सदा राज्ञः तद्दन्तश्रीर्महोत्तमा ।
तदेवानुप सकलापं ? सर्वानन्दकरो भवेत् ॥ २४ ॥

समुद्र सवक्ता सारी आपसेवालदंष्ट्रिणाम् ? ।
तस्य दन्ता भुजा राज्ञा ? धनुर्हस्ताबाणोत्तमैः ? ॥ २५ ॥

रिपुराजनृपाः सर्वे चिन्तात्मानो भयातुराः ।
आयुधत्यक्ताग्रतश्च स भवेद् भुवनेश्वरः ॥ २६ ॥

इति भद्रजातिलक्षणम् ॥

दीर्घवक्त्रः श्रीमुखश्चाऽपि निर्मांसकपोलकः ।
सुलोचनश्चलनेत्रः श्रवणद्वयातिक्रमः ॥ २७ ॥

भूम्यन्तं करदीर्घत्वं दन्तोर्ध्वं क्षामविस्तरम् ।
तनुर्दीर्घोदरं क्षामं लघुमारः पवनात्मजः ? ॥ २८ ॥

वातात्मजमहावेगोऽङ्कुशमानयते क्रमम् ।
उच्चनीचसमान् भागान् क्रमते शीघ्रचेतसा ॥ २९ ॥

वादित्रे रमणीयत्वं समुत्साहेन नन्दति ।
सङ्ग्रामे दुर्धरो घोर आरोहे चाऽऽक्रमेन्महीम् ॥ ३० ॥

शृङ्गारानन्दरूपैश्च करे शृङ्गारकं विना ।
मृगस्य लक्षणं चैतत् कथितं त्वपराजित ॥ ३१ ॥

इति मृगजातिलक्षणम् ॥

मन्द्रं च कथयिष्यामि शृणु चैकाग्रमानसः ।
सुभरौ कपोलावङ्गं आत्मा गम्भीर एव च ॥ ३२ ॥

बृहच्च जठरं कुक्षी विपुले विस्तृतेऽन्यतः ।
रक्ताक्षोऽधोवक्त्रकश्च क्षुद्रदृष्टिनिरीक्षकः ॥ ३३ ॥

दुःखितौ च यदा कुम्भौ आद्येकादिषु पते ध्रुवम् ? ।
मदं विना समोदश्च रतो वै तारकर्मणि ॥ ३४ ॥

कृष्णशिराः श्वेतदन्तो न क्षमे ? प्रतिबन्धकः ।
वादित्रैर्भाक्तिशब्दैश्च किञ्चित्कोपः प्रशाम्यति ॥ ३५ ॥

स्वसैन्ये परसैन्ये वा दुर्धरो रक्तगन्धतः ।
एवमादिगुणैर्युक्तो मन्द्रजातिर्गजोत्तमः ॥ ३६ ॥

इति मन्द्रजातिलक्षणम् ॥

वृत्तकाकारसंयुक्त आपादतलमस्तकम् ।
रूपवाँल्ललिताङ्गश्च दृढकायो लघुस्त्वहृत् ॥ ३७ ॥

जनाकुले भीचकितो वादित्रैर्गच्छति ध्रुवम् ।
प्रतिबिम्बेन प्रविष्टो दन्तं दत्ते न वै रथे ॥ ३८ ॥

अनेकाडम्बरं दृष्ट्वा त्रासमेति निनादतः ।
आरेकान्ते पारवश्ये शीघ्रपादगतिक्रमः ॥ ३९ ॥

भृङ्गो न दापयेत्तस्य ? दुर्धरः कारयेत्कलिम् ।
एभिर्गुणैश्च सम्युक्तो नाम्ना सङ्कीर्णको गजः ॥ ४० ॥

इति संङ्कीर्णजातिलक्षणम् ॥

अष्टौ वनानि ज्ञेयानि यतो गजसमुद्भवः ।
प्राचीलोहितके चैव पौरकौशलके अपि ॥ ४१ ॥

कच्छाख्यं चैव कृष्णाख्यं दाशेरं चैव सप्तमम् ।
अष्टमं माणिकं दण्डवनान्यष्टौ भवन्ति हि ॥ ४२ ॥

पूर्वे वेगवती तीरे प्राचीवनसमुद्भवः ।
जालन्धरकाश्मीरान्तं लोहितं वनमुच्यते ॥ ४३ ॥

वारुणोदधिमासाद्य वनं कच्छाभिधानकम् ।
गोदावरीदण्डकाख्यं कृष्णं तद्वनमुच्यते ॥ ४४ ॥

श्रीशैलः स्वामिदेवश्च मलयो नीलपर्वतः ।
त्रिकूटः पर्वताश्चैते वनं दाशेरसंज्ञकम् ॥ ४५ ॥

विन्ध्याख्यास्तु पर्यन्तं कलिङ्गरत्नपुरोदः ? ।
माणिकदण्डाभिधानं वनानामुत्तमोत्तमम् ॥ ४६ ॥

चौडबङ्गे कोशले च पौरे सौराष्ट्रके तथा ।
बदरीकोपकण्ठे च विदुर्घोरवनानि च ॥ ४७ ॥

प्राचीलोहितयोर्मध्यं सामान्यं पौरकौशले ।
कच्छे कृष्णे उत्तमं च दाशेर मणिकेऽधिकम् ॥ ४८ ॥

सामान्ये चैव सङ्कीर्णो मन्द्रश्चैवं तु मध्यमे ।
उत्तमे मृगरूपश्च भद्राख्यश्चोत्तमोत्तमे ॥ ४९ ॥

स्वके स्वक वने चव एककं च चतुर्विधम् ।
प्रमाणानि ततो वक्ष्ये हस्तसङ्ख्यादितः क्रमात् ॥ ५० ॥

सामान्यस्त्वेव षड्ढस्तो मध्यमः सप्तहस्तकः ।
उत्तमश्चाष्टहस्तो नवहस्त उत्तमोत्तमः ॥ ५१ ॥

मन्द्रो मृगश्च भद्रश्च सङ्कीर्णश्च चतुर्विधाः ।
प्रमाणानि च ख्यातानि कथितान्यपराजित ॥ ५२ ॥

हस्तिधामत्रयं कुर्यात् पञ्च पञ्च त्रयांकुशाम् ? ।
द्वाद (श) सम (मु) दोक्तव्या वंस्थाश्च दशमेव च ? ॥ ५३ ॥

पञ्च (श्चा) श्रम तत्र यतारा गन्ध सप्तविधोद्भवा ? ।
षड्वार हारत्रयकामं सप्तापशमको विदुः ? ॥ ५४ ॥

इतिसत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां गजशालाप्रमाणहस्तिलक्षणाधिकारो नामैकोनाशीतितम सूत्रम ॥

---

# (८०) अश्वलक्षणशाला नामाशीतितमं सूत्रम् ॥

विश्वकर्मोवाच—

गजाश्च कथिता वत्स अश्वाख्यानमतः शृणु ।
आदितेजोमया अश्वाः पारावारसमुद्भवाः ॥ १ ॥

तुरकाद्भवा विख्याताः प्रान्ता दक्षराष्ट्रोद्भवाः ।
महावनान्तरुद्वेगा ? वेण्या वेगवती तटे ॥ २ ॥

चञ्चलाश्चाँडदेशे च डाहाले प्रतिचारकाः ।
एते चाष्टविधा अश्वाश्चातुर्वर्ण्यं च कथ्यते ॥ ३ ॥

विप्रक्षत्रियविट्शूद्रा अश्वाश्चत्वार उत्तमाः ।
बहूदके प्रविष्टश्च पिबेत्तोयं शिरोद ये ॥ ४ ॥

स्थिरक्रमाद् गच्छति चाऽऽसने शुद्धमनाः स्थिरः ।
स्वामिनो रोहणे चेतः पश्यद्धृदयचक्षुषा ॥ ५ ॥

शब्दैश्च गर्जनाकारैः सङ्ग्रामे स्वामितारणः ।
एभिर्गुणैः समायुक्तः सोऽश्वो वै विप्रजातिकः ॥ ६ ॥

द्रुह्योत्प्रविष्ट उदकेऽन्यशब्दे विद्रुतो भवेत् ।
स्वामिनं रोहयेच्छुद्धश्चान्यं तु परिपातयेत् ॥ ७ ॥

सङ्ग्रामे दुर्धरश्चाश्वो जैत्रहारी प्रबुध्यति ।
कामातुरश्च शूरश्च जात्या क्षत्रियसंज्ञकः ॥ ८ ॥

पिबेच्च स्वेच्छया कामं तोयं जानुसमोदके ।
स्थिरासनः स्थिरोक्तेश्च स्थिरकायो युधिस्थिरः ॥ ९ ॥

एते अश्वा वैश्यसंज्ञास्स्युः शूद्रसंज्ञानतः शृणु ।
उदके चाऽप्रविष्टस्तु बाह्यस्थो हि पिबेज्जलम् ॥ १० ॥

वैश्ये तु मधुरः शब्दः शूद्रे वै कर्कशः स्वरः ।
क्षणं शुद्धासने स्वस्थः सङ्ग्रामे प्राञ्जलः क्षणम् ॥ ११ ॥

क्षणं तथातुरः स्त्रीणां क्षणं स्वस्थानमानसः ।
एते चाश्वाः शूद्रसंज्ञाश्चतुर्थज्ञातिका मताः ॥ १२ ॥

इत्युत्तमा मता अश्वाः शेषाः प्रकृतिजातकाः ।
इति ज्ञातिप्रभेदाः स्युः प्रमाणं सप्तधोत्तमम् ॥ १३ ॥

सुन्दरश्चाऽथ श्रीवत्स आह्लादश्च मनोहरः ।
विजयो विभवः शान्तः सप्ताऽश्वा उत्तमोत्तमाः ॥ १४ ॥

षष्ट्यङ्गुलः सुन्दरः स्याच्छ्रीवत्सश्चतुःषष्टिभिः ।
अष्टषष्टिभिराह्लादो द्वासप्तत्या मनोहरः ॥ १५ ॥

षट्सप्तत्या च विजयो विभवोऽशीतिभिस्तथा ।
चतुरशीतिभिः शान्तः प्रमाणं सप्तधा विदुः ॥ १६ ॥

ककुद्मान् कुम्भिकावांश्च कराली कृष्णतालुकः ।
हीनदन्तोऽधिकदन्तः षडश्वाः स्वामिघातकाः ॥ १७ ॥

अश्वशालां प्रवक्ष्यामि चतुःषष्टिकरायता ।
शतार्द्धहस्ता मध्या स्यात् चत्वारिंशत्करेतरा ॥ १८ ॥

पञ्चदशकरा ज्येष्ठा त्रयोदशाकरेतरा ।
कनिष्ठैकादशकरा पृथुत्वं त्रिविधं मतम् ॥ १९ ॥

सप्तपञ्चत्रिहस्तं च विस्तरे त्रिविधं स्मृतम् ।
द्विहस्तमुच्छ्रितं कुर्यात् क्रुरार्थे लक्षणान्वितम् ॥ २० ॥

तस्य बाह्ये भवेद् भित्तिरेकहस्ता च वेष्टने ।
पञ्चहस्तोच्छ्रिता भित्तिरर्थपञ्चस्वरोऽथवा ? ॥ २१ ॥

सप्तहस्तोच्छ्रितं कार्यमुदाढ्या ? पक्षस्तम्भकम् ।
तोरणं सप्तहस्तान्ते उत्तरस्तम्भको भवेत् ॥ २२ ॥

दण्डच्छाद्यत्रयोच्छ्रिता यावत्ताराढ्यस्तम्भकम् ।
तत्रान्तरपत्रोच्छ्रिता अङ्गुल्यो द्वादशाऽन्यतः ॥ २३ ॥

तदूर्ध्वे तु पुनः कुर्याद्दण्डच्छाद्यत्रयं तथा ।
कलशास्तत्र दातव्याः प्रतिक्षणमथोपरि ॥ २४ ॥

पूर्वापरमुखास्त्रस्तास्तेजोऽर्थप्रतापक्षयः ? ।
तेजोवृद्धिः क्षीयते च यथा कृष्णे निशाकरः ॥ २५ ॥

दक्षोत्तरमुखाः शस्ताः प्रतापकीर्तिवर्द्धनाः ।
नित्यं कल्याणकारिण्यः सर्वकामफलप्रदाः ॥ २६ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छाया-
मश्वलक्षणशालाधिकारो नामाशीतितमं सूत्रम् ॥

---

# (८१) राजालयसिंहासनछत्रप्रमाणमेकाशीतितमं सूत्रम् ॥

---

विश्वकर्मोवाच—

राजालयं च कथये प्रतापकीर्तिवर्द्धनम् ।
लक्षणं चोच्छ्रयं भूमेर्हस्तसङ्ख्याप्रमाणकम् ॥ १ ॥

एकच्छत्रप्रभोक्ता यः स भवेच्च महीपतिः ।
अष्टोत्तरशतहस्तैः कार्यं भवनमुत्तमम् ॥ २ ॥

पृथिव्याश्च यदा राजा भुङ्क्तेऽर्धं परमेव च ।
तस्य वेश्म प्रकर्त्तव्यं शतं हीनकरद्वयम् ॥ ३ ॥

तथा महीत्रिभागं च भुङ्क्ते यो वै नराधिपः ।
अष्टाशीतिकरं वेश्म महीशानां त्रिधा मतम् ॥ ४ ॥

लक्षग्रामाधिपो यस्तु स महामण्डलेश्वरः ।
तस्य वेश्म प्रकर्त्तव्यं द्विहीनाशीतिहस्तकम् ॥ ५ ॥

लक्षार्द्धं यस्तु भुङ्क्ते स मण्डलीकोऽभिधानतः ।
अष्टषष्टिकरं तस्य कर्त्तव्यं भवनोत्तमम् ॥ ६ ॥

अयुतद्वयग्रामेशो महासामन्तसंज्ञकः ।
तस्य वेश्माऽष्टपञ्चाशत्-करं कामफलप्रदम् ॥ ७ ॥

सामन्तसंज्ञकः सोऽत्राऽयुतग्रामाधिपश्च यः ।
अष्टचत्वारिंशद्धस्तं भवनं सर्वशोभनम् ॥ ८ ॥

ईशोऽयुतार्धग्रामाणां लघुसामन्तसंज्ञकः ।
अष्टत्रिंशत्करैर्युक्तं भवनं तस्य कामदम् ॥ ९ ॥

सहस्रमेकं ग्रामाणां भुङ्क्ते स चतुरंशिकः ।
वेश्माऽष्टाविंशतिकरं कुर्याच्छान्तिकरं सदा ॥ १० ॥

ग्रामाणां विंशतिं भुङ्क्ते यः पञ्चदशकं तथा ।
ग्रामांस्त्रीन्द्वौ तथा चैकं भुङ्क्ते पर्यायसंस्थितः ॥ ११ ॥

शतमेकं तु ग्रामाणां स्वल्पराष्ट्रं तु संज्ञितम् ।
अष्टादशकरं वेश्म कर्तव्यं सर्वकामदम् ॥ १२ ॥

अष्टादशकरमध्ये ताः कर्तव्याः क्रमेण तु ? ।
सोपानपङ्क्तिमर्यादा कथिता त्वपराजित ॥ १३ ॥

राजालये च यन्मानं तदर्धं दण्डनायके ।
तदर्धं मन्त्रिसंस्थानं मन्त्र्यर्धं द्वारपालके ॥ १४ ॥

पुरोहिते तत्समं च तदर्धं जनसंकुले ।
अनुक्रमादिदं सर्वं ज्येष्ठमध्यकनिष्ठकम् ॥ १५ ॥

अष्टहस्ते त्वेकभमं द्विभूममष्टादशके ।
त्रिभूममष्टाविंशत्याऽष्टत्रिंशद्भिर्वेदभूमम् ॥ १६ ॥

अष्टचत्वारिंशद्भिः पञ्चभु षड्भ्वष्टपञ्चाशद्भिः ।
अष्टषष्ट्या सप्तभूममष्टभ्वष्टसप्ततिभिः ॥ १७ ॥

अष्टाशीत्या नवभूमं दशभ्वष्टनवतिभिः ।
भद्रमेकादश भूममष्टोत्तरशतात्मके ॥ १८ ॥

सिंहद्वारानुक्रमं च कथये त्वपराजित ।
द्वारत्रयन्तूत्तमे च कर्त्तव्यं चक्रवर्तिभिः ॥ १९ ॥

उत्तमं पञ्चदश च मध्यमं च त्रयोदश ।
कनिष्ठं रुद्रहस्तान्तमुच्छ्रयेण तु योजितम् ॥ २० ॥

इदं सिंहद्वारमानं त्रिधा स्याच्चक्रवर्तिनि ।
महाराष्ट्रेश्वरे राज्ञि महामण्डलकेश्वरे ॥ २१ ॥

चक्रवर्तिनि मध्याद्ये कनिष्ठं मण्डलेश्वरे ।
अनन्तरं च कथये सिंहद्वारे यथाक्रमः ॥ २२ ॥

द्वारयुग्मं तु कर्त्तव्यं महासामन्तके सदा ।
द्वारमेकं तु कर्त्तव्यं तथा सामन्तकादिके ॥ २३ ॥

अन्येषां स्वल्पराज्यानां ये स्मृताश्चान्यसंज्ञकाः ।
तेषां च तोरणं दद्यात् सिंहद्वारविवर्जितम् ॥ २४ ॥

स्तम्भयुग्मोत्तरङ्गाद्यं सिंहकर्णैर्विभूषितम् ।
नपुंसकं विना कर्णैः स्वल्पराजेषु भाषितम् ॥ २५ ॥

स्तम्भयुग्मोर्ध्वतः कुर्यात्पत्रमालात्रयं तथा ।
विप्रेषु क्षत्रियोक्ताश्च मालायुग्मं च वैश्यके ॥ २६ ॥

एकमाला तु शूद्राणां स्तम्भोर्ध्वं वंशकोच्छ्रिता ।
वंशोच्छ्रिता विना स्तम्भैः प्रकृतीनां च सर्वशः ॥ २७ ॥

तोरणं कथितं वत्स आसनं शृणु साम्प्रतम् ।
आसनं कथयिष्यामि दिव्यमानेन सुव्रत ॥ २८ ॥

युक्तं च षष्टिपञ्चाशच्चत्वारिंशद्भिरङ्गुलैः ।
महाराजेषूचितं वै इत्थं सिंहासनं त्रिधा ॥ २९ ॥

भद्रासनं महाराष्ट्रे विलासे पद्मसंज्ञकम् ।
विस्तारिका तु सामन्ते चातुरी मन्त्रिमण्डले ॥ ३० ॥

अन्येषां स्वल्पराज्यानां दातव्यं तु मसूरकम् ।
गद्दिका पट्टगद्दी च सर्वस्मिञ्जनसंकुले ॥ ३१ ॥

आसनं सिंहसंज्ञं तु शयनं सुखमुत्तमम् ।
यानं सुखासनं चैव यानं तु रथ उच्यते ॥ ३२ ॥

यानं महागजपृष्ठं यानं विद्याद्विसारयोः ।
गजपृष्ठे च यद्बद्धं विद्धि तत्सिंहसंज्ञकम् ॥ ३३ ॥

व्याघ्ररूपं विद्धि शिखि-कलापकभवं पुनः ।
एवं विविधरूपाणि पताका छत्रमण्डलम् ॥ ३४ ॥

चतुरशीत्यङ्गुलं च व्यासे छत्रं च वृत्तकम् ।
द्विसप्तत्यङ्गुलं मध्यं षष्ट्यङ्गुलं कनिष्ठकम् ॥ ३५ ॥

शतार्धं प्रासादादाने ? शेषाः प्रावृट्सु छत्रिका ।
छत्राभिक्तरलीः युक्ता ? षोडशाङ्गुल लम्बिता ॥ ३६ ॥

हेमदण्डोर्ध्वे कलशं छत्रयुग्मं च भूपतेः ।
महामण्डलेश्वरे तु शिखिकलापशर्करी ॥ ३७ ॥

चामरालङ्कारयुक्तं महाराजेश्वरं विदुः ।
इत्येवमुक्तामाला च राज्ञाऽलङ्कारशोभना ॥ ३८ ॥

लक्ष्मीश्च रमते नित्यं तथा सा चक्रपाणिना ।
तपसार्थयता येन प्रतापकीर्तिवर्द्धनम् ॥ ३९ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
राजालयसिंहासनछत्रप्रमाणाधिकारोनामैकाशीतितमं सूत्रम् ॥

———

# (८२) राजभुवनं द्व्यशीतितमं सूत्रम् ॥

विश्वकर्मोवाच—

चतुरश्रीकृते क्षेत्रे भजेत्षोडशभागिकम् ।
पदसङ्ख्यामितः ख्याता षट्पञ्चाशच्छतद्वयम् ॥ १ ॥

ब्रह्माऽऽस्ते गर्भमावृत्य षट्त्रिंशत्पदकोष्ठकैः ।
रुद्रसङ्ख्यापदैर्युक्ता एकैके अर्यमादयः ॥ २ ॥

चतुष्पदाष्टकर्णेषु द्वात्रिंशत्पदकल्पिताः ।
बाह्यकर्णे तथा चाऽष्ट द्विपदा भक्तितो मताः ॥ ३ ॥

अष्टावष्टपदा ज्ञेयाः शेषास्तु चतुरंशकाः ।
जयः सत्योऽथ वितथो गन्धर्वसुग्रीवासुराः ॥ ४ ॥

मुख्यश्चैव गिरिःख्यातः प्रत्येकं चाऽष्टपादकाः ।
चूडामणिर्महाकूटो वास्तु राजालयार्थकम् ॥ ५ ॥

इति चूडामणिमहाकूटवास्तुः ॥

वेश्ममध्यं ब्रह्मस्थानं शयनं च विवस्वतः ।
भाण्डागारं क्षितिधरे मैत्रे वै वारिमन्दिरम् ॥ ६ ॥

अर्यम्णि सुरसौधं च कर्णान्तर्गुह्यवेश्मकम् ।
आग्नेय्यामनलस्यैवं नैर्ऋत्यां वस्त्रसङ्ग्रहः ॥ ७ ॥

वायव्येचाऽष्टधातूनामीशाने शिवभाण्डकम् ।
मध्यकर्णे इमे प्रोक्ता बाह्यांश्च शृणु साम्प्रतम् ॥ ८ ॥

ईशाने चाऽर्चनावेश्म आग्नेय्यां च महानसम् ।
कोष्ठागारं तु वायव्ये नैर्ऋत्ये शस्त्रमण्डपम् ॥ ९ ॥

याम्यस्थं वारुणस्थं च सौम्यस्थं चैव लक्षयेत् ।
इदं स्थानं राजपदं कर्त्तव्यं शान्तिमिच्छता ॥ १० ॥

यथोत्तरं मकराक्षं निर्गमे मकरान्वितम् ।
मत्तावरणछाद्यं च क्षेत्रपादैस्तु निर्गतम् ॥ ११ ॥

सभाष्टकयुकछन्देषु पूर्ववच्चाग्रनिर्गमः ।
वेद्युत्तरमुखं कार्यं पुष्पकं सिंहमासनम् ॥ १२ ॥

सुवर्णस्फटिकोपेतं नैकरत्नैर्विभूषितम् ।
पुष्पकं चतुःस्तम्भाढ्यं छाद्यघण्टाद्यलङ्कृतम् ॥ १३ ॥

हेमरत्नादिकोपेतं मुक्ताफलविभूषितम् ।
राजासनं मध्यपीठं कर्तव्यं शुभलक्षणम् ॥ १४ ॥

सिंहद्वारं तु तस्याग्रे गजक्रीडा याम्योत्तरे ।
सिंहद्वाराग्रतः कार्ये दन्तिशाले तथोभयोः ॥ १५ ॥

तदग्रे विजयद्वारं कर्णावुभौ च स्वाग्रतः ।
प्रतोल्या च तथोपेतं प्राकारैः परिवेष्टितम् ॥ १६ ॥

राजवेश्मोभयपक्षे राज्ञीनां भवनादिकम् ।
द्विभूमोच्छ्रयहीनानि शेषाणां क्रमयोगतः ॥ १७ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
राजभुवनाधिकारो नाम द्व्यशीतितमं सूत्रम् ॥

---

## (८३) पञ्चप्रतोली नाम त्र्यशीतितमं सूत्रम् ॥

विश्वकर्मोवाच—

प्रतोलीश्च प्रवक्ष्यामि कनिष्ठमध्यमोत्तमाः ।
उच्छ्रयस्त्रिविधो वत्स द्वारं प्राकारतोऽपि च ॥ १ ॥

प्रतोल्या द्वारउत्सेधः पञ्चदशकरैः शुभः ।
मध्यस्त्रयोदशकरै रुद्रहस्तैः कनिष्ठकः ॥ २ ॥

कनिष्ठमेकभूमं च द्विभूमं चैव मध्यमम् ।
उत्तमं च त्रिभूमं स्यात् त्रिधोदितक्रमागतम् ॥ ३ ॥

उत्तमं चाऽष्टहस्तैश्च सप्तहस्तैश्च मध्यमम् ।
कनिष्ठं चैव षड्ढस्तैर्विस्तारस्त्रिविधो मतः ॥ ४ ॥

नवहस्तोच्छ्रिताः स्तम्भाः कुम्भकैः सुसमन्विताः ।
ऊर्ध्वमेकद्वित्रिक्षणा मालिकाश्च ह्यनुक्रमात् ॥ ५ ॥

मदलाःशीर्षस्तम्भिका निर्यूहे मदलाः पुनः ।
स्वस्तिकाद्वयं शीर्षोध्व निर्यूहे मदलाः पुनः ॥ ६ ॥

शीर्षोर्ध्वे च भवेत्पट्टः शाखाद्यं चोत्तरङ्गकम् ।
तुला जयन्ती पीता सा ? निर्मलं कपिशीर्षकम् ॥ ७ ॥

तदूर्ध्वे च पुनर्भूमिश्चतुर्द्वारं तृतीयके ।
दृढार्गलाः कपाटाश्चाऽपवरकास्ततः परम् ॥ ८ ॥

वक्त्रद्वाराणि वक्ष्यामि प्रतोलीनां चतुष्टयम् ।
अनुक्रमेण कर्तव्यं कथयामि समासतः ॥ ९ ॥

उत्संगः पूर्णबाहुश्च हीनबाहुस्तथापरः ।
प्रतिकाय इति प्रोक्तं प्रतोलीनां चतुष्टयम् ॥ १० ॥

उत्तरामुख उत्सङ्गः पूर्णबाहुश्च पूर्वतः ।
अपरे हीनबाहुश्च प्रतिकायस्तु दक्षिणे ॥ ११ ॥

सृष्टिप्रवेश उत्संगः प्रतिकायोऽपसव्यतः ।
पूर्णबाहुः पूर्ववक्त्रो वामास्यो हीनबाहुकः ॥ १२ ॥

वामभागे दिशि दिशि वामावर्तोद्भवास्तु ये ।
द्वारं च दक्षिणावर्ते कथितं त्वपराजित ॥ १३ ॥

एकपोल्यं त्रिपोल्यं वा पञ्चपोल्यमथोच्यते ।
एवंविधः प्रकर्तव्यः पोल्यानां तु समुच्चयः ॥ १४ ॥

एकपोल्यं वक्त्रद्वारं त्रिपोल्यं भ्रमणीद्वयम् ।
पञ्चपोल्यं तु चित्राढ्यं कर्तव्यं सर्वकामदम् ॥ १५ ॥

प्राकारादियुक्तभागैर्विस्तरो भागषट्कतः ।
निर्गमश्च चतुर्भागैः प्राकारो यत्र वाञ्छितः ॥ १६ ॥

याम्यपार्श्वे समस्तत्र विस्तरस्तु त्रिभागिकः ।
निर्गमश्च त्रिभागैश्च संक्षेपात्कथितं मया ॥ १७ ॥

त्रिभागं दक्षिणे त्यक्त्वा द्विभागं च तथोत्तरे ।
व
शेषा प्रतोली चैकांशा भागं दक्षिणभित्तिका ॥ १८ ॥

भवेत् भागोत्तरा भित्तिः कर्णान्ते वलणं त्रिभिः ।
दक्षिणे भित्तिपार्श्वेऽग्रे कर्णान्ते वलणं त्रिभिः ॥ १९ ॥

द्विभागं विस्तरं कुर्याद् वक्त्रमार्गप्रवेशनम् ।
एकपोल्यमिति ख्यातं संक्षेपात्कथितं मया ॥ २० ॥

वामे द्विभागविस्तीर्णे अपरे दशभागिके ।
दक्षिणे समभागश्च चतुर्भागं परे स्थितम् ॥ २१ ॥

त्रिभागे विस्तरं याम्ये अपरेऽस्य तमपदम् ? ।
याम्ये कुर्याच्च वेदांशं मूलद्वारं तु कारयेत् ॥ २२ ॥

चतुर्भागाग्ररमणं भागा भित्तिर्याम्योत्तरे ।
भागा भित्तिस्तदग्रे च समद्वारं सतोरणम् ॥ २३ ॥

पुनर्भ्रमश्चतुर्भागः षड्भागश्चैव विस्तरे ।
विधेयं पूर्ववच्छेषं त्रिपोल्यं नाम शोभनम् ॥ २४ ॥

यथा वामे तथा दक्षे भित्तिर्भागा भुजान्ततः ।
मध्यभित्तिर्यथा पूर्वे चतुष्काकृति तोरणे ? ॥ २५ ॥

द्वारं द्वारस्य सूत्रेण भागिको भित्तिविस्तरः ।
पुनरन्ते चान्तरे च द्वारं द्वारतृतीयकम् ॥ २६ ॥

तद्वत्तल्यानि क्षेत्राणि कार्याणि शोभनानि वै ।
पूर्वद्वारानुक्रमेण उभे द्वारे याम्योत्तरे ॥ २७ ॥

वक्त्रद्वारं पुनस्त्वेवं कर्तव्यं दक्षिणोत्तरे ।
पञ्चपोल्यमिदं ख्यातं प्राकारः कपिशीर्षतः ॥ २८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां पञ्चप्रतोल्यधिकारो नाम त्र्यशीतितमं सूत्रम् ॥

---

## (८४) गृहग्रामनगरशोभा नाम चतुरशीतितमं सूत्रम् ॥

विश्वकर्मोवाच—

प्रतोलीपरतः सर्वे कार्या माडास्तथोत्तमाः ।
देवताग्रेषु सर्वत्र बलाणकोपरि तथा ॥ १ ॥

यतश्च भवनादग्रे माड उच्चैः प्रशोभते ।
कर्णेषु च समस्तेषु माडान् कुर्यात्सभूमिकान् ॥ २ ॥

राजद्वारे पञ्चभौमास्तुङ्गा माडाश्च शोभनाः ।
चतुःकर्णेषु श्रीहट्टाश्चत्वरे हट्टतः परम् ॥ ३ ॥

श्रीधरश्च श्रीगृहाख्यो माडस्तुङ्गस्सुशोभनः ।
दानाधिकरणं यत्र मण्डपाभिधमुच्यते ॥ ४ ॥

कर्तव्यो माडउत्तुङ्गस्त्रिभूमिश्च तथोत्तमः ।
घण्टाकलशशोभाढ्या कर्तव्या शुभलक्षणा ॥ ५ ॥

श्रीहट्टेषु समस्तेषु द्वितीयभूमिकोपरि ।
कार्या काष्ठचतुष्की तु मालाख्या छाद्यभूषिता ॥ ६ ॥

पट्टादिकं तु राज्ञीनां राजगेहस्य मध्यतः ।
पञ्चभौमं पट्टराज्ञ्याः शेषाणां तु त्रिभूमिकम् ॥ ७ ॥

माडाकृतिस्तु कर्तव्या पङ्क्त्यनुक्रमशोभिता ।
गृहाणां पिण्डवास्यादि यद् भवेद् वामदक्षिणम् ॥ ८ ॥

कुर्यादुपयकभूमेस्तथा काष्ठचतुष्किकाः ।
सर्वकामप्रदाः कार्याः कलशाश्छाद्यकोपरि ॥ ९ ॥

गजशालाः समाश्छाद्यघण्टाकलशसम्युताः ।
उन्नताः पञ्चकलशैः पट्टहस्ताधिकोद्भवाः ? ॥ १० ॥

सर्वं श्रीकरणाद्यं च राजाधिकरणं तथा ।
व्ययाधिकरणं चैव धर्माधिकरणं तथा ॥ ११ ॥

द्विभूमिकाः समस्ताश्च ऊर्ध्वे छाद्यचतुष्किका ।
घण्टाकलशशोभाढ्याः कर्तव्या लक्षणान्विताः ॥ १२ ॥

मालमौलिशुद्धशृङ्गं चतुःप्राकारसम्भवम् ।
सप्तभौमं नवभौमं कर्तव्यं राजमन्दिरम् ॥ १३ ॥

श्रीराजपुरमध्ये तु श्रीमाडा उत्तमाच्छ्रिताः ।
कलशैर्दिव्यशोभाढ्याः कर्तव्याः सर्वकामदाः ॥ १४ ॥

कुर्याद्धर्म्यादिगेहानां पट्टच्छन्दं जनाकुले ।
एकभौमा द्विभौमाश्च वरण्डय मालबन्धने ॥ १५ ॥

शेषाः संकीर्णजातानां छाद्याः कपिलिकाः क्रमात् ।
तस्य संकीर्णास्तु येषां तृणच्छाद्यादिसंभवाः ॥ १६ ॥

सालतालब्रह्मवृक्षैः शाकाद्यैश्च दलादिकैः ।
शुष्कैरनार्द्रैः ख्याताश्छाद्यास्तु वै गृहोत्तमाः ॥ १७ ॥

प्रावृषे भवेद् छिन्नानि गूढांस्तु पुरस्तारकाग्र ? ।
प्राकारस्य गुप्तिघटैरर्ध(ग्र) निर्गमतस्तथा ॥ १८ ॥

अधश्चाग्रं घनमूर्ध्वे संच्छन्नाः क्रमयोगतः ।
तदूर्ध्वे तु तृणैश्चाद्यं सपत्रैस्त्राणकारणम् ॥ १९ ॥

दोराकारैर्नालबन्धैर्विविधैश्च यथाक्रमम् ।
केवलर्दर्भकैश्छन्ना केचिच्च वीरणैस्तथा ॥ २० ॥

एवं समस्तं संच्छन्नं पुरग्रामगृहादिकम् ।
ग्रीष्मकालाभ्यन्तरेषु वृष्टिकाले न वै घने ॥ २१ ॥

अन्यभूम्यारोहणाय कार्यास्सोपानपङ्क्तयः ।
सदृशायामनिश्रेणिः सारदारुमयी तथा ॥ २२ ॥

विस्तीर्णैः फलकैः पट्टैः सोपानसदृशैस्तथा ।
सोपानानुक्रमैः स्थाप्यं गृहारोहणमुत्तमम् ॥ २३ ॥

पादोन्नतं शिरोभागे द्विहस्तानां तु विस्तरे ।
वंशं चोभयतः कुर्यात्कराधारं तु रोहणे ॥ २४ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
गृहग्रामनगरशोभाधिकारो नाम चतुरशीतितमं सूत्रम ॥

# (८५) गृहग्रामनगरशोभा नाम पञ्चाशीतितमं सूत्रम् ॥

विश्वकर्मोवाच—

राजपुरे च नगरे ग्रामे खेटे तु सुव्रत ।
पुराणां बाह्यतः कुर्यात् स्वस्था वै नगरोत्तमाः ॥ १ ॥

राजलिङ्गोद्भवां पूजां स्वयम्भूधर्मसोच्यते ? ।
पुरबाह्यतो ये देवा महारम्यांस्तुकारयेत् ॥ २ ॥

प्रतापतेजोभवं च स्वर्गे वा भूमिशासने ।
देवाभिधानतः कुर्यात् पूज्यं सुरनरोरगैः ॥ ३ ॥

अष्टद्वयष्टद्वात्रिंशद्भिः पुरैश्च परिवेष्टितम् ।
अष्टाविंशतिश्चतुर्विंशतिर्विंशत्याथ द्वादश ॥ ४ ॥

षोडशपुरसम्युक्तं ज्येष्ठं तन्नगरं भवेत् ।
मध्यमं द्वादशपुरैः कनिष्ठं दशभिः पुरैः ॥ ५ ॥

संस्थानेषु तत्र तत्र रम्यं कुर्यात्पुरं तथा ।
शिवाश्रमं महारम्यं वाटिकापरिवेष्टितम् ॥ ६ ॥

यः कारयेन्महारम्यं मठस्थानं तु दक्षिणे ।
त्रिभौमं पञ्चभोमं वा मध्ये वेदिसमन्वितम् ॥ ७ ॥

कारयेत् कपिलीगर्भे गर्भसूत्रेण मण्डपम् ।
जगत्या अग्रकर्णेषु समसूत्रे तथोच्यते ॥ ८ ॥

जगतीक्षेत्रमानेन मठस्यान्तरमादिशेत् ।
तदर्धं तु प्रकर्तव्यं पादोनांशमथापिवा ॥ ९ ॥

दक्षिणायामथाग्नेय्यां मठं वै सर्वकामदम् ।
नैर्ऋत्ये चैव वायव्ये शोकसन्तापकारकम् ॥ १० ॥

वारुणे चोत्तरे प्रोक्तं मोक्षदं मोक्षकारकम् ।
ईशान्यां पूर्वतश्चैव पूजितं दानपुण्यतः ॥ ११ ॥

जगत्युच्छ्रयत ऊर्ध्वं मठभूम्यादिकोच्छ्रये ।
मठं स्थाप्यं तदुपरि प्रशस्तं लक्षणान्वितम् ॥ १२ ॥

सुवेदीसहितं कुर्यात्तदूर्ध्वे भूमिकाक्रमम् ।
गूढं पञ्चापवरकैर्मैत्रस्थाने समाश्रितम् ॥ १३ ॥

इष्टध्यानालयं कुर्यात् प्रलीनास्तपशासने ।
एवं युक्त्या विधातव्यं द्वारसोपानसञ्चयम् ॥ १४ ॥

धूमनिर्गमसंयुक्तं दिश्याग्नेय्यां महानसम् ।
पुरतोऽग्रे तु संस्थाने कर्तव्यं सत्रमण्डपम् ॥ १५ ॥

संस्थानं पत्रसमिधामायुधानां तु नैर्ऋते ।
वापीकूपतडागं च वारुणे चोदकाश्रयम् ॥ १६ ॥

कोष्ठागारं तु वायव्ये भाण्डागारं तथोत्तरे ।
पुष्पागारं तथेशाने कर्तव्यं पट्टसंयुतम् ॥ १७ ॥

कुर्यान्मठस्योपरि च विद्याव्याख्यानमण्डपम् ।
वलभीकारमध्ये तु सगवाक्षं सदोगृहम् ॥ १८ ॥

गृहान्तराणि सर्वाणि सजलैः कदलैः शुभैः ।
पञ्चवर्णैश्च कुसुमैः शोभितानि प्रकल्पयेत् ॥ १९ ॥

प्राकारस्यान्तबाह्यांशं कपिशीर्षसमन्वितम् ।
हस्तान्तरे तस्य बाह्ये कर्तव्यं परिखादि च ॥ २० ॥

प्रतोली चाग्रतः कार्या कपाटपुटसंयुता ।
प्रतोल्यूर्ध्वे भूमिकोर्ध्वे वाद्यं समयसूचकम् ॥ २१ ॥

याम्योत्तरानुगाश्चैव प्राकाराः समसूत्रतः ।
निर्गमः सूत्रमानेन प्रतोल्यग्रसमन्वितः ॥ २२ ॥

युग्मं गृहाणां कर्तव्यं पक्षयोश्चैव सन्मुखम् ।
प्रासादस्य प्रमाणेन पादूनं वा तदुच्यते ॥ २३ ॥

एकभौमा द्विभौमा वा शाला निर्गमभूषिताः ।
मत्तवारणसंयुक्ता निर्मिताश्चित्रशालिकाः ॥ २४ ॥

जगत्यग्रे वामतश्च भिट्टं स्याद् भूमिकोच्छ्रितम् ।
महोत्सवे च वासन्ते तत्र हिन्दोलकं भवेत् ॥ २५ ॥

घटीस्थानोत्तरे कार्या विचित्रा नृत्यशालिकाः ।
वितानैः शालभञ्जीभिर्घण्टाछाद्यैर्विभूषिताः ॥ २६ ॥

तासामुत्तरतः कार्या दक्षिणे वामतोऽपि वा ।
अथवा वारुणे कुर्यात् क्षेत्रालाभे सुवाटिकाः ॥ २७ ॥

तासु वै विविधा वृक्षा जातिपुष्पाण्यनेकधा ।
सर्वे च देवतरवो नोपरिष्टाः समन्ततः ॥ २८ ॥

प्रियङ्गुशिरीषाशोका जीवे कंटकैः शुभैः ? ।
पुन्नागनागबकुलैः पाटलैर्बिल्वचम्पकैः ॥ २९ ॥

श्वेतमन्दारविजयाजातीतगरकुब्जकैः ।
अनङ्गैः सुवर्णपुष्पैश्च बाणा भ्रान्ताः काका(र)टकैः ? ॥ ३० ॥

मुद्गरैः शतपत्रैश्च रम्भाकाञ्चनपुष्पकैः ।
नारंगैः कर्णजम्बीरैस्तालतमालकेतकैः ॥ ३१ ॥

पनसैर्नारिकेलैश्च वृक्षैः पूगीफलैस्तथा ।
द्राक्षानागरवल्लीनां विविधैश्च लतागृहैः ॥ ३२ ॥

वापी चैवाथ कूपश्च दृढयन्त्रैरलङ्कृतः ।

तस्य बाह्ये तु प्राकारं कपिशीर्षविवर्जितम् ॥ ३३ ॥

परिखायास्तत्र बाह्ये सप्तहस्तप्रमाणतः ।
इन्दिरावासनं कुर्याद् देवदेवजगत्प्रभुः ॥ ३४ ॥

कृते याति पुरे रम्ये यत्र साक्षान्महेश्वरः ।
कैलाससदृशं रम्यं राज्यं यावत्तु मेदिनी ॥ ३५ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां गृहग्रामनगरशोभाधिकारो नाम पञ्चाशीतितमं सूत्रम् ॥

---

## (८६) महाराजाधिगृहशुद्धशेखरसंघाटमिश्रकच्छन्दनिर्णय-ब्रह्मनगरभूधराख्यगृहो नाम षडशीतितमं सूत्रम् ॥

---

विश्वकर्मोवाच—

अथातः सम्प्रवक्ष्यामि लक्षणं राजवेश्मनाम् ।
विभक्तिभागसङ्ख्यानां छन्दालङ्कारसम्युतम् ॥ १ ॥

क्षेत्रं विभज्य यत्नेन भागाः स्युः षोडशैव च ।
मध्ये शाला द्विभागा स्यादलिन्दः शेषभागतः ॥ २ ॥

क्षेत्रादौ विन्यसेद् गर्भे दक्षिणे करमात्रकम् ।
त्रिभागं वामतः कुर्यात् त्रिभागं चैव मध्यतः ॥ ३ ॥

षड्भागं विस्तृतं द्वारमायतं द्विगुणं तथा ।
द्विभागं ब्रह्मसंस्थानं सीमां तत्र प्रकारयेत् ॥ ४ ॥

शेषोऽलिन्दविधिर्युतया तन्मानं पुरतः शुभम् ।
तलच्छन्दमितिप्रोक्तमूर्ध्वमानमतः शृणु ॥ ५ ॥

सार्धत्रिभागसंयुक्ता चादिभूमिः समुच्छ्रिता ।
शेषा नवान्ताः सद्वृत्ताः पादहीना यथाक्रमम् ॥ ६ ॥

वेदीकण्ठं तथा पद्मं कलशं चाग्रशोभितम् ।
चतुर्विंशतितिलकैर्भागं कुर्यात्समुच्छ्रये ॥ ७ ॥

प्रवेशं स्तम्भवेश्मारु ? द्देशां सकमोद्गतः ? ।
प्रमाणमीदृशं चैव उपशोभां तथा पुनः ॥ ८ ॥

नानारूपसमाकीर्णं छाद्यघण्टाविभूषितम् ।
नानापुष्पकशोभाढ्यं चन्द्रशालासमन्वितम् ॥ ९ ॥

निर्यूहं निर्गमं श्रेयः ? सहश्चैवरनेकधा ? ।
शुद्धच्छन्दमिति प्रोक्तं सुशर्म चैव सुव्रत ॥ १० ॥

संघाटं कथयिष्यामि क्षेत्रभक्त्या द्विरष्टकम् ।
तेन क्षेत्रप्रमाणेन नवमं दक्षिणे भवेत् ॥ ११ ॥

ततश्च वामतो दद्यात् पूर्वतः पश्चिमं ततः ।
नवान्ते पञ्चमं भागं वामतो दक्षिणं तथा ॥ १२ ॥

मध्यतो ब्रह्मसंस्थाने सीमासूत्रं तु विन्यसेत् ।
सीमान्ते द्वावलिन्दौ च भित्तिर्भागा तदन्ततः ॥ १३ ॥

द्वावलिन्दौ च तत्पश्चाद् भित्तिभागः समः पुनः ।
भित्त्यन्तेऽलिन्द एकः स्यात्तदन्तेष्वन्तभित्तिभिः ॥ १४ ॥

गर्भच्छन्दमिति प्रोक्तं संघाटं कथयाम्यहम् ।
अलिन्दद्वयसंयुक्तं संघाटं तु विचिन्तयेत् ॥ १५ ॥

भित्तिभागं तु मध्यान्ते सीमांश्चैव द्विभागतः ।
भद्रान्ते निर्गमं तत्र छन्दे याम्योत्तरे न्यसेत् ॥ १६ ॥

तेनैव पश्चिमे दद्यादग्रांशं पुरतस्तथा ।
मुखशाला प्रकर्तव्या तलच्छन्दात्परा भवेत् ॥ १७ ॥

ततो गृहीत्वा क्षेत्रांशमङ्कयेद् भूमिकोच्छ्रयम् ।
मूलभूम्युच्छ्रयान्ते च चतुर्भागैस्तु कारयेत् ॥ १८ ॥

शेषास्तु पादहीनाश्च भूमयो नवसङ्ख्यया ।
तलच्छाद्यं तथा वेदी ग्रीवा घण्टा च छत्रकम् ॥ १९ ॥

कलशं तु शिखान्तं च त्रिभागैश्चैव लांछयेत् ।
ऊर्ध्वमानमिति प्रोक्तं रेखाश्चैव तु पूर्ववत् ॥ २० ॥

संघाटत्रयसंयुक्तं तच्च निर्द्धरिसंयुतम् ? ।
त्रिपुष्पकं प्रकर्तव्यं संघाटं गर्भमध्यतः ॥ २१ ॥

चतुःसंघाटकोपेतं षट्पुष्पकविभूषितम् ।
एवं तु कारयेद्वत्स दशमान्तं तु सुव्रत ॥ २२ ॥

तथा चन्द्रकलामेकामृजाक्षोभ ? शालभञ्जिका ।
छाद्यकपोतकलां तु निर्गता माडमालिका ॥ २३ ॥

संघाटं वीरभद्रं तु भित्तसंज्ञमुदाहृतम् ।
सप्तभौमं तु सद्गव्यं शुद्धच्छन्द नवान्तिकम् ॥ २४ ॥

एवं तु नवसंयुक्ता भूम्यः कार्यास्तु सुव्रत ।
राज्ञां विनिर्मिताश्चैता विचित्रास्त्वपराजित ॥ २५ ॥

त्रिसंघाटं महादिव्यं नाम्ना वै सुन्दरं गृहम् ।
पञ्चसीमं त्रिसंघाटं कथितं चैव सुन्दरम् ॥ २६ ॥

पुनरन्यं प्रवक्ष्यामि भेदोपभेदनिर्णयम् ।
नवसीमासमायुक्तं पञ्चसंघाटकं विदुः ॥ २७ ॥

नवपुष्पकसंकीर्णं सप्तघण्टाविभूषितम् ।
षोडशांशं शुद्धद्वयं संघाटषोडशं तथा ॥ २८ ॥

द्वादशांतं द्विसंघाटं वामदक्षिणसंस्थितम् ।
पश्चिमे चेदृशं छन्दं पुरतश्चैव तादृशम् ॥ २९ ॥

द्विर्द्विश्छन्देन दातव्यं भित्यष्टकसमन्वितम् ।
छन्दलक्षणसंयुक्तं पूर्वमर्मविवर्जितम् ॥ ३० ॥

पञ्चसंघाटसंयुक्तं षोडशाण्डकभूषितम् ।
तादृशं तादृशैर्युक्तं प्रस्तारः पूर्वतः स्मृतः ॥ ३१ ॥

सुन्दराख्यं महादिव्यं राज्ञां विजयकारणम् ।
तत्कर्तार एकछत्रं भोक्तारो भुवनत्रये ॥ ३२ ॥

मिश्रकं पूजयेच्चैव वास्तुं सूत्र सुरार्चितम् ।
अन्यथा वेधयेद् वत्स मिश्रकं वेधवर्जितम् ॥ ३३ ॥

चतुःषष्टिप्रभिन्नं च शतपाद्यापराजित ।
पूजयेद् वास्तुनी तत्र पूज्याः सर्वे पृथक् सुराः ॥ ३४ ॥

त्रिदशाः पूजिता येन त्रैलोक्यं सचराचरम् ।
एवं विचार्य कर्तव्यं न न्यूनं चाधिकं न हि ॥ ३५ ॥

इति महाराजाधिगृहशुद्धशेखरसंघाटमिश्रकच्छन्दनिर्णयाधिकारः ॥

संघाटकसमायुक्तं त्यक्त्वा पुष्पककोष्ठकम् ।
पूर्वापरवासराणामष्टपदौ च जायते ॥
- - - - - - - - - यांम्यकौबेरसंस्थितौ ॥ २१-२२ ॥

सर्वेषामीदृशश्छन्दश्चतुःषष्टिपदेषु च ।
ब्रह्मस्थानगृहाश्चैव पादानां च चतुष्टये ॥ २३ ॥

गृहाणां मानसङ्ख्या च द्वात्रिंशद्धस्तकैर्मता ।
उभयोर्ब्रह्मवंशस्य चतुर्थांशकराः स्मृताः ॥ २४ ॥

चत्वारो द्वादशमार्गाश्चत्वारो षोडशान्विताः ।
नवमार्गकृताः सङ्ख्या निर्मिता विश्वकर्मणा ॥ २५ ॥

सीमा करसहस्रं तु आयामो विस्तरः समौ ।
चतुःषष्टिपदं कुर्याद् ब्रह्मरन्ध्रप्रमाणतः ॥ २६ ॥

चतुर्मुखं चतुर्द्वारं चतुर्थक्ष ? पितामहम् ।
कारयेच्च स्वनगरे प्रासादं कमलोद्भवम् ॥ २७ ॥

स्थापयेच्च चतुर्वर्णं चतुर्दिक्षु यथाक्रमम् ।
महास्थानानि चत्वारि चतुर्वर्णाश्रितानि च ॥ २८ ॥

सीमान्तेषु च सर्वेषु चतुःषष्ठ्यादिसाधिते ।
प्राकारः सुदृढः कार्यो नवहस्तैः समुच्छ्रितः ॥ २९ ॥

नवहस्ता वृत्ता कार्या त्रिगूढा कण्डवारुणी ।
तत्तुल्योदयमानं च कपिशीर्षघनाकुलम् ॥ ३० ॥

कर्णे कर्णे तु कर्तव्या वृत्ताः कुड्मलशोभनाः ।
त्रिहस्तान्ते पुनः कुर्याद्योधविद्याधरी तथा ॥ ३१ ॥

तद्वद्भागप्रमाणेन कुर्यात् सिंहावलोकनम् ।
प्रत्योल्यन्तं चत्वरे तु चतुर्द्वाराणि कारयेत् ॥ ३२ ॥

द्वाराण्यग्रे खडक्कीनां शस्तानि शुभदानि च ।
खडक्की सर्वद्वारेषु कुर्यात्सोपानसंचयम् ॥ ३३ ॥

रथमार्गोचितं शस्तं प्रतोलीषु प्रवेशनम् ।
द्वारेषु च कपाटानि दृढार्गलयुतानि च ॥ ३४ ॥

पूर्वद्वारे ध्वजस्थाने कीर्तिस्तम्भं महोदयम् ।
तद्भद्रे तु प्रतिष्ठाप्य: कीर्तिपताक हस्तकः ॥ ३५ ॥

शिलोंछखननं त्राणं शय्यासनपट्टिका ।
नित्यकर्मस्थानस्थानं संध्यावन्दनकण्डिका ॥ ३६ ॥

गृहोपस्करं सर्वमायसकाष्ठकादिकम् ।
द्विजदेवाय दातव्यमात्मार्थं स्वर्गमानदम् ॥ ३७ ॥

भूम्यादिकं गजाश्वं च देशग्रामं च पत्तनम् ।
पयस्वती रथं छत्रं हेमरत्नादिभूषणम् ॥ ३८ ॥

सपत्नीकाय पूज्याय विप्रा देवैश्च पूजिताः ।
इन्द्रराज्यसमं राज्यं स्वर्गे वाऽथ धरातले ॥ ३९ ॥

धान्यसंचायकं ख्यातं नगरं नाम भूधरम् ।
देवलोकेषु विख्यातं पूज्यं सुरनरोरगैः ॥ ४० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां ब्रह्मनगरभूधराख्यगृहपञ्चाशत् सङ्ख्याधिकारोनामषडशीतितमं सूत्रम् ॥

## (८७) महाराजगृहमाडलक्षणं सप्ताशीतितमं सूत्रम् ॥

---

विश्वकर्मोवाच—

इदानीमभिधास्यामि यथावदनुपूर्वशः ।
महाराजगृहाः सर्वे जयश्रीकीर्तिवर्धनाः ॥ १ ॥

श्रीधरः श्रीगृहश्चैव प्रतापवर्धनस्तथा ।
लक्ष्मीविलासकश्चैव त्रैलोक्यविजयस्तथा ॥ २ ॥

नन्दनः श्रीनिवासश्च विमुक्तः पुष्पशेखरः ।
इन्द्रनीलो विमानश्च दिग्भद्रः क्षोणिभूषणः ॥ ३ ॥

गृहराजः सिद्धिकामो नन्दिघोषस्त्रिकूटकः ।
धराधरः श्रीतिलकः उत्तुङ्गः कमलोद्भवः ॥ ४ ॥

रतिगृहश्च सिद्धार्थः पृथिवीजयमन्मथौ ।
शत्रुमर्दननामा च षड्विंशतिरितिस्मृताः ॥ ५ ॥

अष्टोत्तरशतं ज्येष्ठं नवतिर्ज्येष्ठमध्यमम् ।
सप्ततिः कनिष्ठज्येष्ठं त्रिविधं ज्येष्ठमुच्यते ॥ ६ ॥

षष्टिश्च मध्यमे ज्येष्ठं पञ्चाशन्मध्यमध्यमम् ।
कनिष्ठं मध्यमं ज्ञेयं चत्वारिंशच्च सङ्ख्यया ॥ ७ ॥

अधमेऽग्र्यं पञ्चत्रिंशन् मध्यं त्रिंशत्कनिष्ठके ।
कनिष्ठं च कनिष्ठे स्यात् पञ्चविंशतिहस्ततः ॥ ८ ॥

एकैकं त्रिविधं चेत्थं ज्येष्ठमध्यकनिष्ठकम् ।
त्रिधा च पुनरेकैकं सप्तविंशतिमानकम् ॥ ९ ॥

श्रीधरं श्रीगृहं चैव शोभार्थं कारयेद्दृढम् ।
त्रियोविंशतिकं त्वेवं नित्यं कल्याणकारकम् ॥ १० ॥

चतुरश्रीकृते क्षेत्रे भाग एको विभाज्यते ।
चतुःस्तम्भसमायुक्तमेकद्वारेण भूषितम् ॥ ११ ॥

क्षेत्रभागोदयः स्तम्भे रहोभूफलकान्तरे ।
आदिभूम्युदयोर्ध्वे वै पीठबन्धं प्रकल्पयेत् ॥ १२ ॥

उदये नवभिर्भक्ते भागेनैकेन कुम्भिका ।
चतुरश्राष्टाश्रवृत्तः स्तम्भ ऊर्ध्वे चतुष्कतः ॥ १३ ॥

तदूर्ध्वे तु विधातव्यं भागोनं व्यालकं तथा ।
हीरग्रहणकं कार्यं भागं पादविवर्जितम् ॥ १४ ॥

सपादभागिकः पट्टस्तन्त्रकेन समन्वितम् ।
भागार्धेन जयन्ती च भमिर्भूमिष्वयं क्रमः ॥ १५ ॥

गुणरागान्विता भित्तिश्छाद्यद्वाराणि यानि तु ।
तत्र छाद्यत्रयं कार्यं वेदीघण्टासमन्वितम् ॥ १६ ॥

ज्वलद्गौक्यासनं वेद्यां मत्तावरणभूषितम् ।
अर्धोदये प्रकर्तव्यो माडः श्रीधर उत्तमः ॥ १७ ॥

इति श्रीधरः ॥

एतस्मिन्नेव संस्थाने सीमासूत्रविधिर्भवेत् ।
निर्गमः सूत्रमानेन भद्रान्तस्य विधीयते ॥ १८ ॥

द्वादशास्तम्भसंयुक्त एकद्वारेण भूषितः ।
सार्धभूमिसमायुक्तः श्रीगृहः श्रीविवर्द्धनः ॥ १९ ॥

इति श्रीगृहः ॥

प्रतापवर्द्धनस्यैवं लक्ष्म साम्प्रतमुच्यते ।
पञ्चविंशतिहस्तैश्च सार्धभागत्रयाङ्कितम् ॥ २० ॥

चत्वारो मध्यतः स्तम्भा द्वादशाऽलिन्दभागतः ।
पादा भित्तिर्विधातव्या चतुर्द्वारोपशोभिता ॥ २१ ॥

भद्रभागाश्चतुर्दिक्षु चतुःस्तम्भविभूषिताः ।
द्वात्रिंशत्स्तम्भकैर्युक्तो बाह्याभ्यन्तरतस्तथा ॥ २२ ॥

द्वितीयभूर्ध्वे माडाश्च सार्धभूमित्रयोच्छ्रिताः ।
प्रतापकीर्तिकृन्नित्यं प्रतापवर्द्धनाभिधम् ॥ २३ ॥

इति प्रतापवर्ध्धनः ॥

प्रतापवर्द्धने भद्रं त्रिभागं चैव विस्तरे ।
मुखभद्रं चैकभागं दशस्तम्भसमन्वितम् ॥ २४ ॥

माडं द्वितीयभूम्यूर्ध्वे सार्धपञ्चकभूमिकम् ।
लक्ष्मीश्च रमते तत्र लक्ष्मीविलास उच्यते ॥ २५ ॥

इति लक्ष्मीविलासः ॥

त्रिभागायामविस्तारः एदिकं मुखभद्रकम् ।
त्रीणि स्युर्मुखभद्राणि स्तम्भा द्वाविंशतिस्तथा ॥ २६ ॥

बाह्याभ्यन्तरतः स्तम्भाः शतं च चतुरुत्तरम् ।
तृतीयभूर्ध्वे माडाश्च सार्धषड्भूमिकास्तथा ॥ २७ ॥

इति त्रैलोक्यविजयः ॥

मध्यभित्तिं परित्यज्य तत्र भद्राणि योजयेत् ।
त्रिभागायामविस्तारो भद्रं द्वादशद्वारकम् ॥ २८ ॥

श्रीगृहच्छन्दकाकारे चतुःषष्टिस्तु स्तम्भकाः ।
तृतीयभूर्ध्वे माडाश्च सार्धपञ्चकभूमिकाः ॥ २९ ॥

इति नन्दनः ॥

पञ्चविंशतिपात्क्षेत्रे स्तम्भाः षट्त्रिंशदेव च ।
पट्टिका तस्य भित्तिश्च चतुर्द्वारोपशोभिता ॥ ३० ॥

पादं पादं मुखभद्रं त्रयं भद्रं नवाङ्घ्रिकम् ।
भद्रे द्वाविंशतिः स्तम्भा अष्टाशीतिश्चतुर्दिशम् ॥ ३१ ॥

सचतुर्विंशतिशतं स्तम्भा बाह्ये तथाऽन्तरे ।
तृतीयभूर्ध्वे माडाश्च सार्धपञ्चकभूमिकाः ॥ ३२ ॥

इति श्रीनिवासः ॥

पूर्वभद्रं नवपदं त्रिपदं मुखभद्रकम् ।
भद्रेस्तम्भाश्चतुस्त्रिंशत् षट्त्रिंशदुत्तरं शतम् ॥ ३३ ॥

बाह्याभ्यन्तरतः स्तम्भा द्वासप्तत्युत्तरं शतम् ।
तृतीयभूर्ध्वे माडाश्च सार्धषड्भूमिकास्तथा ॥ ३४ ॥

इति विमुक्तः ॥

त्यक्त्वा भित्तिं मध्यक्षेत्रे सप्तांशैर्विस्तृतायतम् ।
पञ्चविंशतिपाद्भद्रे त्रिकं च मुखभद्रके ॥ ३५ ॥

मध्ये स्तम्भाश्चतुःषष्टिः षड्त्रिंशद् भद्रके तथा ।
बाह्याभ्यन्तरतः स्तम्भा अष्टाधिकशतद्वयम् ॥ ३६ ॥

तृतीयभूर्ध्वे माडाश्च सार्धषड्भूमिकाः स्मृताः ।
पुष्पबाणादिकोपेतो भवेत्कुसुमशेखरः ॥ ३७ ॥

इति कुसुमशेखरः ॥

द्विपादमुखभद्राणि त्रिपदं सर्वतो भवेत् ।
अष्टाविंशत्यधिकं च स्तम्भा भूम्यश्च पूर्ववत् ॥ ३८ ॥

इतीन्द्रनीलः ॥

पूर्वभद्राणि संत्यज्य त्रिभागैर्भद्रनिर्गमः ।
भद्रं तदुभयपक्षे त्रिभागायामविस्तरः ॥ ३९ ॥

षष्टिस्तम्भाः प्रतिभद्रं चतुःषष्टिस्तु मध्यमे ।
शतत्रयं च चत्वारः स्तम्भा बाह्ये तथान्तरे ॥ ४० ॥

सार्धषड्भूमिकाश्चाथ भद्राणि श्रीगृहे तथा ।
समस्तं पुष्पकाकारं विमानं नृपशान्तिदम् ॥ ४१ ॥

इति विमानम् ॥

भद्रभद्रेषु सर्वेषु पदिकं मुखभद्रकम् ।
पूर्वभूमिसमत्वेन नाम्ना दिग्भद्रकं च तत् ॥ ४२ ॥

इति दिग्भद्रम् ॥

चतुरस्त्री कृते क्षेत्रे करशातोद्भवेदध्रुकम् ? ।
अष्टाष्टकविभक्ते तु गर्भः स्यात्सप्तभागतः ॥ ४३ ॥

अष्टभागा भवेद् भितिश्चतुर्द्वारोपशोभिता ।
पञ्चविंशत्यङ्घ्रि भद्रं स्तम्भाः षट्त्रिंशदुत्तमाः ॥ ४४ ॥

प्रतिभद्रत्रिकं भद्रे षट् स्तम्भाः प्रतिभद्रके ।
द्विःषट्त्रिंशच्चैव भद्रे भद्रेषु स्युर्द्विसप्ततिः ॥ ४५ ॥

तत्तुल्यानि च भद्राणि चतुःषष्टिस्तु स्तम्भकाः ।
तृतीयभूर्ध्वे माडाश्च सार्धे षड्भूमिकास्तथा ॥ ४६ ॥

इति क्षोणीभूषणः ॥

प्रत्येकं त्रिपदं भद्रं मुखे कुर्यात्समन्ततः ।
एकपादं मुखभद्रं सर्वदिक्षु तथाग्रतः ॥ ४७ ॥

भद्रे स्तम्भास्तु षट्षष्टिश्चतुःषष्टिस्तु मध्यतः ।
गृहराजस्तु तन्नाम सार्धषड्भूमिकश्च सः ॥ ४८ ॥

इति गृहराजः ॥

नवपादं प्रतिभद्रं मुखभद्रत्रयं पदम् ।
तृतीयभूर्ध्वे माडाश्च सार्धसप्तकभूमिकाः ॥ ४९ ॥

इति सिद्धिकामः ॥

कक्षयोर्भद्रभित्ती द्वे द्विपदौ कर्णयोस्तथा ।
पदार्धेन भित्तिकोणमूर्ध्वे तु भूमिकावधि ॥ ५० ॥

भद्राग्रकर्णयोश्चैव पञ्चपात्स्वस्तिकाकृतिः ।
दशभूर्ध्वे चैव शेषाः सुग्रीवसदृशास्तथा ॥ ५१ ॥

कर्णयोश्चैव चत्वारोऽन्तर्भागैश्च विनिर्गताः ।
अशीतिस्तम्भभद्रैश्च सार्धसप्तकभूमिकाः ॥ ५२ ॥

इति नन्दिघोषः ॥

अचाल्यपक्षभद्राण्यश्वतारं मूलभद्रकम् ।
निर्गमश्चैव षड्भागः पूर्वभूमिसमोच्छ्रितः ॥ ५३ ॥

इति त्रिकूटः ॥

त्यक्त्वा च कर्णभद्राणि मूलभद्रविनिर्गतम् ।
त्रिभागं नवनिष्काशं तादृग् भित्तिः पुनस्त्रिभिः ॥ ५४ ॥

षष्टिस्तम्भाः प्रतिभद्रे चतुःषष्टिस्तु मूलके ।
तत्तुल्यं च भवेन्मध्ये सार्धसप्तकभूमिकाः ॥ ५५ ॥

इति वसुधाधरः ॥

मध्यभित्तिं परित्यज्य भद्रं भद्रेषु योजयेत् ।
कार्याणि पक्षभद्राणि अग्रभद्रोपमानि च ॥ ५६ ॥

चत्वारि मुखभद्राणि चत्वारः कर्णसम्पुटाः ।
सार्धसप्तकभूम्यश्च श्रीतिलकः स कामदः ॥ ५७ ॥

इति श्रीतिलकः ॥

भद्रं त्यक्त्वा सम्पुटे च षट्त्रिंशत्पदसंस्थितः ।
मुखभद्रं नवपदमुत्तुङ्गः पूर्वभूमिकः ॥ ५८ ॥

इत्युत्तुङ्गः ॥

चतुरश्रीकृते क्षेत्रे दशधा प्रविभाजिते ।
एकाशीतिपदो गर्भो ह्यर्धभागा च भित्तिका ॥ ५९ ॥

सप्तसप्तपञ्चत्रीणि पदसङ्ख्या तु भद्रके ।
स्तम्भा भद्रे चतुस्त्रिंशच्छतस्तम्भास्तु मध्यतः ॥ ६० ॥

सार्धसप्तभूमिकाश्च नाम्ना स कमलोद्भवः ।
पद्मपत्रोपमा चैव नित्यं श्रीस्तत्र क्रीडति ॥ ६१ ॥

इति कमलोद्भवः ॥

सप्तचाऽऽयामविस्तारे भद्रं स्याच्च चतुर्दिशम् ।
षट्पदानि प्रतिभद्रे त्रीणि त्रीणि च भद्रके ॥ ६२ ॥

चतुरशीतिस्तम्भके च शतं वै गर्भमध्यतः ।
तृतीयभूर्ध्वे माडाश्च सार्धसप्तकभूमिकाः ॥ ६३ ॥

इति रतिगृहः ॥

मुखभद्रं पुनर्दद्यात्स्तम्भद्वयविभूषितम् ।
पूर्वभूमिगुणोपेतो भवेत् सिद्धार्थकः स च ॥ ६४ ॥

इति सिद्धार्थकः ॥

मुखभद्रं परित्यज्य मूलभद्रं च पूर्ववत् ।
अग्रकर्णे तु चत्वारि श्रीगृहाकारवत्तथा ॥ ६५ ॥

भित्तिकर्णलताश्चाष्टौ द्विपदाश्च प्रकल्पयेत् ।
चतुर्भूम्यूर्ध्वमाडांश्च तथा सार्धाष्टभूमिकाः ॥ ६६ ॥

इति मन्मथः ॥

प्रतिभद्रे मुखभद्रं षट्स्तम्भैस्त्रिपदैस्तथा ।
विच्छिन्नांश्च चतुःकर्णान् कुर्यात् प्रतापवर्द्धनम् ॥ ६७ ॥

लक्ष्मीविलासके चाऽग्रे भद्रे भद्रे विच्छिन्नता ।
अष्टौ माडास्तस्य बाह्ये महामाडो ह्यधोभवः ॥ ६८ ॥

चतुर्थभूम्यूर्ध्वमाडाः स्युः सार्धनवभूमिकाः ।
शत्रून्मर्दयते शीघ्रं नाम्ना वै शत्रुमर्दनः ॥ ६९ ॥

इति शत्रुमर्दनः ॥

छन्दा माडो मोडगुढो शेखरो वेदसङ्ख्यकाः ।
प्रोक्तास्तु राजवेश्मानि वर्द्धन्ते श्रीधरादितः ॥ ७० ॥

सर्वे स्युस्ते समालिन्दा माडाश्छन्दाद् भवन्ति ये ।
अत ऊर्ध्वे संवरणा घण्टाकलशभूषिताः ॥ ७१ ॥

क्षेत्रस्यात्र दशांशेन आदिभूमिः समुच्छ्रिता ।
त्रिभागेश्चैव तद्भूमेर्द्वारस्य तूदयो भवेत् ॥ ७२ ॥

आदिभूम्युदयार्धेन पीठं चास्य समुच्छ्रितम् ।
पीठोर्ध्वे भूमयः शेषा द्वादशांशेन ह्रासिताः ॥ ७३ ॥

दण्डच्छाद्यं मल्लच्छाद्यं मुखपत्रैर्विभूषितम् ।
किङ्किणीपट्टसंयुक्तं कर्तव्यं मल्लच्छाद्यकम् ॥ ७४ ॥

वस्त्रवितानकोपेतं सुवर्णकलशान्वितम् ।
तस्करसमराद्यं च भेदं यत्नेन वर्जयेत् ॥ ७५ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां महाराजगृहमाडलक्षणाधिकारो नाम सप्ताशीतितमं सूत्रम् ॥

## (८८) धारागिर्युद्यानलक्षणमष्टाशीतितमं सूत्रम् ॥

विश्वकर्मोवाच—

धारागृहं प्रवक्ष्यामि वाटिकानां च लक्षणम् ।
पुरस्यान्तरतो वत्स ज्ञात्वा भूमिं विशोधयेत् ॥ १ ॥

वाटिका रोपयेत्तत्र ज्येष्ठमध्यकनिष्ठिकाः ।
धनुःशतत्रये ज्येष्ठा मध्या धनुःशतद्वयात् ॥ २ ॥

धनुः शतैः कनिष्ठा स्याच्चतुरश्रा च भूमिका ।
सषण्णवतिशतपाद् वास्तौ देवान् समर्चयेत् ॥ ३ ॥

योगिनीर्दश नाना ? च ब्रह्माणं च कुमारिकाः ।
सूत्रधारमथाचार्यं क्षेत्रपालं च भैरवम् ॥ ४ ॥

विश्वकर्मा ततः पूज्यो दिक्पाला लोकपालकाः ।
गणनाथश्चण्डिका च तस्य क्षेत्रस्य देवताः ॥ ५ ॥

क्षमापयेत् सर्वदेवान् ततः कर्म समाचरेत् ।
विविधक्षेत्रमानेन तत्र वास्तुं प्रकल्पयेत् ॥ ६ ॥

ब्रह्मक्षेत्रे प्रकर्तव्यं धाराख्यं मण्डपं शुभम् ।
केतकीबहुलारम्भाः पुष्पजातिरनेकधा ॥ ७ ॥

श्रीजातिस्तु लवङ्गानि एलाकर्पूरपादपाः ।
चन्दनाश्चैव कङ्कोला ब्रह्मस्थाने प्रकल्पिताः ॥ ८ ॥

प्राच्यामुत्तरपर्यन्तं वास्तुकारो निवेशयेत् ।
विटपाद्रिलतावल्लीः कुर्याद् द्वौसता?स्थिताः ॥ ९ ॥

स्थानेऽर्यम्णस्तु नारंगाः सवितुर्नलिकानि च ।
सावित्रे च पदेऽक्षः स्याद् दाडिमास्तु विवस्वतः ॥ १० ॥

कुर्यात् शीतलं चैन्द्रेऽशोकमेन्द्रजये पदे ।
मैत्रस्थाने च जम्बीरा रुद्रे तालतमालकाः ॥ ११ ॥

रुद्रदासेऽभयां प्राज्ञ आम्रकं भूधरे पदे ।
विद्यान्मधूकमापे च आपवत्से च चम्पकम् ॥ १२ ॥

माहेन्द्रे मण्डपं कार्यं कदलीवनशोभितम् ।
गृहक्षते च बृहतीं द्राक्षामण्डपमुत्तमम् ॥ १३ ॥

पत्रैरलङ्कृतं चाक्षवृक्षैः सावित्रमाश्रितैः ।
- - - - - - - - - - - - - - - - - - ॥ १४ ॥

अम्बालिकापुष्पयुक्तं पुष्पदन्ते तु मण्डपम् ।
आदित्ये जलपत्रं च स्थलपद्मोपशोभितम् ॥ १५ ॥

क्रीडापुष्करिणि कार्या नागवल्ली च वारुणे ।
तथा भल्लाटके वंशाः प्रोक्ताः पातालमापकाः ॥ १६ ॥

द्राक्षाभिर्मण्डपं सौम्ये नारिकेलोपशोभितम् ।
ईशाने शिववृक्षं च देवदारुं प्रकल्पयेत् ॥ १७ ॥

हयमारं चक्रचारं पर्जन्ये नाऽत्र संशयः ।
जये कदम्बोऽश्वत्थश्च सत्ये कुर्याच्च पाटलान् ॥ १८ ॥

भृशे श्यामलिका ज्ञेया न्यग्रोधाश्चान्तरिक्षके ।
इन्द्रपुष्पास्तथा चाग्नौ ईश्वरी चैव पूषणि ॥ १९ ॥

जम्बुवृक्षश्च वितथे गन्धर्वे च हरीतकी ।
आकीर्णाः पनसा भृङ्गे खर्जूरा मृगराजमुखे ॥ २० ॥

हिङ्गुल्युदुम्बरौ पित्र्ये तिलको नन्दिके तथा ।
शुभाः कपित्थाः सुग्रीवे भ ? पारवोटैस्तथाऽसुरे ॥ २१ ॥

शोषे पिप्पलिका ज्ञेया शिरीषा पापयक्ष्मके ।
औषधी रोगसंस्थाने नागे टंकारिपाटलाः ॥ २२ ॥

मुखे च वंशतिलकाः शैले वै बीजपूरकाः ।
अदितौ ग्रन्थिपर्णश्च कुङ्कुमश्चाधिको भवेत् ॥ २३ ॥

शतपत्रं दितौ ज्ञेयं शेषा वै पदबाह्यतः ।
महेन्द्रादित्ययोर्द्वारं प्रतिसन्धौ न संशयः ॥ २४ ॥

प्रवेशो निर्गमस्तावद् ज्ञातव्यस्तु सदा बुधैः ।
विषवृक्षैस्तथा रक्ष्यः कटुकैः कण्टकान्वितैः ॥ २५ ॥

देवतापदवृक्षांश्च योऽन्यथा विनियोजयेत् ।
तस्य राष्ट्रे शरीरे च निर्दिशेद्रोगतो भयम् ॥ २६ ॥

ईदृशेन विधानेन उद्यानं यस्तु कारयेत् ।
लभते शाश्वतान् भोगान् यथेन्द्रश्चामरालये ॥ २७ ॥

यदि न प्राप्यते वत्स चन्दनादि महीतले ।
सुलभास्तत्र संयोज्याः प्रशस्ता लक्षणान्विताः ॥ २८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां धारागिर्युद्यानलक्षणाधिकारो नामाष्टाशीतितमं सूत्रम् ॥

———

## (८९) जलयन्त्रलक्षणकमेकोननवतितमं सूत्रम् ॥

———

विश्वकर्मोवाच—

पदैर्द्वादशभिर्वास्तु योजयेज्जलयन्त्रके ।
पदस्थाने तथा देवान् पश्चात् कर्म समाचरेत् ॥ १ ॥

कृते सप्तपदे क्षेत्रे ब्राह्मभद्रं पदत्रये ।
विंशतिस्तम्भसम्युक्तं पट्टिका स्तम्भशालिका ॥ २ ॥

मध्ये चतुष्किका कार्या ब्रह्मणः पदमाश्रिता ।
वेदिकास्तत्र कर्तव्याश्चतुर्विंशतिपादयुताः ॥ ३ ॥

वास्तुं प्रपूजयेत्प्राज्ञो जलयन्त्रोचितं तथा ।
षोडशाङ्घ्रिसमायुक्तमन्यथा दोषकृद् भवेत् ॥ ४ ॥

चतुरश्रं समं क्षेत्रं स्तम्भैर्द्वादशभिर्युतम् ।
पद्माकृति शुभं मध्ये जलयन्त्रं तु सुव्रत ॥ ५ ॥

अनभावृष्टिः कर्तव्या आयुवास्तुसमन्वितम् ? ।
नानाविचित्ररूपाणि चतुर्दिक्षु प्रकल्पयेत् ॥ ६ ॥

चतुरश्रीकृते क्षेत्रे सप्तभागविभाजिते ।
भद्राणि त्रिपदानि स्युः कोणे कूपाश्च कारयेत् ॥ ७ ॥

विषमाः कूपिकाः कार्याः समा वै दोषदास्तथा ।
यन्त्रतो द्विगुणोच्छ्रायं त्रिगुणं च तथायते ॥ ८ ॥

अधस्तात्तु पुनर्मध्ये धारागृहं मण्डपं शुभम् ।
स्तम्भैर्द्वादशभिर्युक्तमेकेन कलशेन च ॥ ९ ॥

चतुष्किकाश्चतुर्दिक्षु द्वौ द्वौ स्तम्भौ च कल्पयेत् ।
करोटकं समायुक्तं कलशैश्चैकपष्टिभिः ॥ १० ॥

रथिकाकूटघण्टाभिः सुवृत्तं शुकनासकैः ।
भ्रमश्च दर्शयत्तोयं विचित्रैर्मणिकुट्टिमैः ॥ ११ ॥

तद्बाह्यतस्तु प्राकारं कपिशीर्षविवर्जितम् ।
हट्टयन्त्रसमाकीर्णं सजलैः सारणैर्युतम् ॥ १२ ॥

परिखा तत्र बाह्ये तु सप्तहस्तप्रमाणतः ।
काननं त्वेवमाख्यातं नृपाणां क्रीडनार्थकम् ॥ १३ ॥

ग्रीष्मे क्रीडां प्रकुर्वन्ति नृपा नरसमन्विताः ।
षड्डालीनां च मध्यस्थं प्रविष्टा क्रीडमानसैः ॥ १४ ॥

दर्शयन्ति विचित्राणि रूपाणि चैवमूर्ध्वतः ।
सर्वाङ्गश्रोतसः सन्धौ वृष्टिं कुर्वन्ति मेघवत् ॥ १५ ॥

अवृष्टिगर्जिताः शब्दा विद्युदुद्योतकान्विताः ।
एवमायासतो ग्रीष्मे पर्यटन्ति नृपा मुदा ॥ १६ ॥

वस्त्रालङ्कारकैर्यैस्तु प्रविशन्त्युदकेषु च ।
तत्सर्वं सूत्रधारेषु दातव्यं तु मुदान्वितैः ॥ १७ ॥

अन्येषां राजप्रासादे ग्रामं दद्यात् स्वराष्ट्रके ।
कृत्वा क्रीडां नृपश्रेष्ठ वासन्ते च महोत्सवे ॥ १८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां जलयन्त्रलक्षणमण्डपद्वाराधिकारो नामैकोननवतितमं सूत्रम् ॥

# (९०) वाद्यशालालक्षणं नवतितमं सूत्रम् ॥

विश्वकर्मोवाच—

वाद्यशालाः प्रवक्ष्यामि आश्रिता राजवेश्मनि ।
द्वात्रिंशद्धस्तविस्ताराश्चतुर्वृद्धिरनुक्रमात् ॥ १ ॥

मण्डपा नव सङ्ख्याताश्चतुःषष्ट्यन्त हस्ततः ।
पृथगेकैकशः प्रोक्ताः कथयिष्याम्यनुक्रमम् ॥ २ ॥

मण्डपा द्वार एवोक्ताः प्राकारपरिवेष्टिताः ।
अग्रे च पोलिकायुक्ताः कपाटैश्च दृढार्गलाः ॥ ३ ॥

विमानः पुष्पको भद्रो गरुडश्चारुवर्द्धनः ।
सिद्धिकामो रसः कान्तो विचित्रस्तेजस्संभवः ॥ ४ ॥

मण्डपा नव चेत्येवं विमानाद्याः प्रकीर्तिताः ।
द्वात्रिंशद्धस्तकश्चाद्यः क्रमाद्वृद्धिश्चतुःकरैः ॥ ५ ॥

चतुःषष्टिकरा अन्ते द्वात्रिंशद्भिर्विमानकाः ।
अन्ते तेजस्सम्भवाख्यश्चतुःषष्टिकरैश्च सः ॥ ६ ॥

मध्ये च वेदिकां कुर्यादष्टहस्तप्रमाणतः ।
तत्रैव स्थापयेद् देवं भैरवं योगिनीस्तथा ॥ ७ ॥

देवीश्च क्षेत्रपालं च जिनेन्द्रसिद्धमूर्तिकाः ।
देवक्रमात्पूजयेच्च योगिनीश्च कुमारिकाः ॥ ८ ॥

विप्रादान्दर्शयच्चैव स्थावरं जङ्गमं तथा ।
तदाज्ञा च गृहीतव्या तत्र कर्म समाचरेत् ॥ ९ ॥

ततः प्राकारमध्ये तु स्थापयेच्च महोषधीः ।
श्वेतरक्तपीतकृष्णैः पुष्पकाले प्रभेदिताः ॥ १० ॥

कटुतिक्तकषायाम्ललवणैर्मधुरेण च ।
औषधीर्लक्षयेद्दिव्या वर्णैरास्वादनैस्तथा ॥ ११ ॥

कोष्ठिकायाः सूकरैश्च धमनीनलिकायसैः ।
संडिशानि विविधानि काकचञ्च्वाकृतीनि च ॥ १२ ॥

पादुकां कर्त्तरायुक्तां हस्तवडानि हारिणी ।
खल्वे च मर्दनं कुर्याद् यन्त्राद्विविधधारिकाः ॥ १३ ॥

धातवोऽष्टाऽष्ट लोहानि विविधान्यौषधानि च ।
मूषाभेदक्रमोर्क्कं च रत्नं स्याद् वज्रकादिकम् ॥ १४ ॥

मृत्तिका करणी श्रेष्ठा वज्रमूषादिकोद्भवम् ।
हृदि चित्तैर्दृढात्मा च एकीभूतमनास्तथा ॥ १५ ॥

सद्‌गुरूणां पादभक्त्या गुरूपदेशग्राहकः ।
मुक्तमत्सरकोपश्च सत्प्रियो जनवत्सलः ॥ १६ ॥

पारदग्धा स्तोकदग्धा अदग्धा वालकर्तिका ।
स्वरबिन्दुसमायुक्तं वज्रमूषस्य लक्षणम् ॥ १७ ॥

घटिका करिकाकारा मृत्तिकाश्च सुयोजयेत् ।
त्रीणि त्रीणि पुनस्त्रीणि तथा चत्वारि पञ्च च ॥ १८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां धावशालालक्षणाधिकारो नाम नवतितमं सूत्रम् ॥

# (९१) चतुरुत्तरशतैकशालगृहलक्षणमेकनवतितमं सूत्रम् ॥

विश्वकर्मोवाच--

हर्म्यादीनि प्रवक्ष्यामि यथोक्तं पुरवासिनाम् ।
निन्दितानि च शस्तानि भवन्ति भवनानि च ॥ १ ॥

पञ्च पूर्वायता रेखा दशसप्त च दक्षिणे ।
चतुःषष्टिपदं कार्यं कोष्ठकं पूर्वदक्षिणम् ॥ २ ॥

चत्वारो विन्यसेत्पूर्वमक्षराणि गुरूणि वै ।
तेभ्य एव प्रसूयन्ते भेदाः षोडश वेश्मनाम् ॥ ३ ॥

गुरोरधो लघुं दद्याद् विद्याद्गुरुलघुप्रदम् ।
एकान्तरविभेदेन षोडशैव पदाः स्थिताः ॥ ४ ॥

पदक्षस्य संस्थाने द्वितीयं परिकीर्तितम् ।
चतुरक्षरभेदेन तृतीयं च तथोपरि ? ॥ ५ ॥

अष्टाभिः क्रमभेदैश्च चतुर्थं शुभलक्षणम् ।
एकोर्ध्वे मात्रिको लघु गुरुद्रक प्रतिष्ठिताः ? ॥ ६ ॥

एकशाला गुरुव्याप्ता चालिन्दो लघुस्थानके ।
एकोर्ध्वेन गृहे मूपादलिन्दश्चेति निश्चये ? ॥ ७ ॥

पूर्वे वै कथितश्छन्दो गुरु लघुश्च ? समावृते ।
प्रभेदांश्च तन्नामानि कथयाम्यपराजित ॥ ८ ॥

ध्रुवं धान्यं जयं नन्दं खरं कान्तं मनोरमम् ।
सुमुखं दुर्मुखं क्रूरं सुपक्षं धनदं क्षयम् ॥ ९ ॥

आक्रन्दं विपुलं चैव विजयं गृहमुत्तमम् ।
अलिन्दभेदाः कथिता ध्रुवादीनां तु षोडश ॥ १० ॥

ध्रुवे जयमवाप्नोति धान्ये धान्यागमो भवेत् ।
जये सपत्नाञ् जयति नन्दे सर्वाः समृद्धयः ॥ ११ ॥

खरमायासदं वेश्म कान्ते च लभते श्रियम् ।
आयुरारोग्यमैश्वर्यं तथा चेप्सितसंपदः ॥ १२ ॥

मनोरमे मनस्तुष्टिर्गृहभर्तुः प्रकीर्तिता ।
सन्मुखे राज्यसन्मानं दुर्मुखे कलहः सदा ॥ १३ ॥

क्रूरे व्याधिभयं घोरं सुपक्षं गोत्रवृध्दिदम् ।
धनदे हेमरत्नानि गाश्चैव लभते पुमान् ॥ १४ ॥

क्षये सर्वक्षयो घोर आक्रन्दं शान्तिमृत्युदम् ।
आरोग्यं विपुले ख्यातिर्विजये सर्वसंपदः ॥ १५ ॥

इति ध्रुवादिषोडश ॥

रम्येषु द्वितीयोऽलिन्दो धान्यादिर्विजयान्तगः ।
तेषां भेदाः पुनश्चेत्थमग्रयास्तु प्रकीर्तिताः ॥ १६ ॥

रम्यं श्रीधरं मुदितं वर्धमानं करालकम् ।
सुनाभं ध्वाङ्क्षं समृध्यमिति रम्याष्टकं गृहम् ॥ १७ ॥

इति रम्याष्टकं गृहम् ॥

शालामध्ये ध्रुवादीनां न्यासे षड्दारुकस्य च ।
अन्ये भेदाः पुनस्तेषां षोडशैव प्रकीर्तिताः ॥ १८ ॥

— — — — — — — — ।
— — — — — — — — ॥ १९ ॥

सुन्दरं वरदं भद्रं प्रमोदं विमुखं शिवम् ।
सर्वलाभं विशालं च विलक्षमशुभं ध्वजम् ॥ २० ॥

उद्योतं भीषणं शून्यमजितं कुलनन्दनम् ।
प्रशस्तान्यप्रशस्तानि यथानामफलानि च ॥ २१ ॥

इति सुन्दरादिगृहषोडश ॥

पूर्वालिन्देषु सर्वेषु कार्यं षड्दारुकं पुरः ।
षोडशैव पुनर्भेदा हंसाद्या अपरे मताः ॥ २२ ॥

हंसं सुलक्षणं सौम्यं जयन्तं भव्यमुत्तमम् ।
रुचिरं संभृतं क्षेममाक्षमं सुकृतं वृषम् ॥ २३ ॥

उच्छत्रं व्ययमानन्दं सुनन्दं चेति कीर्तितम् ।
यथाविधं गुणदोषा हंसादीनामुदाहृताः ॥ २४ ॥

इति हंसादिगृहषोडश ॥

षड्दारुकं परित्यज्य ध्रुवादिक्रमसंस्थितौ ।
शालामध्येऽपवरकं धनदं स्यादतः स्थितम् ॥ २५ ॥

अलङ्कृतमलङ्कारं रमणं पूर्णमम्बरम् ।
पुण्यं सुगर्भं कलशं दुर्गतं रिक्तमीप्सितम् ॥ २६ ॥

सुभद्रं वञ्चितं दीनं विभवं सर्वकामदम् ।
यथार्थनामतश्चैषान् गुणदोषान् प्रकल्पयेत् ॥ २७ ॥

षड्दारुकं शालामध्येऽपवराणि ततः परम् ।
पश्योऽपरे गृहाः प्रोक्ताः प्रभवाद्यास्तु षोडश ॥ २८ ॥

प्रभवं भाविकं क्रीडं तिलकं क्रीडितं शुभम् ।
यशोदं कुमुदं कालं भासुरं सर्वभूषणम् ॥ २९ ॥

वसुधारं धनहरं कुपितं वित्तवृद्धिदम् ।
कुलोदयं समाख्यातं गुणदोषाश्च पूर्ववत् ॥ ३० ॥

इति प्रभवादिषोडश ॥

अनन्तरं मया यानि गृहाण्युक्तानि षोडश ॥
चतुर्दिशमलिन्देन परिष्कुर्यात् पृथक् पृथक् ॥ ३१ ॥

भेदजानि तु यानीह शृणु तानि समासतः ।
चूडामणि प्रभद्रं च क्षेमं शेखरमुद्भवम् ॥ ३२ ॥

निरामयं सुलाभं च रौद्रं मेघं मनोरमम् ।
सुभद्रं चेति गेहानां गुणाढ्यमभिधानतः ॥ ३३ ॥

गृहाणामेकशालानां शतं स्याच्चतुरुत्तरम् ।
एकैकोत्पन्नभेदाश्च शतैश्चदशभिस्ततः ॥ ३४ ॥

स चतुःसहस्रलक्षमेकशालाख्यवेश्मनाम् ।
तृणच्छन्दः पट्टच्छन्दः पूर्णच्छन्दश्च पाण्डुकम् ॥ ३५ ॥

खण्डच्छन्दो वाजिच्छन्द इतिषड्जातिवेश्मनाम् ।
षोडशैव प्रभेदाश्च वर्तन्ते परिवर्तनात् ॥ ३६ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां चतुरुत्तरशतैकशालगृहलक्षणाधिकारो नामैकनवतितमं सूत्रम् ॥

---

## (९२) हर्म्यादिगुणदोषो नाम द्वानवतितमं सूत्रम् ॥

---

विश्वकर्मोवाच—

पञ्चभागद्विभागं च सप्तभागत्रिभागकम् ।
नवभागचतुर्भागं शालालिन्दप्रमाणकम् ॥ १ ॥

चतुर्हस्ता भवेच्छाला द्वात्रिंशद्धस्तकं गृहम् ।
तथैकभूमितः कुर्याद् यावत्सा वै त्रिभूमिकम् ॥ २ ॥

एकशालं गृहमाद्यमन्तिमं दशशालकम् ।
शालान्तरेषु च ततो भेदाश्चैवमनेकधा ॥ ३ ॥

अष्टाविंशतिर्हस्ताश्च ह्यष्टादश तथाष्ट च ।
कुर्यात् त्रिधोदयं यावत् फलकं चाग्रभूमिके ॥ ४ ॥

षण्णवतिश्चतुरशीतिर्द्वासप्ततिरेव च ।
षोडशांशयुतं चैव गृहं तु त्रिविधोदयम् ॥ ५ ॥

षट्न वै त्रिस्थानैर्विस्मृतं सजितोदयम् ? ।
षट् चन्द्राष्टिक विंशत्या श्चैकपाषाणमन्दिरे ? ॥ ६ ॥

वेदवसुरंगुलर्वह्नि संस्थानके रिपु चन्द्रा रूपदन्त्यो रिपुयुक्तोहयम् ।
उत्तमं मध्यम कन्यसं जायते मध्यमादयम् ? ॥ ७ ॥

एक्षे सप्तंगुलैराश्च संस्थानं युक्तं तिथिम् । मूर्छनारिपयुक्तोदहयं ? ।
उत्तममध्यमकन्यसं जायते कन्यसोदयम् ॥ ८ ॥

हस्तिनी महिषी चैव गावी च छागली तथा ।
पदानां तु दिशाभेदैः प्राच्यादिषु प्रदक्षिणम् ॥ ९ ॥

हस्तिनी चेन्द्रसंस्थाने महिषी च यमस्थले ।
गावी च वरुणस्थाने सौम्यस्थाने तु छागली ॥ १० ॥

परस्परप्रकारेण कर्तव्यास्तु विचक्षणैः ।
तत्राग्रमग्नौ दातव्यं भाषितं विश्वकर्मणा ॥ ११ ॥

द्वितीयाग्रं च नैर्ऋत्यां तृतीयाग्रं च मारुते ।
चतुर्थ्यग्रमीशकर्णे कर्तव्या किल सर्वदा ॥ १२ ॥

गावी श्रेष्ठा चोपरिष्ठात् सर्वाः स्युर्वाथ हस्तिनी ।
एतासां पट्टसंयोगैर्भवनानि पृथग् विदुः ॥ १३ ॥

पदाधस्तात् तथालिन्दा ? तुलाभिः क्षणसंज्ञकाः ।
ज्ञातव्या वै गृहच्छन्दाः स्वयंभूकथिताः पुरा ॥ १४ ॥

द्वारं सर्वगृहाणां च पदस्थानेषु दापयेत् ।
तुलाधस्तान्न दातव्यं भाषितं विश्वकर्मणा ॥ १५ ॥

गृहविस्तारकरतो ग्राह्यमेकैकमङ्गुलम् ।
सप्ततिः करसम्युक्तः षष्टिः पञ्चाशमेव च ॥ १६ ॥

द्वारमानं समाख्यातं ज्येष्ठमध्यकनिष्ठकम् ।
एकशालक्रमयोगे पर्यन्तं च दशावधि ॥ १७ ॥

गृहादीनां मुखं पूर्वे भ्रमणद्वारसंयुतम् ।
षोडशानामतः प्रोक्तमन्यथा चिन्तयेन्न हि ॥ १८ ॥

प्रदक्षिणे सद्ममुखानलिन्दान् विद्यात्लघुस्थानसमाश्रितांश्च ।
गृहे तु पूर्वादिगतैरलिन्दैर्भवन्ति चैवं दशषट् च भेदाः ॥ १९ ॥

दिशि दिशि वासाद् भागं तुर्येष्वंकितं द्वारं शोभनम् ।
माहेन्द्रगृहक्षतकुसुमदन्तभल्लाटकृतचिह्नैः ॥ २० ॥

उपर्युपरिभूमीनां द्वारं कुर्यात् प्रदक्षिणम् ।
नापसव्येन कुर्वीत राजवेश्मादिभूमिका ॥ २१ ॥

उत्संगः पूर्णबाहुश्च हीनबाहुस्तथापरः ।
प्रतिकाय इति प्रोक्तं प्रवेशानां चतुष्टयम् ॥ २२ ॥

उत्तरोन्मुख उत्संगः पूर्णबाहुश्च पूर्वतः ।
हीनबाहुस्तथा याम्यं प्रतिकायं च वारुणे ॥ २३ ॥

दृष्ट्वा रौद्रकरालं च भीषणं रौद्ररूतानि च ।
वर्जयेत्तद् गृहं चैव श्रीश्च तत्र न विद्यते ॥ २४ ॥

गृहे काककपोतादिकपिसंग्रामभीषणम् ।
वर्जयेद् गृहचित्रेषु श्रीश्च तत्र न विद्यते ॥ २५ ॥

तथा च लेपरूपाणि पाषाणोत्पातपट्टकम् ।
वर्जयेद् राजगेहेषु लक्ष्मीस्तत्र न विद्यते ॥ २६ ॥

अक्लेशां च वनस्तस्य वातरोगोऽपि जायते ।
पाषाणवीथिका बाह्यमन्यत्र वर्जयेत् तु ताम् ॥ २७ ॥

कुम्भिकातलपट्टं च आद्ये भ्रमणे च कारयेत् ।
अन्यत्र दोषदं शैलं विना वीथि तु पत्रकाः ? ॥ २८ ॥

सोपानैः कुम्भिकां शैलां राजवेश्मसुखावहम् ।
सर्वत्र वीथिकाबद्ध आयुः कामफलार्थिभिः ॥ २९ ॥

कर्करा शर्करा शिष्टा सुधाभीरन्ध्रपूरिता ।
गृहे भूमिस्तु कर्तव्या विचित्रा मणिकुट्टिमा ॥ ३० ॥

बदरी कदली चैव हीक्षुदण्डश्च दाडिमी ।
यत्र गृहे प्ररोहन्ति तद् गृहं न प्ररोहति ॥ ३१ ॥

द्राक्षामुनिकरवीरजातीतगरकुब्जिकाः ।
अन्यांश्च देववृक्षांश्च न कुर्याद् गृहवास्तुतः ॥ ३२ ॥

स्तम्भे मरालपक्षिण्यौ रोहतो देवताग्रतः ।
सन्मुखं वर्जयेद् द्वारं न च भित्त्यन्तरे परे ॥ ३३ ॥

गृहाणामेकशालानां शतं स्याच्चतुरुत्तरम् ।
द्विशालानां द्विपञ्चाशत् त्रिशालानां द्विसप्ततिः ॥ ३४ ॥

चतुःशालगृहाणां च षट्पञ्चाशच्छतद्वयम् ।
षड्जात्युत्पन्नभेदाश्च हर्म्यभेदा द्विरष्ट च ॥ ३५ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
हर्म्यादिगुणदोषाधिकारो नाम द्वानवतितमं सूत्रम् ॥

---

## (९३) युग्महंसाविमलगृहद्वात्रिंशद्भेदलक्षणं त्रिनवतितमं सूत्रम्॥

विश्वकर्मोवाच—

हस्तिनी महिषी गावी छागली च यथाक्रमम् ।
युग्मतः कथिताश्चैता हंसाद्या विमला गृहाः ॥ १ ॥

द्विहंसं च द्विचक्रं च द्विसारसमथापि वा ।
द्विकोकिलमिति तथा हस्तिन्याद्याः प्रकीर्तिताः ॥ २ ॥

चतुरस्रं समं कृत्वा त्रिपुटे नवकोष्ठकम् ।
मध्यकोष्ठपदं त्यक्त्वा शालायुग्मे प्रतिष्ठिताः ॥ ३ ॥

दक्षिणस्यामथाऽऽग्नेय्यां हस्तिन्युत्तरदिङ्मुखा ।
पितृवारुणसंयोगा महिषी चैन्द्रदिङ्मुखा ॥ ४ ॥

याम्यामुखा तथा गावी सौम्यमारुतसंस्थिता ।
वारुणाभिमुखा शस्ता ऐन्द्रे रौद्रे च छागली ॥ ५ ॥

मुखालिन्दे श्रीधरश्च याम्याग्रे तु जयावहः ।
प्रदक्षिणं श्रीजयश्च मुखयुग्मस्तु कामदः ॥ ६ ॥

याम्याग्रमुखालिन्दे तु जयन्तो नाम शोभनः ।
युग्मालिन्दे विशालश्च कर्तव्यः सुप्रदक्षिणम् ॥ ७ ॥

अग्रे तृतीयालिन्देषु सो भवेत् सोमसम्भवः ।
क्रमद्वारे च हस्तिन्या युग्माष्टक गृहा मताः ॥ ८ ॥

तद्रूपं तादृशाकारं दिङ्मुखाद्यभिधानकम् ।
अष्टाष्टधा च प्रत्येकं कथयाम्यपराजित ॥ ९ ॥

गजं भीमं पराक्रमं जयन्तं भासुरं तथा ।
वसिष्ठं च समुद्रं च महिषीपृष्ठसम्भवम् ॥ १० ॥

सुनाभं वर्तकं सौम्यं चन्द्रतेजश्च दीपकम् ।
कुलद्योतं सुनेत्रं च गावीपृष्ठनिवासिनाम् ॥ ११ ॥

पाशुपतं महाकान्तं सुतेजस्तेजोवर्द्धनम् ।
वामनं दस्युघातं च रुद्रतेजःसमुद्भवम् ॥ १२ ॥

छागलीपृष्ठकोच्छ्राये गृहाएवं प्रकीर्तिताः ।
अष्टावष्टौ प्रतिदिशं द्वात्रिंशच्च गृहा मताः ॥ १३ ॥

हस्तिनी हंससम्भूता गावी सारससम्भवा ।
छागली कोकिलोद्भूता महिषी चक्रवाकजा ॥ १४ ॥

अष्टौ हंससमुद्भूता अष्टौ सारससम्भवाः ।
चक्रवाकभवा चाष्टाऽष्टकोकिलभवा मताः ॥ १५ ॥

गृहा द्वात्रिंशदेवं हि युग्मभेदैः प्रभेदिताः ।
अत ऊर्ध्वं त्रिशालानि द्विपञ्चाशद् गृहाणि च ॥ १६ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां युग्महंसविमलगृहद्वात्रिंशद्भेदलक्षणाधिकारो नाम त्रिनवतितमं सूत्रम् ॥

## (९४) द्विशालगृहलक्षणं चतुर्नवतितमं सूत्रम् ॥

---

विश्वकर्मोवाच--

द्विशालानि द्विपश्चाशच्छुभानि वाशुभानि च ।
लक्षणानि क्रमात् तेषां कथयामि समासतः ॥ १ ॥
सिद्धाख्यं यमसूर्यं च दण्डाख्यं वातसंज्ञितम् ।
चुल्लीकाचं च मुख्यानि द्विशालानि प्रचक्षते ॥ २ ॥
अनेकभेदभिन्नानि लघुप्रस्तारयोगतः ।
मूषाभेदक्रमेण स्युर्भेदा भेदक्रमेण च ॥ ३ ॥
तथा विलीनकरणाद् मूषा चालिन्दमार्गतः ।
प्राग्ग्रीवादिविधानेन द्विशालानि विपर्ययात् ॥ ४ ॥
यथासंभवमेतानि कथयामि समासतः ।
निर्वाहश्चैवमूषाणामनिर्वाहश्च नामतः ॥ ५ ॥
छन्दतो गुणतो रूपादशुभानि शुभानि च ।
हितार्थाय नरेन्द्राणां वर्णिनां लिङ्गिनामपि ॥ ६ ॥
हस्तिनी महिषी चेति द्वे शाले यत्र वेश्मनि ।
तत् सिद्धार्थमिति ज्ञेयं वित्तसंपत्तिकारकम् ॥ ७ ॥
मृत्युदं महिषीगावीभ्यां भवेद् यमसूर्यकम् ।
दण्डाख्यं छागलीगावीशालाभ्यां दण्डभीतिदम् ॥ ८ ॥
करेणुच्छागलीयुक्तं वातमुद्वेगकारकम् ।
महिष्यजाभ्यामुद्वेगकरी चुल्ली धनापहा ॥ ९ ॥
काचं करेणुगावीभ्यां सुहृत्प्रीतिविनाशनम् ।
एकमूषममूषं च न द्विशालेषु कारयेत् ॥ १० ॥
व्यत्यासात् काचचुल्ल्योश्च सर्वाभिस्तिसृभिस्तथा ।
चत्वार्याद्यानि भिद्यन्ते लघुप्रस्तारयोगतः ॥ ११ ॥
प्रत्येकमेकादशधा मन्दिराण्यभिधानतः ।
अन्ये चतुर्धा भिद्येते प्रत्येकं द्वे निवेशने ॥ १२ ॥
एषां मूषाभिधाभेदात् तद्बाह्यावाहहेतुकाः ।
वसुधारं भवेत् तेषामाद्यं सिद्धार्थकं ततः ॥ १३ ॥
कल्याणकं शाश्वतं च शिवं कामप्रदं सदा ।
श्रीदं शान्तं निष्कलंकं धनाधीशं कुबेरकम ॥ १४ ॥
सिद्धार्थमनुजात्येवमेतान्येकादश क्रमात् ।
संहारं यमसूर्यं च कालं वैवस्वतं यमम् ॥ १५ ॥

करालं विकरालं च कबन्धं मृतकं शवम् ।
यमसूर्यस्य भेदाः स्युः सद्मनो महिषं तथा ॥ १६ ॥

प्रचण्डचण्डे दण्डाख्यमुद्दण्डं काण्डकोटरे ।
निग्रहं निग्रहं धूम्रं निर्धूमं दन्ति दारुणम् ॥ १७ ॥

एकादशामी दण्डस्य भेदा दण्डभयप्रदाः ।
मरुत्पवनवाताख्यान्यनिलं सप्रभञ्जनम् ॥ १८ ॥

(घ)घनार्यम्बुदविध्वंसि प्रलयं कलहं कलिः ।
कलि चुल्ली च वातस्य भेदा उद्वेगकारकाः ॥ १९ ॥

रोगं चुल्ल्यनलं भस्म चुल्ल्या भेदचतुष्टयम् ।
काचस्य तु छलं काचं कुलघ्नं च विरोधिकृत् ॥ २० ॥

द्वापञ्चाशद् द्विशालानां नामभेदाः प्रकीर्तिताः ।
इत्युक्ताश्च पृथग्भेदा द्विशालानां यथाक्रमम् ॥ २१ ॥

द्विपञ्चाशद् द्विशालानां प्रत्यकं द्विसहस्रतः ।
सचतुःसहस्रलक्षं द्विशालानां तु सद्मनाम् ॥ २२ ॥

अग्राग्रतो द्विशालानां हर्म्यादीनां पुनस्तथा ।
द्वात्रिंशच्च सहस्राणि चाष्टलक्षाणि भेदतः २३ ॥

एकशालगृहादीनामेतत्तुल्यं प्रभेदतः ।
चतुःषष्टिसहस्राणि द्व्यष्टलक्षाणि वै तथा ॥ २४ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
द्विशालगृहलक्षणाधिकारो नाम चतुर्नवतितमं सूत्रम् ॥

---

## (९५) द्विशालगृहलक्षणक्रमो नाम पञ्चनवतितमं सूत्रम् ॥

विश्वकर्मोवाच—

सम्प्रत्येषां च कथये लक्षणानि पृथक् पृथक् ।
आद्याद्वितीये वहतो यत्र मूषे धनप्रदम् ॥ १ ॥
वसुधाराभिधानं तद् गृहं सर्वार्थसिद्धिदम् ।
आद्यातृतीये वहतो यत्र सिद्धार्थकं विदुः ॥ २ ॥
सर्वोपद्रवनिर्मुक्तं सिद्धिकृच्चिन्तितार्थकृत् ।
द्वितृतीयं वहन्मूषं भवेत्कल्याणमृद्धिकृत् ॥ ३ ॥
वहदाद्यचतुर्थीकं शाश्वतं गृहमुत्तमम् ।
शिवं द्वितीयातुर्याभ्यां वहन्तीभ्यां सुखप्रदम् ॥ ४ ॥
कामदं त्रिचतुर्थीभ्यां भवेच्चिन्तितकामदम् ।
आद्याभिश्च तिसृभिश्च श्रीपदं शंप्रदं प्रभो: ॥ ५ ॥
आद्याद्वितीयातुर्याभिः शान्तं शान्तिप्रदायकम् ।
आद्यातृतीयातुर्याभिर्निष्कलङ्कं समृद्धिकृत् ॥ ६ ॥
द्वितृतीयाचतुर्थीभिर्धनेशं धनवर्द्धनम् ।
आद्याद्याभिश्चतसृभिः कुबेरं वित्तवृद्धिकृत् ॥ ७ ॥
यमसूर्यप्रभेदेषु कथये फललक्षणे ।
आद्याद्वितीयामूषाभ्यां संहारं स्वामिनाशनम् ॥ ८ ॥
गृहमाद्यातृतीयाभ्यां मृत्युदं यमसूर्यकम् ।
द्वितीयातृतीयाभ्यां च कालं पीठविनाशनम् ॥ ९ ॥
वैवस्वतं वहत्तूर्यप्रथमं रोगकारकम् ।
यमालयं द्वितुर्याभ्यां स्वामिनो यमदर्शनम् ॥ १० ॥
करालं त्रिचतुर्थीभ्यां भर्तुः प्राणविनाशनम् ।
आद्याभिस्तिसृभिः स्वामिनाशनं विकरालकम् ॥ ११ ॥
आद्याद्वितीयातुर्याभिः कबन्धं भर्तृनाशनम् ।
आद्यातृतीयातुर्याभिर्भर्तृघ्नं मृतकालयम् ॥ १२ ॥
शवं द्वित्रिचतुर्थीभिः स्वामिनो मरणप्रदम् ।
आद्याद्याभिश्चतसृभिः स्वामिघ्नं महिषं विदुः ॥ १३ ॥
प्रचण्डं दण्डभेदेषु पूर्वया सद्वितीयया ।
गृहमादौ विजानीयाद् भर्तुर्नृपभयप्रदम् ॥ १४ ॥
चण्डमाद्यातृतीयाभ्यां चण्डदण्डभयप्रदम् ।
दण्डं स्याद् द्वितृतीयाभ्यां राजदण्डप्रदारुणम् ॥ १५ ॥
उद्दण्डमाद्यातुर्याभ्यां स्वामिनो दण्डभीतिदम् ।
काण्डं द्वितीयातुर्याभ्यां काण्डवद्भेदकारकम् ॥ १६ ॥

कोटरं त्रिचतुर्थीभ्यां स्वामिनो विग्रहावहम् ।
प्रथमाद्वितृतीयाभिर्विग्रहं वधबन्धकृत् ॥ १७ ॥
आद्याद्वितीयातुर्याभिर्निग्रहं विग्रहावहम् ।
आद्यातृतीयातुर्याभिर्धूम्रं सर्वधनापहम् ॥ १८ ॥
द्वितृतीयाचतुर्थीभिर्निर्धूमं धननाशनम् ।
आद्याद्याभिश्चतसृभिर्दन्ति दारुणमर्थहृत् ॥ १९ ॥
आद्याद्वितीयामूषाभ्यां वातभेदेषु मन्दिरम् ।
मरुत्संज्ञं भवेत्तत्र वसतां कलहः सदा ॥ २० ॥
उद्वेगकारि पवनं तृतीयाद्योपलक्षितम् ।
धाताख्यं द्वितृतीयाभ्यां सदासन्तापकारकम् ॥ २१ ॥
सन्तापोद्वासकार्याद्यातुर्याभ्यामलिनं भवेत् ।
प्रभञ्जनं द्वितुर्याभ्यां शोकसन्तापकारकम् ॥ २२ ॥
घनाख्यं मोदविध्वंसि चतुर्थ्या च तृतीयया ।
आद्यया द्वितृतीयाभ्यां रोगं कार्यार्थनाशनम् ॥ २३ ॥
आद्याद्वितीयातुर्याभिः प्रलयं चित्ततापकृत् ।
आद्यातृतीयातुर्याभिः कलहं कलहावहम् ॥ २४ ॥
द्वितृतीयाचतुर्थीभिः कलि सन्तापकारकम् ।
आद्याद्याभिश्चतसृभिः कलिशूलं धनापहम् ॥ २५ ॥
रोगमाद्याद्वितीयाभ्यां चुल्लीभेदेषु शोकदम् ।
स्याद् द्वितीयातृतीयाभ्यां चुल्ली वित्तविनाशनी ॥ २६ ॥
वसुघ्नमनलं नाम त्रितुर्याभ्यां निवेशनम् ।
वित्तघ्नमाद्यातुर्याभ्यां भस्माख्यं स्वामिनः सदा ॥ २७ ॥
उदङ्मुखाभ्यां मूषाभ्यां काचभेदेषु मन्दिरम् ।
छलं नाम भवेन्नित्यं बन्धुवर्गापमानकृत् ॥ २८ ॥
दक्षिणोत्तरमूषाभ्यां पौरस्ते वहतो यदि ।
काचं नाम तदा वेश्म सज्जनानन्दकारकम् ॥ २९ ॥
मूषाभ्यां दक्षिणाभ्यां स्यात्कुलहं त्रिकुलक्षयम् ।
दक्षिणोत्तरमूषाभ्यां पाश्चात्य वहतो यदि ॥ ३० ॥
विरोधं नाम तद्वेश्म सर्वलोकविरोधकृत् ।
उक्तान्येवं द्विपञ्चाशद् द्विशालानि समासतः ॥ ३१ ॥
मूषावहनभेदास्तु द्विशालानां यथाक्रमम् ।
निदर्शिता वेश्मनां च त्रिशालं सूत्र गद्यते ॥ ३२ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां द्विशालगृहलक्षणक्रमाधिकारो नाम पञ्चनवतितमं सूत्रम् ॥

## (९६) त्रिशाललक्षणं षण्णवतितमं सूत्रम् ॥

विश्वकर्मोवाच—

कालदण्डं सुनाभं च जयन्तं रिपुमर्द्दनम् ।
त्रिशालानि तु चत्वारि दिशावहनभेदतः ॥ १ ॥

दिशाच्छन्दोद्भवे छन्दे पृथगेकैकसद्मनाम् ।
चतुःषष्टिस्त्वीरितानि पुनरन्यानि चाष्टभिः ॥ २ ॥

प्राग्दिग्मुखं भवेद्वेश्म कालदण्डं तु नामतः ।
याम्यामुखं सुनाभं स्याद्वेश्मैवं नाम शोभनम् ॥ ३ ॥

जयन्तं नामकं वेश्म तथा स्याद्वरुणोन्मुखम् ।
उत्तरास्यं तु कर्तव्यं कामदं रिपुमर्द्दनम् ॥ ४ ॥

कालदण्डं तथा वेश्म धनधान्यक्षयावहम् ।
सुनाभे सर्वभद्रेषु पतिकल्याणकारकम् ॥ ५ ॥

जयन्तं कीर्तिदं लोके सुरेन्द्रादिप्रपूजितम् ।
रिपुमर्द्दनं तु राज्ञां शत्रूनुच्चाटयेद् ध्रुवम् ॥ ६ ॥

गृहाः प्राच्यापराः शस्ता नित्यं कल्याणकारकाः ।
याम्योत्तरामुखा ये ते प्रतापकीर्तिवर्द्धनाः ॥ ७ ॥

कालदण्डं प्रचण्डं च श्रीजयन्तं धनावहम् ।
मायासद्म महाकान्तं मनोहरं लक्ष्मीप्रियम् ॥ ८ ॥

विमुखं क्रोधनाख्यं च स्वामिभक्तं धनेश्वरम् ।
कालाख्यं विकरालाख्यं जनप्रियं च कामदम् ॥ ९ ॥

कालदण्डादिसद्मानि सङ्ख्यया चैव षोडश ।
कालदण्डं विना मूषम् त्रिशालं स्यादलङ्कृतम् ॥ १० ॥

आद्यमूषं प्रचण्डाख्यं श्रीजयं च द्वितीयया ।
धनावहं तु द्व्याद्याभ्यां मायासद्म तृतीयया ॥ ११ ॥

साद्ययैवं महाकान्तं द्वित्रयाभ्यां मनोहरम् ।
द्व्याद्यतृतीयमूषैश्चेदेवं लक्ष्मीप्रियं भवेत् ॥ १२ ॥

विमुखं च चतुर्थ्या च क्रोधनाख्यं तु साद्यया ।
स्वामिभक्तं द्वितुर्याभ्यां साद्यया तु धनेश्वरम् ॥ १३ ॥

विना याम्यां तु कालाख्यं विकरालं चतुर्दिशम् ।
जनप्रियं प्रतिमूषैः षड्दारुकं च कामदम् ॥ १४ ॥

कालदण्डाद्यष्टादशवेश्मानां वै भवन्ति हि ।
नाम तुल्या गुणदोषाः शस्ताऽशस्ताश्च सर्वदा ॥ १५ ॥

सुनाभं च शुभं शान्तं जयं च विभद्रं तथा ।
कुबेरं यक्षं पक्षाख्यं विवक्त्रं कलिसौम्यके ॥ १६ ॥

सुवक्त्रं क्षयं कालाख्यं विपुलं राज्यवर्धनम् ।
आत्मकं दारुणाख्यं च अष्टादश सुनाभतः ॥ १७ ॥

जयन्तं भासुरं भीमं श्रीजयं सुविश्वासकम् ।
शस्तं च शाश्वतं सारं दुर्दयंचैव क्रोधनम् ॥ १८ ॥

सौख्यं पुष्टं भयं घोरमीश्वरानन्दकं तथा ।
पशुपत्युत्तमे चैव अष्टादश जयन्ततः ॥ १९ ॥

रिपुमर्दनसुनेत्रे बलं चातिबलं तथा ।
अशुभं च शिवं लाभं विशालं श्रीकूरे प्रभुम् ॥ २० ॥

कालनेत्रं विनेत्रं च लक्ष्मीधरं च श्रीपतिम् ।
महाजयं जयाख्यं च अष्टादश प्रकीर्तिताः ॥ २१ ॥

यथानाम गुणाश्चैवं दोषा ये तान् विवर्जयेत् ।
प्रोक्ता चैवं त्रिशालानां सङ्ख्या द्वासप्ततिस्तथा ॥ २२ ॥

यथा युग्मोद्भवा भेदा द्विशाले च त्रिशालके ।
तद्युक्तिश्च विधातव्या चतुःशालगृहेषु च ॥ २३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां त्रिशाललक्षणाधिकारो नाम षण्णवतितमं सूत्रम् ॥

## (९७) त्रिशालगृहलक्षणक्रमो नाम सप्तनवतितमं सूत्रम् ॥

विश्वकर्मोवाच—

कालदण्डं विनामूषैर्धनधान्यसुखावहम् ।
आद्यमूषं प्रचण्डाख्यं प्रतापकीर्तिवर्द्धनम् ॥ १ ॥

श्रीजयं श्रीप्रदं चैव प्रोक्तं दक्षिणमूषिकम् ।
धनावहं च धनदं पूर्वदक्षिणमूषिकम् ॥ २ ॥

कलिप्रियं मायासद्म मूषां पश्चिमतो वहत् ।
श्रेयस्करं महाकान्तं पूर्वापरमुखं वहत् ॥ ३ ॥

मनोहरं मनस्तुष्टिं दक्षिणापरमूषिकम् ।
लक्ष्मीप्रियं नामगुणं मूषा यत्रोत्तरां विना ॥ ४ ॥

विमुखं चोत्तरामूषं कलिसन्तापकारकम् ।
क्रोधनाख्यं सदाक्रूरं तत्पूर्वोत्तरमूषकम् ॥ ५ ॥

स्वामित्वदं स्वामिभक्तं दक्षिणोत्तरमूषिकम् ।
धनेश्वरं धनप्रियं त्रिमूषं पश्चिमां विना ॥ ६ ॥

कालं चापि विना याम्यां कालानलसमप्रभम् ।
विकरालं महाघोरं मूषा यत्र चतुर्दिशम् ॥ ७ ॥

सर्वलाभं जनप्रियं प्रतिमूषाश्चतुर्दिशम् ।
भोगदं सिद्धिकामं च सदृशं च षड्दारुकम् ॥ ८ ॥

स्वामिपुष्टिकृत् सुनाभं शुभं च शुभदायकम् ।
शान्तं शान्तिप्रदं नित्यं जयन्तं जयकारकम् ॥ ९ ॥

विभद्रं विद्युतिं लोके कुबेरं पुरु तुष्टिदम् ।
धनधान्यप्रदं यक्षं पक्षाख्यं प्रतिपक्षकृत् ॥ १० ॥

क्रूरं घोरं विवक्त्रं स्यात् कलहं कलिकारकम् ।
सौम्यकं च शुभं शान्तं सुवक्त्रं च जनप्रियम् ॥ ११ ॥

क्षयं क्षयावहं वेश्म कालाख्यं कालसम्भवम् ।
विपुलं राजसन्मानं प्रतापं राज्यवर्द्धनम् ॥ १२ ॥

प्रोक्ता हिताय लोकानां मूषाभेदास्तु पूर्वतः ।
कालदण्डाद्यष्टादश मूषावहननामकाः ॥ १३ ॥

जयन्तं जयदं प्राहुर्भासुरं पुष्टिदायकम् ।
भीमविक्रमदं भीमं श्रीजयं जयकारकम् ॥ १४ ॥

अतिशस्तं सुविश्वासं शस्तं शान्तिप्रदायकम् ।
शाश्वतं च चिरायुष्यं सारं राजसन्मानदम् ॥ १५ ॥

दुर्दयं च दयाहीनं क्रोधनं क्रोधकारकम् ।
सौख्यं सौख्यप्रदं नित्यं पुष्टं पुष्टिप्रदायकम् ॥ १६ ॥

भयं भयावहं घोरमीश्वरं श्रीकरं भवेत् ।
आनन्दमानन्दकरं पाशुपत्यं च सौख्यदम् ॥ १७ ॥

उत्तुङ्गमुन्नतिकरं जयन्ताद्यास्तु भेदतः ।
मूषास्तु पूर्वत उक्ताः कालदण्डादिके यथा ॥ १८ ॥

रिपुमर्दनं रिप्वन्तं सुनेत्रं सर्वनन्दकम् ।
बलं बलप्रदं नित्यमतिबलं च महाबलम् ॥ १९ ॥

अशुभं शुभहीनाङ्गं शिवं शान्तिप्रदायकम् ।
यशोबलं सर्वलाभं विशालं विदितं गृहम् ॥ २० ॥

क्रूरं क्रूरजनावासं श्रियं च विपुलां श्रियम् ।
प्रभु प्रभुसमुत्साहं कालनेत्रं तु विद्रुतम् ॥ २१ ॥

विह्निनेत्रं श्रीविहीनं लक्ष्मीधरं तु श्रीकरम् ।
श्रियः पति पतिमानं जयकृच्च महाजयम् ॥ २२ ॥

जयाख्यं च सदा तुष्टिमष्टादश प्रकीर्तिताः ।
कालदण्डादिवच्चैषां मूषाभेदा यथाक्रमम् ॥ २३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां त्रिशालगृहलक्षणक्रमाधिकारो नाम सप्तनवतितमं सूत्रम् ॥

---

## (९८) चतुःशालगृहलक्षणं नामाष्टनवतितमं सूत्रम् ॥

विश्वकर्मोवाच—

अथातः संप्रवक्ष्यामि चतुःशालं गृहोत्तमम् ।
प्रस्तारनिर्णयं वत्स कथयामि समासतः ॥ १ ॥

अष्टमूषायते छन्दे त्रिपुटैः स्यात्तु छन्दकम् ।
द्वे द्वे मूषे प्रतिदिशं मूषाणां स्यादयं क्रमः ॥ २ ॥

स्वस्थानसंस्थिता स्थानं द्विगुणं चोत्तरोत्तरम् ।
एषा युक्तिर्विधातव्या प्राच्यादिषु प्रदक्षिणम् ॥ ३ ॥

मध्यकोष्ठकेषु रूपं चन्द्रध्वजसङ्ख्यान्तरे ? ।
चन्द्रायुक्तमयोगे तु विधातव्याः प्रदक्षिणैः ? ॥ ४ ॥

अथैकद्विचतुरष्टद्विरष्टद्वात्रिंशास्तथा ।
चतुःषष्टिःशतमष्टाविंशत्युत्तरमेव च ॥ ५ ॥

द्वे द्वे मूषे प्रतिदिशं विधेये सुप्रदक्षिणम् ।
कथयामि समासेन षट्पञ्चाशच्छतद्वयम् ॥ ६ ॥

सुनाभं च विना मूषामादिमूषं च पूर्णकम् ।
द्वितीया त्वीश्वरे चाऽऽद्या द्वितीये य श्रियोद्भवे ॥ ७ ॥

याम्ये दक्षिणमूषे च धान्ये आद्यातृतीयके ।
द्वितृतीये मूषिके च गृहसौख्यं च नामतः ॥ ८ ॥

मूषा आद्याद्वितृतीयाः श्रियः कान्ते चतुर्थकम् ।
आद्यातुर्ये महाकान्ते द्वितुर्ये स्वामिवत्सले ॥ ९ ॥

भोगदे आद्याद्वितुर्यात्रिचतुर्थ्यौ च शाश्वते ।
क्षेमे आद्यात्रिचतुर्थ्यो द्वित्रितुर्याश्च संवरे ॥ १० ॥

रम्ये आद्याद्वित्रितुर्याः पञ्चमी स्यात्तु वारुणे ।
पञ्चम्याद्ये च पूर्णाक्षे द्विपञ्चम्यौ च सम्भवे ॥ ११ ॥

मोघे आद्याद्विपञ्चम्यो महामोघे त्रिपञ्चम्यौ ।
शाते आद्यात्रिपञ्चम्यो द्वित्रिपञ्चम्यो भोग्यदे ॥ १२ ॥

राज्याद्याद्वित्रिपञ्चम्यो भावुके पञ्चतुर्यके ।
नेत्रे चाद्यापञ्चतुर्य्यां नन्दे पञ्चद्वितुर्यकाः ॥ १३ ॥

द्वित्रितुर्याद्याश्च राज्ये ईशे पञ्चत्रितुर्यकाः ।
नाभ्ये द्व्याद्ये पञ्चतुर्य्ये भवे पञ्चद्वित्रितुर्याः ॥ १४ ॥

आद्यद्वित्रिचतुःपञ्चमूषाणां वहनेषु च ।
सालङ्कारमिदं प्रोक्तं गृहं तत्पूजितं श्रिया ॥ १५ ॥

षष्ठी च षष्ठके ? नाम आद्या षष्ठ्यौ महोद्भवे ।
भूपे द्वितीयाषष्ठ्यौ च महाभूते च नामतः ॥ १६ ॥

आद्याद्वितीयाषष्ठ्यश्च श्रियि वै सर्वकामदाः ।
भूपे तृतीयाषष्ठ्यौ च क्रूरे क्रूरफलोदये ॥ १७ ॥

आद्यात्रिषष्ठ्यः शुभदे द्वित्रिषष्ठ्यश्च कामदे ।
सौख्ये आद्याद्वित्रिषष्ठ्यस्तुर्याषष्ठ्यौ करालके ॥ १८ ॥

भान्ये आद्याचतुःषष्ठ्यौ द्विचतुःषष्ठ्य उत्तमे ।
प्रिये द्वयाद्याचतुःषष्ठ्यः क्रोधे तुर्यात्रिषष्ठिकाः ॥ १९ ॥

आद्यायुक्ताश्च ताः शान्ते मेघे षड्द्वित्रितुर्यकाः ।
आद्यायुक्ताः श्रियि च ताः प्रिये षष्ठी च पञ्चमी ॥ २० ॥

आद्यायुक्ते च ते साम्ये सौम्ये पञ्चद्विषष्ठिकाः ।
आद्यायुक्ताः समाख्ये ताः अर्थे पञ्चत्रिषष्ठिकाः ॥ २१ ॥

आद्यायुक्ताः शोभने ताः द्वित्रिपञ्चषष्ठ्यो महे ।
आत्महन्तर्यायुक्ताश्चतुःपञ्चषष्ठ्योऽगाहे ? ॥ २२ ॥

आद्यायुक्ता मोक्षदे द्विचतुःपञ्चषष्ठ्यः सत्ये ।
आद्यायुक्ता उत्तमे त्रिचतुःपञ्चषष्ठ्योऽयने ॥ २३ ॥

आद्यायुक्तास्तुंगे समे अनाद्याः सद्वितीयकाः ।
आद्ययुक्ता महदाख्ये चतुःषष्ठिगृहा मताः ॥ २४ ॥

इति चतुषष्ठिगृहाः ॥

सप्तमी चैव स्वामित्वे सप्तम्याद्ये महाद्भुते ।
द्विसप्तम्यावद्भुते च त्रिसप्तम्यौ सुसम्भवे ॥ २५ ॥

आद्यायुक्ताः सम्भवे द्वित्रिसप्तम्यस्तु कामिके ।
आद्यायुक्तास्तु कामाख्ये विध्वंसे सप्ततुर्यके ॥ २६ ॥

आद्यायुक्ता ललिते द्विसप्ततुर्याश्च तिलके ।
सौभाग्ये साद्या दुर्भाग्ये त्रितुर्ये सप्तमी तथा ॥ २७ ॥

साद्याः कान्तारके कान्ते द्वित्रिसप्ततुरीयकाः ।
आद्यायुक्ताः श्रिये पञ्चसप्तम्यौ रौरवे तथा ॥ २८ ॥

साद्या ऋद्धौ च द्विपञ्चसप्तम्यश्चैव कामिके ।
साद्या महाकामेऽकामे त्रिपञ्चम्यौ च सप्तमी ॥ २९ ॥

साद्याः कान्तारके द्वित्रिपञ्चम्यः सप्तमी शिवे ।
आद्यायुक्ताः सर्वलाभे सप्तपञ्चतुर्याः शुभे ॥ ३० ॥

साद्याः सिद्धार्थे द्विसप्तपञ्चतुर्यास्तुपूर्वके ।
साद्या महापूर्वे ईशे सप्तपञ्चत्रितुर्यकाः ॥ ३१ ॥

साद्यास्तेजः सुतेजो द्वित्रिपञ्चसप्ततुर्यकाः ।
आद्यायुक्ता महातेजो गृहाः षण्णवतिर्मताः ॥ ३२ ॥

इति षण्णवतिगृहाः ॥

घोरे च षष्ठीसप्तम्यौ स्वैरे आद्यायुते तथा ।
पौरे द्विषष्ठीसप्तम्यः सौरे आद्यायुता मताः ॥ ३३ ॥

रौद्रे त्रिषष्ठीसप्तम्यः साद्याः सारथ्यके तथा ।
शङ्खे द्वित्रिसप्तषष्ठ्यौ महाशङ्खे तु सादिकाः ॥ ३४ ॥

षट्सप्ततुर्याश्च परे साद्यास्ताः सुपरे मताः ।
पक्षे द्विषट्सप्ततुर्या आद्यायुक्ताः सुपक्षके ॥ ३५ ॥

शान्ते त्रिषट्सप्ततुर्याः सान्ते आद्यायुतास्तथा ।
द्वित्रितुर्याःसप्तषष्ठ्यावन्ते साद्यास्तु शान्तिके ॥ ३६ ॥

त्रिषष्ठ्यौ पञ्चसप्तम्यौ प्रिये साद्यास्तु सुप्रिये ।
द्विपञ्चषट्सप्ततुर्याः सौम्ये भौक्ते च सादिकाः ॥ ३७ ॥

पञ्चमी सप्तमी षष्ठी पुण्ये साद्याः सुपुण्यके ।
द्वित्रिपञ्चसप्तषष्ठ्यः पुरे साद्याः सुपूर्वके ॥ ३८ ॥

चतुःपञ्चषट्सप्तम्य इन्द्रे साद्यास्तथा शुभे ? ।
पञ्चषड्द्वित्रिसप्तम्यः कंके कांके च सादिकाः ॥ ३९ ॥

त्रिपञ्चषट्सप्ततुर्याश्चिह्ने साद्यास्तु शुभ्रके ।
त्यक्ताद्या चाष्टमी ताक्ष्ये सन्मुखे सादिकाऽष्टमी ॥ ४० ॥

सप्तमूषावहनाय सम्मुखाख्यं गृहं शुभम् ।
अष्टम्यादौ ततश्चाद्याऽष्टमीत्थं क्रमतोऽष्टमी ॥ ४१ ॥

पुनस्तेन क्रमेणैवाऽष्टाविंशत्युत्तरं शतम् ।
यथानाम गुणाश्चैते शुभा वा अशुभा अपि ॥ ४२ ॥

इतिसूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
चतुःशालगृहलक्षणाधिकारो नामाष्टनवतितमं सूत्रम् ॥

---

## (९९) गृहसंयोजननिर्णयो नाम नवनवतितमं सूत्रम् ॥

---

विश्वकर्मोवाच—

कथये गृहसंयोगाश्चतुःशालात्परे क्रमात् ।
एकशालं चतुःशाले संयुक्तं पञ्चशालकम् ॥ १ ॥

युक्तं द्विशालं त्रिशाले पञ्चशालं तदिष्यते ।
द्विशालद्विकयुक्तैकशालं स्यात्पञ्चशालकम् ॥ २ ॥

एकशालद्वये युक्तं त्रिशालं पञ्चशालकम् ।
पञ्चकं चैकशालानामन्यत्तत्पञ्चशालकम् ॥ ३ ॥

इतिपञ्चशालं गृहम् ॥

एकशालं द्विशालं च षट्शालं स्यात्रिशालके ।
त्रिशालद्वयसंयोगात् षट्शालं चैव तद्भवेत् ॥ ४ ॥

द्विशालत्रयसंयोगे षट्शालं तद् विधीयते ।
द्विशालद्वितयं चैकशालयुग्मं षट्शालकम् ॥ ५ ॥

एकशालानि चत्वारि द्विशालेच षड्भद्रकम् ।
एकशालत्रयं योज्यं त्रिशाले च षड्भद्रकम् ॥ ६ ॥

द्विशालयुक्चतुःशालं षड्भद्रं तद्भवेत्खलु ।
चतुःशालं त्वेकशालद्वयं षड्भद्रकं स्मृतम् ॥ ७ ॥

योजयेदेकशालानि षट् षट्शालं तदुच्यते ।
पञ्चशालं च षट्शालं कथितं त्वपराजित ॥ ८ ॥

इति षट्शालम् ॥

त्रिशालद्वितयं कुर्यादेकशालं तथैव च ।
सप्तशालं तु तज्ज्ञेयमधुना कथितं शुभम् ॥ ९ ॥

द्विशालत्रितयं युक्तमेकं वै चैकशालकम् ।
सप्तशालं सुसङ्ख्यातं वास्तुविद्भिरुदाहृतम् ॥ १० ॥

द्विशालद्वितयं योज्यं त्रिशाले सप्तभद्रकम् ।
चतुःशाले त्रिशालं च तद्भवेत् सप्तभद्रकम् ॥ ११ ॥

एकशालं द्विशालं चतुःशाले सप्तभद्रकम् ।
त्रिशालद्वितयं चैकशालं तत्सप्तशालकम् ॥ १२ ॥

चतुःशालं त्रिभिरेकशालैस्तत्सप्तशालकम् ।
एकशाला[illegible] चत्वारि त्रिशाले सप्तभद्रकम् ॥ १३ ॥

एकशालानि पञ्चैव द्विशालं सप्तभद्रकम् ।
सप्तैव चैकशालानि तद्भवेत् सप्तशालकम् ॥ १४ ॥

इति सप्तशालम् ॥

द्विशालानि च चत्वारि तद्भवेदष्टशालकम् ।
चतुःशालद्वयं योज्यमष्टशालं तदुच्यते ॥ १५ ॥

त्रिशालद्वितयं योज्यं द्विशाले चाष्टशालकम् ।
त्रिशालं चैकशालं द्वे द्विशाले चाष्टशालकम् ॥ १६ ॥

एकशालद्वयं चैव चतुःशालं द्विशालकम् ।
तदुक्तमष्टशालं वै वास्तुशास्त्रविशारदैः ॥ १७ ॥

त्रिशालं योजयेदेवमेकशालत्रयं तथा ।
द्विशालेन तु संयुक्तं तद्भवेदष्टशालकम् ॥ १८ ॥

एकशालद्वयं योज्यं द्विशालत्रितयं तथा ।
एवं संयोजितं यत्तु तद्भवेदष्टशालकम् ॥ १९ ॥

एकशालानि चत्वारि द्विशालद्वयमेव च ।
एवमादिसंयोगे तु तद्भवेदष्टशालकम् ॥ २० ॥

इत्यष्टशालम् ॥

द्विशालं च त्रिशालं चतुःशालं नवशालकम् ।
चतुःशालद्वयं चैकशालं तु नवशालकम् ॥ २१ ॥

त्रिशालत्रितयं योज्यं तद्भवेन्नवशालकम् ।
एकशालं द्विशालं त्रिशालद्वयेऽङ्कशालकम् ॥ २२ ॥

एकशालं द्विशालानां चतुष्कं नवशालकम् ।
पञ्चैकशालानि चतुःशालं तु नवशालकम् ॥ २३ ॥

इति नवशालम् ॥

चतुःशालद्वयं योज्यं द्विशाले दशशालकम् ।
त्रिशालत्रयमायोज्यैकशालं दशशालकम् ॥ २४ ॥

द्विशालकानि पञ्चैव दशशालं तु तद्भवेत् ।
द्विशालचतुष्के द्वयेकशालं तु दशशालकम् ॥ २५ ॥

एकशालत्रयं चैव चतुःशालं त्रिशालकम् ।
दशशालमिति प्रोक्तं वास्तुशास्त्रविशारदैः ॥ २६ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
गृहसंयोजननिर्णयाधिकारो नाम नवनवतितमं सूत्रम् ॥

---

## (१००) शालागृहनिर्णयो नाम शततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

शुद्धा तथा च संबद्धा संयुता च परिभ्रमा ।
शालाश्चतुर्विधाः प्रोक्ताः शृणु त्वमपराजित ॥ १ ॥

शुद्धा च केवला शाला संबध्यालिन्दतस्तथा ।
शालाश्रेण्या संयुता स्यात् मध्यालिन्दा परिभ्रमा ॥ २ ॥

एकशालादितो वृद्ध्या चान्ते स्याद् दशशालिकम् ।
सर्वाश्चालिन्दरहिताः शुद्धा नाम्ना समीरिताः ॥ ३ ॥

साग्रालिन्दा दशशाला एकशालादितः क्रमात् ।
संबद्धा नामतो ज्ञेया प्रोक्ताश्च गृहकर्मणि ॥ ४ ॥

शालासंघट्टमध्ये तु बाह्यालिन्दैस्तु वेष्टिता ।
संयुता नामतो ज्ञेया वास्तुविद्भिरुदाहृता ॥ ५ ॥

पृथगेकैकशालासु मध्येऽलिन्दा यदि स्थिताः ।
परिभ्रमेति विज्ञया सर्वशान्तिकरी नृणाम् ॥ ६ ॥

छन्दभिन्ना प्रतिभिन्ना संपुटा च प्रतिक्रमा ।
उक्ताश्चतुर्विधाः शालाः पूर्वच्छन्दसमुद्भवाः ॥ ७ ॥

शालामध्ये पवरका फलकानि भित्त्यन्तरे ।
छन्दभिन्नेति तन्नाम सर्वकामप्रदायिनी ॥ ८ ॥

शालामध्ये पवरकास्तथा पट्टदारुकं भवेत् ।
प्रतिभिन्नेति तन्नाम कर्तुः सर्वगृहोत्तमा ॥ ९ ॥

भित्तिमध्ये च पट्टदारु तथालिन्दे तु बाह्यतः ।
संपुटेति च तन्नाम प्रशस्ता गृहकर्मणि ॥ १० ॥

शालोत्तरे द्वावलिन्दौ क्वचित्पूर्वे तथैव च ।
प्रतिक्रमेति तन्नाम कर्तव्या सर्वकामदा ॥ ११ ॥

गृहमाला गृहनाभिर्गृहसंघट्ट एव च ।
गृहाणक इति प्रोक्तं गृहभेदचतुष्टयम् ॥ १२ ॥

कुक्षौ चैवाग्रतः पृष्ठे पङ्क्तौ चैव गृहाः स्थिताः ।
गृहमालेति नाम्ना वै प्रशस्ता छन्दसम्भवा ॥ १३ ॥

विदिक्षु दिक्षु पृष्ठेऽग्रे कुक्षौ वेश्मानि सर्वतः ।
गृहसंघट्टनामासौ संप्रोक्तः शास्त्रकोविदैः ॥ १४ ॥

गृहमध्ये पवरका नानाकारा ह्यलिन्दकाः ।
अलिन्दैश्चापवरकैर्गृहनाभिरितीर्यते ॥ १५ ॥

अधो भूमौ सुविस्तीर्ण उपर्युपरि वै पुनः ।
गृहाणक इति प्रोक्ता गृहा वै वेदसङ्ख्यया ॥ १६ ॥

खण्डपाण्डू वाजिपूर्णौ तृणच्छन्दश्च पट्टकः ।
छन्दाश्च षड्विधाः प्रोक्ताः प्रयुक्ता गृहकर्मसु ॥ १७ ॥

माडमौडौ शुद्धशृङ्गौ तुङ्गारः सिंहकस्तथा ।
राजवेश्मसु षट्छन्दाः कथितास्त्वपराजित ॥ १८ ॥

सिंहकर्णः कपोताली घण्टा पद्मं च कुम्भकम् ।
ध्वजा छत्रं कुमाराश्च गृहेषु परिवर्जिताः ॥ १९ ॥

इतिसूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्री भुवनदेवाचार्योक्तापराजितपृच्छायां
शालागृहनिर्णयाधिकारो नाम शततमं सूत्रम् ॥

## (१०१) द्वारलक्षणमेकाधिकशततमं सूत्रम्॥

विश्वकर्मोवाच—

एकाशीतिपदे वास्तौ द्वात्रिंशद्देवतापदे ।
पूर्वापरयाम्योत्तरे वच्मि द्वाराणि वै क्रमात् ॥ १ ॥

ईशे रौद्रं भवेद् द्वारं पर्जन्ये स्त्रीवियोगकृत् ।
जये विजयदं ख्यातं माहेन्द्रे प्रभुतैधकृत् ॥ २ ॥

तेजोवृद्धिः सदादित्ये धर्मे वै शीलतः सुखम् ।
सुखदं भृत्यदेवे तु चान्तरिक्षे सदा सुखम् ॥ ३ ॥

अग्निस्थाने वह्निभयं पूष्णि चैव भयावहम् ।
अनारोग्यं तु वितथे बलदं च गृहक्षते ॥ ४ ॥

मृत्युश्च यमसंस्थाने गन्धर्वे च धनंजयः ।
भृङ्गराजे नैव सुखं शौर्यं विक्रमदं मृगे ॥ ५ ॥

आयुःप्रदं पितृपदे श्रीदं दौवारिके तथा ।
सुग्रीवे कपिबाहुल्यं पुष्पदन्ते तथार्थदम् ॥ ६ ॥

आरोग्यशान्ती वरुणे चासुरेऽर्थक्षयप्रदम् ।
हीनवृद्धिकरं शोषे पक्षघ्नं पापयक्ष्मके ॥ ७ ॥

सद्य उच्चाटनं रोगे नागे चोन्मादतो भयम् ।
मुख्येऽभीष्टप्रदं चैव भल्लाटे चार्थवृद्धिकृत् ॥ ८ ॥

वृद्धिश्च क्षीणता सोमे सदोद्वेगस्तु पर्वते ।
वृद्धिर्वृद्धिश्चादितौ च दितौ चैवाभिमानकृत् ॥ ९ ॥

वास्तोश्च परिधावुक्ता द्वात्रिंशदमराः क्रमात् ।
शुभद्वारं तु गृह्णीयादशुभं नैव गृह्यते ॥ १० ॥

दिशाभागेषु च तथा द्वारं शोभनमण्डितम् ।
इन्द्रगृहक्षतपुष्पदन्तभल्लाटचिह्नतः ॥ ११ ॥

मीने सिंहे वृश्चिके च गृहं स्यात्पूर्वतोमुखम् ।
याम्यं कन्यानक्रकर्के धनुस्तुलायुग्मेऽपरम् ॥ १२ ॥

वृषे मेषे तथा कुम्भे तत्कुर्यादुत्तरामुखम् ।
द्वारं दिग्भागतो न्यसेद् गृहपादश्चानुजन्मनि ? ॥ १३ ॥

पूर्वतोऽभिमुखं वेश्म ध्वजे चाये तु शान्तिदम् ।
याम्यतोऽभिमुखं गेहं सदाकल्याणकारकम् ॥ १४ ॥

गृहं च वारुणे शस्तं धनधान्यादिकं भवेत् ।
कौबेरीमुखगेहं च शान्तिपुष्टि सुखावहम् ॥ १५ ॥

कुर्युरायविरुद्धं न द्वारं वै शिल्पिनस्तथा ।
सर्वेषामथवा चायं वृषं कुर्युर्विचक्षणाः ॥ १६ ॥

ध्वजे हरौ वा विशोध्यर्क्षं ताराश्चन्द्रमंशकम् ।
मैत्रे वृद्धिप्रदं द्वारं नित्यं कल्याणकारकम् ॥ १७ ॥

वेश्मनां वामकर्णे च मूलद्वारं तु कारयेत् ।
दक्षिणे चाश्वशालानां मध्ये द्वारं तु दन्तिनाम् ॥ १८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां द्वारलक्षणाधिकारो नामैकाधिकशततमं सूत्रम् ॥

---

## (१०२) महाराजप्रासादायतननिवेशो नाम द्व्युत्तरशततमं सूत्रम् ।

---

विश्वकर्मोवाच—

आदौ पुनरध्युश्च प्रासादानृपपन्नोत्तमाः ? ।
ननु पूर्वापरस्था याम्योत्तरे विपुलान्महीं ? ॥ १ ॥

दशाग्रोपरूशतान्येवं धनुषां स्मृतमुत्तमम् ।
मानमायतनस्योक्तं त्रिधा ज्येष्ठादिभेदतः ॥ २ ॥

क्षेत्रमायामतश्चैव चतुरस्रं समं कृतम् ।
तस्यानुजीवनं कुर्यात् प्रासादानां विधा यदि ॥ ३ ॥

दंतस्य दिग्भागवशात् स्थानमानादितः क्रमात् ।
तेषां तत्र विधीयन्ते सर्वेषां वृद्धिहेतवे ॥ ४ ॥

सूत्रभक्तानुकुर्वीत निवेश्य स्वामिवत्सल ? ।
प्रजावृद्धिकरा नित्यं सुखदाः स्युः पुरःपतेः ॥ ५ ॥

सन्मान्यन्ते ये च राजा तुल्यजाता हितैषिणः ।
तद्वेश्माकांशहीनं स्याद् बन्ध्वाद्याः पूर्वतः स्थिताः ॥ ६ ॥

तस्यैव चाग्रतः कुर्यादुत्सेधद्विगुणान्तरे ।
एवं विधा च कर्तव्या सभा देवोचितोत्तमा ॥ ७ ॥

ईशाने पूर्वदिशि वा देवधिष्ण्यानि कारयेत् ।
नृपस्य श्वशुरादीनां विहीनान्यष्टमांशतः ॥ ८ ॥

एतेषां पूर्वभागस्थं राजमातुर्निवेशनम् ।
मातुर्मातुर्भगिन्यादेर्हीनमेकादशांशतः ॥ ९ ॥

आग्नेय्यीं दिशमाश्रित्य पुत्राणां विनिवेशनम् ।
हीनमेकादशांशेन तत्कार्यं पुरमध्यतः ॥ १० ॥

तत्प्रासादास्तु तत्तुल्या न न्यूना न ततोऽधिकाः ।
याम्यायां च प्रकुर्वीत पत्न्या मात्रादिकस्य च ॥ ११ ॥

कुर्याद् दशांशहीनांश्च नैर्ऋत्यां दिशि भूपतेः ।
प्रासादान् नृपपत्नीनां सर्वासां रतिकोत्तमान् ॥ १२ ॥

राज्ञीप्रासादतुल्यांश्चाश्रितदेवीनां पश्चिमे ।
स्वसृणां मातुलानां च कुमाराणां तु वारुणे ॥ १३ ॥

सौम्यायां मारुतं यावद् भगिन्या याम्यतस्तथा ।
प्रासादा मंत्रिणां गेहाः प्रतिहारपुरोधसाम् ॥ १४ ॥

सामन्त कुंज संरोह वपुषो रजनानि च ? ।
ईशान्ये देवकुलानामष्टमांशहीना मताः ॥ १५ ॥

मर्मवेधं परित्यज्य द्वारवेधादिषु क्रमात् ।
खातं कार्यं च स्वस्थाने तेषां च हितकाम्यया ॥ १६ ॥

अलिन्दैर्गर्भकोष्ठैश्च सीमास्तम्भगवाक्षकैः ।
द्वारद्रव्यतलोच्छ्राये प्राग्ग्रीवे सिंहकर्णिकैः ॥ १७ ॥

न कुर्याद् दूषणैस्तुल्यात् समन्ताच्छन्दरूपतः ।
समरूपं भवेन्न्यूनमधिकं नैव निन्दति ॥ १८ ॥

राजपीडा भवेन्न्यूनेऽधिके स्यात्तु धनक्षयः ।
प्रासादे भूमिपालस्य निवेशाः परिभो क्रमात् ॥ १९ ॥

द्रव्ये न्यूनं न कर्तव्यमुत्कृष्टं चैव कारयेत् ।
संस्थानोन्मानन्यूनं न विस्तरे नोच्छ्रयेऽपि च ॥ २० ॥

पूर्वोक्तस्य विभागस्य किञ्चिद्धीनान्तरं शुभम् ।
अन्योन्यद्विगुणोच्छ्रायैरेकैकस्यान्तरं शुभम् ॥ २१ ॥

सुभोग्यं तत्र कुर्वीत बहुभिर्भवनान्तरैः ।
कोष्ठागारैर्भाण्डागारैर्भोजनोपस्करादिभिः ॥ २२ ॥

शिलोदूखलशालाभिः पूरयेदन्यदन्तरम् ।
प्रशस्तान् कारयेत् सर्वान् सुरूपान् सुमनोरमान् ॥ २३ ॥

वापीकूपप्रपाद्याश्च सुराणां च गृहाणि च ।
नरेन्द्रायतनं त्वेवं वेश्मानि परिकल्पयेत् ॥ २४ ॥

अन्यथा तु महादोषस्तथैव च कुलक्षयः ।
इति प्रासाददिग्भेदाः सौम्यं सुरगृहादिकम् ॥ २५ ॥

यस्यैतत्तस्य विजयश्चिरं स मुदितो भवेत् ।
प्रतापी निर्भयस्तावत्सुचिरं प्राप्यते मही ॥ २६ ॥

यस्य यस्य यदा भूमिः फलं तस्यैव चोत्तमम् ।
तस्मै क्रुध्यति देवो यो द्विजदेवमहीं हरे ॥ २७ ॥

अन्येभ्यश्चापि हर्म्याणि कन्यादिभ्यस्तथैव च ।
वितरन्ति महीपाला लभन्ते पुण्यमुत्तमम् ॥ २८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
महाराजप्रासादायतननिवेशाधिकारो नाम द्व्युत्तरशततमं सूत्रम् ।

---

## (१०३) त्रैलोक्यदीक्षा नाम त्र्युत्तरशततमं सूत्रम् ।

### अत ऊर्ध्वं प्रासादखण्डं भविष्यति ॥

अपराजित उवाच–

प्रासादानां कथं तात चोत्पत्तिर्दिव्यसूत्रिणः ।
किमाकारजातिरूपा नागराश्छन्दकास्तथा ॥ १ ॥
द्राविडा मिश्रकाः ख्याता विमाना भूमिजास्तथा ।
सान्धाराश्च वराटाश्च लतिनाश्चैवकामदाः ॥ २ ॥
वलभ्यः फांसनाकाराः सिंहालोकनदारुजाः ।
विमानं नागरच्छन्दे कुर्याद् विमानपुष्पकम् ॥ ३ ॥
भिन्नभिन्नतयोक्तानि गृहाण्येवाभिधानतः ।
कस्यां जातो कानि चैव ह्युत्पन्नानि ब्रवीहि मे ॥ ४ ॥

विश्वकर्मोवाच–

भारते च महापुण्ये हिमवान् वै महागिरिः ।
तस्मिन्नेव महापुण्यं दण्डी दारुवनं महत् ॥ ५ ॥
देवदारुवनं दिव्यं विविधा वृक्षजातयः ।
कङ्कोलकलवङ्गाश्च तथा कर्पूरपादपाः ॥ ६ ॥
चन्दनागरुसौभाग्यरक्तचन्दनकास्तथा ।
अगस्त्योदुम्बराशोका बिल्ववृक्षश्च चम्पकाः ॥ ७ ॥
पनसाश्च कपित्थाश्च द्राक्षाखर्जूरदाडिमाः ।
सालतालतमालाश्च तथैव मधुपादपाः ॥ ८ ॥
कर्णिकारद्रुमा रम्या नानापुष्पफलान्विताः ।
अतीवफलसम्युक्ता लताः रुचाकृतयस्तथा ॥ ९ ॥
नागकेसरपुन्नागा विविधा वृक्षजातयः ।
जातीचम्पकमन्दारा नीलरक्तोत्पलानि च ॥ १० ॥
पताकाध्वजसम्युक्तं तत्र वै यज्ञमण्डपम् ।
पद्मपुष्पसुशोभाढ्यं वितानैर्नैककैर्युतम् ॥ ११ ॥
श्वेतरक्तहरित्पीतैः कणधूमैस्तथैव च ।
कर्पूरकुङ्कुमादित्यपुष्पप्रकरसंकुला ॥ १२ ॥
सधूपामोदबहुला कुङ्कुमद्रवसिञ्चिता ।
तत्र जाता महापूजा देवेशस्य जगत्प्रभोः ॥ १३ ॥
प्रवेशनिर्गमोपेतं नरनारीसमाकुलम् ।
महामुरजशब्दैश्च गीतैश्च विविधैस्तथा ॥ १४ ॥
मनोहरं सद्म दिव्यं देवानामपि दुर्लभम् ।
तत्र हास्यविदग्धाश्च क्रीडन्ति रुद्रकन्यकाः ॥ १५ ॥

देवकन्याश्च विविधा ऋषिनारीसमन्विता: ।
सहिता नृत्यमानाश्च मङ्गलै: कौतुकैस्तथा ॥ १६ ॥
त्रिसंगीतश्च विविधै: प्रेक्षणीयैर्गणेश्वरै: ।
गणाश्च किलकिलायन्ते प्रवल्गन्ति मुहुर्मुहु: ॥ १७ ॥
गृह्णन्ति तत्र वै दीक्षां सुरासुरनरोरगा: ।
यक्षगन्धर्वदेवाश्च तथा विद्याधरोत्तमा: ॥ १८ ॥
इदं च दीक्षितं सर्वं जगत्स्थावरजंगमम् ।
दण्डीदारुवने तत्र ज्ञानध्यानैश्च किं पुन: ॥ १९ ॥
तथैव च महाजाप्यैर्नियमैश्चाप्यनेकश: ।
... ... ... ... ... ॥ २० ॥
यदि यागेश्वरो दृष्टो दण्डीदारुवने शिव: ।
धर्मार्थकाममोक्षान् स सम्प्राप्नोति यथेप्सितान् ॥ २१ ॥
कृतघ्नश्चैव गोघ्नश्च ब्रह्महा गुरुतल्पग: ।
दुष्टकर्मा दुराचारी मातृहा पितृहा तथा ॥ २२ ॥
मुच्यते सर्वपापेभ्यो दृष्ट्वा यागेश्वरं शिवम् ।
संसारभयभीतानां पापक्षयकर: शिव: ॥ २३ ॥
कल्पकोटिसहस्रैश्च यत्पापं समुपार्जितम् ।
दृष्ट्वा यागेश्वरं देवं तस्मात्पापात्प्रमुच्यते ॥ २४ ॥
पुंसां मृतानां चाकालेऽसंस्कृतानां जलाग्नित: ।
तत्र भूमावदग्धानां मोक्ष: स्यात् पञ्चभूतत: ॥ २५ ॥
दीक्षिता: सर्वदेवाश्च ब्रह्मविष्ण्विन्द्रकादय: ।
त्रयस्त्रिंशत्कोटयश्च देवताश्चैव दीक्षिता: ॥ २६ ॥
शुक्राद्याश्चासुरा: सर्वे दीक्षिता: परमेश्वरै: ।
वासुक्याद्या: पन्नगाश्च दीक्षितास्तलवासिन: ॥ २७ ॥
यक्षा: सर्वे कुबेराद्या गन्धर्वास्तुम्बरादय: ।
विद्याधरा मन्मथाद्या देवा वै वासवादिका: ॥ २८ ॥
क्षत्रिया: सूर्यवंशाद्या: सोमवंशप्रसूतय: ।
समस्ताश्चैव देव्यस्तु हरसिद्ध्यादिकास्तथा ॥ २९ ॥
पिशाचाश्च तत: प्रेता निशायां ये चरन्ति च ।
क्ष्मादिकं समस्तं च जगत्स्थावरजंगमम् ॥ ३० ॥
दशपञ्चोत्सवेष्वेवं स्तोत्रैर्मन्त्रैस्तथार्चनै: ।
प्रमथाद्या: पूजयन्ति ब्रह्मविष्ण्वादयस्तथा ॥ ३१ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
त्रैलोक्यदीक्षाधिकारो नाम त्र्युत्तरशततमं सूत्रम् ॥

# (१०४) नागरप्रासादलक्षणं चतुरुत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

ब्रह्मविष्ण्वादयो देवा कुर्वन्त्याद्यं महोत्सवम् ।
नन्दा भद्रा जया रिक्ता पूर्णा स्यात् पञ्चमी तथा ॥ १ ॥

कृता महोत्सवाश्चैते ब्रह्माद्यैश्च सुरैरपि ।
अभिधानुक्रमं तेषां शृणु पूजां समाहितः ॥ २ ॥

वैराज्यं पुष्पकं चैव कैलासं मणिपुष्पकम् ।
त्रिविष्टपं पञ्चमं च नन्दाद्याः क्रमयोगतः ॥ ३ ॥

वैराज्यं चतुरश्रं स्यादायतं पुष्पकं तथा ।
वृत्तं वृत्तायतं चैव कैलासं मणिपुष्पकम् ॥ ४ ॥

त्रिविष्टपं तथाष्टाश्रं पञ्चपूजा महोत्सवाः ।
हेमरत्नमयैः स्तम्भैः शुष्कपादपच्छाद्यकैः ॥ ५ ॥

मुक्तालङ्कारखचितैर्वितानैर्दिव्यभूषणैः ।
स्फटिकैर्विविधैर्लक्षै रत्नैश्च मणिवेदिभिः ॥ ६ ॥

सिंहकर्णैः सुसंयुक्तैर्निर्यूहाच्छाद्यकर्णिकैः ।
शिखरैर्हेमरत्नाढ्यैः सिंहाग्रकलशान्वितैः ॥ ७ ॥

गणा ?श्चादित्यसंकाशं मणिरत्नविभूषितम् ।
चतुर्द्वारसुशोभाढ्यमिलिकावलणैर्युतम् ॥ ८ ॥

जङ्घायां रूपसंघाढ्यं दिक्पालैश्च समन्वितम् ।
त्रिसन्धिभद्रकाकारं पताकाध्वजशोभितम् ॥ ९ ॥

वैराज्यं श्वेतवर्णं च हेमरत्नविभूषितम् ।
पुष्पकं रत्नवर्णं च रक्तालङ्कारशोभितम् ॥ १० ॥

कैलासं हेमवर्णं च सर्वरत्नविभूषितम् ।
हरितं मणिपुष्पं च सर्वरत्नं त्रिविष्टपम् ॥ ११ ॥

पीठोपपीठजङ्घाश्च मेखलाकूटछाद्यकम् ।
शिखरं सिंहकर्णाढ्यं भूमिका रत्नभूषिता ॥ १२ ॥

जालव्यालकपोतालीसिंहकर्णसुच्छाद्यकम् ।
स्फटिकैर्हेमरत्नाढ्यैः सर्वलक्षणसंयुतैः ॥ १३ ॥

एष पञ्चोत्सवे यागो ध्यात्वा यागेश्वरं शिवम् ।
भक्तिपूजास्तवस्तोत्रैर्गीतैश्च विविधैस्तथा ॥ १४ ॥

मङ्गलैर्दिव्यवादित्रैः प्रेक्षणीयैरनेकधा ।
लास्यताण्डवनृत्यैश्च नाट्यैशं च महोपमैः ॥ १५ ॥

नाट्यरसोत्तमानन्दैः कौतुकैश्च त्वनेकशः ।
इत्यादिबहुभावैश्च अङ्गैरङ्गैर्महारसैः ॥ १६ ॥

नुतस्तुष्टो महादेवो भक्तिपूजास्तवादिकैः ।
ब्रह्माद्यांश्च सुरान् सर्वान् भक्तियुक्तानुवाच ह ॥ १७ ॥

वरं ब्रूहि च दास्यामि यच्च ते मनसि स्थितम् ।
ददामि तुभ्यं भो ब्रह्मन् सुरार्थं वक्तुमर्हसि ॥ १८ ॥

ब्रह्मोवाच–

यदि तुष्टोसि देवेश मुक्तिदं त्रिदशाधिप ।
यस्मिंश्च तव पूजा स्यात् प्रकुर्या तं शिवालयम् ॥ १९ ॥

भवत्प्रसादतुष्टी च पूज्याः प्रासादसंज्ञकाः ।
वैराज्यादिसमुत्पन्नाः सर्वे प्रासादसंज्ञकाः ॥ २० ॥

इषुभेदात्मकं चैव सर्वं प्रासादनायकम् ।
सोमेश्वर उवाचाथ तथाऽस्तु ब्रह्मणोदितम् ॥ २१ ॥

ब्रह्मोवाच भवाल्लब्धाः प्रासादा विविधा मया ।
वैराज्यः पुष्पकैलासौ मणिकश्च त्रिविष्टपः ॥ २२ ॥

इषुभेदसमुत्पन्नाः प्रासादाः सर्वकामदाः ।
अष्टाशीतिरन्यभेदा अष्टादशशतानि च ॥ २३ ॥

शतानि पञ्च प्रासादा अष्टाशीत्युत्तराणि वै ।
सर्वेषां मूलयोनिश्च वैराज्यो नाम नामतः ॥ २४ ॥

प्रोक्तं चायतछन्देषु पुष्पकाणां शतत्रयम् ।
शतानि पञ्च भेदाश्च वृत्तकैलाससंभवाः ॥ २५ ॥

वृत्तायते च मणिके भेदाः सार्धशतानि च ।
सार्धानि त्रिशतान्येवमष्टार्धे च त्रिविष्टपे ॥ २६ ॥

अष्टाशीत्युत्तराण्येव शतान्यष्टादशव च ।
ब्रह्मसृष्टास्तथा चैते आद्यवैराज्यसम्भवाः ॥ २७ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां नागरप्रासादलक्षणाधिकारो नाम चतुरुत्तरशततमं सूत्रम् ॥

## (१०५) चतुर्दशप्रासादोत्पत्तिमहोत्सवो नाम पञ्चोत्तरशततमं सूत्रम् ॥

---

पुनस्तु दानवेन्द्रेण कृताः पूजा महोत्सवाः ।
पद्माद्याश्च दशाम्यन्ताः पञ्चपूजा महत्तमाः ॥ १ ॥

स्वस्तिका सर्वतोभद्रा वर्धमाना तृतीयका ।
सूत्र पद्मा महापद्मा द्राविडैः कर्मचर्चिताः ॥ २ ॥

द्राविडाख्ये च प्रासादे इषुभेदाः समीरिताः ।
एकद्वित्रिचतुःपञ्च शतान्येकैकशः क्रमात् ॥ ३ ॥

एवं द्राविडनामानः प्रासादा विविधा मताः ।
सङ्ख्या सार्द्धसहस्रं तु पूर्वदेवैः कृता पुरा ॥ ४ ॥

शान्तिदाः सर्वकालेषु गोब्राह्मणहितावहाः ।
वल्लभाः सर्वदेवानां शिवस्यापि विशेषतः ॥ ५ ॥

इति द्राविडोत्पत्तिः ॥

पुनः कृताश्च गन्धर्वैः पूजाः पञ्चमहोत्सवे ।
महोत्सवा देवसदृशोपमा क्षतपाते तदद्भुत ? ॥ ६ ॥

रुचकश्च भवः पद्मो मलयो वज्रकस्तथा ।
वैराज्योपमकायाश्च हीषुभेदाः प्रकीर्तिताः ॥ ७ ॥

रुचकाद्याः षोडश वै चतुरस्राः प्रकीर्तिताः ।
भवश्च विभवश्चैव चतुरस्रायतौ तथा ॥ ८ ॥

पद्मो मालाधरश्चैतौ वृत्तावेव तु कारयेत् ।
वृत्तायतौ तु कर्तव्यौ मलयो मकरध्वजः ॥ ९ ॥

वज्रकः स्वस्तिकः शङ्कुरष्टाश्राः परिकीर्तिताः ।
इषुभेदसमुत्पन्नाः प्रासादा लतिनास्तथा ॥ १० ॥

एकद्वाराश्च कर्तव्याः पुरशान्तिकराः सदा ।
एते च जातिशुद्धाश्च लतिनाः पञ्चविंशतिः ॥ ११ ॥

इति लतिनोत्पत्तिः ॥

वसुभिश्च कृताः पूजास्तथा पञ्च महोत्सवाः ।
तेषां नामानि युक्तिं च कथयामि यथाक्रमम् ॥ १२ ॥

वराटः पुष्पकश्चैव श्रीपुञ्जश्च तृतीयकः ।
सर्वतोभद्रसिंहौ च वराटाः पञ्च कीर्तिताः ॥ १३ ॥

रत्नयोन्युद्भवाः सर्वे वास्तुवेदे समीरिताः ।
द्विद्वादशशतान्येवं प्रासादास्तु वराटकाः ॥ १४ ॥

इति वराटोत्पत्तिः ॥

यक्षमहोत्सवं कृत्वा विमानानां समुद्भवाः ।
विमानगरुडध्वजविजया गन्धमादनः ॥ १५ ॥

इमे विमानाः पञ्चैव कर्तव्याः शान्तिमिच्छता ।
पुष्पमालाधराकारा लताशृङ्गोत्तमास्तथा ॥ १६ ॥

त्रिचतुःपञ्च षट् सप्त शतान्येकैकतः पृथक् ।
पञ्चविंशतिः शतानि तत्सङ्ख्येत्थमुदाहृता ॥ १७ ॥

इति विमानोत्पत्तिः ॥

उरगेन्द्रैः कृता पूजा तदर्थे तु प्रदक्षिणा ।
सान्धारास्तत्र संभूताः प्रासादा भ्रमसंयुताः ॥ १८ ॥

केसरी नन्दनश्चैव मन्दरः श्रीतरुस्तथा ।
इन्द्रनीलो रत्नकूटो गरुडश्चेति नामतः ॥ १९ ॥

द्वौ त्रयश्चैकः षट् त्रयः सप्त त्रितयमेव च ।
पञ्चविंशतिराख्याताः प्रासादाः पर्वतोपमाः ॥ २० ॥

शान्तिदाः सर्वकालेषु पुरे राज्ञां जनस्य च ।
देशशारिकचा नित्यं नित्यं कल्याणकारकाः ॥ २१ ॥

तद्भेदैश्च समुत्पन्नाः शतार्धं पृथगेकतः ।
द्वादशैव शतान्येवं पञ्चाशदधिकानि च ॥ २२ ॥

इति सान्धारोत्पत्तिः ॥

विद्याधरैः पुनः पूजा कृता यागेश्वरस्य तु ।
मिश्रकाश्च समुत्पन्ना अनेकाकाररूपिणः ॥ २३ ॥

बहुवर्णैस्तथा पुष्पैः पूजां कृत्वा शिवस्य च ।
मिश्रका बहुरूपाढ्या नैकरत्नैर्विभूषिताः ॥ २४ ॥

एकवर्णैर्बहुवर्णैः पूजाः पुष्पैरनेकधा ।
बहुपुण्यप्रदाः सर्वे शान्तिदाश्च पुरःपतेः ॥ २५ ॥

अष्टादशशतान्यङ्गमिश्रका द्विगुणास्ततः ।
भूपालैश्च महाराजैः कृताः पूजामहोत्सवाः ॥ २६ ॥

इति मिश्रकोत्पत्तिः ॥

प्रासादानां च पतयो भूमिजा भूतिदानतः ।
निषधः कुमुदः स्वस्तिस्त्रयः पूज्या माहान्तकाः ॥ २७ ॥

चतुरश्रा वृत्तसंस्था अष्टशालास्ततः परम् ।
दिशः सप्त तथाष्टौ च भूमिजाश्च त्रिधोदिताः ॥ २८ ॥

तदङ्गतः षट् शतानि पञ्चविंशतिभिः सह ।
× × × × × × × ॥ २९ ॥

इति भूमिजोत्पत्तिः ॥

यस्माद् वेदाङ्गसंभूतिर्देवदेवश्चतुर्थकः ।
अतितेजः पुञ्जकाख्यग्रहयुक्तो दिवाकरः ॥ ३० ॥
कृता महोत्सवास्तेन पूजाश्चैव माहान्तकाः ।
विमाननागराच्छन्दाः प्रासादेषु समीरिताः ॥ ३१ ॥
नक्षत्राधीश्वरश्चैवं नक्षत्रैर्बहुभिर्वृतः ।
विधुस्तेजोऽमृतमयः संसाराधारकारणम् ॥ ३२ ॥
द्विजराजस्तेन कृता पूजा यागेश्वरस्य च ।
विमानपुष्पकाख्याताः प्रासादाः सर्वकामदाः ॥ ३३ ॥
गौर्याद्याभिश्च देवीभिः कृताः पूजा महोत्सवाः ।
पुष्पप्राकारसंकीर्णा रत्नज्योतिर्महार्चिषः ॥ ३४ ॥
कृता वलभिकाकाराः प्रासादाः रूपभिधानकाः ।
आयताश्चतुरश्राश्च वृत्ता वृत्तायतास्तथा ॥ ३५ ॥
महापुण्योदयस्तेभ्यस्तेजःसौभाग्यवर्द्धनम् ।
जन्मजन्मनि भूपालाः पुष्पत्राणपरायणाः ॥ ३६ ॥

इति वलभ्युत्पत्तिः ॥

हरसिद्धयादयो देव्यः समस्ताः समयेषु च ।
ताभिर्महोत्सवाः पूजाः कृताश्चैव माहान्तकाः ॥ ३७ ॥
सिंहावलोकनाः सर्वे प्रासादा भुवनोत्तमाः ।

इति सिंहालोकनोत्पत्तिः ॥

दारुकर्मोद्भवाः सिंहालोकना दारुजाः समे ॥ ३८ ॥

इति दारुजोत्पत्तिः ॥

पिशाचैश्चैव सर्वैश्च रक्षःप्रेतात्मकैस्तथा ।
कृत्वा महोत्सवं पूजाः कृता यागेश्वरस्य तु ॥ ३९ ॥
न ते स्त्रीलिङ्गतः कार्याः पुंलिङ्गास्तु विवर्जिताः ।
नपुंसकाः फांसनाख्याः प्रासादाश्च भवन्ति च ॥ ४० ॥

इति फांसनाकारोत्पत्तिः ॥

इमे चतुर्दश प्राप्ताः समस्तैश्च गणेश्वरैः ।
स्वर्गपातालाधिदेवैः सुरासुरनरोरगैः ॥ ४१ ॥
दिक्पालैर्लोकपालैश्च देवीभिर्वसुभिस्तथा ।
ऋषिवृद्धैस्तथा चैव भूपालाद्यैः समस्तकैः ॥ ४२ ॥
इन्द्रलोकात् समायातः सुरराजः स्वयंभुवा ।
कृता तत्र महापूजा पुरुषत्रितयस्य च ॥ ४३ ॥
वामे विष्णुं देवदेवं ब्रह्माणं दक्षिणे तथा ।
मध्ये यागेश्वरं देवं त्रैलोक्येशं जगद्गुरुम् ॥ ४४ ॥
गीतनृत्यैश्च वादित्रैः प्रेक्षणीयैरनेकधा ।
लास्यहास्यैर्वैदग्ध्यैस्ताण्डवाद्यैश्च नर्त्तनैः ॥ ४५ ॥

विविधाभिः पताकाभिर्ध्वजैश्च तोरणैस्तथा ।
कुङ्कुमद्रवसंकीर्णैः कुङ्कुमद्रवसिञ्चितैः ॥ ४६ ॥
सद्धूपामोदबहुलैः कर्पूरागरुकैस्तथा ।
इषुभेदैः समुत्पन्नाः सर्वे प्रासादनायकाः ॥ ४७ ॥
सोमेश्वरस्तदोवाच तथास्तु ब्रह्मणोदितम् ।
ब्रह्मोवाच भवाल्लब्धाः प्रासादा विविधा मया ॥ ४८ ॥
वैराज्यपुष्पकैलासाः मणिकाश्च त्रिविष्टपाः ।
इषुभेदैः समुत्पन्नाः प्रासादाः सर्वकामदाः ॥ ४९ ॥
अष्टाशीत्युत्तराण्येव शतान्यष्टादशैव च ।
× × × × × × ॥ ५० ॥
नवनाट्यरसोपेतैःर्भृतारात्रिककैस्तथा ।
मृदङ्गवंशतालाद्यैर्गीतनृत्यादिभिस्तथा ॥ ५१ ॥
षड्रसाहारगौरैः पक्वान्नैश्च नैकधा ।
चतुरशीत्यत्र साकारि फेनाकुलीकमेकसंकुला ? ॥ ५२ ॥
महेषु पञ्चदशसु सर्वमारात्रिकादिकम् ।
प्रथितं त्रिषु लोकेषु सुरासुरनरोरगैः ॥ ५३ ॥
स्तोत्रमन्त्रार्चनै भक्त्या प्रणिपत्य जगद्गुरुम् ।
जपदीक्षा भवेत् सा हि दण्डीदारुवने तथा ॥ ५४ ॥
सोत्साहं यः पठेद् भक्त्या भक्तवत्सलसंस्तुतिम् ।
मुक्तश्च सर्वपापेभ्यः शिवलोकं स गच्छति ॥ ५५ ॥
अष्टम्यां च चतुर्दश्यां शिवस्तोत्रं जितेन्द्रियः ।
यः पठेच्च तथा भक्त्या ह्येकचित्तः समाहितः ॥ ५६ ॥
यागेश्वरस्य यात्रायाः पुण्यं प्राप्नोति मानवः ।
धर्मार्थकाममोक्षाणां संप्राप्तिश्च तथेप्सिता ॥ ५७ ॥
कृतघ्नश्च तथा गोघ्नो ब्रह्महा गुरुतल्पगः ।
दुष्टकर्मा दुराचारः पितृहा मातृहा तथा ॥ ५८ ॥
मुच्यते सर्वपापेभ्यो दृष्ट्वा यागेश्वरोत्सवम् ।
कल्पकोटिसहस्रैस्तु यत्पापं समुपार्जितम् ॥ ५९ ॥
श्रुत्वा यागेश्वरोत्साहं मुच्यते सर्वपातकैः ।
ये चादग्धा मृतास्तेषां मोक्षः स्यात्पञ्चभूततः ॥ ६० ॥
वाचमानो महोत्साहः श्राद्धं कृत्वा स्वयं गृहे ।
एकोत्तरसहस्रं च कुल.................... ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
चतुर्दशप्रासादोत्पत्तिमहोत्सवाधिकारो नाम पञ्चोत्तरशततमं सूत्रम् ॥

## (१०६) प्रासादचतुर्देशजातिलक्षणाकारो नाम षडुत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच-

विमानाश्च तथा पञ्च ब्रह्मणा भाषिताः स्वयम् ।
मनोह्लादकरा ह्येते कामं स्वच्छन्दचारिणः ॥ १ ॥
वैराज्यः प्रथमो नाम पुष्पकश्च द्वितीयकः ।
कैलासो मणिकश्चाथ तथा चैव त्रिविष्टपः ॥ २ ॥
प्रयुक्ता विविधाश्छन्दाः सूत्रमार्गैरनेकधा ।
वैराज्यकुलसंपन्नाः सर्वे प्रासादसंज्ञकाः ॥ ३ ॥
प्रासादास्तु समस्ता वै सन्ति वैराज्यसंभवाः ।
वैराज्यजन्यप्रासादा इषुभेदोद्भवास्ततः ॥ ४ ॥
इषुभेदसमुत्पन्नाः प्रासादाः सर्वकामदाः ।
सौवर्णै राजतैश्चैव देवानां सततं प्रियाः ॥ ५ ॥
मणिमुक्ताप्रवालाद्यैर्भूषणैः सुविभूषिताः ।
रीतिकाताम्ररङ्गैश्च पिशाचोरगराक्षसाम् ॥ ६ ॥
देवलोके भवन्त्येते कामं स्वच्छन्दचारिणः ।
पातालेऽपि विनिर्दिष्टाः पाषाणैः स्फटिकैस्तथा ॥ ७ ॥
इष्टकाकाष्ठपाषाणैर्मृत्युलोके त्वनिन्दिताः ।
नित्यं भवन्ति सुखदाः कर्तृकावरयोस्तथा ॥ ८ ॥
नगराणां भूषणार्थं देवानामालयाय च ।
लोकानां धर्महेतोश्च क्रीडार्थं सुरयोषिताम् ॥ ९ ॥
आलयः सर्वभूतानां विजयाय जितात्मनाम् ।
धर्मार्थकाममोक्षाणां प्राप्तिहेतुर्मनस्विनाम् ॥ १० ॥
यत्र येषां कृता पूजा तत्र तन्नामकास्तु ते ।
प्रासादानां समस्तानां कथयिष्याम्यनुक्रमम् ॥ ११ ॥
सुरैस्तु नागराः ख्याता द्राविडा दानवेन्द्रकैः ।
लतिनाश्चैव गन्धर्वैर्यक्षैश्चापि विमानजाः ॥ १२ ॥
विद्याधरैर्मिश्रकाश्च व्यन्तरैश्च वराटकाः ।
सान्धाराश्चोरगैः ख्याता नरेन्द्रैर्भूमिजास्तथा ॥ १३ ॥
विमाननागरच्छन्दाः सूर्यलोकसमुद्भवाः ।
नक्षत्राधिपलोकोक्ताश्छन्दा विमानपुष्पकाः ॥ १४ ॥
पार्वतीसंभवाः सेना वलभ्याकारसंस्थिताः ।
हरसिद्ध्यादिदेवीभिः कार्याः सिंहावलोकनाः ॥ १५ ॥

व्यन्तरस्थितदेवैस्तु फांसनाकारिणो मताः ।
इन्द्रलोकसमुद्भूता रथाश्च विविधा मताः ॥ १६ ॥

क्रमयुक्त्या विधातव्या अनेकाण्डजसंकुलाः ।
सर्वासामथ जातीनां रूपालङ्कारमुच्यते ॥ १७ ॥

आदौ तु नागरान् वक्ष्ये प्रासादान् सर्वकामदान् ।
अनेकाण्डकसम्युक्तान् क्रमयुक्तिविधींस्तथा ॥ १८ ॥

उत्सेधे नागराः शृङ्गैरनेकाकाररूपिणः ।
शृङ्गोरःशृङ्गप्रत्यङ्गतवङ्गादिकभूषिताः ॥ १९ ॥

एकद्वित्रिक्रमोन्नत्या रेखागर्भसमुद्भवाः ।
दोषवहाश्च संकीर्णा विपुला धन्यसौख्यदाः ॥ २० ॥

त्रिमूर्त्तयस्तु भद्रान्ते रथिकाः सर्वकामदाः ।
शुकनासे च संघाटा भद्रेत्वेकैकसंयुताः ॥ २१ ॥

आमलसारान्तस्थितकलशैः सुविभूषिताः ।
पताकाध्वजयुक्ताश्च नागराः सर्वकामदाः ॥ २२ ॥

पीठोपपीठजङ्घाभिर्मेखलाकूटच्छाद्यकैः ।
दलभक्त्या च युक्ताश्च कर्तव्याः सर्वकामदाः ॥ २३ ॥

मण्डपे रूपशोभाढ्यैर्वितानैर्बहुभिर्युताः ।
छाद्यघण्टाकूटयुक्ता नानासंवरणास्तथा ॥ २४ ॥

नागरच्छन्दजा एवं प्रासादाः सर्वकामदाः ।
वल्लभाः सर्वदेवानां शिवस्यापि विशेषतः ॥ २५ ॥

इति नागरप्रासादलक्षणाधिकारः ॥

पीठोर्ध्वे कर्णरेखाश्च भूमिकाः क्रमसंस्थिताः ।
विभक्तिदलनापूर्णा लताशृङ्गक्रमोद्भवाः ॥ २६ ॥

मेषमकरकूटपैः कण्टकैरावृताः शुभाः ।
वेदीघण्टानासिकाद्याः द्राविडाः शुभलक्षणाः ॥ २७ ॥

इति द्राविडाः ॥

या त्वेका नागरा रेखा शृङ्गे शिखरवर्जिताः ।
लतिनास्तु समाख्याता रुचकादिसमुद्भवाः ॥ २८ ॥

इति लतिनाः ।

यत्र वंशोद्भवाः कूटा ह्स्ववृद्धिक्रमस्थिताः ।
दलविभक्त्या त्वङ्गैश्च भूमिजाः पुरभूषणाः ॥ २९ ॥

इति भूमिजाः ॥

भूमिजा भूमिकाक्रमैर्जङ्घाहीनैश्च भूमिकैः ।
शृङ्गैः शृङ्गयुताः कार्या बहुशृङ्गसमाकुलाः ॥ ३० ॥

कर्णे प्रतिरथे चैव भद्रे च प्रतिभद्रके ।
मन्दारपुष्पिका घण्टा वराटाः शुभलक्षणाः ॥ ३१ ॥

इति वराटाः ॥

भूमिजच्छन्दकाख्यातास्तलैश्च चतुरश्रकाः ।
रथोपरथभद्रा वै विमानाः सर्वकामदाः ॥ ३२ ॥

इति विमानाः ॥

नागरच्छन्दकाख्यातास्तिलकैः स्युरनेकधा ।
मिश्रका मिश्रजाताश्च कर्तव्यास्तिलकाङ्किताः ॥ ३३ ॥

इति मिश्रकाः ॥

तलच्छन्दविभक्ताश्च गर्भभित्तिभ्रमन्तिकाः ।
भ्रमणीक्रमयोगेन सान्धाराः शिखरैर्युताः ॥ ३४ ॥

इति सान्धाराः ॥

नागरार्धच्छन्दयुक्ता लताशृङ्गैः समन्विताः ।
विमाननागरच्छन्दाः प्रोक्तास्तेजस्समुद्भवाः ॥ ३५ ॥

इति विमाननागराः ॥

विमाननागरच्छन्दे उरःशृङ्गे तु पुष्पकम् ।
विमानपुष्पकच्छन्दाः कर्तव्याः सर्वकामदाः ॥ ३६ ॥

इति विमानपुष्पकाः ॥

आयतच्छन्दकाः कार्या अघण्टा भूमिकाक्रमः ।
गजपृष्ठाकृतिकुटी वलभी सर्वकामदा ॥ ३७ ॥

इति वलभी ॥

दलविभक्तिभद्राढ्या उदकान्तरवर्जिताः ।
फांसनाकारिणस्तूर्ध्वे कर्तव्यास्तु नपुंसकाः ॥ ३८ ॥

इति नपुंसकाः ॥

छाद्यछाद्योद्भवा ऊर्ध्वे सिंहकर्णैर्विभूषिताः ।
घण्टां घण्टाकृतिं कुर्यादित्थं सिंहावलोकनाः ॥ ३९ ॥

इति सिंहावलोकनाः ॥

शकटोपरि कर्तव्याश्छन्दैर्वै नागरोद्भवैः ।
त्रिचक्रं चैव शकटं कामदास्ते रथाभिधाः ॥ ४० ॥

इति रथारुहाः ॥

- - - - - - - - - - - - - - - - - - - - - - - - - । 
- - - - - - - - - - - - - - - - - - - - - - - - - ॥ ४१ ॥

- - - - - - - - - - - - - - - - - - - - - - - - - । 
- - - - - - - - - - - - - - - - - - - - - - - - - ॥ ४२ ॥

- - - - - - - - - - - - - - - - - - - - - - - - - । 
- - - - - - - - - - - - - - - - - - - - - - - - - ॥ ४३ ॥

अभ्यासयोगाच्च गुरुप्रसादाद् बुद्धि स्फुट इष्ट पवा ? । 
- - - - - - - - - - - - - - - - - - - - - - - - - ॥ ४४ ॥

निशाकरे वास्तमिते उदिते च दिवाकरे । 
सूत्रशास्त्रं समस्तानामुक्तं प्रद्योतकारकम् ॥ ४५ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां प्रासादचतुर्दशजातिलक्षणाकारनिर्णयाधिकारोनाम षडुत्तरशततमं सूत्रम् ॥

---

# (१०७) पुरप्रासादगृहप्रमाणं सप्तोत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

प्रमाणानि प्रवक्ष्यामि पुरप्रासादसद्मनाम् ।
एकैकस्य पृथग्मानं यथाविधि तवाधुना ॥ १ ॥

एकहस्तादिप्रासादा यावत्पञ्चाशद्धस्तकम् ।
हस्तान्तरं ततो भेदस्तदर्धे च न संशयः ॥ २ ॥

हस्तपादे त्र्यङ्गुले वा कुर्याच्च द्व्यङ्गुले क्रमात् ।
योजयेद् विविधांश्छन्दान् प्रमाणं तत्र शास्त्रतः ॥ ३ ॥

गृहं चैव तु हस्ताद्यं यावद् द्वात्रिंशद्धस्तकम् ।
अष्टहस्ताद् दशवृद्ध्या यावदष्टोत्तरं शतम् ॥ ४ ॥

षड्जातिसंभवाः कार्याश्छन्दोभेदैरनेकधा ।
प्रयुक्ता राजवेश्माद्याः कर्तव्याः सर्वकामदाः ॥ ५ ॥

माडमोडशुद्धशृङ्गतुङ्गारसिंहकाभिधाः ।
प्रासादाश्च नरेन्द्राणामन्येषां हर्म्यमुच्यते ॥ ६ ॥

कनिष्ठं चतुःसहस्रैरष्टसहस्रैर्मध्यमम् ।
ज्येष्ठं द्व्यष्टसहस्रैश्च त्रिधा राजपुरं मतम् ॥ ७ ॥

साष्टमांशं सपादं वा सार्धं वा व्यासमायतम् ।
पृथगेकैकमायामे चतुरश्रीकृतं शुभम् ॥ ८ ॥

कनिष्ठं सहस्रहस्तं मध्यं सार्धसहस्रकम् ।
ज्येष्ठं द्विसहस्रहस्तं त्रिधा ब्रह्मपुरं मतम् ॥ ९ ॥

कनिष्ठं सहस्रहस्तैर्द्विसहस्रैस्तु मध्यमम् ।
ज्येष्ठं चतुर्ज्येष्ठो मध्याधमा च शतद्वयी ? ॥ १० ॥

ज्येष्ठं चतुःशतकरैर्मध्यमं द्विशतैस्तथा ।
कनिष्ठं शतमेकं च त्रिधा शूद्रपुरं मतम् ॥ ११ ॥

- - - - - - - - - - - - - - - - - - - - - - - - ।
- - - - - - - - - - - - - - - - - - - - - - - - ॥ १२ ॥

त्रिगुणा चोत्तमाख्याता मध्यमा च चतुर्गुणा ।
कनिष्ठा पञ्चगुणोक्ता प्रासादाज्जगती मता ॥ १३ ॥

प्रासादोच्छ्रयविस्तारा सीमान्ते वामदक्षिणे ।
यथा भेदं यथा लिङ्गं जगती प्रासाद तद्विधम ॥ १४ ॥

नवहस्तान्तकं लिङ्गमेकहस्तादितः परम् ।
एषां मध्ये तु कर्तव्यं घटितं शास्त्रनिश्चयः ॥ १५ ॥

अङ्गुष्ठपर्वादिकार्चा पर्यन्तं नवहस्ततः ।
प्रासादे प्रतिमा कार्या द्वारमानविधिक्रमात् ॥ १६ ॥

महार्चायास्तु विन्यासः कर्तव्यस्तु यथाविधि ।
दशादिहस्ततस्त्वर्चा प्रासादेन विना शुभा ॥ १७ ॥

पञ्चचत्वारिंशद्धस्ता हस्तान्तरे षट्त्रिंशतिः ।
महत्यः प्रतिमाः प्रोक्ताः कर्तव्याः सर्वकामदाः ॥ १८ ॥

एकहस्ताच्छतार्धान्तं – – षष्ठ्यधिकं शतम् ।
द्वारमानमिति प्रोक्तं सर्वकामफलप्रदम् ॥ १९ ॥

प्रतोल्या द्वारमुत्सेधे हस्ताः पञ्चदशोत्तमम् ।
त्रयोदश तथा मध्यमेकादश कनिष्ठकम् ॥ २० ॥

पुरार्धे भवति ग्रामो ग्रामार्धे चैव खेटकम् ।
खेटकार्धे भवेत्कूटः कूटार्धे चैव कर्व्वटम् ॥ २१ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां पुरप्रासादगृहप्रमाणाधिकारो नाम सप्तोत्तरशततमं सूत्रम् ॥

———

## (१०८) प्रासादसंस्थानोन्मानलक्षणमष्टोत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

अथातः संप्रवक्ष्यामि प्रासादानां तु लक्षणम् ।
संस्थानोन्मानसूत्रं च वास्तुविन्यासपूर्वकम् ॥ १ ॥

एकपदादिकं वास्तु यावत् पदसहस्रकम् ।
प्रासादे नवे जीर्णे तु वास्तूद्धारस्तथा भवेत् ॥ २ ॥

अग्रतः पृष्ठतश्चैव वामदक्षिणतोऽपि वा ।
प्रासादं कारयेच्चान्यं नाभिवेधविवर्जितम् ॥ ३ ॥

लिङ्गाग्रे च न कर्तव्या ह्यर्चारूपेण देवता ।
प्रभा नष्टा न भोगाय यथा तारा दिवाकरे ॥ ४ ॥

शिवस्याग्रे शिवं कुर्याद् ब्रह्माणं ब्रह्मणस्तथा ।
विष्णोरग्रे भवेद्विष्णुर्जैने जैनं रवेरविम् ॥ ५ ॥

चण्डिकाग्रे भवेन्माता यक्षः क्षेत्रादिभैरवः ।
ज्ञेयास्तेषामभिमुखे ये येषां च हितैषिणः ॥ ६ ॥

ब्रह्मविष्णोरेकनाभिर्जिनेर्दोषो न विद्यते ।
शिवाग्रे चान्यदेवानां दृष्टिवेधे महद्भयम् ॥ ७ ॥

ब्रह्मा विष्णुः शिवः सूर्यश्चन्द्रः स्कन्दो हुताशनः ।
दिक्पाला लोकपालाश्च ग्रहा मातृगणस्तथा ॥ ८ ॥

एते शिवाश्रये स्थाप्या दृष्टिवेधविवर्जिताः ।
दूरेऽपि नैव कर्तव्यः शिवदृष्टिषु सर्वदा ॥ ९ ॥

ग्रामे राष्ट्रे पुरे तीर्थे नगरे तापसाश्रये ।
दृष्टिघातहतं यच्च न पुनस्तत् प्ररोहति ॥ १० ॥

जिनेन्द्रस्य तथा यक्षा देवाश्च जिनमातृकाः ।
आश्रयन्ति जिनं सर्वे ये चोक्ता जिनशासने ॥ ११ ॥

वर्जयेदर्हतः पृष्ठमग्रं तु शिवसूर्ययोः ।
पार्श्वे तु ब्रह्मविष्ण्वोश्च चण्ड्याः सर्वत्र वर्जयेत् ॥ १२ ॥

प्रसिद्धराजमार्गाच्च प्राकारान्तरतोऽपि वा ।
स्थापयेच्चान्यदेवांश्च बहिर्वास्तुकवर्जितम् ॥ १३ ॥

दिशां दोषैः परित्यक्ताः शिवसूर्यजिनादयः ।
उभयोरन्तरे सम्प्राश्रितं यत्तन्न निन्दितम् ॥ १४ ॥

घाट्ये वै शतहस्तं स्याद् बाणे चैव शतद्वयम् ।
त्रिशतं स्वयम्भूलिङ्गे वास्त्वेवं पुरमध्यगम् ॥ १५ ॥

घटिते शतहस्तेषु बाणे पञ्चशतेषु च ।
स्वभुवि सहस्रहस्ते शिवतीर्थोदकं स्मृतम् ॥ १६ ॥

देवस्य दक्षिणे गत्वा पुण्यं शैवार्चनादिकम् ।
गत्वापरे दशगुणं सौम्ये दशगुणं तथा ॥ १७ ॥

आग्नेय्यां तेजसो वृद्धिर्नैर्ऋत्ये विघ्ननाशनम् ।
वायव्ये श्रीश्चपुण्यं च त्वीशाने सर्वकामना ॥ १८ ॥

धर्मार्थकाममोक्षाणां सर्वविघ्नविनाशकम् ।
सर्वतीर्थादिपुण्यं च स्नात्वा देवाग्रतो भवेत् ॥ १९ ॥

घटिते जगतीमध्ये बाणे गर्भगृहे भवेत् ।
स्वभुवि पीठिकास्थाने चण्डश्चले न विद्यते ॥ २० ॥

एका चण्डया रवेः सप्त तिस्रो दद्याद्विनायके ।
चतस्रो विष्णुदेवस्य शिवस्यार्धा प्रदक्षिणा ॥ २१ ॥

जैने च ह्यग्रसंस्थाने स्तोत्रमन्त्रादिनार्चनम् ।
न देयं वर्तने पृष्ठं सन्मुखे द्वारलङ्घनम् ॥ २२ ॥

स्नानोदकं गूढमार्गे तदा कुर्यात्प्रदक्षिणम् ।
दृष्टं न लङ्घयेत्स्नानं हन्ति पुण्यं पुराकृतम् ॥ २३ ॥

पूर्वापरे यदा द्वारं प्रणालं चोत्तरे शुभम् ।
प्रशस्तं शिवलिङ्गानामिति शास्त्रार्थनिश्चयः ॥ २४ ॥

अर्चानां मुखपूर्वाणां प्रणालं वामतः शुभम् ।
उतरास्या न विज्ञेया अर्चारूपेण देवताः ॥ २५ ॥

जैनमुक्ताः समस्ताश्च याम्योत्तरक्रमैः स्थिताः ।
वामदक्षिणयोगेन कर्तव्यं सर्वकामदम् ॥ २६ ॥

वामे वामं प्रकुर्वीत दक्षिणे दक्षिणं शुभम् ।
मण्डपादिषु प्रतिमा येषु युक्त्या विधीयते ॥ २७ ॥

जगतीकर्णे ये देवास्तान् कुर्याज्जगतीस्थितान् ।
पृष्ठादग्रोभयोः पार्श्वे शास्त्रार्थैर्युक्तमुत्तमम् ॥ २८ ॥

ईशानमाश्रयेत् किञ्चिच्छिवलिङ्गेषु कामदम् ।
ईशाने मुक्तिदं प्रोक्तं भुक्तिदं चोत्तराश्रितम् ॥ २९ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
प्रासादसंस्थानोन्मानलक्षणाधिकारो नामाष्टोत्तरशततमं सूत्रम् ॥

---

## (१०९) प्रासादजीर्णवास्तुनिर्णयो नाम नवोत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

अल्पलेपं बहुलेपं समसन्धि शिरोगुरुः ।
अप्रतिष्ठं पादहीनं तच्च वास्तु विनश्यति ॥ १ ॥

सशल्यं पादहीनं च हीकद्रव्येण पूरितम् ।
अनिर्गतच्चालयेद्वा तूर्ध्वगं तद्विनश्यति ॥ २ ॥

एकवास्तुचितं द्रव्यमन्यवास्तुनि वेशयेत् ।
प्रासादे न भवेत्पूजा गृहे च न वसेत्पतिः ॥ ३ ॥

अचाल्यं चालयेद्यास्तु प्रासादे शिवब्रह्मणोः ।
वंशच्छेदो भवेत्तस्य ह्यचिरेणैव शाश्वतः ॥ ४ ॥

पूर्वस्थितं परित्यज्य चान्यद् वास्तु तथोपरि ।
पूर्वत्यागानुदोषैश्च कर्ता तु नरकं व्रजेत् ॥ ५ ॥

स्वस्थानसंस्थितं यच्च विप्रवास्तुशिवालयम् ।
न चालयेत् सर्वदेशे चलिते राष्ट्रविभ्रमः ॥ ६ ॥

मरकतं बाणलिङ्गं मुक्ताजं रत्नजं तथा ।
अव्यक्तं व्यक्तकं प्रोक्तं प्रासादे कारयेद् बुधः ॥ ७ ॥

बाणलिङ्गे वृषं कुर्यात् स्वयम्भूमुखमृण्मये ।
सहस्रलिङ्गे च शतलिङ्गे न्यूनाधिकं विदुः ॥ ८ ॥

परिधिश्च समो दीर्घे उच्छ्रये पीठसन्निभः ।
पञ्चभागोन्नतश्चैवं सप्तभागायतो वृषः ॥ ९ ॥

पादो जानु कटिर्यावदर्चादृष्टिश्च वाहने ।
वृषदृष्टिर्विष्णुभागे घटितेषु च शाश्वतः ॥ १० ॥

अर्चा श्रेष्ठा तथा लिङ्गं निलयांशेषु सर्वतः ।
वृषं न्यूनाधिकं बाणे रत्नजे च स्वयंभुवि ॥ ११ ॥

विषमपदस्तुलास्तम्भं पादभित्तिनष्टकम् ? ।
क्रमं पदवलितं यच्च न शुभं कर्तृकारके ॥ १२ ॥

खण्डितं स्फुटितं भग्नं चलितं चालितं तथा ।
पतितं पातितं जीर्णमग्निलीढं समुद्धरेत् ॥ १३ ॥

प्रासादे चाग्रहीने तु भोग्यस्थानं न विद्यते ।
अप्रशस्तं विना न्यासैः स्त्रीपुंसां च सुखं यथा ॥ १४ ॥

देवो भ्रष्टस्तथा भग्नो विषमे च तटे स्थितः ।
यथाप्रतिष्ठितश्चार्यैस्तत्रदोषो न विद्यते ॥ १५ ॥

तत्तत्स्थानेषु ये देवाः स्थापिताश्च महत्तरैः ।
तत्सान्निध्यं सर्वकाले व्यङ्गितानपि न त्यजेत् ॥ १६ ॥

यद्यस्य स्थापितं वास्तु तत्तथैव हि कारयेत् ।
अन्यङ्गं चालितं वास्तु दारुणं कुरुते भयम् ॥ १७ ॥

अथ चेत् चाल्यते तत्तु जीर्णं व्यङ्गं च दूषितम् ।
आचार्यैः शिल्पिभिः प्राज्ञैः शास्त्रदृष्ट्या समुद्धरेत् ॥ १८ ॥

स्वस्थाने संस्थितं वास्तु व्यङ्गदोषैश्च वर्जितम् ।
तन्नैव चालयेत्प्राज्ञो बाह्यवास्तुनि कारयेत् ॥ १९ ॥

पूर्ववास्तुस्थितिं त्यक्त्वा चान्यवास्तु तथोपरि ।
विनश्यत्येव तद्वास्तु मृत्युः कारावरादिषु ॥ २० ॥

वास्तुद्रव्ये यदाहीनं दारुकर्मणि वा तथा ।
समुद्धरेच्च तत्प्राज्ञो वास्तु द्रव्यविशेषतः ॥ २१ ॥

उद्धरेच्च तथा दिव्यं वास्तुस्थानं न चालयेत् ।
स्वस्थाने तूद्धृते वास्तौ स्वर्लोकं लभते सुखात् ॥ २२ ॥

यानि खण्डितदग्धानि विशीर्णस्फुटितानि च ।
तेषां न मन्त्रसंस्कारो गतासुस्तत्र देवता ॥ २३ ॥

वास्तुवेधे स्थिता देवी पद्मिनी नाम राक्षसी ।
पीडा पुत्रकलत्राणां वास्तुविद्भिरुदाहृता ॥ २४ ॥

मण्डलं जालकं चैव कीलकं सुषिरं तथा ।
छिद्रं सन्धिश्च काराश्च महादोषा इति स्मृताः ॥ २५ ॥

मृत्काष्ठे शैलजं कुर्याच्छैलजे धातुजं तथा ।
धातुजे रत्नजं कुर्यादुत्तमोत्तमतो न्यसेत् ॥ २६ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
जीर्णवास्तुनिर्णयाधिकारो नाम नवोत्तरशततमं सूत्रम ॥

---

## (११०) प्रासादनवजीर्णवास्तुकं दशोत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

अभेद्यपतितं भेद्यं नार्चागेहं सुरालयम् ।
शास्ताकारमिदं प्रोक्तं मूर्तास्तास्तत्र देवताः ॥ १ ॥

ब्रह्मविष्णुरवीनां च शंभोः कार्या यदृच्छया ।
गिरिजाया जिनादीनां मन्वन्तरभुवां तथा ॥ २ ॥

एतेषां च सुराणां च प्रासादा भिन्नवर्जिताः ।
प्रासादमठवेश्मान्यभिन्नानि शुभदानि हि ॥ ३ ॥

मूषाभिर्जालकैर्द्वारैर्गर्भो यत्र न भिद्यते ।
अभिन्नं कथ्यते तच्च प्रासादो वेश्म वा मठः ॥ ४ ॥

कुक्षिद्वारैस्तथा जालैर्मूषा रश्मिप्रभेदिता ।
भिन्नस्तत्र स विज्ञेय आलयः सिद्धिकामदः ॥ ५ ॥

पुरतः पृष्ठतो द्वारावुभौ कुक्ष्योः प्रभेदितम् ।
मारुतैः स्पृश्यते यत्र भिन्नं नाम तदुच्यते ॥ ६ ॥

व्यक्ताव्यक्तं लयं कुर्यादभिन्ना भिन्नमूर्तयोः ।
मूर्तिलक्षणजं स्वामी प्रासादं तस्य तादृशम् ॥ ७ ॥

दिग्मूढो नष्टछन्दश्च छायहीनः शिरोगुरुः ।
ज्ञेया दोषास्तु चत्वारः प्रासादाः कर्मदारुणाः ॥ ८ ॥

पूर्वोत्तरं तु दिग्मूढं मूढं पश्चिमदक्षिणम् ।
मूढामूढं च तेषां स्याद्यत्र तीर्थे समाहितम् ॥ ९ ॥

सिद्धायतनतीर्थेषु नदीनां सङ्गमेषु च ।
स्वयंभूबाणलिङ्गेषु तस्य दोषो न विद्यते ॥ १० ॥

व्यक्तं तु मृण्मयं चाल्यं त्रिहस्तान्तं तु शैलजम् ।
दारुजं पुरुषार्धं तु तत ऊर्ध्वं न चालयेत् ॥ ११ ॥

पातनाद् व्याधिदातात्मा महादुःखाय जायते ।
सप्तोत्सवयात्राश्च तेषां रूपाणि कारयेत् ॥ १२ ॥

स्तम्भवेधैर्यथावास्तु वास्तुवेधैस्तथा सुराः ।
देववेधे भवेन्मृत्युः शिल्पिकारावरादिषु ॥ १३ ॥

एको वा बहुरूपश्च ब्रह्मणः शिवसूर्ययोः ।
स्वके स्वके वै स्थाप्याः प्रासादे भिन्नवर्जिते ॥ १४ ॥

भिन्नाश्चतुर्विधा ज्ञेया अष्टधा मिश्रका मताः ।
मिश्रकाः पूजितास्तत्र भिन्ना वै दोषकारकाः ॥ १५ ॥

छन्दोभेदा न कर्तव्या जातिभेदास्तथा पुनः ।
हीनशाखा न कर्तव्या लतिने चन्द्रलोकनम् ॥ १६ ॥

तलच्छन्दानुसारेण हीनाङ्गं शिखरं भवेत् ।
ऊर्ध्वं तु फांसनाकारं जातिभेदोऽत्र जायते ॥ १७ ॥

हीनशाखा न कर्तव्या लतिने चन्द्रलोकना ।
भिन्नदोषाश्च चत्वारः प्रासादे दारुकर्मणि ॥ १८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
प्रासादनवजीर्णवास्तुनिर्णयाधिकारो नाम दशोत्तरशततमं सूत्रम् ॥

---

## (१११) जीर्णप्रासादलक्षणमेकादशोत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच–

अथातः संप्रवक्ष्यामि जीर्णप्रासादलक्षणम् ।
पतिते वा प्रनष्टाङ्गे क्रिया त्वेवंविधोत्तमा ॥ १ ॥

सुमुहूर्ते दिने शुद्धे लग्ने चन्द्रबलोत्तमे ।
चन्द्रताराबले चैव योगे चामृतसम्भवे ॥ २ ॥

अष्टवर्गस्ततोऽभ्यर्च्यां स्वगोत्रादिगोत्रसंकुलम् ।
पूजनीया समस्तेदं दयत्याष्टप्रार्णवे ? ॥ ३ ॥

आचार्यः शिल्पिनां पूज्यो वस्त्रालङ्कारसंयुतैः ।
तैश्चापि सर्वयुक्तैश्च स गच्छेद् देवसंकुलम् ॥ ४ ॥

देवपूजां ततः कृत्वा क्षेत्रपालादिसंयुताम् ।
दिक्पालेभ्यो बलिं दद्याद् वास्तुदेवेभ्य एव च ॥ ५ ॥

जलदेवान् स्थलदेवानूर्ध्वस्थांस्तलवासिनः ।
पूजां बलिं समाप्यैतान् प्रणिपत्य क्षमापयेत् ॥ ६ ॥

अपतितानि सत्त्वानि पातयेच्च क्रियादिकैः ।
स्वर्णमयं गजं कुर्याद् वृषभं वा यथोचितम् ॥ ७ ॥

अथरूप्यमयं वापि गजं वा वृषभं तथा ।
पातयेद् गजदन्ताग्रैर्वृषशृङ्गैरथापि वा ॥ ८ ॥

ततोऽनुक्षाल्यमानेऽपि वास्तुस्थानं न चालयेत् ।
ह्रस्ववृध्धी न कर्तव्ये कृते दोषो महाभयम् ॥ ९ ॥

पूर्ववास्तु स्थितं त्यक्त्वा तदुपर्यन्यवास्तुकम् ।
पूर्वे चेद् विध्यते वास्तु मृत्युः कारावरादिषु ॥ १० ॥

उद्धरेद्वा तथा द्रव्यं वास्तुस्थानं न चालयेत् ।
उद्धरेच्चाहरेद् द्रव्यं लभते परमं पदम् ॥ ११ ॥

पूर्वमानं प्रमाणं च कारयेद् विधिपूर्वकम् ।
तद्रूपं तत्प्रमाणं च पूर्वसूत्रं न चालयेत् ॥ १२ ॥

चलिते चालिते वापि दिग्मूढे स्थानवास्तुनि ।
हीने तथाधिके चैव पदभुक्तिविनाशने ॥ १३ ॥

निरन्तरा यदि स्तम्भा महामर्मनिपीडिताः ।
अशुद्धाः विपरीताश्च शिल्पदोषैश्च दूषिताः ॥ १४ ॥

छन्दालङ्कारहीनाश्च रूपमानविवर्जिताः ।
एवमाद्या अनेके च दोषा बहुविधाः स्मृताः ॥ १५ ॥

तस्मात् सर्वप्रयत्नेन पूर्वसूत्रं न चालयेत् ।
चलिते चालिते चैव तस्य स्थाने तु विग्रहम् ॥ १६ ॥

हीने हानिं प्रकुरुते ह्यधिके स्वजनक्षयम् ।
आयहीने तु प्रासादे स्वामिनस्तु क्षयो भवेत् ॥ १७ ॥

स्तम्भवेधे भयं घोरं स्वकुलोच्छेदनं भवेत् ।
हन्याद् बन्धून् मर्मवेधे त्रिशूले च महाभयम् ॥ १८ ॥

शल्ये चार्थविनाशस्तु छन्दहीने सुताद् भयम् ।
॥ १९ ॥

मानहीने प्रजापीडा स्थूले चोरभयं तथा ।
प्रविहीने च विद्वेषो दुर्भिक्षं शत्रुविग्रहः ॥ २० ॥

आयहीनेऽनपत्यत्वं व्ययहीने च भोगदम् ।
पीठहीने तु प्रासादे नश्यन्ति गजवाजिनः ॥ २१ ॥

तस्मात् सर्वप्रयत्नेन पूर्वसूत्रं न चालयेत् ।
अधिकाङ्गश्च कर्तव्यः प्रासादो भूषणैर्गुणैः ॥ २२ ॥

न चाधिकं तु कुर्वीत यावत् पादविशोधितम् ।
नवं चारोपयेद्वास्तु पुरप्रासादमन्दिरे ॥ २३ ॥

चतुरस्तो ? द्विधा भूमियुक्ता पूर्वोत्तरप्लवा ।
शङ्कुप्राचीवास्तुपूजां कुर्याद् भूमिपरिग्रहम् ।

पादप्रतिष्ठादिकृत्यं यावच्च भित्तिपूरणम् ॥ २४ ॥

प्राचीशुद्धं समक्षेत्रमायव्ययविशोधितम् ।
प्रासादं कारयेत्तत्र गृहं वै शुभलक्षणम् ॥ २५ ॥

शुकनासं च तस्याग्रे कारयेद् विधिपूर्वकम् ।
शुकाग्रे मण्डपं कुर्यात् सुरूपं लक्षणान्वितम् ॥ २६ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
जीर्णप्रासादलक्षणाधिकारो नामैकादशोत्तरशततमं सूत्रम् ॥

# (११२) प्रासाददेशानुक्रमो नाम द्वादशोत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

अथातः संप्रवक्ष्यामि प्रासादानां तु लक्षणम् ।
विविधैः कर्मसूत्रैश्च कथितं यत्समासतः ॥ १ ॥

नागरा द्राविडाश्चैव वराटकाश्च मिश्रकाः ।
लतिनाश्चैवसान्धारा विमाना भूमिजास्तथा ॥ २ ॥

एते चाष्टान्वये शस्ताः शुद्धच्छन्दाः प्रकीर्तिताः ।
देशजातिकुलस्थानवर्णभेदैस्तथापरे ॥ ३ ॥

जातयोऽष्टौ प्रवर्तन्ते गङ्गार्तारेषु सर्वदा ।
अहिराजेषु सान्धारो नागरश्च प्रशस्यते ॥ ४ ॥

गौडवङ्गकामरूपे सान्धारो लतिनस्तथा ।
तुरकोडहालेषु ? गङ्गोदधौ विमानकः ॥ ५ ॥

चौलदेशे महानीले श्रीनीले पर्वते तथा ।
मलयकलिङ्गकर्णाटे कान्यकुब्जनिवासके ॥ ६ ॥

वैराज्येषु विराटे च कौंकणे दक्षिणापथे ।
नागरा द्राविडाश्छन्दा वराटा भूमिजास्तथा ॥ ७ ॥

लतिनाश्चैव सान्धारा मिश्रकाश्च विमानकाः ।
अष्टच्छन्दास्तथा चैते प्रासादाः परिकीर्तिताः ॥ ८ ॥

जयन्त्यां मालवे देशे काञ्च्यां कालंजरे तथा ।
अन्तर्वेद्यां च मगधे मथुरायां हिमाश्रये ॥ ९ ॥

दण्डकारण्यसह्याद्र्योश्चत्वारश्छन्दका इमे ।
लतिना नागराश्चैव सान्धारा भूमिजास्तथा ॥ १० ॥

सिन्धौ च खुरपाणे च तेजो गक्षणकादिषु ।
सवमोहनमादियुक्ते ? पश्चिमे पार्श्वमण्डले ॥ ११ ॥

सौराष्ट्रे गुर्जरे देशे काश्मीरे च स्वयंभरे ।
- - - - - - - - - - - - - - - - - - - ॥ १२ ॥

वहिरावत्योमवन्दने - - - - - - - - - ।
यादि सृष्टयो - - - - - - - - - - - - - ॥ १३ ॥

प्रासादाः स्त्रीपुरुषाणां सूर्ये कुर्यान्नपुंसकान् ।
- - - - - - - - - - - - - - - - - - - ॥ १४ ॥

विमाननागरांश्छन्दान् कुर्याद्विमानपुष्पकान् ।
सिंहावलोकवलभीफांसनांश्च रथारुहान् ॥ १५ ॥

प्रवर्तन्ते सर्वदेशे व्योम चैकं न वर्तते ।
एतेषु भरतक्षेत्राद्यं देशानुक्रम कथ्यताम् ? ॥ १६ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां प्रासाददेशानुक्रमाधिकारो नाम द्वादशोत्तरशततमं सूत्रम् ॥

---

# (११३) प्रासादन्यूनाधिकलक्षणात्मकं त्रयोदशोत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

एते सर्वेऽपि प्रासादा देशानुक्रमसंस्थिताः ।
तेषामनुक्रमं वक्ष्ये प्रासादानां तु सर्वतः ॥ १ ॥

विभक्ति तलच्छन्दे तु शिखरोर्ध्वे हि कारयेत् ।
ऊर्ध्वाभिधानकं ख्यातं तलच्छन्दं हि तं तथा ॥ २ ॥

छन्दच्छन्दो यत्र नास्ति तत्रार्चा स्थापयेन्न हि ।
तत्प्रासादफलं नैव ततो मोक्षो न लभ्यते ॥ ३ ॥

हीनमाने तु ये दोषाः कथये तान् समासतः ।
आयुर्हानिं द्वारहीने नालिहीने धनक्षयः ॥ ४ ॥

अपदस्थापितैः स्तम्भैर्महारोगं विनिर्दिशेत् ।
स्तम्भन्यासोदये हीने कान्ता तत्र विनश्यति ॥ ५ ॥

प्रासादे पीठहीने तु नश्यन्ति गजवाजिनः ।
रथोपरथहीने तु प्रजापीडां विनिर्दिशेत् ॥ ६ ॥

कर्णहीनो यदा वास्तुरयुक्तफलमादिशेत् ।
क्रीडन्ति राक्षसास्तत्र फलं क्वापि न विद्यते ॥ ७ ॥

जङ्घाहीने भवेद् बन्धुकर्तृकावरनाशनम् ।
शिखरे हीनमाने तु नश्यन्ति पुत्रपौत्रकाः ॥ ८ ॥

अतिदीर्घे कुलोच्छेदो ह्रस्वे व्याधिसमुद्भवः ।
रथपुटस्थापने पीडा कर्ता तत्र विनश्यति ॥ ९ ॥

स्कन्धहीनः कबन्धश्च समसन्धिः शिरोगुरुः ।
अप्रसारितपादश्च पञ्चैते धननाशनाः ॥ १० ॥

मानाधिको न कर्तव्यो मानहीनं न कारयेत् ।
शास्त्रोक्तविधिमानेन शुभदं सर्वकर्मसु ॥ ११ ॥

वापीकूपतडागानि प्रासादभुवनानि च ।
भग्नानि तूद्धरेद्योऽसौ लभतेऽष्टगुणं फलम् ॥ १२ ॥

प्रतिमालिङ्गवेदीनां यावद्रेण्वंशकं भवेत् ।
तावत्कोटिसहस्राब्दं रुद्रलोके स तिष्ठति ॥ १३ ॥

कोटिवर्षं तृणच्छन्दे दशकोट्यस्तु मृण्मये ।
इष्टिकायां दशगुणं पुण्यं शैले ह्यनन्तशः ॥ १४ ॥

पांशुना क्रीडमानोऽपि यः करोति शिवालयम् ।
अवश्यं लभते लक्ष्मीं पशुपतिं निष्कण्टकम् ॥ १५ ॥

पद्मशिलाद्वारे चैव तच्छिलापुरुषे तथा ।
कलशध्वजे प्रतिष्ठा सप्तगुणं पुण्यं भवेत् ॥ १६ ॥

राजसं तामसं चैव सात्त्विकं च तृतीयकम् ।
धर्मस्य त्रिविधं ज्ञानं संसारे संप्रवर्तते ॥ १७ ॥

समन्तादन्यद्रव्येषु राजसे द्विगुणाधिकम् ।
तामसे शतधा पुण्यमनन्तं सात्त्विके तथा ॥ १८ ॥

यश्च देवालयं कुर्यात् स्वर्लोके लभते ध्रुवम् ।
क्रीडां सह सुरस्त्रीभिर्मानवो देवता भवेत् ॥ १९ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां प्रासादन्यूनाधिकलक्षणाधिकारो नाम त्रयोदशोत्तरशततमं सूत्रम् ॥

---

## (११४) मिश्रकप्रासादसप्तपुण्याहमाहात्म्यं चतुर्दशोत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच-

मिश्रकं तलच्छन्दं च नागरं च मण्डोवरम् ।
शिखरं विमानोद्भवं प्रासादं सर्वकामदम् ॥ १ ॥

मिश्रकं तलच्छन्दं च पीठं वै नागरं स्मृतम् ।
द्राविडा च भवेज्जङ्घा शिखरं विमानोद्भवम् ॥ २ ॥

अथ हेमपुरे दिव्ये शतयोजनविस्तृते ।
एकच्छत्रधरं राज्यं लभते जन्मजन्मनि ॥ ३ ॥

सुखदा सर्ववर्णानां स्वर्गे तत्कृन्महीयते ।
ईप्सितं लभते राज्यं स्वर्गे वाथ महीतले ॥ ४ ॥

मिश्रकस्तलच्छन्दे च पीठे च द्राविडः स्मृतः ।
मण्डोवरे वराटश्च शिखरं चात्मभूमिजम् ॥ ५ ॥

नवखण्डभुवो मध्ये राज्यं जन्मनि जन्मनि ।
इच्छास्थाने लभेद्राज्यं क्रीडन्ति च सुराङ्गनाः ॥ ६ ॥

मिश्रकस्तलच्छन्दे च भूमिजश्च मण्डोवरे ।
पुष्पकात्मजसंयुक्तं शिखरं द्राविडोद्भवम् ॥ ७ ॥

अथ हेमपुरे रम्ये शतयोजनविस्तृते ।
एकच्छत्रधरं राज्यं लभते जन्मजन्मनि ॥ ८ ॥

मिश्रकस्तलच्छन्दे च मण्डोवरे च भूमिजः ।
वराटः शिखरे ख्यातः पूज्यः सुरनरोरगैः ॥ ९ ॥

कूर्मशिला तथाद्वारं पद्मकं पुरुषः क्रमात् ।
कलशो ध्वजः प्रतिष्ठा च सप्तपुण्याहकानि च ॥ १० ॥

कृते कूर्मप्रतिष्ठायाः खाते पूर्णे च संस्थितौ ।
भूमिलोके तथा राज्यं सर्वजन्मसु शाश्वतम् ॥ ११ ॥

प्रतिष्ठायां शिलायास्तु दैवज्ञैस्सत्यमुच्यते ।
इच्छास्थाने स्वर्गलोके राज्यं जन्मनि जन्मनि ॥ १२ ॥

द्वारे प्रतिष्ठमाने तु स्तम्भोच्छ्रयसमन्विते ।
महापुरं च लभते काञ्चनं शतयोजनम् ॥ १३ ॥

पद्मशिलाप्रतिष्ठायां शिवालये भूमस्तके ।
एकच्छत्रं महाराज्यं जनलोके च प्राप्नुयात् ॥ १४ ॥

पुरुषे स्थाप्यमानेऽस्वागमोक्तमन्त्रतस्तथा ।
तपोलोके ब्रह्मलोके क्रीडति त्रिदशैः सह ॥ १५ ॥

प्रस्थाप्यमाने कलशे क्षीरार्णवसमुद्भवे ।
काञ्चने पुष्पविमाने सत्यलोके स गच्छति ॥ १६ ॥

कृते महाध्वजारोपे पताकाध्वजचामरैः ।
स गच्छेद् ज्ञानलोके तु यत्र शम्भुश्च देवता ॥ १७ ॥

बलीवर्दाः कर्मकरा अपराश्च शिवालये ।
ते यान्ति परमं लोकं यत्र देव उमापतिः ॥ १८ ॥

मृत्काष्ठलोहशैला वा ये लग्नाश्च शिवालये ।
दिव्यमूर्तिधराः सर्वे शिवलोके व्रजन्ति ते ॥ १९ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाच र्योक्तापराजितपृच्छायां मिश्रकप्रासादसप्तपुण्याहमाहात्म्यनिर्णयाधिकारो नाम चतुर्दशोत्तरशततम् सूत्रम् ॥

---

## (११५) जगत्यङ्गसमुदायो नाम पञ्चदशोत्तरशततमं सूत्रम् ॥

---

अपराजित उवाच—

जगती तु किमाकारा कियती दैर्घ्यविस्तरे ।
तथोछ्रयं कथय मे स्तम्मानं विशेषतः ॥ १ ॥

प्रतिहारदेवकुलपङ्क्तिसोपान एव च ।
आलयं सर्वदेवानां मालिकाक्रमयोगतः ॥ २ ॥

विश्वकर्मोवाच—

सुरालयविभूत्यर्थं भूषणार्थं पुरस्य तु ।
नराणां भुक्तिमुक्त्यर्थं सत्यार्थं चैव सर्वदा ॥ ३ ॥

लोकानां धर्महेतुश्च क्रीडाहेतुश्च स्वर्भुवाम् ।
कीर्तिरायुर्यशोऽर्थं च राज्ञां कल्याणकारकः ॥ ४ ॥

प्रासादो लिङ्गमित्युक्तो जगती पीठमेव च ।
प्रतीहारदेवकुलविभागा नामतः परे ॥ ५ ॥

जगत्या लक्षणं वत्स शृणु वक्ष्यामि साम्प्रतम् ।
सा चामूढदिशाभागा मनोज्ञा सर्वतः प्लवा ॥ ६ ॥

चतुरश्रा तथायता वृत्ता वृत्तायता तथा ।
अष्टाश्रा च तथा कार्या प्रासादस्यानुरूपतः ॥ ७ ॥

ज्येष्ठा कनिष्ठप्रासादे मध्यमे मध्यमा तथा ।
ज्येष्ठे कनिष्ठा व्याख्याता जगती मानसङ्ख्यया ॥ ८ ॥

कनिष्ठे भ्रमणी चैका मध्यमे भ्रमणीद्वयम् ।
ज्येष्ठे तिस्रो भ्रमण्यश्च साङ्गोपाङ्गिकसङ्ख्यया ॥ ९ ॥

प्रासादपृथुमानेन द्विगुणा चोत्तमा तथा ।
मध्यमा चतुर्गुणा याधमा पञ्चगुणोच्यते ॥ १० ॥

षट्सप्तगुणाख्याता च युक्तिपर्यायसंस्थिता ।
यत्र त्रिपुरुषा यद्वा द्वारिकायां निगद्यते ॥ ११ ॥

समा सपादा सार्द्धा वा द्विगुणा वा मुखायते ।
अपराजितकर्णाढ्या पूर्वमण्डपानुक्रमैः ॥ १२ ॥

करद्वादशकेऽर्धांशं शालात्र्यंशं द्वाविंशके ।
द्वात्रिंशतिश्चतुर्थांशं सा भूतांशं शतार्धके ॥ १३ ॥

चतुरश्रा सूर्यकर्णा विंशाकर्णाष्टविंशतिः ।
तथा षट्त्रिंशत्कर्णा च भ्रमण्यः पञ्च कीर्तिताः ॥ १४ ॥

भ्रमणी त्रिभागोत्सेधे यावन्मूलप्रासादकम् ।
कर्णौ देवकुलाशतायतन तत्स्मृतम् ? ॥ १५ ॥

तथैवानुक्रमैर्वृद्धिर्भ्रमण्यो यावत् षोडश ।
भद्रनिष्काशास्तद्वाह्ये शेषाः कर्णैव सङ्ख्यया ॥ १६ ॥

चतुर्द्वारसमायुक्तैश्चतुर्भिर्मण्डपैस्तथा ।
दिग्दिग्द्वारसमायुक्तं सहस्रायततोत्तमाः ? ॥ १७ ॥

प्रासादस्यानुमानेन बहुदेवकुलानि च ।
प्राकारं कुर्यात्विदानीं षड्विधं च सलक्षणम् ॥ १८ ॥

कर्णजा भ्रमजाश्चैव भद्रजा गर्भजास्तथा ।
मध्यजाः पार्श्वजाश्चैव भेदा वै षड् भवन्ति च ॥ १९ ॥

कर्णेषु कर्णजा ख्याता भ्रमजा च परिभ्रमे ।
भद्रजा भद्रसम्भूता गर्भजा गर्भमानतः ॥ २० ॥

परिभ्रमस्य मध्याङ्गे मध्यजा सा प्रकीर्तिता ।
चतुःपार्श्वेषु तस्याश्च पार्श्वजा साभिधीयते ॥ २१ ॥

प्रतोली चाग्रतः कार्या कपाटपुटसंयुता ।
दृढार्गला च कर्तव्या कथ्यतेऽथ तथोच्छ्रयः ॥ २२ ॥

एकहस्ते तु प्रासादे जगत्या उच्छ्रयः समः ।
द्विहस्ते हस्तसार्धस्तु त्रिहस्ते तु द्विहस्तकः ॥ २३ ॥

सार्धं द्विकरमुत्सेधः प्रासादे वेदहस्तके ।
चतुर्हस्तस्योपरिष्टाद् यावद् द्वादशहस्तकम् ॥ २४ ॥

प्रासादस्यार्धमानेन त्रिभागेन ततःपरम् ।
चतुर्विंशतिहस्तान्तं कारयेत्तद्विचक्षणः ॥ २५ ॥

पादेनैवोच्छ्रयं तावद् यावत्पञ्चाशद्धस्तकम् ।
एवमन्यश्च कर्तव्यो जगतीनां समुच्छ्रयः ॥ २६ ॥

तथोच्छ्रयं भजेत्प्राज्ञ अष्टाविंशपदैरधः ।
जाड्यकुम्भं च त्रिपदं कर्णकं द्विपदं तथा ॥ २७ ॥

पद्मपत्रसमायुक्ता त्रिपदा शीर्षपत्रिका ।
क्षुरकं द्विपदं प्रोक्तं कुम्भकं सप्तभिः पदैः ॥ २८ ॥

त्रिपदः कलशः प्रोक्तः पदं चान्तरपत्रिकम् ।
कपोताली च त्रिपदा पुष्पकं युगसङ्ख्यया ॥ २९ ॥

पुष्पकण्ठसुजालभ्भं निर्गतं चाष्टभिः पदैः ।
कर्णेषु च दिशापालाः प्राच्यादिषु प्रदक्षिणाः ॥ ३० ॥

जगत्यां पश्चिमे भद्रे रथिकैकत्रिभिस्तथा ।
त्रिचतुःपञ्चषड्भ्यैः कर्तव्या वामदक्षिणम् ॥ ३१ ॥

जलनिष्कासमकरमुखैश्च विकृताननैः ।
उत्तानपादोन्नता च हस्ते हस्ते चतुर्यवाः ॥ ३२ ॥

यथा सिंहासने राजा शोभते मणिदीप्तिभिः ।
तथा जगत्यां प्रासादः पीठकर्मोपशोभितः ॥ ३३ ॥

आदिमूर्तिः पदन्यासात् प्रतिहारा वामदक्षिणाः ।
वामे चैव भवेन्नन्दी महाकालश्च दक्षिणे ॥ ३४ ॥

याम्यद्वारे भवेद् भृङ्गी हेरम्बश्चैव दक्षिणे ।
पश्चिमे दुर्मुखो वामे पाण्डुरो वाथ दक्षिणे ॥ ३५ ॥

सौम्यां चैव सितो वामेऽसितश्चैवं तु दक्षिणे ।
मूलगर्भे भित्तिगर्भे सीमान्तं द्वारविस्तरः ॥ ३६ ॥

राजसेनश्चतुर्भागं भारपुत्तलिकायुतः ।
वेदिकारूपसंघाटैः सप्तभागसमुच्छ्रितैः ॥ ३७ ॥

द्विपदं चासनपट्टं कूटागारैः समन्वितम् ।
लीलासनं सुखार्थे च कक्षासनं करोन्नतम् ॥ ३८ ॥

गण्डाग्रे शुण्डिकाग्रे च प्रतोल्यग्रे तथैव च ।
तोरणं त्रिविधं ज्ञेयं ज्येष्ठमध्यकनिष्ठकम् ॥ ३९ ॥

जगतीपृथुमानेन तत्रान्तरं निगद्यते ।
अधिकं षोडशं चैव विभक्तं नवधा पुनः ॥ ४० ॥

त्रिधा ज्येष्ठमिति ख्यातं त्रिधा मध्यं कनिष्ठकम् ।
ब्रह्मस्थानादिगर्भे च स्तम्भगर्भे च तोरणम् ॥ ४१ ॥

स्तम्भगर्भे भित्तिगर्भे तन्मध्ये च विचक्षणः ।
तोरणस्य च स्तम्भस्य विस्तरः कथितो मया ॥ ४२ ॥

पट्टं पट्टानुसारेण चोलिकावलनैर्युतम् ।
वाहनं यस्य देवस्य तदग्रे च प्रदापयेत् ॥ ४३ ॥

एकद्वित्रिचतुः पञ्चषट्सप्तानुक्रमेण तु ।
चतुष्किका च कर्तव्या सर्वकामफलप्रदा ॥ ४४ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
जगत्यङ्गसमुदायाधिकारो नाम पञ्चदशोत्तरशततमं सूत्रम् ॥

---

## (११६) चतुःषष्टिजगतीनामभेदात्मकं षोडशोत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

जगत्या लक्षणं चैव प्रोक्तं वै वास्तुवेदिभिः ।
नामानि गुणदोषाणां विभागाश्छन्द एव च ॥ १ ॥

सुभद्रा सर्वतोभद्रा ललिता च लीलोदरी ।
त्रिकूटा चित्रकूटाख्या श्रीमाला गगनोदरी ॥ २ ॥

गजानने चोत्कटाक्षे सिन्दूररेणुवल्लभे ।
जगत्योऽष्टौ प्रकर्तव्याः सर्वकामफलप्रदाः ॥ ३ ॥

इन्द्रपदा त्रिभुवना विजया रुद्रमेखला ।
सुविशाला विराजिता गौरी गङ्गातरङ्गिणी ॥ ४ ॥

महेन्द्रे च प्रकर्तव्याः शान्तिदाः पुरमध्यगाः ।
एता अष्टौ जगत्यश्च कामध्वंसिप्रियाः स्मृताः ॥ ५ ॥

हंसध्वजा रत्नगर्भा माला च भ्रमरावली ।
नक्रध्वजा महालक्ष्मी ब्राह्मणी चतुरानना ॥ ६ ॥

लोकनाथसमुत्सृष्टा जगत्यः सर्वशान्तिदाः ।
कार्याश्च ब्रह्मकेन्द्रेषु पुरमध्ये सुखावहाः ॥ ७ ॥

नारायणी त्रिदशेन्द्री कौमारी हंसमालिका ।
पत्रावली प्रभेदा च कनका त्रिदशोद्भवा ॥ ८ ॥

लक्ष्मीप्रिये जगन्नाथे विष्णुदेवे सनातने ।
जगत्योऽष्टौ प्रकर्तव्याः सर्वकामफलप्रदाः ॥ ९ ॥

सूर्याख्या चन्द्रमण्डला चन्द्रभासा मेघोदरी ।
माहेन्द्री विजयानन्दा तापतेजा जयप्रभा ॥ १० ॥

आदित्ये तु समाख्याताः सूर्यलोकसमुद्भवाः ।
एतास्त्वष्टौ जगत्यः स्युर्दिवाकरसुखावहाः ॥ ११ ॥

वसुन्धरा हरप्रिया राजेश्वरी च पार्थिवी ।
सरस्वती कुसुमाख्या चूडामणिर्महोत्कटा ॥ १२ ॥

गौर्यां तथा च चामुण्डयां हरसिद्धौ सभासु च ।
एतास्त्वष्टौ प्रकर्तव्या इच्छाभुक्तिप्रदायकाः ॥ १३ ॥

श्रीकर्णा नायिका चैव रत्नचूडा गोमापतिः ।
अर्धनारी भैरवी च प्रधाना सर्वकूटका ॥ १४ ॥

वीतरागे इति ख्याता: कर्तव्या: सर्वकामदा: ।
सर्वकामफला नित्यं सुखदाश्च पुर:पते: ॥ १५ ॥

वीरभद्रा सुपताका सुभद्रा पूर्णभद्रिका ।
भद्राङ्गी जया विजया चाजिता ह्यष्टमी तथा ॥ १६ ॥

सर्वदेवेषु कर्तव्या: शाश्वता: सुसुखावहा: ।
इत्यग्रे च प्रकर्तव्याश्चतु:षष्टिरुदाहृता: ॥ १७ ॥

चतु:षष्टिश्च जगतीनामभेदा: क्रमोदिता: ।
देवतानुक्रमस्थानं कथितं सर्वकामदम् ॥ १८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां चतु:षष्टिजगतीनामभेदाधिकारो नाम षोडशोत्तरशततमं सूत्रम् ॥

## (११७) गणपतिशिवाष्टाष्टजगतीलक्षणात्मकं सप्तदशोत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

चतुरश्रीकृते क्षेत्रे विंशत्यंशैस्तुविस्तरः ।
द्वात्रिंशदंशैरायामः कर्तव्यश्च मुखायतः ॥ १ ॥

अपरस्यर्जुसूत्रेण प्रासादश्च कलांशकैः ।
षट्त्रिंशद्भिः पदैश्चैव मण्डपः शुभलक्षणः ॥ २ ॥

शुकघ्राणं भवेद्भागं प्रासादश्च कलांशकैः ।
चतुष्की मूलसूत्रेण त्रिदिशं मण्डपस्य च ॥ ३ ॥

पञ्चभागो भवेत् कर्णो भद्रस्य दिक्प्रविस्तरः ।
कर्णार्धो निर्गमः कार्यः प्रोक्तो भद्रेष्वयं विधिः ॥ ४ ॥

द्वाविंशत्यायते भद्रे प्रकुर्याद् वामदक्षिणे ।
पूर्वभद्रार्धभागं तु गडगंड त तुल्यतम् ? ॥ ५ ॥

शुण्डिका भागविस्तारा द्वारं पृथुप्रासादके ।
निर्गमश्च चतुर्भागैः शुण्डासोपानसञ्चयम् ॥ ६ ॥

कर्णशाला द्विभागा स्याद् भ्रमणं सार्धभागकम् ।
सार्धपञ्चविभागैस्तु शाला प्रासादस्योत्तरे ॥ ७ ॥

पञ्चाण्डकसमायुक्ता सुभद्रा सर्वकामदा ।
सर्वविघ्नोपशमना स्वर्गभोगप्रदायिका ॥ ८ ॥

इति सुभद्रा ॥

प्रदद्यादग्रशालाश्च कर्णशालादिसूत्रतः ।
प्रासादाभिमुखा कार्या सर्वतोभद्रा नामतः ॥ ९ ॥

इति सर्वतोभद्रा ॥

पृष्ठभागे प्रतिभद्रं षड्भागैः पूर्वनिर्गमः ।
शालापूर्वप्रमाणेन त्रिभागैश्च कृतायती ॥ १० ॥

इति ललिता ॥

परित्यक्ताग्रशाला च पृष्ठतुल्या व्यमोहके ? ।
लीलोदरीति तन्नाम त्रिदशैरपिदुर्लभा ॥ ११ ॥

इति लीलोदरी ॥

अग्रशालां पुनर्दद्यात् त्रिकूटा नाम शोभना ।
गिरिसुतासुतक्रीडा मनोल्हादनकारिका ॥ १२ ॥

इति त्रिकूटा ॥

अग्रशाला परित्यक्ता पार्श्वभद्रकर्णद्वये ।
चित्रकूटेति तन्नाम गणगन्धर्वसेविता ॥ १३ ॥

इति चित्रकूटा ॥

पूर्वकर्णे तथाद्वारे शालां दद्यात्तु शोभनाम् ।
श्रीमालेति च तन्नाम कर्तव्या सर्वकामदा ॥ १४ ॥

इति श्रीमाला ॥

अग्रशाला समायुक्ता सर्वकामफलप्रदा ।
गणेन्द्रस्य प्रकर्तव्या नाम्ना तु गगनोदरी ॥ १५ ॥

इति गगनोदरी ॥

इति गणेन्द्रस्य जगत्यष्टकम् ॥

तद्रूपे तत्प्रमाणे च कर्णशाला यथा भवेत् ।
पदिकं भ्रमणं चैव जगती स्यात् सुगन्तरे ॥ १६ ॥

चतुर्भागो भवेत् कर्णो भागैकमुदकान्तरम् ।
क्षोभणा चार्धभागेन सर्वकामफलप्रदा ॥ १७ ॥

द्विभागं कर्णभद्रं च पादभागेन निर्गमः ।
शाला द्विभागा कर्तव्या भागैकं भ्रमणं तथा ॥ १८ ॥

अपरभद्रेषु कर्तव्यं भद्रत्रिभागनिर्गतम् ।
सार्धे कुर्या■ द्वं पार्श्वे भागार्धे निर्गतं पुनः ॥ १९ ॥

कुर्यात्पार्श्वे तु तत्तुल्यं निर्गमश्च विंशार्धकः ? ।
चतुर्भागश्च विस्तारो मुखभद्रं विधीयते ॥ २० ॥

द्विपदं देवकुलाख्या पदार्धे शुकनासकम् ।
मण्डपं च त्रिभिर्भागैः पदिकभ्रमणैः सह ॥ २१ ॥

शालात्रयं प्रकर्तव्यं मण्डपाश्चक्रभूषिताः ।
अग्रशाला विधातव्या याम्योत्तरपूर्वक्रमैः ॥ २२ ॥

चतुर्दशागारयुता नाम्ना सा चेन्द्रसम्पदा ।
स प्राप्नुयादिन्द्रपदं तां कुर्याद्यः शिवालये ॥ २३ ॥

इतीन्द्रसम्पदा ॥

प्रदद्यादग्रशालाश्च पूर्वमानं च कल्पयेत् ।
तदा नाम्ना त्रिभुवना त्रिदशैरपि दुर्लभा ॥ २४ ॥

इति त्रिभुवनाख्या ॥

अग्रशाला प्रकर्तव्या भद्रिकायुक् याम्योत्तरे ।
भद्रेऽपरे यथाकारा तद्रूपा च याम्योत्तरे ॥ २५ ॥

श्रीविजयेति तन्नाम कर्तव्या सर्वकामदा ।
विजयस्योद्भवो नित्यं यः कुर्यात् तां शिवालये ॥ २६ ॥

इति श्रीविजया ॥

अग्रशाला समायुक्ता कर्तव्या सर्वशोभना ।
सा रुद्रमेखला ख्याता सिद्धकिन्नरसेविता ॥ २७ ॥

इति रुद्रमेखला ॥

उभयभद्रेष्वेकैकां कर्णे दद्याच्च शालिकाम् ।
शालाश्चैव प्रभद्राश्च सुविशाला नाम्ना भवेत् ॥ २८ ॥

इति सुविशाला ॥

प्रदद्यादग्रशालां च सर्वलक्षणसंयुता ।
विराजिता तदा नाम पूजिता त्रिदशैरपि ॥ २९ ॥

इति विराजिता ॥

याम्योत्तरापरभद्रे कर्णे दद्याच्च शालिकाः ।
पार्वती च तदा नाम ईश्वरस्य प्रियात्मिका ॥ ३० ॥

इति गौरी ॥

अग्रशाला समायुक्ता सर्वालङ्कारसंयुता ।
सुरासुरैश्चार्चनीया नाम्ना गङ्गातरङ्गिणी ॥ ३१ ॥

इति गङ्गातरङ्गिणी ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां गणपतिशिवाष्टाष्टजगतीलक्षणाधिकारो नाम सप्तदशोत्तरशततमं सूत्रम् ॥

# (११८) ब्रह्मविष्णुत्रिपुरुषजगती नामाष्टादशोत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच-

आयामो विंशद् द्विगुणः पृथुत्वं चाष्टाविंशतिः ।
ऋज्वपरकर्णसूत्रे प्रासादश्च कलांशकैः ॥ १ ॥

द्विपदानि तदङ्गानि विस्तरैर्निर्गमैस्तथा ।
शुकनासा चैकभागा षड्भागो मण्डपस्तथा ॥ २ ॥

।

चतुष्कीद्वारसोपानं पूर्वमानविकल्पितम् ॥ ३ ॥

आद्योद्भवकलशान्तं सपीठं त्रिगुणोन्नतम् ।
जगती तेन मानेन सीमान्ते वामदक्षिणे ॥ ४ ॥

रथोपरथशोभाढ्यं भद्रोपभद्रमेव च ।
अतः सीमा ततो बाह्यं जगती प्रासादोद्भवा ॥ ५ ॥

त्यक्त्वा कर्णेषु तुर्यांशं पुनः कर्णो वेदांशकः ।
द्वादशांशापरभद्रं द्विगुणं वामदक्षिणे ॥ ६ ॥

कर्णे तु - - निष्कासं मूलसीमान्तसूत्रतः ।
हंसध्वजा तदा नाम ब्रह्मणश्च प्रियात्मका ॥ ७ ॥ इति हंसध्वजा ॥

अग्रशाला तु दातव्या सर्वालङ्कारशोभिता ।
रत्नगर्भा तदा नाम कर्तव्या सर्वकामदा ॥ ८ ॥

इति रत्नगर्भा ॥

अपरभद्रेषु शालाः कर्तव्याः सर्वकामदाः ।
चक्रमाला तदा नाम चतुराननवल्लभा ॥ ९ ॥

इति चक्रमाला ॥

अग्रशालां परित्यज्य भद्रे दद्याद् याम्योत्तरे ।
भ्रमरावली तन्नाम कर्तव्या वेदसम्भवे ॥ १० ॥

इति भ्रमरावली ॥

अग्रशालां पुनर्दद्यात् सर्वालङ्कारसंयुता ।
मकरध्वजेति तन्नाम कर्तव्या तु पितामहे ॥ ११ ॥

इति मकरध्वजा ॥

शालां याम्योत्तरे त्यक्त्वा द्वारे सोपानशुण्डिका ।
चतुर्मुखे च कर्तव्या महालक्ष्मी पुर्मध्यगा ॥ १२ ॥

इति महालक्ष्मी ॥

बलाणकानि कार्याणि त्रिषु द्वारेषु शाश्वतम् ।
ब्रह्माणीति च तन्नाम ब्रह्मदेवप्रियात्मिका ॥ १३ ॥

इति ब्रह्माणी ॥

याम्योत्तरे तथा द्वारे कारयेच्च तथापरे ।
चतुराननेति तन्नाम शाश्वतं कमलासने ॥ १४ ॥

इति चतुरानना ॥

चतुरस्रं समं शुद्धं द्वाविंशतिविभाजितम् ।
मध्ये षट्त्रिंशद्भागैस्तु मण्डपं शुभलक्षणम् ॥ १५ ॥

इति ब्रह्मणो जगत्यष्टकम् ॥

पूर्वोत्तरे तथा याम्ये भागेन शुकनासकम् ।
तस्याग्राग्रंप्रासादानां कुर्याच्चन्द्रकलांशकैः ॥ १६ ॥

चतुष्की पूर्वद्वारे तु कर्तव्या लक्षणान्विता ।
प्रासादषोडशांशेन हीनाङ्गा वामदक्षिणे ॥ १७ ॥

जगत्यपरकर्णे तु भागमेकं तु विस्तरः ।
निर्गमः पञ्चभागैश्च विस्तरो लिङ्गभागिकः ॥ १८ ॥

दिक्षु तिसृषु कर्तव्यं भद्रं वै सर्वकामदम् ।
अग्रभद्रस्य निष्कासो भागैश्चैकादशैस्तथा ॥ १९ ॥

शुण्डिकाद्वारसोपानं पूर्वमानविकल्पितम् ।
जगतीमूलसीमाग्रे कर्तव्यो मण्डपः शुभः ॥ २० ॥

षड्भागैश्चैव विस्तीर्णं कर्तव्यं नृत्तमण्डपम् ।
त्रिपुरुषेति विज्ञेया नाम्ना नारायणी शुभा ॥ २१ ॥

इति नारायणी ॥

भद्रकर्णे तथा चाष्टौ शालाश्चेत्सर्वकामदाः ।
त्रिदशेन्द्री तदा नाम सिद्धकिन्नरसेविता ॥ २२ ॥

इति त्रिदशेन्द्री ॥

गर्भशालापरभद्रे भवेच्चेत्सर्वकामदा ।
कौमारीति तदा नाम कीर्तिता पापनाशिनी ॥ २३ ॥

इति कौमारी ॥

त्यक्त्वा चापरशालां तु शालां दद्याद् याम्योत्तरे ।
हंसमालेति तन्नाम कर्तव्या सर्वकामदा ॥ २४ ॥

इति हंसमाला ॥

प्रयोजयेदग्रभागे शालां चेल्लक्षणान्विताम् ।
पत्रावली तदा नाम जगती सर्वकामदा ॥ २५ ॥

इति पत्रावली ॥

भागमेकं यदा कर्णे पुनर्भागं तु विस्तरे ।
शाला सूत्र प्रदातव्या प्रभेदनयना मता ॥ २६ ॥

इति प्रभेदनयना ॥

वामदक्षिणभद्रे तु कर्तव्यं च त्रिशालकम् ।
कनकेति च तन्नाम कर्तव्या सर्वकामदा ॥ २७ ॥

इति कनका ॥

अपरे तु त्रिशालं च पूर्वेऽपि गुणसंयुतम् ।
विष्णुदेवे तथा चैव कर्तव्या त्रिदशोद्भवा ॥ २८ ॥

इति त्रिदशोद्भवा ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां ब्रह्मविष्णुत्रिपुरुषजगत्यधिकारो नामाष्टादशोत्तरशततमम् सूत्रम् ॥

---

## (११९) सूर्यस्यपार्थिव्यष्टजगतीलक्षणात्मकमेकोनविंशत्युत्तर-शततमं सूत्रम् ॥

---

विश्वकर्मोवाच-

चतुर्विंशतिर्भागाः स्युः षट्त्रिंशतिर्मुखायता ।
चतुर्भागो भवेत् कर्णः प्रतिरथस्तु तत्सम : ॥ १ ॥

द्वौ द्वौ भागौ तु निष्कासो भद्रे चैव प्रतिरथे ।
अष्टभागात्परं भद्रं विंशतिर्वामदक्षिणे ॥ २ ॥

चतुर्भागं द्वारमानं सोपानपङ्क्तिसंचयम् ।
भद्रकोणो भवेद् भागो भागः शुण्डी तु विस्तरे ।। ३ ॥

कर्णात्परमृजुसूत्रे प्रासादश्च कलांशकैः ।
शुकनासो मण्डपश्च पूर्वमानविकल्पितौ ॥ ४ ॥

कर्णे प्रतिरथे चैव शाला द्वादश कल्पयेत् ।
सूर्याख्या सा समाख्याता सिद्धकिन्नरसेविता ॥ ५ ॥

इति सूर्याख्या ॥

प्रदद्यादग्रशालाश्च सर्वालङ्कारसंयुता ।
चन्द्रमण्डला तन्नाम सर्वविघ्नविनाशिनी ॥ ६ ॥

इति चन्द्रमण्डला

परित्यज्याग्रशालाश्च भद्रे दद्याद् याम्योत्तरे ।
चन्द्रभासा तदा नाम वन्दिता त्रिदशैरपि ॥ ७ ॥

इति चन्द्रभासा ॥

प्रदद्यादग्रशालाश्च सर्वलक्षणसंयुता ।
मेघोदरी तस्या नाम कर्तव्या च दिवाकरे ॥ ८ ॥

इति मेघोदरी ॥

भद्रशाला भद्रगर्भे त्वायता सर्वकामदा ।
माहेन्द्री तु तस्या नाम सर्वकल्याणकारका ॥ ९ ॥

इति माहेन्द्री ॥

याम्योत्तरे तथा भद्रे शालात्रिकं तु कारयेत् ।
विजयानन्दा नामाख्या त्रिदशैरपि दुर्लभा ॥ १० ॥

इति विजयानन्दा ॥

अपरे तु तथा नन्दा शालात्रिकं सुलक्षणम् ।
प्रतापतेजा तन्नाम कर्तव्या सर्वकामदा ॥ ११ ॥

इति प्रतापतेजा ॥

अग्रशाला तु तद्रूपा सर्वालङ्कारसंयुता ।
विजयप्रभेति नाम्ना सा चादित्यसमप्रभा ॥ १२ ॥

इति विजयप्रभा ॥

इति सूर्याण्जगत्यः ॥

पञ्चविंशतिर्विस्तार आयामः पञ्चत्रिंशतिः ।
पड्भागो भवेत्कर्णो भद्रं चैव त्रयोदश ॥ १३ ॥

वामदक्षिणभद्राणां विभागाः सप्तविंशतिः ।
निर्गमे कर्णतुल्यानि सर्वभद्रेष्वयं विधिः ॥ १४ ॥

अपरस्यर्जुसूत्रेण प्रासादः पञ्चभागिकः ।
शुकाग्रश्च भवेद्भागो मण्डपः सप्तविस्तरः ॥ १५ ॥

द्वारत्रयं मण्डपस्य जगतीनां तु कारयेत् ।
गण्डशुण्डिकासोपानं पूर्वमानेन कल्पितम् ॥ १६ ॥

चतस्रः कर्णशालाश्च कर्तव्याश्च सुलक्षणाः ।
वसुन्धरीति तन्नाम देवानां सततप्रिया ॥ १७ ॥

इति वसुन्धरी ॥

पूर्वे च भद्रकोणे च शाले द्वे तु मनोरमे ।
हरिप्रियेति तन्नाम सिद्धकिन्नरसेविता ॥ १८ ॥

इति हरिप्रिया ॥

तथापरे यथापूर्वे शालां कुर्यान्मनोरमाम् ।
राजेश्वरीति तन्नाम वन्दिता त्रिदशैरपि ॥ १९ ॥

इति राजेश्वरी ॥

त्यक्त्वा चापरभद्रे तु द्वे च याम्योत्तरे विदुः ।
पार्थिवीति तु तन्नाम पूजिता सुरकिन्नरैः ॥ २० ॥

इति पार्थिवी ॥

पुनश्चापरभद्रे तु शालाः कुर्यान्मनोरमाः ।
सरस्वतीति तन्नाम पूजिता देवदानवैः ॥ २१ ॥

इति सरस्वती ।

पुरतो ह्यग्रशाला च कर्तव्या सर्वकामदा ।
कुसुमाख्येति सा चैवमाख्याता वास्तुवेदिभिः ॥ २२ ॥

इति कुसुमाख्या ॥

**पूर्वद्वारे परित्यज्य कर्तव्या च याम्योत्तरे ।**
**ज्ञानकलाकुलोजन्म ? चूडामणिरिति स्मृता ॥ २३ ॥**

**इति चूडामणिः ॥**

**पूर्वद्वारे पुनः कार्याः शाला वै सुमनोरमाः ।**
**महाकूटेति तन्नाम कर्तव्या सर्वलक्षणा ॥ २४ ॥**

**इति महाकूटा ॥**

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां सूर्यस्यपार्थिव्यष्टजगतीलक्षणाधिकारो नामैकोनविंशत्युत्तरशततमं सूत्रम् ॥

---

## (१२०) चतुःषष्टिजगतीचतुःषष्टिपीठनामात्मकं विंशत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच--

चतुर्विंशतिविस्तारे चत्वारिंशन्मुखायते ।
द्वौ द्वौ भागौ त्यजेत्कर्णे पुरतोऽग्रोभयस्तदा ॥ १ ॥

अपरस्यर्जुसूत्रेण प्रासादस्तु कलांशकैः ।
शुकनासो भवेद् भागो मण्डपः षट्प्रविस्तृतः ॥ २ ॥

भद्रं तु भागनिष्कास उभयोर्वामदक्षयोः ।
चतुष्किका चैतस्याग्रे द्विभागायामविस्तरे ॥ ३ ॥

द्विक्षणं त्रिकमाख्यातं चतुर्भिस्तु चतुष्किका ।
आयामश्चाष्टभागः स्यात् पृथुत्वं चैव चाष्टतः ॥ ४ ॥

अष्टांशोत्तमं ख्यातं मण्डपं नृत्यकं विदुः ।
द्विभागा क्षणचतुष्का द्विभागा पट्टशालिका ॥ ५ ॥

कुर्याच्छालां द्विभागां वा हारौ च देवसन्मुखाः ।
समन्ततोभये पक्षे द्वाविंशतिर्जिनालयाः ॥ ६ ॥

त्रिकौ त्रिकस्योभयतः सङ्ख्या चतुर्विंशतिः ।
चतुर्भिः पृथुनिष्कासोऽग्रे स्यादेवं बलाणकम् ॥ ७ ॥

श्रीदा शान्तिकरा नित्यं पुरमध्ये सुखावहा ।
जिनेन्द्रस्य भवनस्था सा वै श्रीकर्णिकाभिधा ॥ ८ ॥

इति श्रीकर्णी ॥

मण्डपाद् गर्भसूत्रेण त्वष्टापदं याम्योत्तरे ।
नायिकेति च तन्नाम जिनेन्द्रे सर्वदायिका ॥ ९ ॥

इति नायिका ॥

अष्टापदं परित्यज्य तत्र कुर्याद् बलाणकम् ।
रत्नचूडेति तन्नाम कर्तव्या शान्तिमिच्छता ॥ १० ॥

इति रत्नचूडा ॥

यथापूर्वे तथापरे शालाः स्युश्चतुर्विंशतिः ।
गोमापती तदा नाम कर्तव्या सर्वकामदा ॥ ११ ॥

इति गोमापती ॥

याम्योत्तरबलाणकानपरे पट्टशालिका ।
अर्धनारीश्वरी नाम वीतरागे तु शान्तिदा ॥ १२ ॥

इत्यर्धनारीश्वरी ॥

अपरे रथशाला स्यान्मठो याम्ये प्रतिष्ठितः ।
उत्तरे रथरन्ध्रं च नाम्ना सा शान्तिभैरवी ॥ १३ ॥

इति भैरवी ॥

याम्योत्तरे च द्वाराग्रे कुर्यादष्टापदं तथा ।
प्रधानेति च तन्नाम सिद्धकिन्नरसेविता ॥ १४ ॥

इति प्रधाना ॥

अष्टापदस्य संस्थाने शालात्रिकं तु कारयेत् ।
सर्वकूटेति तन्नाम कर्तव्या तु जिनेश्वरे ॥ १५ ॥

इति सर्वकूटा ॥

इति जिनेन्द्रस्य जगत्यष्टकम्

यादृशो मूलप्रासादो जगती चैव तादृशी ।
भिन्नच्छन्दा न कर्तव्या जगती प्रासादस्थितिः ॥ १६ ॥

चतुरस्रा तथायतावृत्ता वृत्तायता तथा ।
अष्टास्रा च तथा कार्या छन्दाः पञ्च प्रकीर्तिताः ॥ १७ ॥

चतुरस्रा वीरभद्रा सुपताका तथायता ।
वृत्ता च पूर्णभद्रा च वृत्तायता भद्राङ्किका ॥ १८ ॥

अष्टास्रा च जया प्रोक्ता विजया चैव स्वस्तिका ।
अजिता षोडशास्रा च द्वात्रिंशास्रापराजिता ॥ १९ ॥

समन्ताच्च शिवे कुर्याज्जगतीश्चतुःषष्टिकाः ।
धर्मार्थकाममोक्षाणां प्राप्तिहेतुरभिष्टदाः ॥ २० ॥

आख्याता जगतीछन्दाः पीठमानमतः शृणु ।
छन्दालङ्कारसंयुक्तं प्रोक्तं यद् वास्तुवेदिभिः ॥ २१ ॥

वैराग्यं पीठमाख्यातं पीठं चैव सुनन्दनम् ।
मन्दरं तु भवेत्पीठं पीठं त्रैलोक्यभूषणम् ॥ २२ ॥

मलयं चोज्जयन्तं च पीठं वै गन्धमादनम् ।
हेमकूटं भवेत्पीठं चन्द्रशालं श्रियाननम् ॥ २३ ॥

विजयं महातिलकं कामदं देवदुर्लभम् ।
वाराहपीठं गरुडं श्रीनेत्रं च भद्रारथी ॥ २४ ॥

भद्रं वै राष्ट्रवर्द्धनं शङ्खावर्तं च पुष्पकम् ।
नागरं भद्रतिलकं श्रीवत्सं तु जयावहम् ॥ २५ ॥

रत्नकूटं महाकूटं त्रिकूटं कूटवर्द्धनम् ।
हंसं च हंसतिलकं महाकान्तं मनोहरम ॥ २६ ॥

वर्द्धमानं नन्द्यावर्तं श्रीकूटं विजयोद्भवम् ।
कैलासं पृथ्वीतिलकं पृथ्वीजयं सुभद्रकम् ॥ २७ ॥

इन्द्रनीलं महानीलं भूधरं च किरातकम् ।
वृषभं भद्रपीठं च द्राविडं च वैराटकम् ॥ २८ ॥

हर्म्यं हर्म्यतलं चैव सर्वभद्रं च सुन्दरम् ।
हिमवानमृतोद्भवं कर्णिकारं महाप्रियम् ॥ २९ ॥

तुङ्गारं सिंहपीठं च शक्त्याख्यं शक्याख्यं तु भैरवम् ।
कुलपीठं तथा तुर्कं शुक्राख्यं व्योमनःपतिम् ॥ ३० ॥

जयं च विजयं चैव त्वजितं चापराजितम् ।
एवं चतुःषष्टिपीठा वास्तुवेदैरुदाहृताः ॥ ३१ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां चतुःषष्टिजगतीचतुःषष्टिपीठाधिकारो नाम विंशत्युत्तरशततमं सूत्रम् ॥

---

## (१२१) आयतनदेवानुक्रमनिर्णयो नामैकविंशत्युत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच–

आयतनं गणादीनां देवतानां यथाविधि ।
अनुक्रमेण वक्ष्यामि यथोक्तं च पृथक् पृथक् ॥ १ ॥
वामे तु गजकर्णं च सिद्धिं दद्याच्च दक्षिणे ।
द्वौ पृष्ठकर्णयोश्चैव धूम्रको बालचन्द्रमाः ॥ २ ॥
उत्तरे तु सदा गौरी याम्ये चैव सरस्वती ।
पश्चिमे यक्षराजस्तु बुद्धिः पूर्वे तु संस्थिता ॥ ३ ॥

इति गणपत्यायतनक्रमः ॥

वामे गणपतिश्चैव दक्षिणे पार्वती स्थिता ।
नैर्ऋत्ये भास्करं विद्याद् वायव्ये च जनार्दनम् ॥ ४ ॥
मातृभ्यो मातृसंस्थानं दक्षिणस्यां हि कारयेत् ।
सौम्ये शान्तिगृहं कुर्यात् पश्चिमे जलशायिनम् ॥ ५ ॥

इत्येकद्वारशिवायतनक्रमः ॥

वामे स्नानगृहं कुर्यात् सोमद्वारं तु दक्षिणे ।
मध्ये रुद्रः प्रतिष्ठाप्यो मातृस्थानं च दक्षिणे ॥ ६ ॥
वामे देवीं महालक्ष्मीमुमां वै भैरवीं तथा ।
ब्रह्मविष्णू तथा रुद्रं पृष्ठदेशे तु कारयेत् ॥ ७ ॥
चन्द्रादित्यौ स्थितौ कर्णे ह्याग्नेय्यां स्कन्द एव च ।
ईशाने विघ्नराजस्तु धूम्रमीशानगोचरे ॥ ८ ॥

इति चतुर्मुखशिवायतनक्रमः ॥

आग्नेय्यां तु गणेशः स्यान्मातृस्थानं च दक्षिणे ।
नैर्ऋत्ये तु सहस्राक्षो जलशायी च वारुणे ॥ ९ ॥
उमाशङ्करौ वायव्ये ग्रहाश्चैवोत्तरस्थिताः ।
ईशाने तु श्रियादेवी प्राच्यां तु धरणीधरः ॥ १० ॥

इति ब्रह्मायतनक्रमः ॥

पूर्वे नारायणं देवं पुण्डरीकाक्षं दक्षिणे ।
पश्चिमे चैव गोविन्दमुत्तरे मधुसूदनम् ॥ ११ ॥
विष्णुं कुर्यात्तथेशाने चाग्नेय्यां तु जनार्दनम् ।
नैर्ऋत्ये पद्मनाभं च वायव्ये माधवं तथा ॥ १२ ॥
मध्ये तु केशवः स्थाप्यो वासुदेवस्तथोच्यते ।
संकर्षणश्च प्रद्युम्नो ह्यनिरुद्धो यथाक्रमम् ॥ १३ ॥

जलशायी तथा प्रोक्तो दशावतारसंयुतः ।
शूकरस्त्वग्रतः स्थाप्यः सर्वदेवमयः शुभः ॥ १४ ॥

शेषकूर्मसमायुक्तो लक्ष्मीर्वै वामपार्श्वतः ।
विष्ण्वायतनमित्येवं कथितं त्वपराजित ॥ १५ ॥

इति विष्ण्वायतनक्रमः ॥

आग्नेय्यां तु कुजः स्थाप्यो गुरुर्याम्ये प्रतिष्ठितः ।
नैर्ऋत्ये राहुसंस्थानं पश्चिमे चैव भार्गवः ॥ १६ ॥

वायव्ये केतुसंस्थानं सौम्यायां बुध एव च ।
ईशाने च शनिं दद्यात् प्राच्यां चैव तु चन्द्रमाः ॥ १७ ॥

इति सूर्यायतनक्रमः ॥

गौर्यायाः सम्प्रवक्ष्यामि देवतानामनुक्रमम् ।
दक्षे मातृः श्रिया सौम्ये सावित्रीं पश्चिमे विदुः ॥ १८ ॥

हे पृष्ठकर्णयोश्चैव भगवती सरस्वती ।
गणेशं च कुमारं च त्वीशानं चाग्निगोचरे ॥ १९ ॥

कुण्डलाभ्यामलङ्कृत्वा सर्वाभरणभूषिता ।
मध्ये देवी प्रतिष्ठाप्या महेशस्य सदा प्रिया ॥ २० ॥

इति गौर्यायतनक्रमः ॥

जिनालयं प्रवक्ष्यामि जिनेन्द्रभवनं तथा ।
आश्रयन्ति ततो दिव्या जिनशासनपारगाः ॥ २१ ॥

जिनेन्द्रस्य तथा यक्षा देव्यश्च जिनमातृकाः ।
तीर्थंकराणां सर्वेषामतीतानामवर्तिनाम् ॥ २२ ॥

कैवल्यृषभदेवाद्याः पद्मनाभादितः क्रमात् ।
पृथक् चतुर्विंशतिर्वै जिनानां वा द्वासप्ततिः ॥ २३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छाया-
मायतनदेवानुक्रमनिर्णयाधिकारो नामैकविंशत्युत्तरशततमं सूत्रम् ॥

## (१२२) बलाणकलक्षणं द्वाविंशत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच–

अथातः सम्प्रवक्ष्यामि बलानकसुलक्षणम् ।
विस्तीर्णे जगतीपादे पदपादविवर्जितम् ॥ १ ॥

प्रासादव्यासमानेन गर्भमानेन चाऽथवा ।
शालालिन्दप्रमाणेन त्रिविधं मानलक्षणम् ॥ २ ॥

कनिष्ठे चोत्तमं कार्यमुत्तमे च कनिष्ठकम् ।
मध्यमे मध्यमं कार्यमेतन्मानं च शोभनम् ॥ ३ ॥

अन्यच्च युक्तिभेदैश्च पुरतः पृष्ठतोऽपिवा ।
अनेकैरर्थभेदैश्च कथयाम्यपराजित ॥ ४ ॥

वामनश्च विमानश्च हर्म्यशालश्च पुष्करः ।
तथा चोत्तुङ्गनामा च पञ्चैते च बलानकाः ॥ ५ ॥

वर्तनं कथयिष्यामि पदसंस्थानमानतः ।
प्रासादाग्रे च प्राकारे मन्दिरे वारिमध्यतः ॥ ६ ॥

वामनं जगतीग्रस्तं विमानं तु तदाश्रितम् ।
हर्म्यशालं गृहे वाऽपि प्रासादे नगरानने ॥ ७ ॥

पुष्करं वारिमध्यस्थमग्रतश्चैव भूषितम् ।
सप्तभूमं नवभूममतऊर्ध्वं न कारयेत् ॥ ८ ॥

प्रासादाग्रे–जं कुर्याज्जगतीमुखमण्डनम् ।
लक्षणं तस्य वक्ष्यामि स्थानमानं च भूमिकाम् ॥ ९ ॥

एकद्वित्रिचतुःपञ्चषट्सप्ताष्टभिरेव च ।
स्थानं तस्य–सेवोक्तं ? कर्तव्यं तदनन्तरम् ॥ १० ॥

प्रासादादिक्रमद्वारं मण्डपान्ते निवेशयेत् ।
तत्क्रमेण प्रकर्तव्यं द्वारं तस्य बलानके ॥ ११ ॥

हस्तेऽङ्गुला भवेद् वृद्धिरङ्गुलं हस्तमानतः ।
कर्तव्यं पूर्वमानेन हीने हीनं समे समम् ॥ १२ ॥

जगती तु शिरोदेशे जठरं चोत्तमाङ्गजे ? ।
जगत्युदयतो द्वारं कर्तव्यं तु बलानके ॥ १३ ॥

द्वारं चैतेन मानेन प्रकुर्याच्च बलानके ।
परापरविभागेन हीनं वा अधिकं यदि ॥ १४ ॥

तद्द्वारं दोषदं प्रोक्तमेकमानेन कामदम् ।
पुरतः पृष्ठतो द्वारं यथा सौभाग्यतं न्यसेत् ॥ १५ ॥

तत्रैव तेन मानेन तत्समं च तुलोदयम् ।
तथा तुलोदये भूमिर्घट्टकादि ततःसमम् ॥ १६ ॥

तत्समं तु प्रकर्तव्यमुत्तमाङ्गं सपट्टकम् ।
उदयोन्नतमानेन सोपानं तुलमध्यतः ॥ १७ ॥

अम्लला (?) बाह्यतश्चैवं सोपानं च विदुर्बुधाः ।
कुम्भी स्तम्भशिरः पट्टं पृथक् सूत्रात्तुलादिकम् ॥ १८ ॥

युक्ता न्यस्ताः समा कुम्भी स्तम्भोदुम्बरशिर्षिकाः ।
भूमिं तु भूमिमानेन समसूत्रैर्विचक्षणाः ॥ १९ ॥

मूलपीठसमसूत्रे आदिभूमेस्तु मस्तकम् ।
ऊर्ध्वे पट्टानुक्रमेण कर्तव्यो भूमिकाक्रमः ॥ २० ॥

उदुम्बरशिरोभूमिर्जलाधारे प्रशस्यते ।
बलानकस्तत्तदग्रे तोरणं भद्रमस्तके ॥ २१ ॥

तद्बाह्ये मत्तावरणं द्वाराणि वामदक्षिणे ।
सन्मुखानि त्रीणि शेषं मत्तावरणके तथा ॥ २२ ॥

शिवसूर्यौ ब्रह्मविष्णू चण्डिका जिन एव च ।
एतेषां च सुराणां च कुर्यादग्रे बलानकम् ॥ २३ ॥

विमानस्तुङ्गनामा च राजवेश्माग्रतः शुभः ।
हर्म्यशालो गृहे वापि कर्तव्यो गोपुराकृतिः ॥ २४ ॥

पुष्करो वारिमध्यस्थो वामनो देवताग्रतः ।
इषुभेदा वामनाद्याः कर्तव्यास्तु बलानकाः ॥ २५ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां बलाणकलक्षणाधिकारो नाम द्वाविंशत्युत्तरशततमं सूत्रम् ॥

---

## (१२३) प्रासादपीठोदयमानं त्रयोविंशत्युत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच--

एकहस्ते तु प्रासादे त्रयस्त्रिंशद्भिरङ्गुलैः ।
द्विहस्ते तु प्रकर्तव्यः पञ्चपञ्चाशदङ्गुलैः ॥ १ ॥

सप्तसप्तत्यङ्गुलैश्च प्रासादे तु त्रिहस्तके ।
चतुर्हस्ते तु प्रासादे एकोनशतसङ्ख्यकैः ॥ २ ॥

प्रासादे पञ्चहस्ते सैकविंशतिशताङ्गुलैः ।
पञ्चहस्तान्ततो वृद्धिर्ह्रस्वं कुर्यात्तदूर्ध्वतः ॥ ३ ॥

पञ्चहस्तादूर्ध्वतश्च यावत्स्यान्नवहस्तकम् ।
ह्रस्वं हस्तार्धभागेन पञ्चोर्ध्वे च नवान्तकम् ॥ ४ ॥

तदूर्ध्वे त्रयोदशान्तं पादभागं परित्यजेत् ।
अष्टमांशं ततो ह्रस्वं यावद्विंशतिहस्तकम् ॥ ५ ॥

ततो द्वात्रिंशदंशं च ह्रस्वं यावच्छतार्धकम् ।
प्रहरान्तं कुम्भकादेरुच्छ्रयो नागरे मतः ॥ ६ ॥

विभक्ते चैकविंशत्या भागेन स्यात्तदुच्छ्रयः ।
पीठानि पञ्च पञ्चादेर्नवान्तं भागवृद्धितः ॥ ७ ॥

लतिने वाऽथ सान्धारे नागरे मिश्रकेऽपि वा ।
विमानेऽपि समाख्यातः पीठमानसमुच्छ्रयः ॥ ८ ॥

पृथुप्रासादाधोदये द्राविडे पीठकोच्छ्रयः ।
तदूर्ध्वे तु भवेद्रेखा द्राविडे कर्मचर्चिता ॥ ९ ॥

कुम्भकादेः क्षितेरन्ते भूमिजे वै पृथूदयः ।
क्षितिशृङ्गोत्सेधमाने पीठमर्धे प्रकल्पयेत् ॥ १० ॥

वराटे वै विंशतिधा क्षितेरन्ततउच्छ्रयः ।
ऋतुभागं भवेत्पीठमधः सप्तभिरुन्नतम् ॥ ११ ॥

पीठोच्छ्रयप्रभेदास्तु कथिताश्च शुभप्रदाः ।
इष्टमेवामुतः कामं कर्तृकप्रवरावुभौ ॥ १२ ॥

इति पीठोच्छ्रयप्रभेदाः ॥

प्रासादपादमानं च ज्ञात्वा चैव विचक्षणैः ।
षोडशाङ्गुलमानेन कर्तव्यास्तु दृढाः समाः ॥ १३ ॥

प्रासादच्छन्द्मस्योर्ध्वे दृढखरशिलोत्तमा ।
एकहस्ते पादहस्तः पञ्चान्तेऽङ्गुलवृद्धितः ॥ १४ ॥

अर्धाङ्गुलं तदूर्ध्वे तु नवान्तं सुदृढोत्तमा ।
पादवृद्धिं पुनर्दद्याद् हस्ते हस्ते तथा पुनः ॥ १५ ॥

हस्तानां विंशतिर्यावदर्धपादा तदूर्ध्वतः ।
विंशत्यङ्गुलपिण्डा च शतार्धे तु खरा शिला ॥ १६ ॥

प्रासादच्छन्दमाकारैर्विविधैर्दलनिर्गमैः ।
इष्टकारज्जुसम्युक्तास्तलतो ये च पृष्ठतः ॥ १७ ॥

शिलास्ताश्चैव तीक्ष्णाग्राः स्पर्शयेत्तु प्रयत्नतः ।
सुदृढाः समताढ्याश्च सूत्रपातं तदूर्ध्वतः ॥ १८ ॥

एकहस्ते तु प्रासादे भिट्टं वेदाङ्गुलं स्मृतम् ।
एकतः पञ्चहस्तान्तं हस्ते चैकैकमङ्गुलम् ॥ १९ ॥

पञ्चोर्ध्वं दशपर्यन्तं हस्ते पादोनमङ्गुलम् ।
विंशत्यन्तं दशोर्ध्वे च वृद्धिरर्धाङ्गुला करे ॥ २० ॥

शतार्धान्तं ततो हस्तचतुष्के चैकमङ्गुलम् ।
अनेनैव प्रकारेण भिट्टोच्छ्रायं प्रकल्पयेत् ॥ २१ ॥

एकभिट्टं द्विभिट्टं वा भिट्टत्रयमथोच्यते ।
एवं त्रिपुष्पकं चैव हर्षो धर्मो यशोऽपि च ॥ २२ ॥

तृतीये च तदर्धेन पुष्पकान्वितचिप्पिका ।
उच्छ्रयात् पादनिष्कासं कुर्याद्धि स्वस्वमानतः ॥ २३ ॥

कर्णभद्रोपभद्राश्च रथोपरथकर्णिकाः ।
इदं मानं तु भिट्टस्य पीठं चैव तदूर्ध्वतः ॥ २४ ॥

एकहस्ते तु प्रासादे पीठं वै द्वादशाङ्गुलम् ।
द्व्यष्टाङ्गुलं द्विहस्ते च त्रिहस्तेऽष्टादशाङ्गुलम् ॥ २५ ॥

अर्धं पादं त्रिभागं वा त्रिविधं परिकल्पयेत् ।
ऽर्ध्यंशेनार्धेन पादेन चतुर्हस्ते सुरालये ॥ २६ ॥

पादं पीठोच्छ्रयं कार्यं प्रासादे पञ्चहस्तके ।
पञ्चोर्ध्वे दशपर्यन्तं रसांशं हस्तवृद्धये ॥ २७ ॥

ततो हस्ते चाष्टमांशा वृद्धिः स्याद् द्वादशावधि ।
षट्त्रिंशदन्तं वृद्धिस्तु हस्ते वै द्वादशांशिका ॥ २८ ॥

चतुर्विंशत्यंशिका तदूर्ध्वे यावच्छतार्धकम् ।
मध्ये न्यूनेऽधिके पञ्चमांशे ज्येष्ठं कनिष्ठकम् ॥ २९ ॥

त्रिज्येष्ठमिति च स्यातं त्रिमध्यं त्रिकनिष्ठकम् ।
तस्याभिधानं वक्ष्येऽहमुदितं नवधोच्छ्रयात् ॥ ३० ॥

शुभद्रं सर्वतोभद्रं पद्मकं च वसुन्धरम् ।
सिंहपीठं तथा व्योम गरुडं हंसमेव च ॥ ३१ ॥

वृषभं यद् भवेत्पीठं मेरोराधारकारणम् ।
पीठमानमितिख्यातं प्रासादे आदिसीमया ॥ ३२ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
प्रासादपीठोदयमानाधिकारो नाम त्रयोविंशत्युत्तरशततमं सूत्रम ॥

# (१२४) नागरप्रासादपीठलक्षणकं चतुर्विंशत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच--

पीठोच्छ्रयं तथा मानं विभक्तं भागसङ्ख्यया ।
रूपं चांशं समुत्सेधं द्वाविंशतिविनिर्गतम् ॥ १ ॥

जाड्यकुम्भे ततो वक्ष्ये भागैर्नवभिरुच्छ्रितम् ।
कर्णं कुर्यात्सार्धभागमर्धमन्तरपत्रिकाम् ॥ २ ॥

सार्धाग्र्यंशं निर्गतं च सार्धद्व्यंशां तु चिप्पिकाम् ।
स्कन्धं च सार्धपञ्चांशं सार्धभागां तु चिप्पिकाम् ॥ ३ ॥

कर्णालिः केन्द्रभागैश्च भागार्धोऽन्तरपत्रिका ।
सार्धद्वयं कर्णकं च भागैका चिप्पिका मता ॥ ४ ॥

द्विभागेऽन्तरपट्टं द्वे पदिके भागमध्यतः ।
कर्णस्तथैकभागश्च भागः स्कन्धः सपट्टिकः ॥ ५ ॥

सार्धाभ्यंशा ग्रासपट्टी भागं निर्वाणचिप्पिका ।
उच्छ्रयः कथितश्चैवं निर्गमं शृणु साम्प्रतम् ॥ ६ ॥

सार्धद्व्यंशा कपोताली सार्धं कर्णकमेव च ।
द्विभागा चिप्पिका ज्ञेया निर्गमश्चाष्टभागिकः ॥ ७ ॥

सूर्यांशैर्गजपीठं चाऽर्धभागान्तरपत्रिका ।
कुर्यात्कर्णं चैकभागं भागं स्कन्धं सपट्टिकम् ॥ ८ ॥

कर्णोर्ध्वे तु गजाः कार्याः सार्धाग्रांशसमुच्छ्रिताः ।
ऊर्ध्वे कर्णस्ततो भागस्त्रिभागं स्कन्धपट्टकम् ॥ ९ ॥

द्विभागा च कपोताली क्षोभणा चार्धभागिका ।
द्विभागा चिप्पिका चैवं चतुर्भागैश्च निर्गमः ॥ १० ॥

दशभागं वाजिपीठं भागेऽर्धेऽन्तरपत्रिका ।
पादोनभागकर्णश्च पादोनः स्कन्ध एव च ॥ ११ ॥

वाजिमानं सप्तभागं कर्णान्तरसमुन्नतौ ।
पादोन ऊर्ध्वकर्णश्च पादोना स्कन्धचिप्पिका ॥ १२ ॥

द्विभागा च कपोताली क्षोभणा भागनिर्गमा ।
द्विभागा चिप्पिका चैव - - - निर्गमैः सह ॥ १३ ॥

नरपीठं ततो वक्ष्ये अष्टभागसमुन्नतम् ।
अन्तःपत्रं च पादानं कर्णः पादोन एव च ॥ १४ ॥

ऊर्ध्वे कर्णश्च तन्मानः पादोना स्कन्धचिप्पिका ।
रूपाणि पञ्चभागानि द्विभागैर्निर्गमैः सह ॥ १५ ॥

जाड्यकुम्भं च कर्णाली – – – चिप्पिका समा ।
कपोतालीसमसूत्रे कर्णकः पूर्वनिर्गमः ॥ १६ ॥

जाड्यकुम्भस्कन्धसूत्रे कुर्याद् ग्रासस्य पट्टिकाम् ।
ग्रासपट्टीप्रवेशात्तु द्विभागं गजपीठकम् ॥ १७ ॥

ऊर्ध्वकर्णे कपोताली वाजिपीठं द्विभागिकम् ।
तस्योर्ध्वे च कपोताली अर्धांशं नरपीठकम् ॥ १८ ॥

नरपीठप्रवेशात्तु खुरकं सार्धभागिकम् ।
प्रवेशनिर्गमावेवं कथितौ च शुभप्रदौ ॥ १९ ॥

जाड्यकुम्भः पञ्चभागः कर्णाली चाष्टभागिका ।
गजपीठं चतुर्भागं त्रिभागं वाजिपीठकम् ॥ २० ॥

नरपीठं द्विभागं च कर्तव्यं शुभलक्षणम् ।
खुरकाज्जाड्यकुम्भान्तं द्वाविंशद् भागनिर्गतम् ॥ २१ ॥

त्रिपञ्चांशं समुत्सेधं द्वाविंशतिविनिर्गतम् ।
पीठमानमतो दृष्टं कथितं त्वपराजित ॥ २२ ॥

ईदृशं कुरुते यस्तु स सर्वफलमश्नुते ।
अज्ञानात् कुरुते यस्तु शिल्पदोषो महान् भवेत् ॥ २३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां नागरप्रासादपीठलक्षणाधिकारो नाम चतुर्विंशत्युत्तरशततमं सूत्रम् ॥

## (१२५) प्रासादजातिच्छन्दपीठलक्षणं पञ्चविंशत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

द्राविडे पीठकोत्सेधं द्वाविंशत्या विभाजयेत् ।
वेदीबन्धत्रयं कुर्यादूर्ध्वतः सुरमस्तकात् ॥ १ ॥

त्रिपदो जाड्यकुम्भस्तु द्विपदः कर्णकस्तथा ।
पदं चान्तरपत्रं च द्विपदा चोर्ध्ववेदिका ॥ २ ॥

पदार्धमन्तःपत्रं च द्विपदो जाड्यकुम्भकः ।
सार्धं चान्तरपत्रं च द्विपदोर्ध्वे च वेदिका ॥ ३ ॥

अर्धपञ्चमपदाख्या ? तृतीयं वेदिबन्धनम् ।
पदार्धमन्तपत्रं च खुरकं च पदद्वयम् ॥ ४ ॥

कुमुदं पदमुत्सेधे तस्यैवोर्ध्वे ततः पदम् ।
पदं चान्तरपत्रं च कर्णपाली च तत्समा ॥ ५ ॥

तत्समं तलकुम्भं च तत्समं च प्रचक्षते ? ।
प्रथमं वेदिबन्धानां निर्गतं पदपञ्चकम् ॥ ६ ॥

द्वितीयं सार्धवेदांशैस्तृतीयं च पदत्रयम् ।
खुरकं च पदं सार्धत्रयोदशविनिर्गमे ॥ ७ ॥

जाड्यकुम्भस्य कर्णोर्ध्वे मकरास्यं महोत्कटम् ।
तदुच्छ्रयः प्रकर्तव्यो यावद् वेद्याश्च मस्तकम् ॥ ८ ॥

द्वित्रिचतुरङ्गुलानामन्तरेण पुनः पुनः ।
न कारयेन्नक्रहीनां नासिकोपाङ्गफालनाम् ॥ ९ ॥

कोटपालैर्युतं पूर्वं द्वितीयं भैरवान्वितम् ।
तृतीयं कण्टकयुतं पीठं कुर्वीत कोविदः ।
पदप्रवेशं कुमुदं सुलीनं ग्रण्डुमीदृशम् ? ॥ १० ॥

पादे च पादबन्धाख्यं खुरकं स्थापयेत्तथा ।
श्रीबन्धस्त्वेकसंघाटस्तद्द्वया वेदिबन्धनम् ॥ ११ ॥

प्रतिक्रमस्त्रिभिः प्रोक्तः चतुर्भिः खुरबन्धनम् ।
एते पञ्चविधा भेदा द्राविडे पीठसंज्ञकाः ॥ १२ ॥

इति द्राविडपीठलक्षणम् ॥

प्रासादे दशधा भक्ते पीठं सार्धांशमुच्छ्रितम् ।
निर्गतं चैकभागेन विभंजायनवोलुटम् ? ॥ १३ ॥

नरपीठं पदं विद्याद् भूमिजे पीठकोच्छ्रयम् ।
निर्गतं च त्रिभागेन कर्तव्यं सर्वकामदम् ॥ १४ ॥

त्रिपदो जाड्यकुम्भश्च द्विपदः कर्णकस्तथा ।
अन्तःपत्रं चैकपादं त्रिपदा ग्रासपट्टिका ॥ १५ ॥

जाड्यकुम्भः सार्धपादो द्विपदः कर्णकस्तथा ।
अन्तःपत्रं पादमेकं खुरकः पाद एव च ॥ १६ ॥

उदयं पञ्चधा कृत्वा जाड्यकुम्भस्तु पादतः ।
पादोनयुग्मा कर्णाली सपादं गजपीठकम् ॥ १७ ॥

नरपीठं पदं विद्याद् भूमिजे पीठकोच्छ्रयः ।
निर्गमश्च त्रिभिर्भागः कर्तव्यः सर्वकामदः ॥ १८ ॥

इति भूमिजप्रासादपीठलक्षणम् ॥

अपराजित उवाच—

अलङ्कारं स्वरूपं च कथितं परमेश्वर ।
विचित्रकाश्च प्रासादा येषांयुक्तिर्विधीयते ॥ १९ ॥

स्वल्पद्रव्यः संयतात्मा सोत्साहो धर्महेतवे ।
तद्द्रव्ययुक्तिमानं च कथ्यतां भुवनेश्वर ॥ २० ॥

विश्वकर्मोवाच—

हीनद्रव्ये शिवभक्ता ये कुर्वन्ति शिवालयम् ।
तस्यानुक्रमयुक्तिं च कथयाम्यपराजित ॥ २१ ॥

गजाश्वनरपीठाद्यमल्पद्रव्ये न संभवेत् ।
जाड्यकुम्भश्च कर्णाली प्रशस्ता सर्वकामदा ॥ २२ ॥

जाड्यकुम्भः कर्णकश्च ऊर्ध्वे वै शीर्षपत्रिका ।
शिरःपालीं विनात्वेवं कर्ण पीठं तु कारयेत् ॥ २३ ॥

इति साधारणपीठप्रमाणम् ॥

वराटे भूमिजं कुर्याल्लतिने चैव नागरम् ।
सान्धारे नागराख्यं च मिश्रके च विमानके ॥ २४ ॥

लतिनं निर्गमैर्हीनं सान्धारं निर्गमाधिकम् ।
विमानं भागतुल्यं च मिश्रकं तत्समं तथा ॥ २५ ॥

वलभ्यां भूमिजं मानं फांसाकारे च द्राविडम् ।
दारुजे भूमिजाख्यं च नागरं च रथारुहे ॥ २६ ॥

पीठं च पीठकाकारं जगत्स्थावरजङ्गमम् ।
सृष्टिपीठोद्भवं पीठं मेरोराधारकारणम् ॥ २७ ॥

व्योम्नश्च पृथिवी पीठं मेरुस्तस्य च मेखला ।
मेघार्णवे ततः पीठं जलमाधार उच्यते ॥ २८ ॥

तारिका लिङ्गपीठान्ते गजपीठं तदुच्यते ।
भावानुभावयन् पीठे तत्पीठमनुसंस्थिते ? ॥ २९ ॥

वर्णानुवर्णयत् पीठं तत्पीठं भाववर्णिकम् ? ।
अंशानां मेघपीठं तु मेघानां तु धराधरा ॥ ३० ॥

देवानां पुष्पकं पीठं यानझंपानकं नृणाम् ।
सर्वेषामशनं पीठं...स्यात्प्रतिक्रमम् ॥ ३१ ॥

सर्वेषां पीठमाधारः पीठहीनं निराश्रयम् ।
पीठहीना विनश्यन्ति अचिरेणैव सर्वदा ॥ ३२ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां प्रासादज्ञातिच्छन्दपीठलक्षणाधिकारो नाम पञ्चविंशत्युत्तरशततमं सूत्रम् ॥

---

## (१२६) समस्तप्रासादोदयमानो नाम षड्विंशत्युत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

एकहस्ते चोदयस्तु स्यात्त्रयस्त्रिंशदङ्गुलैः ।
प्रासादे च द्विहस्ते तु पञ्चपञ्चाशदङ्गुलैः ॥ १ ॥

सप्तसप्तत्यङ्गुलानि प्रासादे तु त्रिहस्तके ।
एकोनशताङ्गुलैश्च वेदहस्ते सुरालये ॥ २ ॥

प्रासादे पञ्चहस्ते चैकविंशत्युत्तरं शतम् ।
ह्रासवृद्धी पञ्चयावत् ह्रस्वं कुर्यात्तदूर्ध्वतः ॥ ३ ॥
पञ्चोर्ध्वे नवपर्यन्तं वृद्धिर्मन्वङ्गुलैर्भवेत् ।
अष्टहस्तोदयश्चैव प्रासादे दशहस्तके ॥ ४ ॥
विंशत्यन्तं दशोर्ध्वे च वृद्धिः सूर्याङ्गुलैर्भवेत् ।
त्रयोदशकराः सप्ताङ्गुलं विंशतिहस्तके ॥ ५ ॥

अतऊर्ध्वे पुनर्वृद्धिर्हस्ते हस्ते कराधतः ।
त्रिंशद्धस्ते सप्ताङ्गुलं हस्ता अष्टादशैव च ॥ ६ ॥

ऊर्ध्वे पञ्चाशदन्तं च हस्ते हस्ते नवाङ्गुला ।
कराणां वै सार्धपञ्चविंशतिश्च शतार्धके ॥ ७ ॥

एकोनविंशत्यङ्गुला कामदा च तदग्रतः ।
एषा युक्तिर्विधातव्या प्रासादस्योत्तमोदये ॥ ८ ॥
नागरे लतिने चैव सान्धारे चैव मिश्रके ।
विमाननागरच्छन्दे कुर्याद्विमानपुष्पके ॥ ९ ॥
कुम्भकादि प्रहारान्तं प्रयुक्तं वास्तुवेदिभिः ।
तदधस्तात्तु पीठं च ऊर्ध्वे स्याच्छिखरोदयः ॥ १० ॥

इति नागरप्रासादोदयमानम् ॥

विस्तारसम उत्सेधे यावत् प्रथमभूमिका ।
शृङ्गकूटोदयं त्यक्त्वा शेषं मण्डोवरं भवेत् ॥ ११ ॥

विमाने भूमिजे चैव वराटे च तथैव च ।
द्राविडे चैवमुत्सेधं यावत्पीठोर्ध्वमस्तकम् ॥ १२ ॥
कर्णमानेन चोत्सेधं घण्टान्तं तु प्रकल्पयेत् ।
एकभूम्यादितो वृद्धिर्यावद् द्वादशभूमिकाः ॥ १३ ॥
जङ्घावृद्धिक्रमयोगे साद्यसूर्यान्तिका भवेत् ।
वलभीषु समस्तासु प्रासादपरमोदयः ॥ १४ ॥

सिंहावलोकनाः सर्वे सिंहकर्णैर्विभूषिताः ।
विस्तरार्धैः समुत्सेधः पर्यन्ते पृथुछाद्यकम् ॥ १५ ॥

धातुजे रत्नजे चैव दारुजे तु रथारुहे ।
नागरच्छन्दवत्कुर्यात् प्रासादे परमोदयम् ॥ १६ ॥

उच्छ्रयाः कथिताश्चैवं विभक्तिर्हस्तसङ्ख्यया ।
अत उच्छ्रयमध्यस्थभागसङ्ख्याः प्रकल्पयेत् ॥ १७ ॥

इत्यन्यप्रासादोदयमानम् ॥

मृदिष्टकाक्रमयुक्तां भित्तिं पादां प्रकल्पयेत् ।
पञ्चमांशेऽथवा सा तु षष्ठांशे शैलजे भवेत् ॥ १८ ॥

दारुजे सप्तमांशे च सान्धारे चाष्टमांशके ।
धातुजे रत्नजे भित्तिः प्रासादे दशमांशतः ॥ १९ ॥

प्रमाणं तद्वत्पृथुत्वं कुम्भके मूलनासिके ।
त्रिपञ्चसप्तनन्दान्तं फालनोपाङ्गबाह्यतः ॥ २० ॥

रथे प्रतिरथे कर्णे कर्णिकायां च नन्दिका ।
कर्णिका भद्रनिष्कासमुखभद्रं शुकाग्रकम् ॥ २१ ॥

एतत्सर्वं प्रयोक्तव्यं कर्णोपाङ्गादिनासिकम् ।
मूलसीमान्ततो बाह्ये नैतद् वास्तुपरिग्रहे ॥ २२ ॥

चतुरश्रं भद्रकं च सुभद्रं प्रतिभद्रकम् ।
गर्भगृहं फालनीयं मर्म तत्र न पीडयेत् ॥ २३ ॥

एकद्वित्रिकमात्राभिर्गर्भगेहं यदायतम् ।
यमचुल्ली तदा नाम भर्तुर्गृहविनाशिका ॥ २४ ॥

दारुजे वलभीनां तु आयतं च न दूषयेत् ।
प्रशस्तं सर्वकृत्येषु चतुरश्रं शुभप्रदम् ॥ २५ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां समस्तप्रासादोदयमानाधिकारो नाम षड्विंशत्युत्तरशततमं सूत्रम् ॥

# (१२७) नागरप्रासादविभक्तिस्तरप्रमाणलक्षणं सप्तविंशत्युत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

उच्छ्रयाः कथिताः पूर्वं प्रासादे नागराभिधे ।
विभक्तिभागसङ्ख्यां च कथयामि च साम्प्रतम् ॥ १ ॥

चतुश्चत्वारिंशदुक्तान् स्थापयेदग्रतः क्रमात् ।
एकहस्तादितो यावत् पञ्चाशद्धस्तकं भवेत् ॥ २ ॥

खुरोन्नतिः पञ्चभागा द्विभागः खुरनिर्गमः ।
अन्तःपत्रं च भागार्धं द्विभागः कर्ण ऊर्ध्वतः ॥ ३ ॥

चिप्पिका सार्धभागा स्यात् सार्धांशं कर्णकं भवेत् ।
तीक्ष्णाग्रं तत्प्रकर्तव्यं पट्टिकाद्वयभूषितम् ॥ ४ ॥

पट्टिका पादनिष्कासा सपादांशं च कर्णकम् ।
स्कन्धः कुम्भो मुखाली च कर्णान्ते तद्विनिर्गमः ॥ ५ ॥

इति खुरकः ॥

विंशतिभागमुत्सेधं तदूर्ध्वं कुम्भकं न्यसेत् ।
भागार्धं स्कन्धपट्टी च चिप्पिका चैकभागिका ॥ ६ ॥

वृत्ताकारं सुललितं स्कन्धं कुर्यात्तु कुम्भके ।
विचित्रपल्लवाकीर्णं चिप्पीपत्रादिराजितम् ॥ ७ ॥

प्रातर्मध्याह्नापरासु ब्रह्मविष्णुमहेश्वराः ।
त्रिसन्ध्यं भद्रशोभाढ्यं चित्रैः परिकरैर्वृतम् ॥ ८ ॥

नासायां रूपसंघाटा रथिका दलगर्भतः ।
मृणालपत्रशोभाढ्यं स्तम्भेषु तोरणं न्यसेत् ॥ ९ ॥

इति कुम्भकः ॥

सर्वे रूपोपमाः कार्या विचित्राकाररूपिणः ।
खुरमानं यथा चादौ कुम्भमानं तथा भवेत् ॥ १० ॥

इति कुम्भीकुम्भकः ॥

कलशं चाष्टभागैः स्यादेकांशा मध्यचिप्पिका ।
वृत्तं च षड्भागमुक्तं भागा वै ऊर्ध्वचिप्पिका ॥ ११ ॥

पट्टिका बन्धशोभाढ्या मैकरत्नैः समाकुला ।
अन्तःपट्टं सार्धद्वयं पुष्पकादिविभूषितम् ॥ १२ ॥

इति कलशः ॥

कपोताली चाष्टभागा भागार्धं ग्रासपट्टिका ।
स्कन्धः सपादद्व्यंशस्त्वेकपादा मुखपट्टिका ॥ १३ ॥

कार्यः कर्णो द्विभागश्च स्कन्धः सार्धद्वयोन्नतः ।
भागार्धं स्कन्धपट्टी च कर्तव्या मध्यव्यक्तयः ॥ १४ ॥

मुखपट्टादधोऽग्रे तु कर्तव्याश्च गगारकाः ।
समताग्रविधातव्यास्तराङ्गुलविदांशकैः ? ॥ १५ ॥

ऊर्ध्वं स्कन्धो विधातव्यो दलानां गर्भभद्रतः ।
ठकारा मुखलुमोर्ध्वे कपोताली त्वितीरिता: ॥ १६ ॥

इति कपोताली ॥

मञ्चिकाश्च प्रवक्ष्यामि व्यक्तिस्तु नवभागतः ।
अन्तःपट्टं सपादं वा पादोनं कामरूपकम् ॥ १७ ॥

पट्टिका भागपादेन स्कन्धश्चैव द्विभागिकः ।
मुखपट्टी भवेत्पादा सपादः कर्ण एव च ॥ १८ ॥

सपादश्च भवेत्स्कन्धः पादा चान्तरपट्टिका ।
कर्णिकं सार्धभागं च पादा निर्वाणपट्टिका ॥ १९ ॥

कपोतालीयुक्तिसूत्रे कारयेच्च गगारकान् ।
जङ्घास्तम्भैर्निर्गमाढ्या भरणी लम्बनाकृतिः ॥ २० ॥

इति मञ्चिका ॥

कार्या तदूर्ध्वं जङ्घा च पञ्चत्रिंशत्समुच्छ्रिता ।
भ्रमनिर्माणतः स्तम्भैर्नासिकोपाङ्गफालना ॥ २१ ॥

मूलनासासु सर्वासु स्तम्भैः स्युश्चतुरश्रिकाः ।
गजश्च सिंहव्यालैश्च मकरैः समलङ्कृताः ॥ २२ ॥

कर्णेष्वष्टौ च दिक्पालाः प्राच्यादिषु प्रदक्षिणम् ।
नटेशः पश्चिमे भद्रे ह्यन्धकैः सह दक्षिणे ॥ २३ ॥

चण्डस्य चोत्तरे देवी दंष्ट्राननसुशोभिता: ।
वीतरागे च शासनदेव्यश्चैव दिशाः प्रति ॥ २४ ॥

धारिमार्गे मुनीन्द्रांस्तु प्रलीनांश्च तपःसु च ।
गवाक्षाकारभद्रे तु कुर्यान्निर्गमभूषितान् ॥ २५ ॥

नानाभरणकैः स्तम्भैस्तिलकच्छाद्यभूषिता: ।
ब्रह्मविष्णुमहेशाद्या इल्लिकावलणैर्युता: ॥ २६ ॥

इति जङ्घा ॥

पञ्चदशोन्नतः कार्य उद्गमः सर्वकामदः ।
छाद्यं भागं तथार्धा च कपोताली तदूर्ध्वतः ॥ २७ ॥

पादं चान्तरपत्रं च सार्धं पञ्चोद्गमोदयः ।
द्वितीयश्चोद्गमः कार्यः सार्धाष्टांशः समुच्छ्रितः ॥ २८ ॥

अन्तःपत्री च भागार्धं तत्प्रमाणान्धकारिका ।
ग्रासस्य पट्टिका कार्या त्रिभिर्भागैः समुच्छ्रिता ॥ २९ ॥

चित्राणि कपिरूपाणि निर्गमोद्गमकर्णिके ।
दलरूपाश्चोत्पतन्ति वीक्षन्ते भावरूपकाः ॥ ३० ॥

इत्युद्गमः ॥

भरण्यष्टांशकोत्सेधा अधश्छन्दं तु वृत्तकम् ।
उद्गमे ग्रासपट्टी च भरणी स्कन्धपाट्टिका ॥ ३१ ॥

वृत्ताकाराः प्रकर्तव्याः समपत्रा च निर्गमे ।
पादोनांशं कामरूपं पादं स्यात् स्कन्धपट्टिका ॥ ३२ ॥

चिप्पिका चार्धभागा स्यात् सपादा कर्णपालिका ।
पट्टिकान्तरपट्टी च पादपादं प्रकल्पयेत् ॥ ३३ ॥

स्कन्धः कार्यो द्विभागश्च भागार्धं कर्णपालिका ।
पट्टीकान्तरपट्टी च पादपादं प्रकल्पयेत् ॥ ३४ ॥

भागार्धं च भवेत्स्कन्धः कर्णः पादोनभागिकः ।
अन्तःपत्रं चार्धभागं कर्तव्यं सर्वकामदम् ॥ ३५ ॥

नासोपाङ्गेषु सर्वेषु पल्लवाः कामरूपिणः ।
अशोकपल्लवाकाराः कर्तव्याः सर्वकामदाः ॥ ३६ ॥

तमालपत्रकाकाराः कर्णकस्कन्धबन्धकाः ।
तदालीनाकारपत्रैर्वकस्योर्ध्वं समार्गकैः ॥ ३७ ॥

इति भरणी ॥

शिरावटी पञ्चभागा समुच्छ्राये प्रकीर्तिता ।
भारपुत्तलिकायुक्तां त्रिभागैस्तां च कारयेत् ॥ ३८ ॥

पादोनस्तु भवेत्स्कन्धः कर्णः पादोनभागिकः ।
अन्तःपत्रं चार्धभागं कर्तव्यं सर्वकामदम् ॥ ३९ ॥

तदूर्ध्वे च भवेत्पट्टं भागैः पञ्चभिरुच्छ्रितम् ।
तन्त्रकेन च संयुक्तं युक्तालङ्कारभूषितम् ॥ ४० ॥

इति पट्टयुक्ता शिरोवटी ॥

तदूर्ध्वं तु कपोताली पूर्वमानप्रकल्पिता ।
सार्धद्वयं च तत्पट्टं कर्तव्यं सर्वकामदम् ॥ ४१ ॥

इति कपोताल्या माला ॥

कूटच्छाद्योत्सेधमानं स्यात्त्रयोदशभागतः ।
भागार्धे स्कन्धपट्टी च स्कन्धश्चैव त्रिभागिकः ॥ ४२ ॥

भागार्धे मुखपट्टी च छाद्योत्सेधो युगांशकः ।
एकभागा दण्डिका च अर्धे चान्तरपत्रिका ॥ ४३ ॥

कर्णः सपादभागश्च स्कन्धश्चैव द्विभागिकः ।
स्कन्धपट्टी भागपादा कर्तव्या सर्वकामदा ॥ ४४ ॥

कपोताल्यग्रनिष्कासं कुर्यात्तु दशभागिकम् ।
चतुर्भागमधः स्कन्धं सार्धं च मणिबन्धकम् ॥ ४५ ॥

तत्तुल्याग्रे चिप्पिका तु कर्तव्या सर्वकामदा ।
उच्छ्रयं कथयिष्यामि शृणु त्वैकाग्रमानसः ॥ ४६ ॥

कामरूपं भवेद् भागं पदिका स्कन्धपट्टिका ।
भागार्धे चिप्पिकां कुर्यात् पादं च मुखपट्टिकाम् ॥ ४७ ॥

कर्णो द्विभाग इत्युक्तो भागार्धे दण्डकं मतम् ।
मणिबन्धस्य संस्थाने त्रिभागं सारिलम्बनम् ॥ ४८ ॥

षड्भिर्भागैः प्रवेशः स्यात् षोडशांशैश्च निर्गमः ।
वार्यन्तरं च षड्भागैः प्रवेशः षड्भिरेव च ॥ ४९ ॥

स्वके स्वके च स्थाने च बृहल्लघुकर्मैस्तथा ।
भक्तिपादषोडशांशे पृथुत्वमुदकान्तरे ॥ ५० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां नागरप्रासादविभक्तिस्तरप्रमाणलक्षणाधिकारो नाम सप्तत्रिंशत्युत्तरशततमं सूत्रम्

## (१२८) प्रासादसमस्तमण्डोवरो नामाष्टाविंशत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

मेरुमण्डोवरं वच्मि विभक्तिदलसङ्ख्यया ।
पुरतः प्रोच्यते मानं स्थलानां स्थूलतोद्भवम् ॥ १ ॥
चतुःपञ्चाशदेवोक्ताः पुनर्भागैश्च पूर्वतः ।
भरण्यूर्ध्वे भवेन्मञ्ची द्वाष्टभागसमुच्छ्रिता ॥ २ ॥
पञ्चनेत्रोन्नता जङ्घा उद्गमे च त्रयोदश ।
पुनर्भरण्यष्टभागा शेषं पूर्वविकल्पितम् ॥ ३ ॥
अतस्ताश्च पुनः स्थूला एकपञ्चाशदद्धितः ।
कूटच्छाद्योपरि कुर्यात् सप्तांशोन्नतमञ्चिकाम् ॥ ४ ॥
षोडशांशा पुनर्जङ्घा भरणी सप्तभागिका ।
शीर्षपट्टी चतुर्भागाऽन्तःपट्टः पञ्चभागिकः ॥ ५ ॥
कूटच्छाद्यं द्वादशांशं कर्तव्यं सर्वकामदम् ।
एषा युक्तिर्विधातव्या मेरुमण्डोवरे तथा ॥ ६ ॥

इति मेरुमण्डोवराधिकारः ॥

अपराजित उवाच—

स्वल्पद्रव्यैः संयतैश्च क्रियते यः शिवालयः ।
तन्मानानुक्रमं वक्ष्ये क्षीणवित्ताः कलौ युगे ॥ ७ ॥

विश्वकर्मोवाच—

स्वल्पद्रव्यैर्यदा युक्तिर्महापुण्योदया भवेत् ।
पीठं तु कथितं पूर्वमूर्ध्वमानमतः शृणु ॥ ८ ॥
खुरं कुम्भीं च कलशं कपोतालीमनन्तरम् ।
- - - - - - - - - - जङ्घारूपाणि मञ्चिका ॥ ९ ॥
- - - - - - - शेषाः कार्याश्च समसूत्रतः ।
॥ १० ॥
ग्रासपट्ट्या समं युक्ता कर्तव्या सर्वकामदा ।
इति साधारणः प्रोक्तः प्रासादे स्तरसङ्ख्यया ॥ ११ ॥
भूमिजे चैव प्रासादे वराटे च विमानके ।
विस्ताराच्च समुत्सेधपर्यन्तं चाऽऽद्यभूमिका ॥ १२ ॥
शृङ्गकूटोदयं त्यक्त्वा तन्मध्ये तु विचक्षणैः ।
शीर्षोदयो विधातव्यश्छाद्यान्तं कुम्भकादितः ॥ १३ ॥
तत्समुच्छ्रययुक्तिं च प्रवक्ष्ये स्तरसङ्ख्यया ।
विभक्तं सार्धसप्तांशः कुम्भादिप्रहरान्तकम् ॥ १४ ॥

खुरकं पीठमध्ये तु सपादं कुम्भकोऽशकः ।
भागार्धे च घटे कुर्यादध ऊर्ध्वे च चिप्पिके ॥ १५ ॥

अन्तःपत्रं घटार्धे स्यात् घटतुल्या तु मालिका ।
मञ्चिका तत्समोत्सेधे जङ्घा भागद्वयोन्नता ॥ १६ ॥

भरणं चैव भागार्धे शिरःपट्टी च तत्समा ।
ऊर्ध्वे च तत्समं पट्टं पादार्धान्तरपत्रिका ॥ १७ ॥

पादोनांशं कूटच्छाद्यं निर्गमे च पदद्वयम् ।
एकपादा क्षोभणा स्यात् स्तरमानमितीदृशम् ॥ १८ ॥

इति भूमिजप्रासादोदयस्तरसङ्ख्याप्रमाणम् ॥

द्राविडे चैवमुत्सेधे यावत्पीठोर्ध्वमस्तकम् ।
कर्णे समुत्सेधमानं घण्टान्तं तु प्रकल्पयेत् ॥ १९ ॥

एकभूमादितो वृद्धिरन्ते द्वादशभूमिकम् ।
जङ्घावृद्धिक्रमयोगे साद्यसूर्यान्तका भवेत् ॥ २० ॥

इति द्राविडप्रासादमण्डोवरः ॥

धातुजे रत्नजे चैव दारुजे च रथारुहे ।
प्रोक्तं च नागरं मानं प्रयुक्तं वास्तुवेदिभिः ॥ २१ ॥

इत्येवं मानमुद्दिश्य वास्तुविद्भिरुदाहृतम् ।
धर्मार्थकाममोक्षाणां प्राप्तिहेतुरपीदृशम् ॥ २२ ॥

सूत्रशास्त्रप्रयुक्तं च वास्तुवेदउदाहृतम् ।
स सर्वमाप्नोति नर ईदृशं यस्तु कारयेत् ॥ २३ ॥

अज्ञात्वा कुरुते यस्तु स शिल्पी दोषभाग् भवेत् ।
दोषं च वर्जयेत्प्राज्ञः कृते चैव महाभयम् ॥ २४ ॥

सर्वं कुर्याच्च शास्त्रोक्तं सर्वं कुर्याच्च शोभनम् ।
शास्त्रोक्तमेव चाऽत्रोक्तं दृश्यं मूलागमे तथा ॥ २५ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां प्रासादसमस्तमण्डोवराधिकारो नामाष्टाविंशत्युत्तरं शततमं सूत्रम् ॥

---

# (१२९) प्रासादगर्भगृहोदुम्बरार्धचन्द्रलक्षणद्वारप्रतिष्ठा नामैकोनत्रिंशदुत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

गर्भगृहप्रमाणं च विश्वकर्मवचो यथा ।
तथा ते सम्प्रवक्ष्यामि शृणुत्वमपराजित ॥ १ ॥

कुम्भी तु कुम्भके ज्ञेया स्तम्भो ज्ञेयस्तथोद्गमः ।
भरणं भरणी ज्ञेया कपोताली तथा शिरः ॥ २ ॥

अधस्तात् कूटच्छाद्यस्य कुर्यात्पट्टस्य पेटकम् ।
अर्धोदये करोटं च कर्तव्यं विधिपूर्वकम् ॥ ३ ॥

अथान्यत् सम्प्रवक्ष्यामि मानं गर्भगृहस्य च ।
प्रासादानां बृहन्मानं वत्स विज्ञायते यतः ॥ ४ ॥

गर्भव्यासः षडंशस्तु सपादः सार्ध एव च ।
पादोनांशाधिको वाऽपि ज्येष्ठमध्यकनिष्ठकः ॥ ५ ॥

तत्रोदयेऽष्टभिर्भक्ते भागेनैकेन कुम्भिका ।
स्तम्भः सार्धचतुष्कांशो भागमुच्छालको मतः ॥ ६ ॥

शीर्षकं भागमेकं तु अर्धं पट्टसमुच्छ्रयः ।
गर्भव्यासार्धमानेन कुर्यात् पद्मशिलोदयम् ॥ ७ ॥

न कर्तव्या दर्दरिका पञ्चसप्तमथोचिते ? ।
अनेनैव प्रकारेण कुर्याद् गर्भगृहोच्छ्रयम् ॥ ८ ॥

इति गर्भगृहोच्छ्रयमानम् ॥

उदुम्बरं तथा वक्ष्ये कुम्भिकान्तं तदुच्छ्रयः ।
तस्यार्धेन त्रिभागेन पादोनरहितं तथा ॥ ९ ॥

उक्तं चतुर्विधं शस्तं कुर्याच्चैवमुदुम्बरम् ।
अत्युत्तमाश्च चत्वारो न्यूना दुष्यास्तथाधिकाः ॥ १० ॥

खुरकोर्ध्वेऽर्धचन्द्रस्स्यात् तदूर्ध्वं स्यादुदुम्बरः ।
उदुम्बरार्धे त्र्यंशे वा पादे वा गर्भभूमिका ॥ ११ ॥

मण्डपेषु च सर्वेषु पीठान्ते रङ्गभूमिका ।
एषा युक्तिर्विधातव्या सर्वकामफलोदया ॥ १२ ॥

द्वारविस्तरत्रिभागेन मध्ये मन्दारिका तथा ।
वृत्तं मन्दारकं कुर्याद्युतं पद्ममृणालतः ॥ १३ ॥

मूलनासिकयोर्मध्ये स्थाप्यश्चोदुम्बरस्तथा ।
सिंहशाखा मूलनासा समसूत्रे विचक्षणैः ॥ १४ ॥

जाड्यकुम्भः कर्णमाला चोर्ध्वे वृत्तं मृणालकम् ।
मन्दारोभयपक्षे तु कीर्तिवक्त्रद्वयं भवेत् ॥ १५ ॥

भृकुट्या कुटिलाक्षं च दंष्ट्राभिः समलङ्कृतम् ।
कर्णोपशृङ्गैस्तदग्र: शाखापत्रैरलङ्कृतम् ॥ १६ ॥

तलच्छन्दे च शाखा तु स्यादुदुम्बरपक्षयोः ।
तद्रूपा क्रियते प्राङ्गनिर्गमे पीठसंयुता ॥ १७ ॥

शालोदरपृथुत्वेन शाखावत्स्यादुदुम्बरः ।
शाखाकपाटग्रहणी उभयोर्भित्तिमानतः ॥ १८ ॥

इत्युदुम्बरमानम् ॥

अर्धचन्द्रं प्रवक्ष्यामि यथोक्तं लक्षणान्वितम् ।
द्वारस्य विस्तरार्धेन कर्तव्यस्तस्य निर्गमः ॥ १९ ॥

निर्गमस्य प्रमाणेन द्विगुणं दैर्ध्यतस्ततः ।
त्रिभागं चोत्सृजेद् भागं वृत्तं तु भ्रामयेत्ततः ॥ २० ॥

अर्धचन्द्राकृतिं कुर्याच्छाखाग्रे गर्भकान्वितम् ।
गगारकं याम्योत्तरे तस्यान्ते चैव पादुकाः ॥ २१ ॥

पत्रशाखासमायुक्ताः पद्माकारैरलङ्कृताः ।
गगारकौ च द्वा मध्ये वृत्तस्य वामदक्षिणे ॥ २२ ॥

नाभ्युद्भवलतामध्ये गकारोदरनिर्गमः ।
एवमुक्तश्चार्धचन्द्रः सर्वकामफलप्रदः ॥ २३ ॥

इत्यर्धचन्द्रः ॥

द्वारस्य चोच्छ्रयः कार्यः शुभचन्द्रबलस्थितौ ।
खातं कृत्वोदुम्बरस्य पञ्चरत्नानि निक्षिपेत् ॥ २४ ॥

शाखाश्चोदुम्बरश्चैव हीनाश्चैवोत्तरङ्गतः ।
वस्त्रेणाच्छादितं कृत्वा वास्तुदेवं समर्चयेत् ॥ २५ ॥

आदौ दक्षिणशाखायां स्थापनं कुरुते ध्रुवम् ।
शाखोत्सेधचतुर्थांशे द्वारपालौ प्रपूजयेत् ॥ २६ ॥

सहिरण्यैः सुकलशैर्वस्त्रैराच्छादितैः क्रमात् ।
उदुम्बरस्याऽभिषेकस्तथा शाखोत्तरङ्गयोः ॥ २७ ॥

उदुम्बरे च शाखायां प्रतिष्ठा च यथोच्यते ।
कार्या तथा चोत्तरङ्गे प्रतिष्ठा सर्वकामदा ॥ २८ ॥

शिल्पिनं पूजयेत्तत्र वस्त्रालङ्कारभूषणैः ।
अन्ये च पूजनीयास्ते तत्र ये कर्मचारिणः ॥ २९ ॥

विश्रामस्तद्दिने वास्तुः सर्वविघ्नप्रशान्तिकृत् ।
तदग्रे कथितव्यं च द्वारसूत्रप्रमाणकम् ॥ ३० ॥

इति द्वारप्रतिष्ठा ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां प्रासादगर्भगृहोदुम्बरार्धचन्द्रलक्षणद्वारप्रतिष्ठाधिकारो नामैकोनत्रिंशदुत्तरशततमं सूत्रम् ॥

## (१३०) समस्तजातीयप्रासादद्वारप्रमाणं त्रिंशदुत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच--

प्रयुक्तं प्रद्योतकरं मधुरं मुखरं सदा ।
उक्तं मुक्ताफलं पङ्क्तौ द्वारमाला प्रमाणतः ॥ १ ॥
तन्व्यादौ च कृतानष्टौ खबाणान् विन्यसेत् करान् ।
प्रस्तार्याङ्कानुक्रमं च द्वारार्थं तु सुरालये ॥ २ ॥
द्व्यष्टादौ च कलावृद्धिर्गुणयुग्मान्तगाः क्रमः ।
द्वारोर्ध्वार्धश्च विस्तारो न तदर्धाधिकः शुभः ॥ ३ ॥
प्रासादद्वारसूत्रार्थमङ्कं प्रस्तारयेद् बुधः ।
तनुस्त्वेका कृतैश्चतुरष्टावष्ट क्रमागतम् ॥ ४ ॥
खं शून्यं पञ्चभिर्बाणा व्यसने विस्तरे क्षरः ।
करो हस्ताभिधानं च क्रमात् प्रस्तारयेत्तथा ॥ ५ ॥
एकहस्तादिप्रासादाः पञ्चाशद्धस्तकावधि ।
प्रस्तारक्रमयोगेन चतुरष्टौ सुसंज्ञकाः ॥ ६ ॥
द्व्यष्टादौ च षोडशान्ता कला वै षोडश स्मृताः ।
गुणैस्त्रिभिर्युग्मे द्विभिः समुच्छ्रयार्थेषु चाङ्गुलाः ॥ ७ ॥
एकहस्ते तु प्रासादे द्वारं स्यात् षोडशाङ्गुलम् ।
कार्या षोडशतो वृद्धिः पर्यन्ते च चतुष्करम् ॥ ८ ॥
गुणाङ्गुलाऽष्टहस्तान्तं तत्परं द्व्यङ्गुला करे ।
पञ्चाशद्धस्तपर्यन्तं प्रयुक्ता वास्तुवेदिभिः ॥ ९ ॥
द्वारं प्रासादसद्मादौ यानझम्पानतल्पके ।
पृथुत्वमर्धमर्धे च शुभं स्यात्तु कलाधिके ॥ १० ॥

इति नागरप्रासादमानम् ॥

क्षमादौ पञ्च मुनीन्द्रा ग्रहाः शून्यबाणान्तगाः ।
प्रस्तार्याङ्कानुक्रमं च द्वारार्थं तु सुरालये ॥ ११ ॥
सूर्यादौ द्वादशवृद्धिस्तत्त्ववेदयुग्मान्तगाः ।
अर्धेनार्धेन विस्तारः शुभः स्यात्तु कलाधिके ॥ १२ ॥
क्षमा त्वेका तत्त्व पञ्च मुनीन्द्राः सप्त एव च ।
ग्रहा नव शून्यैर्बिन्दुर्भूतबाणौ पञ्चांशकौ ॥ १३ ॥
क्षमाद्यौ पञ्च मुनीन्द्रा ग्रहाः शून्यबाणान्तगाः ।
प्रासादद्वारसूत्रार्थमङ्कं प्रस्तारयेद् बुधः ॥ १४ ॥
एकहस्तादिप्रासादाः पञ्चाशद्धस्तकावधि ।
पञ्चसप्तनवैर्वापि कार्या अङ्काः सुसंज्ञकाः ॥ १५ ॥

एकहस्ते तु प्रासादे द्वारं सूर्याङ्गुलोदयम् ।
हस्ते हस्ते सूर्यवृद्धिः यावत्स्यात् पञ्चहस्तकम् ॥ १६ ॥
त्रितुर्यांशा च सप्तान्तं नवान्तं च तदर्धतः ।
तदूर्ध्वे शतार्धान्तं च वर्धयेद् द्वयङ्गुलैः पुनः ॥ १७ ॥
उच्छ्रयार्धेण विस्तारं शुभं स्यात्तु कलाधिकम् ।
भूमिजे द्वारमानं च प्रयुक्तं वास्तुवेदिभिः ॥ १८ ॥

इति भूमिजप्रासादद्वारमानम् ॥

रूपादौ रसदिगन्तं शून्यतत्त्वान्ततः क्रमात् ।
प्रस्तार्याङ्कानुक्रमं च द्वारार्थे तु सुरालये ॥ १९ ॥
दशादौ दशवृद्धिश्च तत्त्वयुग्मान्तगाः क्रमात् ।
पृथुत्वं च तदर्धेन शुभं स्यात्तु कलाधिके ॥ २० ॥
रूपस्त्वेको रसैः षट् च दिशं दश प्रस्तारयेत् ।
पञ्चाशच्छून्यतत्त्वानि प्रस्तारस्य क्रमो भवेत् ॥ २१ ॥
एकहस्तादिप्रासादाः पञ्चाशद्धस्तकावधि ।
षट् तथा दिक् संस्थानेषु कार्या अङ्काः सुसंज्ञकाः ॥ २२ ॥
दिग्भिर्दश पञ्च तत्त्वैर्युग्मं द्वाभ्यां क्रमागतम् ।
इति चाङ्गुलप्रस्तारं द्वारार्थे तु प्रकल्पयेत् ॥ २३ ॥
एकहस्ते तु प्रासादे द्वारं विद्याद्दशाङ्गुलम् ।
दशाङ्गुलं प्रतिकरं यावत् षड्ढस्तकं भवेत् ॥ २४ ॥
अतऊर्ध्वं दिक्करान्तं वृद्धिः पञ्चाङ्गुला भवेत् ।
द्वयङ्गुला च ततो वृद्धिः पञ्चाशद्धस्तकावधि ॥ २५ ॥
पृथुत्वं च तदर्धेन शुभं स्यात्तु कलाधिकम् ।
द्राविडे द्वारविस्तारः प्रयुक्तो वास्तुवेदिभिः ॥ २६ ॥
विमाने भूमिजे मानं वराटेषु तथैव च ।
मिश्रके लतिने चैव मानं शस्तं च नागरम् ॥ २७ ॥
दशहस्तात्परं चैव सान्धारे कामदं तथा ।
विमाननागरच्छन्दे कुर्याद्विमानपुष्पके ॥ २८ ॥
नागरं शोभनं द्वारं तथा सिंहावलोकने ।
वलभ्यां भूमिजं मानं द्राविडं फांसनाकृतौ ॥ २९ ॥
धातुजे रत्नजे चैव दारुजे च रथारुहे ।
यश्च्छन्दश्चैव प्रासादे द्वारं तन्मानकं भवेत् ॥ ३० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां समस्तजातीयप्रासादद्वारप्रमाणाधिकारो नाम त्रिंशदुत्तरशततमं सूत्रम् ॥

---

# (१३१) प्रासादविभक्तिद्वारनिर्णयो नामैकत्रिंशदुत्तरशततमं सूत्रम्

विश्वकर्मोवाच–

तदनन्तरमुद्दिष्टं द्वाराणां लक्षणं शुभम् ।
ज्येष्ठं मध्यं कनिष्ठं च प्रत्येकं त्रिविधं तथा ॥ १ ॥

पद्मिनी नवशाखं च सप्तशाखं तु हस्तिनी ।
नन्दिनी पञ्चशाखं तु त्रिविधं चोत्तमं भवेत् ॥ २ ॥

मुकुली मालिनी ज्येष्ठा गान्धारी सुभगा तथा ।
मध्यमेति द्विधा प्रोक्ता कनिष्ठा सुप्रभा स्मृता ॥ ३ ॥

मुकुली चाष्टशाखं च षट्शाखं चैव मालिनी ।
गान्धारी च चतुःशाखं त्रिशाखं सुभगा स्मृता ॥ ४ ॥

सुप्रभा तु द्विशाखं चैकशाखं स्मरकीर्तितम् ।
नवान्तमेकशाखादि लक्षणं कथ्यतेऽधुना ॥ ५ ॥

नवशाखे ध्वजश्चैको वृषभः पञ्चशाखिके ।
त्रिशाखे च तथा सिंहः सप्तशाखे गजः स्मृतः ॥ ६ ॥

द्विशाखे धूम इत्युक्तमग्निकर्मगृहं भवेत् ।
चतुःशाखे तु कर्तव्यः श्वानः कारुत्वजीविनाम् ॥ ७ ॥

षट्शाखे चैव कर्तव्यः रजकादेः खरः स्मृतः ।
ध्वाङ्क्षश्चैवाऽष्टशाखे तु विहङ्गादेस्तथा स्मृतः ॥ ८ ॥

देवेशानां नवशाखं सप्तशाखं दिवौकसाम् ।
सार्वभौमे पञ्चशाखं त्रिशाखं मण्डलेश्वरे ॥ ९ ॥

द्विशाखं तु प्रकर्तव्यं शूद्रवैश्यद्विजन्मनाम् ।
नवान्तमेकशाखादि आयदोषविशोधनम् ॥ १० ॥

यथा शास्त्रं यथा मानं यथा युक्तिर्विधीयते ।
तथा द्वाराणि सर्वाणि कर्तव्यान्येव शिल्पिभिः ॥ ११ ॥

सार्धैरर्धैरङ्गुलैर्वा कुर्याद्धीनं तथाऽधिकम् ।
आयदोषविशुद्ध्यर्थं ह्रस्ववृद्धी न दूषिते ॥ १२ ॥

प्रासादजातिरूपं यत् तद्वद् द्वारं च सूत्रतः ।
तलच्छन्दानुसारेण द्वारशाखां विभाजयेत् ॥ १३ ॥

त्र्यङ्गकादिविभेदेन नवाङ्गस्यानुसारतः ।
शाखात्रयं त्र्यङ्गकेषु पञ्चाङ्गे पञ्च वै लताः ॥ १४ ॥

सप्तशाखाश्च सप्ताङ्के नवशाखा नवाङ्कके ।
हीनशाखा न कर्तव्या अधिका नैव दूषयेत् ॥ १५ ॥

एकस्कन्धे यथा वृक्षे शाखा सङ्ख्या ह्यनेकशः ।
प्रासादस्य तथा द्वारे हीनशाखा न शस्यते ॥ १६ ॥

उभयोः कर्णयुक्तानि विभक्तान्युदकान्तरैः ।
प्रासादस्य तथाङ्गानि शेषं भद्रस्य भूषणम् ॥ १७ ॥

अपराजित उवाच—

अर्चालिङ्गं न्यूनाधिकं प्रासादक्रममानतः ।
शाखास्थानं कथं चाऽत्र सन्देहो मे वद प्रभो ॥ १८ ॥

विश्वकर्मोवाच—

शृणु वत्स महाप्राज्ञ पृष्टोऽहं पृच्छतेऽपरम् ।
अर्चा श्रेष्ठा तथा लिङ्गं निलयांशेऽपराजिता ॥ १९ ॥

मानं न्यूनाधिकं शस्तं स्वयम्भुवाणरत्नजे ।
घटितेषु विधिःख्यातो ह्यर्चालिङ्गेषु तत्त्वतः ॥ २० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां प्रासादविभक्तिद्वारनिर्णयाधिकारो नामैकत्रिंशदुत्तरशततमं सूत्रम् ॥

---

## (१३२) द्वारशाखाविभक्तिनिर्णयो नाम द्वात्रिंशदुत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

चतुर्भागाङ्कितं कृत्वा त्रिशाखं वर्त्तयेत्ततः ।
मध्ये द्विभागिकं कुर्यात् स्तम्भं पुरुषसंज्ञकम् ॥ १ ॥

स्त्रीसंज्ञा च भवेच्छाखा पार्श्वयोः पृथुभागिका ।
निर्गमश्चैकभागेन रूपस्तम्भे प्रशस्यते ॥ २ ॥

पट्टके विस्तरः कार्यः प्रवेशश्चतुरंशतः ।
कोणिका स्तम्भमध्ये तु भूषणार्थाय पार्श्वतः ॥ ३ ॥

शाखोत्सेधे चतुर्थांशे द्वारपालौ निवेशयेत् ।
कालिन्दी वामशाखायां दक्षिणे चैव जाह्नवी ॥ ४ ॥

गङ्गाऽर्कतनयायुग्ममुभयोर्वामदक्षिणे ।
गन्धर्वा निर्गमे कार्या एकभागा विचक्षणैः ॥ ५ ॥

तत्सूत्रे खल्वशाखा च सिंहशाखा च भागिका ।
नन्दी च वामशाखायां कालो दक्षलताश्रितः ॥ ६ ॥

यक्षाः स्युरन्तशाखायां निधिहस्ताः शुभोदयाः ।
इति त्रिशाखं सम्प्रोक्तं पञ्चशाखमतः शृणु ॥ ७ ॥

इति त्रिशाखद्वारम् ॥

शाखाविस्तारमानं च षड्भिर्भागैर्विभाजयेत् ।
एकभागा भवेच्छाखा रूपस्तम्भो द्विभागिकः ॥ ८ ॥

निर्गमश्चैकभागेन रूपस्तम्भे प्रशस्यते ।
कोणिका स्तम्भमध्ये च उभयोर्वामदक्षिणे ॥ ९ ॥

गन्धर्वा निर्गमे कार्या एकभागा विचक्षणैः ।
तत्सूत्रे खल्वशाखा च सिंहशाखा च भागिका ॥ १० ॥

सपादः सार्धभागो वा रूपस्तम्भः प्रशस्यते ।
उत्सेधे चाऽष्टमांशेन शस्तं शाखोदरं मतम् ॥ ११ ॥

पत्रशाखा च गन्धर्वा रूपस्तम्भस्तृतीयकः ।
चतुर्थी खल्वशाखा च सिंहशाखा ततःपरम् ॥ १२ ॥

पञ्चशाखमिति ख्यातं संक्षेपात् कथितं मया ।

इति पञ्चशाखद्वारम् ॥

सप्तशाखं प्रवक्ष्यामि शृणु त्वमपराजित ॥ १३ ॥

शाखाविस्तरमानं तु वसुभागविभाजितम् ।
भागभागाश्च शाखाः स्युर्मध्यस्तम्भो द्विभागिकः ॥ १४ ॥

कोणिका भागपादेन विस्तारे निर्गमे तथा ।
निर्गमः सार्धभागेन रूपस्तम्भः प्रशस्यते ॥ १५ ॥

निर्गमो भागमेवं च निर्गमश्च तदर्धतः ।
- - - - - - - - - - शेषं शाखा प्रशस्यते ॥ १६ ॥

पत्रशाखा च गन्धर्वा रूपशाखा तृतीयका ।
स्तम्भशाखा भवेन्मध्ये रूपशाखा तु पञ्चमी ॥ १७ ॥

षष्ठी स्यात् खल्वशाखा च सिंहशाखा च सप्तमी ।
प्रासादकर्णसहितं सिंहशाखाग्रसूत्रतः ॥ १८ ॥

इति सप्तशाखम् ॥

नवशाखं प्रवक्ष्यामि देवानां दुर्लभं सदा ।
यत्र विश्राम्यति शिवः सदा त्रिदशसम्युतः ॥ १९ ॥

शाखाविस्तारमानं तु रुद्रभागविभाजितम् ।
द्विभागः स्तम्भ इत्युक्त उभयोः कोणिकाद्वयम् ॥ २० ॥

निर्गमः सार्धभागेन पादोनद्वयमेव वा ।
रूपस्तम्भद्वयं कार्यं गन्धर्वद्वयमेव च ॥ २१ ॥

पत्रशाखा च गन्धर्वा रूपस्तम्भस्तृतीयकः ।
चतुर्थी खल्वशाखा च गन्धर्वा इति पञ्चमी ॥ २२ ॥

रूपस्तम्भस्तु षष्ठी स्यात् रूपशाखा ततः परा ।
खल्वशाखा चाष्टमी स्यात् सिंहशाखा तथान्तिमा ॥ २३ ॥

पट्टके विस्तरः कार्यः प्रवेशश्चतुरंशतः ।
पञ्चांशैश्च प्रकर्तव्यः सार्धचतुष्कतस्तथा ॥ २४ ॥

एवं च नवशाखं तु विभक्तं विश्वकर्मणा ।
नवाङ्गे चैव प्रासादे नवशाखास्तु कारयेत् ॥ २५ ॥

इति नवशाखद्वारम् ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां द्वारशाखाविभक्तिनिर्णयाधिकारो नाम द्वात्रिंशदुत्तरशततमं सूत्रम् ॥

---

## (१३३) प्रासादद्वारप्रतिहारानुक्रमो नाम त्रयस्त्रिंशदुत्तरशततमं सूत्रम् ॥

---

नन्दी चैव महाकालो हेरम्बो भृङ्गी एव च ।
दुर्मुखः पाण्डुरश्चैव सितश्चाऽसित एव च ॥ १ ॥
वेदांशा द्वारपालाः स्युर्गङ्गायमुनान्यूनतः ।
तत्परे चामरधरा ऊर्ध्वे मृणालभूषिताः ॥ २ ॥
पद्मपत्रं सुशोभाढ्यं स्तम्भं चैवेल्लिकान्वितम् ।
मृणालैर्भूषयेदूर्ध्वे कुर्यात्कन्दस्य बाह्यतः ॥ ३ ॥
कन्दवेधं यदा कुर्य्युस्तदा कुप्यन्ति देवताः ।
समूलांश्च विनश्यन्ति कर्तृकावरकांस्तथा ॥ ४ ॥
शाखास्यानुक्रमेणैव क्रमात्पट्टोत्तरङ्गयोः ।
रूपस्तम्भद्वयं चैव कण्ठकूटसमन्वितम् ॥ ५ ॥
वृषस्थं शङ्करं विद्याद् ब्रह्माणं हंससंस्थितम् ।
विष्णुं च गरुडारूढं श्रीकण्ठं नृत्यसंस्थितम् ॥ ६ ॥

इति शिवायतने द्वारदेवताः ।

शङ्खचूडः प्रचण्डश्च जयश्च विजयस्तथा ।
धाता चैव विधाता च सुभद्रो भद्र एव च ॥ ७ ॥
दक्षिणोत्तरक्रमेण गङ्गा च यमुना स्थिते ।
उत्तरङ्गे भवेल्लक्ष्मीः क्षेत्रपाला उदुम्बरे ॥ ८ ॥
कण्ठके मातरः कार्या ग्रहास्त्रिपुरुषस्तथा ।
वासुदेवादिभेदाश्च द्वारेषु परिकल्पयेत् ॥ ९ ॥
वासुदेवं सङ्कर्षणं प्रद्युम्नं चानिरुद्धकम् ।
चतुर्युगप्रभेदेषु द्वारेषु परिकल्पयेत् ॥ १० ॥
येषां परिकरा ये स्युस्तांस्तद्द्वारेषु कल्पयेत् ।
भवेयुः सुखदा नित्यं कर्तुश्चावरकस्य तु ॥ ११ ॥

इति विष्णवायतने द्वारदेवताः ।

सत्यो धर्मः क्रमो जयो विजयो यज्ञभद्रकः ।
भवश्च विभवश्चैव ब्रह्मणः प्रतिहारकाः ॥ १२ ॥
ऋषीणामाश्रयः कार्यो देवतानां तु पार्श्वतः ।
चतुर्वेदसमायुक्तं ब्रह्माणं सर्वशान्तिदम् ॥ १३ ॥

इति ब्रह्मायतने द्वारदेवताः ।

दण्डी च पिङ्गलश्चैव आनन्दश्चान्तकस्तथा ।
चित्रो विचित्रो ज्ञातव्याः किरणाख्यः सुलोचनः ॥ १४ ॥

भास्करस्य समाख्याता अष्टैते प्रतिहारका: ।
पूर्वदिक्क्रमत: प्रोक्ता: प्राच्यादिषु प्रदक्षिणम् ॥ १५ ॥

भास्करेषु द्वादशसु एषां कार्याश्च मूर्तय: ।
सुप्रशस्ता: परिकरा: शान्तिदा: सर्वकामदा: ॥ १६ ॥

इति सूर्यायतने द्वारदेवता: ।

अविघ्नो विघ्नराजश्च सुवक्त्रो बलवानथ ।
गजकर्णश्च गोकर्ण: सुसौम्य: शुभदायक: ॥ १७ ॥
दिग्द्वारस्था युग्मतश्च एते विघ्नविनाशना: ।
इत्यष्टा च गणेशस्य प्रतिहारा: शुभप्रदा: ॥ १८ ॥

इति गणेशायतने द्वारदेवता: ।

जया च विजया चैव अजिता त्वपराजिता ।
विभक्ता मङ्गला कार्या मोहिनी स्तम्भिनी तथा ॥ १९ ॥
कर्तव्याश्चेच्छता शान्तिमित्यष्टौ प्रतिहारिका: ।
गौर्यादिनवमूर्तीनां कुर्यात्परिकरांस्तथा ॥ २० ॥

इति गौर्यायतने द्वारदेवता: ।

वैताल: करटश्चैव पिङ्गाक्षो भृकुटिस्तथा ।
धूम्रक: कंकदश्चैव रक्ताक्षश्च सुलोचन: ॥ २१ ॥
इत्यष्टौ प्रतिहाराश्च चण्डिकाज्ञाकरास्सदा ।
उक्तो द्वारक्रमश्चेति शस्त: परिकरे सदा ॥ २२ ॥

इति चण्डिकायतने द्वारदेवता: ।

हरादिवीतरागान्तं देवानां क्रमयोगत: ।
अष्ट षोडश द्वात्रिंशच्चतु:षष्टिकमेव च ॥ २३ ॥
इन्द्रश्चेन्द्रजयश्चैव महेन्द्रो विजयस्तथा ।
धरणेन्द्र: पद्मकश्च सुनाभ: सुरदुन्दुभि: ॥ २४ ॥
इत्यष्टौ प्रतिहाराश्च वीतरागेऽति शान्तिदा: ।
अनुक्रमेण संस्थाप्या: प्राच्यादिषु प्रदक्षिणम् ॥ २५ ॥
लाञ्छनं सिंहासनं च चामरं कुसुमाञ्जलि: ।
प्रभामण्डलाशोकाश्च दुन्दुभिश्छत्रकत्रयम् ॥ २६ ॥
वीतरागेऽतिविख्याता देवानां तु प्रतिक्रमा: ।
यक्षशासनदेवीश्च कुर्यादुभयपार्श्वत: ॥ २७ ॥

इति जिनेन्द्रायतने द्वारदेवता: ।

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां प्रासादद्वारप्रतिहारानुक्रमाधिकारो नाम त्रयस्त्रिंशदुत्तरशततमं सूत्रम् ।

---

## (१३४) देवतादिग्भागमुखद्वारदोषो नाम चतुस्त्रिंशदुत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच--

यतो मुखश्च यो देवो यथा वै यत्र पश्यति ।
तदहं कथयिष्यामि दृष्ट्वा शास्त्रार्थनिश्चयम् ॥ १ ॥

नोत्तराभिमुखाः कार्या न देवा दक्षिणामुखाः ॥
आदिदिशोन्मुखः कार्य आदिदेवो दिवाकरः ॥ २ ॥

चतुर्दिशामुखो ब्रह्मा कार्यो वा पूर्वदिङ्मुखः ।
शम्भुर्बाणस्तथा धाम्यो मुखलिङ्गं सनातनम् ॥ ३ ॥

व्यक्ताव्यक्तरूपकश्च विश्वेशः सर्वदिङ्मुखः ।
सर्वत्र सर्वतोभद्रश्चतुर्द्वारः शिवालयः ॥ ४ ॥

मूर्तिभेदेन यो ज्ञेयश्चतुर्द्वारः प्रकीर्तितः ।
होमशाला च कर्तव्या चतुर्द्वारोपशोभिता ॥ ५ ॥

यक्षराजं रममाणं विदुर्दक्षिणदिङ्मुखम् ।
पूर्वापरमुखा ये च वक्ष्यन्ते ते यथार्थतः ॥ ६ ॥

ब्रह्मा विष्णुः शिवः सूर्य इन्द्रस्कन्दहुताशनाः ।
पूर्वापरमुखा ह्येते वास्तुशास्त्रेषु कीर्तिताः ॥ ७ ॥

गणेशश्चैव नागेशः क्षेत्रपो भैरवस्तथा ।
धनाध्यक्षश्च गन्धर्वा ग्रहमातृगणास्तथा ॥ ८ ॥

नकुलीशश्च चण्डीशः कार्या दक्षिणदिङ्मुखाः ।
एवं विदिङ्मुखाः कार्या नान्ये चैव दिवौकसः ॥ ९ ॥

नैर्ऋत्याभिमुखः स्थाप्यो हनूमान्बलबुद्धिमान् ।
रौद्र एकादशो रुद्रो राक्षसक्षयकारकः ॥ १० ॥

ऊर्ध्वमूलमधोऽग्रं च विलोमं द्वाःकपाटकम् ।
वरुणोत्तरपूर्वेण स्थित्वा चैव सुखास्त्रतः? ॥ ११ ॥

तथा याम्यामुखं द्वारं कर्तव्यं शास्त्रपारगैः ।
देवाश्च द्वाराभिमुखा इति शास्त्रार्थनिश्चयः ॥ १२ ॥

दक्षिणोत्तरामुखेन प्राच्यां वै वरुणे तथा ।
वीतरागस्य प्रासादः पुरमध्ये सुखावहः ॥ १३ ॥

प्रशस्तं च समुत्सेधे गृहस्यार्धभूरङ्गका ? ।
श्रियं शान्तिमीप्सितं च कर्तृकावरकावुभौ ॥ १४ ॥

इति देवतादिग्मुखम् ।

उक्तमानाधिकं द्वारं धनधान्यविनाशकम् ।
हीनं पीडां प्रकुरुते वलितं शत्रुविग्रहम् ॥ १५ ॥

मृत्युदं चाधोविपुलं पूजाहानिकृदूर्ध्वत: ।
यवमध्यसमं द्वारं सदा स्यात्कलिकारकम् ॥ १६ ॥

स्त्रीरोगकृन्न्यूनशाखं मध्यस्तम्भस्य मानत: ।
हीनं पीडां प्रकुरुते अधिकं च धनक्षयम् ॥ १७ ॥

दारुजे तु विलोमे च पूजाहानिर्धनक्षय: ।
विपरीतं कपाटं तु सदा स्यात्कलिकारकम् ॥ १८ ॥

तथोर्ध्वमूलाधोग्रा च विलोमा द्वा:कपाटिका ।
भ्रमच्छब्दकपाटं च कलिकृद्विपरीतकम् ॥ १९ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां देवतादिग्भागमुखद्वारदोषाधिकारो नाम चतुस्त्रिंशदुत्तरशततमं सूत्रम् ॥

## (१३५) देवतापदसंस्थानो नाम पञ्चत्रिंशदुत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

प्रासादानां समस्तानां विभक्तिर्गर्भभित्तितः ।
गर्भमध्ये सर्वतश्च देवताः क्रमतः स्थिताः ॥ १ ॥
चतुरश्रे आयते च वृत्ते वृत्तायते तथा ।
अष्टाश्रे च तथा प्रोक्तो गर्भः प्रासादरूपतः ॥ २ ॥
ब्रह्मस्थानादिगर्भे च भित्तिपर्यन्तमेखलम् ।
मण्डलं भवनाकारं विभक्तिक्रमच्छन्दतः ॥ ३ ॥
अष्टाविंशतिसङ्ख्याकं मध्यगर्भानुरूपतः ।
क्रमादेकैकदेवानां निवासो मण्डले स्थितिः ॥ ४ ॥
प्रथमं मण्डलं चैव यद् भवेद् गर्भमध्यतः ।
शिवस्य परमं स्थानं तन्मेरोरिव मध्यतः ॥ ५ ॥
यवैर्यवार्द्धैस्तु किञ्चित् कुर्यादीशानमाश्रितम् ।
समस्तेव मण्डलार्धे ततः सूत्रेषु देवताः ॥ ६ ॥
पादपद्माग्रसंस्थाने स्वकीयपदमध्यतः ।
पदस्य गर्भसंस्थाने पार्श्वगर्भाद्यादिकम् ? ॥ ७ ॥
कर्णपिप्पिलिकासूत्रं भुजगर्भे तु संस्थितम् ।
पादगुल्फगर्भसूत्रे पदगर्भेषु देवता ॥ ८ ॥
द्वितीये हेमगर्भश्च नकुलीशस्तृतीयके ।
चतुर्थे चैव सावित्री रुद्रस्स्यात् पञ्चमे पदे ॥ ९ ॥
षष्ठे तथा षण्मुखश्च सप्तमे च पितामहः ।
अष्टमे वसुदेवश्च नवमे च जनार्दनः ॥ १० ॥
विश्वदेवाश्च दशमे अग्निरेकादशे तथा ।
द्वादशे भास्करश्चैव दुर्गा चैव त्रयोदशे ॥ ११ ॥
चतुर्दशे विघ्नराजो ग्रहाः पञ्चदशे तथा ।
षोडशे मातृकाश्चैव गणास्सप्तदशे तथा ॥ १२ ॥
अष्टादशे भैरवश्च क्षेत्रपालस्ततोऽधिके ।
यक्षराजो विंशतिके हनूमानेकविंशके ॥ १३ ॥
द्वाविंशे च भृगुश्चैव घोरश्चैव ततोऽधिके ।
चतुर्विंशे भवेद् दैत्यो राक्षसश्च पदेऽधिके ॥ १४ ॥
पिशाचश्चैव षड्विंशे भूतानि च तथाऽपरे ।
तदग्रे च पदं शून्यं क्रमेण मण्डलस्थिताः ॥ १५ ॥
विष्णुस्थाने उमादेवी ब्रह्मस्थाने सरस्वती ।
सावित्री मध्यदेशे तु लक्ष्मीं सर्वत्र दापयेत् ॥ १६ ॥

वीतरागो विघ्नराजे यथोक्तं जिनशासने ।
मातृमण्डलमध्ये तु समस्ता देवतास्तथा ॥ १७ ॥

पर्यङ्कासनोर्ध्वस्थानि विष्णुरूपाणि यानि च ।
विष्णुस्थाने जलशायी वाराहस्तत्पदे स्थितः ॥ १८ ॥

विष्णुरूपाणि सर्वाणि नवमे च पदे तथा ।
कल्की च रममाणश्च पदे वाराहके तथा ॥ १९ ॥

अर्धनारीश्वरं देवं रुद्रस्थाने च स्थापयेत् ।
हरिशङ्करोमामूर्तिं विष्णुस्थाने प्रकल्पयेत् ॥ २० ॥

सप्तमे ब्रह्मसंस्थाने मिश्रमूर्तिं च स्थापयेत् ।
त्रिदेवं मिश्रयेच्चैव हरिहरपितामहम् ॥ २१ ॥

चन्द्रार्कपितामहं च स्थापयेद्भास्करे पदे ।
वेदांश्च ब्रह्मसंस्थाने ऋषीन्वै भास्करे पदे ॥ २२ ॥

अतः परे तु ये देवा ग्रन्थेपूक्ता महत्तरैः ।
सान्निध्यं सर्वकाले तु परिकरस्य च दापयेत् ॥ २३ ॥

इति प्रतिमापादसंस्थानम् ।

लिङ्गं प्रतिष्ठास्थानं च वर्णानां हितकामदम् ।
प्रतिष्ठाप्यं प्रकृतिभिः शाश्वतं च शुभप्रदम् ॥ २४ ॥

यथैर्यथार्थैस्तु किञ्चित् कर्तव्यं च दिशाश्रितम् ।
प्राच्यां शुभप्रदं विप्रे क्षत्रियाणां तु दक्षिणे ॥ २५ ॥

वारुणे वैश्यजातीनां शूद्राणां तु तथोत्तरे ।
चतुष्टयं समं ख्यातं चतुर्वर्णफलप्रदम् ॥ २६ ॥

शाश्वतं सर्ववर्णानां शिल्पिसंतोषकारकम् ।
ईशान्यां यत् स्थितं लिङ्गं पूज्यं चन्द्रार्कतारकैः ॥ २७ ॥

अग्न्युपजीविभिर्लोकैराग्नेय्यां दिशमाश्रितम् ।
वेश्याकुलालरजकैर्वस्त्ररङ्गकभण्डकैः ॥ २८ ॥

नैर्ऋतीमाश्रितं लिङ्गं शाश्वतं च शुभप्रदम् ।
वायव्ये नर्तकनटैर्लिङ्गं स्थाप्यं विचक्षणैः ॥ २९ ॥

हस्तार्धं च ततोऽर्धं च ततोऽप्यर्धं त्रिभागतः ।
तस्यार्धं च तदर्धार्धमेतत् किञ्चित्प्रमाणतः ॥ ३० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
देवतापदसंस्थानाधिकारो नाम पञ्चत्रिंशदुत्तरशततमं सूत्रम् ॥

---

## (१३६) त्रिपुरुषप्रतिष्ठामूर्यमण्डलादिव्योमलक्षणं षट्त्रिंशदुत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच–

ब्रह्मा विष्णुस्तथा रुद्रस्त्वेकस्मिन्वा पृथग्गृहे ।
भूयो न्यूनन्यूनतश्च रुद्रो हरिः पितामहः ॥ १ ॥

अंशोनश्च हराद्विष्णुर्विष्णोरर्धं पितामहः ।
वामदक्षिणयोगेन मध्ये रुद्रं च स्थापयेत् ॥ २ ॥

संस्थाप्य च शुभं कर्ता नृपाद्याः सुजनाः प्रजाः ।
प्रकर्तव्यं त्यज विप्राद्याः समेयान्ति समन्वितम् ? ॥ ३ ॥

ताभ्यां ह्रस्वो यदा रुद्रः क्षयो राज्ञि जने मृतिः ।
राष्ट्रक्षोभो नृपयुद्धं ब्रह्मविष्णू समौ यदा ॥ ४ ॥

अनावृष्टिर्जने मारिर्ब्रह्महस्वे जनार्दने ।
विपर्यये नृपाद्याश्च अस्वस्था भ्रमति प्रजा ॥ ५ ॥

इति न्यूनाधिकमानम् ।

आदौ ब्रह्मा हरिर्मध्ये चाऽन्ते रुद्रो यदा भवेत् ।
ब्राह्मणोपद्रवो लोकास्तथा स्युर्दुष्टचेतसः ॥ ६ ॥

विष्णुस्थाने यदा ब्रह्मा ब्रह्मस्थाने जनार्दनः ।
तत्र राजभयं विद्यादुद्वेगमनसो जनाः ॥ ७ ॥

मध्ये ब्रह्मा हरिश्चान्ते आदौ रुद्रः प्रतिष्ठितः ।
संहारो जायते तत्र व्याधिशोकाकुलो जनः ॥ ८ ॥

ब्रह्मणश्च यदा विष्णुर्विष्णुस्थाने पितामहः ।
तस्करोपहता लोका उद्वृत्तजनसंकुलाः ॥ ९ ॥

रुद्रस्थाने हरिश्चैव हरिर्यत्र हरस्तथा ।
जायन्ते स्त्रीजिता लोका अधर्मरतचेतसः ॥ १० ॥

ब्रह्मस्थाने यदा विष्णुर्विष्णुस्थाने चतुर्मुखः ।
रुद्रः स्वस्थानसंस्थस्तु सर्वकामफलप्रदम् ॥ ११ ॥

रुद्रवक्त्रत्रिभागोनो हरिरर्धः पितामहः ।
तत्तुल्या वै उमादेवी सुखदा सर्वकामदा ॥ १२ ॥

न्यूनाधिका हरिर्ब्रह्मा उमादेवी च शङ्करः ।
सर्वार्थाश्च गतास्तत्र यथोक्तफलमादिशेत् ॥ १३ ॥

इति त्रिपुरुषस्थानप्रतिष्ठा ।

सर्वे लिङ्गाश्रिता देवा लिङ्गं देवाश्रितं शुभम् ।
अन्योन्यतः प्रदातव्यं लिङ्गं नाऽन्यत्र दापयेत् ॥ १४ ॥

हरिर्ब्रह्मा च सविता शक्रश्चैव स्मरस्तथा ।
स्कन्धसूत्रस्य चाऽधस्तात् स्थाणुसूत्रप्रमाणतः ॥ १५ ॥

कटिमेढ्रसमस्थाने रतिमूर्तिप्रकल्पना ।
शङ्खचक्रधरा चैव ऋषयो दण्डपिङ्गलौ ॥ १६ ॥

रतिस्कन्धसमौ तौ तु अधस्ताच्चिबुकौ तथा ।
एकपृष्ठोपरि कार्या न पृष्ठे न च विस्तृताः ॥ १७ ॥

पादपद्माग्रतः सूत्रं मध्यं मध्येऽपि जायते ।
नायकश्च रतिश्चैव क्रमशो युक्तिमाश्रितौ ॥ १८ ॥

पादपृष्ठसमं सूत्रमर्चामानेन कारयेत् ।
अष्टधा भाजयेत् सर्वमुपपीठोपरिस्थितम् ॥ १९ ॥

द्वौ भागौ शृङ्गमुत्सेधे पद्मं कुर्यात् सुवृत्तकम् ।
पद्मपीठं तु भागेन भागौ द्वौ कण्ठकोच्छ्रयः ॥ २० ॥

पीठं भागत्रयं कुर्यात् प्रवेशान्तरनिर्गमम् ।
पादं पद्मसमुत्सेधे ऊरुजानुहृदिस्थितम् ॥ २१ ॥

सुशृङ्गं केशराढ्यं च अग्रपत्रं सकर्णकम् ।
एवंविधं प्रकर्तव्यं सूर्याग्रे व्योमलक्षणम् ॥ २२ ॥

पीठं च मण्डलं प्रोक्तं प्रतिधारा च नासिका ।
वेदी व्योम तथा कुण्डं पञ्चाङ्गं सूर्यमण्डलम् ॥ २३ ॥

मेरुस्तस्याऽग्रतः कार्यस्त्रिगर्भान्तरसंस्थितः ।
पञ्चसप्तनवान्तःस्थो ह्यत ऊर्ध्वं न कारयेत् ॥ २४ ॥

हंसो वृषोऽथ गरुडो व्योम वै ज्येष्ठमध्यतः ।
इषुस्थानेषु कर्तव्यं नाऽन्यपदाश्रितं भवेत् ॥ २५ ॥

अर्चायामेन विस्तीर्णं सपादं सार्धमेव च ।
विस्तरोच्छ्रयतुल्यं च उपपीठं त्रिभागतः ॥ २६ ॥

इति व्योमलक्षणाधिकारः ।

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां व्योमलक्षणाधिकारो नाम षट्त्रिंशदुत्तरशततमं सूत्रम् ॥

---

## (१३७) द्वारदृष्टिनिर्णयो नाम सप्तत्रिंशदुत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

– – – – – – – – – – तं सोदुम्बरान्तकम् ।
स्थापयेच्छिवलिङ्गानि द्वारार्धं न व्यतिक्रमेत् ॥ १ ॥

द्वारोच्छ्रयस्य मध्यं तु वसुभागविभाजितम् ।
शुभाशुभदृष्टिस्थानं हिताहितफलप्रदम् ॥ २ ॥

पदमेकैककं भूयो ह्यष्टधा प्रविभाजितम् ।
चतुःषष्ठ्यंशोच्छ्रितं स्यादुदुम्बरदशान्तकम् ॥ ३ ॥

विषमांशेषु सर्वेषु देवतादृष्टियोगतः ।
दृष्टिस्थानानि द्वात्रिंशद् द्वात्रिंशच्च विलोमतः ॥ ४ ॥

विषमस्था शुभा नैवं विषमे चाशुभोद्गमः ।
दृष्टिदोषविपाकेन स्थाननाशो धनक्षयम् ॥ ५ ॥

नगरे च पुरे ग्रामे राष्ट्रे तीर्थे तपोवने ।
वाहदृष्टिहतं यच्च न पुनस्तत्प्ररोहति ॥ ६ ॥

उदुम्बरादितः प्रोक्तमुत्तरङ्गादधः ।
देवताक्रमसंस्थानं कथयामि यथाविधि ॥ ७ ॥

आदिः सृष्टिश्च तत्त्वं च अधिष्ठं चायुर्लक्ष्यकम् ।
विद्या प्रज्ञा शान्तिः शिवोक्तानि तत्त्वानि वै नव ॥ ८ ॥

प्रथमे च भवेदादिः सृष्टिश्चैव तृतीयके ।
पञ्चमे च भवेत्तत्त्वमधिष्ठं सप्तमे स्थितम् ॥ ९ ॥

आयुःस्थानं च नवमे लक्ष्यमेकादशे स्थितम् ।
त्रयोदशे भवेद्विद्या प्रज्ञा पञ्चदशस्थिता ॥ १० ॥

शान्तिः सप्तदशस्था च शिवतत्त्वकसंस्थितिः ।
व्यक्ताव्यक्ते तदूर्ध्वे तु क्रमेण च सुसंस्थिते ॥ ११ ॥

व्यक्तपदं च विज्ञेयमेकोनविंशत्यंशके ।
व्यक्ताव्यक्तं त्वेकविंशे त्रयोविंशे च व्यक्तकम् ॥ १२ ॥

पञ्चविंशे फालना स्यात् तत्र कामफलोदयः ।
सप्तविंशे समुत्सेधे कुर्याच्च जलशायिनम् ॥ १३ ॥

द्व्यधिके वैनतेयं च मातरस्त्वेकत्रिंशके ।
त्रयस्त्रिंशे भवेद्यक्षो द्व्यधिके भृङ्गशाकरः ॥ १४ ॥

सप्तत्रिंशे उमारुद्रं द्व्यधिके बुद्ध एव च ।
एकचत्वारिंशके च ब्रह्मयुग्मं च कारयेत् ॥ १५ ॥

दुर्वाससं च द्व्यधिके अगस्त्यं नारदं तथा ।
पञ्चचत्वारिंशके च लक्ष्मीनारायणं विदुः ॥ १६ ॥

सप्तचत्वारिंशके च स्थाप्यो धाता यथाविधि ।
एकोनपञ्चाशत्तमे गणेशं च सरस्वतीम् ॥ १७ ॥

ततश्च द्व्यधिके कुर्याच्छ्रियं पद्मासनां स्थिताम् ।
त्रिपञ्चाशत्तमे कुर्याद्धरसिद्धिं च कामदाम् ॥ १८ ॥

ब्रह्मविष्णवोश्च सूर्यस्य वीतरागस्य च क्रमात् ।
पञ्चपञ्चाशत्तमे च ऊर्ध्वार्चादृष्टिसंस्थितिः ॥ १९ ॥

रुद्रार्चा ततो द्व्यधिके चण्डिकैकोनषष्ठिके ।
द्व्यधिके भैरवश्चैव वेतालाश्च त्रिषष्ठिके ॥ २० ॥

तदूर्ध्वे च पदं शून्यं महामर्म क्षयावहम् ।
पादेऽर्चायाः कटिर्यावत् कार्या वाहनदृक् तथा ॥ २१ ॥

धर्मार्थकाममोक्षाणां दृष्टिस्थापनपूजनात् ।
सर्वार्चादृष्टिसंस्थानं भुक्तिमुक्तिप्रदं भवेत् ॥ २२ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां द्वारदृष्टिनिर्णयाधिकारो नाम सप्तत्रिंशदुत्तरशततम सूत्रम् ।

---

## (१३८) प्रासादस्योर्ध्वमाननिर्णयो नामाष्टात्रिंशदुत्तरशततमं सूत्रम् ।

विश्वकर्मोवाच--

अथातः संप्रवक्ष्यामि प्रासादस्योर्ध्वलक्षणम् ।
तलच्छन्दविभक्त्या तदूर्ध्वमानं विशेषतः ॥ १ ॥

विभक्ते तु तलच्छन्दे शिखरोर्ध्वे तु कारयेत् ।
शिखरे शुकाग्रसूत्रे उच्छ्रयो मण्डपस्य च ॥ २ ॥

प्रासादकाग्रशुकवन्मण्डपाग्रे चतुष्किका ।
जगत्युत्तानपट्टं च शालायाः परितः क्रमात् ॥ ३ ॥

जगत्यां लोपयेच्छालां शालायां मण्डपं तथा ।
मण्डपे नैव प्रासादो ग्रस्तश्चेद् दोषकारकः ॥ ४ ॥

एवमादिगुणाः प्रोक्ताः सूत्रशास्त्रार्थबोधकैः ।
विशिष्टगुणमाख्यास्ये प्रोक्तं वै वास्तुवेदिभिः ॥ ५ ॥

निरन्धारेषु सर्वेषु नागरे मिश्रकेऽपि वा ।
विमाननागरच्छन्दे कुर्याद्विमानपुष्पके ॥ ६ ॥

भित्तेःपृथुत्वे यन्मानं तच्छृङ्गक्रम ऊर्ध्वतः ।
गर्भमध्ये यदा रेखा महामर्मक्षयावहा ॥ ७ ॥

एकद्वित्रिक्रमा उक्ता भित्तिमध्ये यथोत्तरम् ।
अधिका नैव कर्तव्या पीडिते च कुलक्षयः ॥ ८ ॥

एकादिग्रहसङ्ख्यान्तमुरःशृङ्गं क्रमोद्‌तम् ।
ग
अधःस्थेन भवेल्लुप्तमुरःशृङ्गं तु पश्चिमम् ॥ ९ ॥

सप्त सप्त ह्यधोलुप्ता ऊर्ध्वस्थांशास्त्रयोदश ।
एकवृद्धया घण्टवाहो स्कन्धे स्कन्धं तु कारयेत् ॥ १० ॥

एकैकं युक्तिसूत्रेण कुर्याद्वै सर्वकामदम् ।
सूत्रयित्वा क्रमयोगं मूलसूत्रानुसारतः ॥ ११ ॥

छन्दभेदो न कर्तव्यो जातिभेदो न वा पुनः ।
उद्भवेच्च महामर्म जातिभेदे कृते सति ॥ १२ ॥

यदि छन्दे नास्ति छन्दो नाऽऽद्यमाद्ये प्रतिष्ठितम् ? ।
तत्प्रासादफलं नास्ति ततो मोक्षो न विद्यते ॥ १३ ॥

प्रासादस्य पुरो-भागे निर्वाणं मूलशृङ्गकम् ।
तदग्रे शुकवत्कार्यमुरुशृङ्गाद्यनुक्रमात् ॥ १४ ॥

एकत्रिपञ्चसप्ताङ्कसिंहस्थानानि कारयेत् ।
तेषां विभक्तिसूत्रं तु कोलिकायामसत्रतः ॥ १५ ॥

अञ्चिता कुञ्चिता शस्या त्रिधोदितक्रमागता ।
मध्यस्था भ्रमा सभ्रमा पट्कोल्य: परिकीर्तिता: ॥ १६ ॥

प्रासादे दशधा भक्ते भूमिसीमा विचक्षण: ।
अञ्चिता च द्विभागा स्यात् त्रिभागा कुञ्चिता तथा ॥ १७ ॥

शस्या चैवं चतुर्भागा त्रिधा चोक्तक्रमागता ।
– – – – – – – – – – – – – – – – – – – – ॥ १८ ॥

प्रासादपदमध्यस्था भ्रमा सप्तत्रिभागत: ।
अर्धे तु सभ्रमा कार्या प्रासादस्य प्रमाणत: ॥ १९ ॥

अग्रे कोली कपोलं तु शुकनासस्तु नासिका ।
सान्धारे स्तम्भरेखा च कर्तव्या मध्यकोष्ठके ॥ २० ॥

भ्रमणी बाह्यभित्तिश्च क्रमात्सङ्ख्यां प्रकल्पयेत् ।
शृङ्गोरुशृङ्गप्रत्यङ्गं गणयेद्दण्डकानि च ॥ २१ ॥
सिंहकर्णं तवङ्गं तिलकं प्रासादभूषणम् ।
कर्णं रथं प्रतिरथं सुभद्रं प्रतिभद्रकम् ॥ २२ ॥
सलिलान्तरमार्गेण शुद्धान्येवाङ्गसङ्ख्यया ।
इहैवाङ्गप्रमाणेन सपादं शृङ्गमुच्छ्रये ॥ २३ ॥

स्कन्धस्याधोदये घण्टा सर्वकामफलप्रदा ।
प्रहारांशं पुनर्दद्यात् पुन: शृङ्गाणि कारयेत् ॥ २४ ॥

शृङ्गे शृङ्गे च प्रासादं विभक्तमिव कल्पयेत् ।
समस्तानामधोभागे कुर्याच्छाद्यं विभूषितम् ॥ २५ ॥

अध: शृङ्गं पक्षभागे ऊर्ध्वशृङ्गोद्गमोद्गमम् ।
उरुशृङ्गं यदा लुप्तं रेखाकर्णजलान्तरै: ॥ २६ ॥
तत्र कारयितु: पीडा कर्तुश्चापि महद्भयम् ।
मूलशिलात उदये प्रासादे कलशान्तके ॥ २७ ॥
भागे विभक्ते विंशत्या अधऊर्ध्वं प्रकल्पयेत् ।
अष्टभागोदयो ज्येष्ठ: सार्द्धमष्टौ च मध्यम: ॥ २८ ॥
कनिष्ठो नवभिर्भागैस्त्रिधा मण्डोवरो मत: ।
शेषा ये ऊर्ध्वभागास्तै: कर्तव्य: शिखरोदय: ॥ २९ ॥
इदं मानं समुद्दिष्टं प्रोक्तं वै वास्तुवेदिभि:

इतिसूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां प्रासादस्योर्ध्वमाननिर्णयाधिकारो नामाष्टात्रिंशदुत्तरशततमं सूत्रम् ॥

---

## (१३९) रेखानिर्णयो नामैकोनचत्वारिंशदुत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच —

अथातः संप्रवक्ष्यामि रेखाभेदं पृथग्विधम् ।
सर्वाः कलाः समुत्पन्ना रेखाः षोडश कीर्तिताः ॥ १ ॥

त्रिखण्डादौ खण्डवृद्ध्या खण्डान्यष्टादशावधि ।
षोडशैव समा भागाः कलादौ परिकीर्तिताः ॥ २ ॥

अष्टादशान्तपष्ठ्यन्तं चतुर्वृद्धिक्रमेण तु ।
रेखाश्चैवं प्रयोक्तव्याः षट्पञ्चाशच्छतद्वयम् ॥ ३ ॥

शशिनी शान्तिनी चैव लक्ष्मिणी कामिनी तथा ।
पुष्पिणी च शुभा शान्ता आल्हादा कुमुदा तथा ॥ ४ ॥

सुखासनी शङ्खिनी च विद्याशोधनिका तथा ।
नाहिनी दीपिनी सौम्या अमृता षोडशी तथा ॥ ५ ॥

एकैकस्याः स्वच्छन्देषु षोडशैव प्रकीर्तिताः ।
रेखाश्चैवं प्रयोक्तव्याः षट्पञ्चाशच्छतद्वयम् ॥ ६ ॥

शशिन्याद्यास्त्रिखण्डाश्च रेखा वै षोडशोन्मिताः ।
शान्तिन्याद्याश्चतुष्खण्डाः षोडशैव प्रकीर्तिताः ॥ ७ ॥

लक्ष्मिण्याद्या पञ्चखण्डा उक्ताश्चैवं तु षोडश ।
कामिन्याद्याश्च षट्खण्डा रेखाः षोडश कीर्तिताः ॥ ८ ॥

पुष्पिणाद्याः सप्तखण्डाः शुभाद्याश्चाष्टखण्डकाः ।
शान्ताद्या ग्रहखण्डा आल्हादाद्या दशखण्डकाः ॥ ९ ॥

कुमुदाद्या रुद्रखण्डाः सुखासन्यादिकास्ततः ।
शङ्खिन्याद्या विश्वखण्डा विद्याशोधादिकास्ततः ॥ १० ॥

नाहिन्याद्यास्तिथिखण्डा दीपिन्याद्याः कलोन्मिताः ।
सौम्याद्याः सप्तदशभिर्वस्वेकैरमृतादिकाः ॥ ११ ॥

शशिन्याद्या अमृतान्ताः षोडशैव प्रकीर्तिताः ।
एकैकस्याः स्वच्छन्देषु षोडशैव विनिर्गताः ॥ १२ ॥

षोडशाथ द्विरष्टौ च षट्पञ्चाशच्छतद्वयम् ।
सङ्ख्या प्रोक्ता च रेखाणां वास्तुविद्योद्भवा बुधैः ॥ १३ ॥

रेखापृथुत्वादुदयः सपादः कर्णतोऽपि वा ।
दिग्भक्ते च तलच्छन्दे स्कन्धं कुर्यात् षडंशकम् ॥ १४ ॥

स्कन्धस्थाने कलाचारो रेखान्तं साधयेत्तथा ।
समः सपादः सार्द्धश्च पादोनो द्विगुणस्तथा ॥ १५ ॥

द्विगुणश्च सपादो द्वौ सार्द्धौ पादोनकास्त्रयः ।
त्रिगुणोऽथ सपादोऽसौ सार्धः पादोनवेदकः ॥ १६ ॥

चतुर्गुणः सपादोऽसौ सार्धः पादोनपञ्चकः ।
इति षोडशधा चारं त्रिखण्डाद्यासु लक्षयेत् ॥ १७ ॥

अष्टाद्यावष्टषष्ठ्यन्तं चतुर्वृद्ध्या कलाः क्रमात् ।
न्यसेद्रेखासु ताभ्यस्स्युः षट्पञ्चाशच्छतद्वयम् ॥ १८ ॥

त्रिखण्डायां तु रेखायामादिखण्डे कलाष्टकम् ।
द्वितीये च तृतीये च अष्टौ चाराः समा इमे ॥ १९ ॥

षोडशसु त्रिखण्डासु आदिखण्डे कलाष्टकम् ।
चतुर्विंशतिधा स्कन्धे समचारसमुच्छ्रितिः ॥ २० ॥

प्रथमाया आदिखण्डे कला अष्ट प्रयोजिताः ।
द्वितीये वसुसङ्ख्याश्च तृतीयेऽष्टौ तथैव च ॥ २१ ॥

चतुर्विंशतिकाश्चैवं समा चाराः प्रकीर्तिताः ।
द्वितीया च भवेद्रेखा सपादचारी संज्ञिता ॥ २२ ॥

स्कन्धे धिष्ण्यांशकैर्भक्ते वस्वङ्कदशसंमिताः ।
क्रमात्कलास्त्रिखण्डेषु सपादचारिका तु सा ॥ २३ ॥

भक्ते स्कन्धे च त्रिंशद्धा भवेद्रेखा तृतीयका ।
प्रथमेऽष्ट दिगूर्ध्वे च स्कन्धे द्वादश चोन्मिताः ॥ २४ ॥

स्कन्धे कलास्त्रयस्त्रिंशद्यत्र खण्डेष्वपि क्रमात् ।
वसुरुद्रेन्द्रसङ्ख्या सा पादोनद्विकचारिका ॥ २५ ॥

स्कन्धे षट्त्रिंशदंशे च वसुसूर्यद्विरष्टभिः ।
स्कन्धे तु नवरामांशेऽष्टविश्वाष्टदशोन्मिताः ॥ २६ ॥

अधः खण्डे तु यश्चार ऊर्ध्वे खण्डेऽप्यसौ भवेत् ।
समं सा लभते चारं सपादं वा पदाधिकम् ॥ २७ ॥

समं सपादं सार्धं वा यावत्पादोनपञ्चकम् ।
त्रिखण्डादौ खण्डवृद्ध्याऽष्टादशखण्डकावधि ॥ २८ ॥

आदिखण्डे चतुर्वृद्धिरूर्ध्वखण्डेषु तद्गुणा ।
प्रतिखण्डे षोडशभिः षट्पञ्चाशच्छतद्वयम् ॥ २९ ॥

स्कन्धस्थाने कलाः पञ्च रेखाणां तु गुणोदिताः ।
सिद्धा तुर्या कृता रेखा ऊर्ध्वे चामलसारिका ॥ ३० ॥

विषमा भूमिकाः कार्या न शस्यन्ते समास्तु ताः ।
द्वयोः प्रथयोर्मध्ये वृत्तमामलसारकम् ॥ ३१ ॥

नागरे लतिने कुर्यात् सान्धारे चैव मिश्रके ।
विमाननागरच्छन्दे विमानपुष्पके तथा ॥ ३२ ॥

विमाने भूमिजे चैव वृत्ते चाकर्णिकान्तके ।
द्राविडे तु तथा चैवं तं तु रेखानुरूपकम् ॥ ३३ ॥

वराटे तु भवेद् घण्टा याद्दग्मन्दारपुष्पकम् ।
वलभीषु च सर्वासु गजपृष्ठाकृतिस्तथा ॥ ३४ ॥

नागरघण्टाकृतिकां कुर्यात् सिंहावलोकने ।
घण्टा चैवमुपाख्याता प्रयुक्ता वास्तुवेदिभिः ॥ ३५ ॥

नागरी लतिने रेखा सान्धारे मिश्रके तथा ।
लम्बना सूत्रयोगेन रेखा भवति नागरी ॥ ३६ ॥

कथिता गर्भमाधार्य विमाने भूमिजे तथा ।
वराटे द्राविडे चैव प्रशस्ता गर्भमार्गतः ॥ ३७ ॥

स्तम्भाद्याश्चैव गर्भाद्याः प्रासादभित्तिमानतः ।
चतुर्विधा भवेद्रेखा विमाने चैव भूमिजे ॥ ३८ ॥

विराटे द्राविडे कार्या छन्दे विमाननागरे ।
विमानपुष्पके तद्वद्वलभीष्वपि कामदा ॥ ३९ ॥

लाञ्छना सूत्रयोगेन रेखा सूत्रद्वयाङ्किता ।
वेणुकोशोद्भवा रेखा कलाभेदक्रमादपि ॥ ४० ॥

नागरे लतिने कार्या सान्धारेऽप्यथ मिश्रके ।
दारुजे च रथारोहे प्रशस्ता सर्वकामदा ॥ ४१ ॥

शिखाप्रान्ते भवेद्रेखा घण्टान्ता वाऽप्यथोच्यते ।
स्कन्धान्ता च तथा प्रोक्ता अन्यथा दोषकारणम् ॥ ४२ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां रेखानिर्णयाधिकारो नामैकोनचत्वारिंशदुत्तरशततमं सूत्रम् ॥

# (१४०) चन्द्रकलादिषट्पञ्चाशच्छतत्रयरेखानिर्णयो नाम चत्वारिंशदुत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

समः सपादः सार्धश्च पादोनद्वय एव च ।
द्विगुणश्चारः प्रकर्तव्यः सपादः सार्धद्विगुणः ॥ १ ॥
पादोनत्रयश्च तथा त्रयश्चैव पदाधिकः ।
सार्धत्रयश्च पादोनचतुष्कं च चतुर्गुणम् ॥ २ ॥
सपादं सार्धं चतुष्कं तथा पादोनपञ्चकम् ।
त्रिखण्डादावष्टादशान्ता चैषां युक्तिर्विधीयते ॥ ३ ॥
त्रिखण्डादौ कलाश्चाद्य आद्यन्ते चतुर्वर्द्धयेत् ।
अष्टादश्यामष्टषष्ठी प्रथमाद्यः खण्डयोजिता ॥ ४ ॥
समसपादादिक्रमैर्यावत् पादोनपञ्चकम् ।
स्कन्धस्थाने चारः कलासाधना क्रमयोगतः ॥ ५ ॥
लम्बनासूत्रयोगेन भवेद्रेखा तु नागरी ।
घण्टिकायां क्रमयोगे विमाने भूमिजेऽथवा ॥ ६ ॥
नामानि गुणदोषांश्च रेखाणां कथयाम्यतः ।
अनुक्रमेण वक्ष्यामि शृणु चैकाग्रमानसः ॥ ७ ॥
शशिनी शीतला सौम्या शान्ता चैव मनोरमा ।
शुभा मनोभवा वीरा कुमुदा पद्मशेखरा ॥ ८ ॥
ललिता लीलावती चैव त्रिदशा पूर्णमण्डला ।
पूर्णभद्रा च भद्राङ्गी षोडशैव प्रकीर्तिताः ॥ ९ ॥

त्रिखण्डाः १६

शान्तिनी च शुभा शान्ता त्रिदिवा देवदुर्लभा ।
बीभत्सा च शिवा सौम्या वीरभद्रा नारायणी ॥ १० ॥
सुविरा शेखरा रम्या पूर्णा च पूर्णभद्रिका ।
विजया तत्र विज्ञेया द्वात्रिंशच्चैव सङ्ख्यया ॥ ११ ॥

चतुष्खण्डाः १६

लक्ष्मिणी श्रीः सम्भवा च विदुरा पूर्णमण्डला ।
सुगन्धा मानसी शैला नन्दा नन्दाक्षी कौतुका ॥ १२ ॥
शान्तिर्लभा च कल्याणी सुभद्रा च भद्रेश्वरी ।
अष्टचत्वारिंशद्रेखा इत्थं चैव प्रकीर्तिताः ॥ १३ ॥

पञ्चखण्डाः १६

कामिनी कमला पद्मा संभ्रमा भ्रमशेखरा ।
शुभा च सारसम्भूता वैदेवी राजशेखरा ॥ १४ ॥

गान्धारी गन्धर्वा वृत्ता तिलका लोकसुन्दरी ।
महाभद्रा तथा चैन्द्रा चतुःषष्टिः स्युरैक्यतः ॥ १५ ॥

षट्खण्डाः १६

पुष्पिता पुष्पिका चम्पा समहा तिलकाऽद्भुता ।
सिद्धा सिद्धाङ्गी स्वरूपा क्रीडामणिस्तथापरा ॥ १६ ॥
नरनारा नरेश्वरी विरूपाक्षा महोद्भवा ।
सिद्धांसा सर्वमण्डला अशीतिः सङ्ख्यया मताः ॥ १७ ॥

सप्तखण्डाः १६

शुभा च शीतला गन्धा मालती हर्म्यसंयुता ।
मेघा मेघपदाऽनुजा कृष्णा च निर्मला परा ॥ १८ ॥
तेजाः प्रतापतेजाश्च कीर्तिरानन्दका तथा ।
सम्भूता ताश्च विज्ञेयाः षण्णवतिश्च सङ्ख्यया ॥ १९ ॥

अष्टखण्डाः १६

शान्ता च मुकुला नन्दा श्रिया भद्रा च नन्दना ।
शोभना च सुभद्राख्या सुता च कुलनन्दिनी ॥ २० ॥
गम्भीरा मधुरा चैव शेखरा शिखरोन्नता ।
महानीला रत्नाचला शतं च द्वादशोत्तरम् ॥ २१ ॥

नवखण्डाः १६

आल्हादा श्रिया नन्दा गोमती नामसुन्दरी ।
सुभद्रा भद्रिका भद्रा भद्राङ्गा भद्रमालिनी ॥ २२ ॥
सम्भूता भूतशरदा पताका कीर्तिवर्द्धिनी ।
माहेन्द्री सुन्दराख्याता अष्टाविंशोत्तरं शतम् ॥ २३ ॥

दशखण्डाः १६

कुमुदा भद्रका ध्वजा ध्वजाक्षी मकरध्वजा ।
सुपताका वीरभद्रा रूपभद्रा विनायका ॥ २४ ॥
वीरा च विक्रमा रम्या मन्मथा देवसुन्दरी ।
उग्रा कनकेशी चतुश्चत्वारिंशोत्तरं शतम् ॥ २५ ॥

एकादशखण्डाः १६

शाश्वती वरदा रम्या सुन्दरा मोदामोदकी ।
शिवा च सर्वलम्भा च विशाला कुलनायका ॥ २६ ॥
शिम्भा शिवतमा दिव्या शिवाङ्गना विश्वेश्वरी ।
विश्वरूपा समाख्याता षष्ठ्युत्तरशतं तथा ॥ २७ ॥

द्वादशखण्डाः १६

शान्तिकी विमला सूर्या वर्द्धना विजया तथा ।
वाञ्छिता वंशोद्भवा च वंशभूता तु रेखिता ॥ २८ ॥

वंशताराधिवास्या च वश्या माना शिखोद्भवा ।
वांस्या वसन्तोद्भवा च षट्सप्तत्युत्तरं शतम् ॥ २९ ॥

त्रयोदशखण्डाः १६

विद्याशोधनिका रम्या गौरी हंसी सरस्वती ।
सारङ्गी चैव सौरम्या शुकाग्राशोका शौचकी ॥ ३० ॥
कनका कनकावती कन्दर्पा कन्दर्पाश्रिता ।
कमला कलहंसी च द्विनवत्युत्तरं शतम् ॥ ३१ ॥

चतुर्दशखण्डाः १६

नाहिनी हस्तिनी चैव कुम्भिका गजमालिनी ।
गजी गजाङ्गा शेखरी राज्ञी चैव गजेश्वरी ॥ ३२ ॥
रत्ना रत्नगर्भा माल्या जया चोग्रतेजास्तथा ।
प्रिया वक्त्रा समाख्याता अष्टोत्तरशतद्वयम् ॥ ३३ ॥

पञ्चदशखण्डाः १६

द्वीपिनी सिंहनी सिंही सिंहरूपा सिंहोन्नता ।
सिंहग्रीवा च सिंहा च सिंहाख्या च सिंहेश्वरी ॥ ३४ ॥
महानादा नादवती सिंहनादा नादोद्भवा ।
सिंहाङ्गना च सिद्धा च षोडशी सकलेश्वरी ॥ ३५ ॥
समाख्याताश्चैव चतुर्विंशोत्तरशतद्वयम् ॥

षोडशखण्डाः १६

सौम्या नारायणी चैव रम्या नरा नरोत्तमा ।
नरेश्वरी नराज्ञा च नराङ्गा च नृत्येश्वरी ॥ ३६ ॥
वीरवती वीराङ्गी महावीरा वीरनायका ।
बीभत्सा च सती शान्ता चत्वारिंशच्छतद्वयम् ॥ ३७ ॥

सप्तदशखण्डाः १६

रम्या रम्येश्वरी गङ्गा कुमुदा कुमुदशेखरी ।
बीभत्सा पार्थिवा ज्ञेया कान्ता चैव मनोहरी ॥ ३८ ॥
स्वरूपा विक्रमा शान्ता मनोज्ञा सर्वतोमुखी ।
यज्ञभद्रा सुखासीना षट्पञ्चाशच्छतद्वयम् ॥ ३९ ॥

अष्टादशखण्डाः १६

अष्टादशस्कन्धस्थाने उत्पन्ना हलकादिकाः ।
एकादिकोद्भवा रेखाः प्रासादशिखरे मताः ॥ ४० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां चन्द्रकलादिषट्पञ्चाशच्छतद्वयरेखानिर्णयाधिकारो नाम चत्वारिंशदुत्तरशततमं सूत्रम् ॥

## (१४१) रेखार्णवस्कन्धोदयकलाभेदो नामैकचत्वारिंशदुत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच--

सव्यासं शिखरं कार्यं सकलः शिखरोच्छ्रयः ।
व्यासस्य कर्णयोर्मध्ये द्विघ्नं चैव त्रिभिर्हिताः ॥ १ ॥

सूत्रेरेखोच्छ्रिता रेखा सङ्ख्यायां पञ्चविंशतिः ।
नामानि कथयिष्यामि सव्यासादैर्यथाक्रमम् ॥ २ ॥

सव्यासा शोभना भद्रा सुरूपा सुमनोरमा ।
शुभा चैव तथा शान्ता कावेरी च सरस्वती ॥ ३ ॥

कोला च करवीरा च कुमुदा पद्मिनी तथा ।
कनका विकटा चैव रम्या च रमणी तथा ॥ ४ ॥

वसुन्धरा तथा हंसी विशाखा नन्दिनी तथा ।
जया च विजया चैव सुमुखा च प्रियानना ॥ ५ ॥

इत्येताः कीर्तिता रेखाः सङ्ख्यया पञ्चविंशतिः ।
उदयभेदोद्भवाः ख्याताः सपादकर्णमध्यतः ॥ ६ ॥

इत्युदयभेदाः ।

पञ्चखण्डादौ खण्डवृद्ध्या एकोनत्रिंशकावधि ।
खण्डचारे कला ज्ञेया अङ्कवृद्धिक्रमेण तु ॥ ७ ॥

एकद्वित्रिचतुःपञ्चषट्सप्ताष्टक्रमोद्भूताः ।
अनेन क्रमयोगेन एकोनत्रिंशकावधि ॥ ८ ॥

पञ्च खण्डे कलाश्चैव सङ्ख्यया दशपञ्च च ।
एकोनत्रिंशे पञ्च त्रिंशदुत्तरं चतुःशतम् ॥ ९ ॥

चन्द्रकल्पा कलावती कलधौता च रुचिरा ।
नलिनी माला कमला दुन्दुभिर्वनवेल्लिका ॥ १० ॥

रत्नचूला वृन्दारका त्रिशिखा नन्दा कौमुदी ।
नयना चक्रा चोन्मत्ता विशाला विभ्रमा लता ॥ ११ ॥

मृगाक्षी दीपिनी शशी कौमुदी मञ्जरी तथा ।
पूर्णरम्या च माहेन्द्री कीर्तिपताका तत्परे ॥ १२ ॥

त्रैलोक्यविजया चैव नामभिः पञ्चविंशतिः ।
कलारेखाः समाख्याताः सर्वकामफलप्रदाः ॥ १३ ॥

इति कलाभेदोद्भवा रेखाः ।

दशाधा मूलपृथुत्वे षड्भागः स्कन्ध उच्यते ।
पञ्चभागोऽथवा स्कन्धो भागो वामे च दक्षिणे ॥ १४ ॥

षड्बाहे दोषदः प्रोक्तः पञ्चाधश्च न शस्यते ।
षट्पञ्चमध्यतः स्कन्धे ऊर्ध्वभागे जिनाङ्किते ॥ १५ ॥

विभक्तिसूत्रक्रमतः स्कन्धाः स्युः पञ्चविंशतिः ।
नामान्यनुक्रमात्तेषां कथये तव साम्प्रतम् ॥ १६ ॥

समः शान्तः शुभः सौम्यो गन्धर्वः शङ्खवर्धनः ।
कीर्तिनन्दो महाभोगः सम्भ्रमो दिशिनायकः ॥ १७ ॥

रुद्रतेजाः सदाभ्यासो जनानन्दस्तथाद्रकः ।
यक्षो दक्षः क्षितिधरः समात्रः संयुतस्तथा ॥ १८ ॥

शेखरश्च प्रजापूर्णः प्रवर्तश्च प्रघातकः ।
रेखातिभूषणश्चैव विजयानन्द इत्यमी ॥ १९ ॥

स्कन्धास्तु नामतो ज्ञेयाः सङ्ख्याताः पञ्चविंशतिः ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां रेखार्णवस्कन्धोदयकलाभेदाधिकारो नामैकचत्वारिंशदुत्तरशततमं सूत्रम् ॥

---

## (१४२) प्रासादघण्टामलसारकनिर्णयो नाम द्वाचत्वारिंशदुत्तर-शततमं सूत्रम् ॥

विश्वकर्मोवाच—

प्रतिरथायुभा मध्ये वृत्ते चामलसारके ।
तत्तद्विभक्तिभागं च कथये यस्य यादृशम ॥ १ ॥
उदये तु तदूर्ध्वे च विभक्ते चतुरंशत: ।
ग्रीवा पादोनभागा स्यात्सपादं च तथाण्डकम् ॥ २ ॥
चन्द्रिका चैकभागेन भागा चामलसारिका ।
प्रासादस्याऽष्टमांशेन पृथुत्वं कलशाण्डके ॥ ३ ॥
युग्मप्रतिरथे कुर्यात् सुरतारं शिखरोद्भवे ।
चन्द्रस्य तु च संस्थाने कुर्यादामलसारिकाम् ॥ ४ ॥
द्वितीया पूर्वसंस्थाने शोपयेचार्धभागत: ।
नागरे लतिने कुर्यात् सान्धारे चैव मिश्रके ॥ ५ ॥
वासोर्ध्वे चोदयं कृत्वा विभक्तं पञ्चभागिकम् ।
कण्ठग्रीवाकुड्मलं च पद्मच्छत्रोपच्छत्रकम् ॥ ६ ॥
विमाने पुष्पके भौमे कुर्याद्विमाननागरे ।
इत्युक्तं चामलसारं प्रयुक्तं वास्तुवेदिभि: ॥ ७ ॥
द्विरष्टभागविस्तारे उच्छ्रयो दशभागत: ।
अन्त:पत्रं भवेद्भागं भागार्धे चैव पट्टिका ॥ ८ ॥
कर्णस्तु सार्धभागश्च तदूर्ध्वे पद्मपत्रिका ।
स्कन्ध: षड्भागिको ज्ञेय उच्छ्रये भागसङ्ख्यया ॥ ९ ॥
षड्भागश्च भवेत्स्कन्धो निर्गम: पञ्चभागिक: ।
द्राविडी च भवेद् घण्टा नासिकोपाङ्गशोभिता ॥ १० ॥
पृथुत्वं तु द्वादशांशमुच्छ्रये नवभागिकम् ।
कर्णस्तथा चैकभाग: स्कन्धाधं चाष्टभागिकम् ॥ ११ ॥
अष्टाश्रोर्ध्वे षोडशाश्रा ततो द्वात्रिंशदश्रका ।
मन्दारपुष्पकाकारा कार्या वराटघण्टिका ॥ १२ ॥
वलभी: संप्रवक्ष्यामि आमलैर्वामदक्षिणे: ।
उदयश्चैव षड्भागो विस्तारश्चाष्टभागक: ॥ १३ ॥
अधो भागे भवेत्कण्ठो वृत्तं चैव तु भागिकम् ।
कपाली ? भागपादं तु त्रिपादं कीर्तितं मुखम् ॥ १४ ॥
द्विभागोच्छ्रिता शाखा च विस्तरे अष्ट अन्तिका ।
विषमा मुकुटा कार्या पङ्क्तिश्च विषमा स्मृता ॥ १५ ॥
उभयामलमध्ये तु गजपृष्ठाकृतिस्तथा ।
कलशाश्च त्रय: कार्या आयते च शुभप्रदा: ॥ १६ ॥
सिंहावलोकने कुर्याद् घण्टां मन्दारपुष्पकम् ।
अर्कपुष्पोद्भवा: शस्ता दारुजे पुष्पकादय: ॥ १७ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां प्रासादघण्टामलसारकनिर्णयाधिकारो नाम द्वाचत्वारिंशदुत्तरशततमं सूत्रम् ॥

## (१४३) कलशप्रमाणलक्षणं त्रिचत्वारिंशदुत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच--

अथातः संप्रवक्ष्यामि कलशोत्पत्तिलक्षणम् ।
भद्रं तु सर्वकल्याणं कलशं स्थापयेद्यथा ॥ १ ॥

क्षीरोदार्णवके पूर्वं मथ्यमाने सुरासुरैः ।
तत्रोत्पन्नं सुतिलकं कलशं कामरूपिणम् ॥ २ ॥

प्रतिष्ठादिषु सर्वेषु सर्वपुण्यमहोत्सवे ।
संस्थाप्य पुण्यकलशं सर्वविघ्नोपशामकम् ॥ ३ ॥

अभिषिक्तो दिव्यघटैः फलपल्लवसंयुतैः ।
सर्वपापविनिर्मुक्तः श्रियं प्राप्नोति मानवः ॥ ४ ॥

क्षीरार्णवे समुत्पन्नं प्रासादस्याग्रजानकम् ।
प्रासादो देवतानां च नरेन्द्राणां च हर्म्यकम् ॥ ५ ॥

देवागारेषु सर्वेषु नृपाणां भवने तथा ।
संस्थाप्यं दिव्यकलशं विश्वकर्मवचो यथा ॥ ६ ॥

उत्पत्तिः कथिता चैवं लक्षणं शृणु साम्प्रतम् ।
विभक्तिभागसङ्ख्यानां प्रमाणं सूत्रमानतः ॥ ७ ॥

शैलजे शैलजं कुर्याद् दारुजे दारुजं तथा ।
धातुजे धातुजं चैव ऐष्टिके चैष्टिकं शुभम् ॥ ८ ॥

चित्रे चित्रं विधातव्यं हेमजं सर्वकामदम् ।
श्रेष्ठं सर्वत्र श्रेष्ठानां सुवर्णकलशध्वजम् ॥ ९ ॥

प्रासादस्याष्टमांशेन पृथुत्वं कलशाण्डके ।
षोडशांशैर्युतं श्रेष्ठं मध्यं द्वात्रिंशदंशतः ॥ १० ॥

मूलरेखा पञ्चमांशे पृथुत्वं तस्य कारयेत् ।
घण्टा विस्तारपादेन तत्पादेन युता पुनः ॥ ११ ॥

इत्थं कलशविस्तारमुच्छ्रयस्तस्य सार्द्धतः ।
नागरे लतिने शस्तं सान्धारे मिश्रके तथा ॥ १२ ॥

विमाननागरे छन्दे विमानपुष्पके तथा ।
धातुजे रत्नजे चैव रथारोहे च दारुजे ॥ १३ ॥

शैलजे च चतुर्थांशमैष्टिकादौ समस्तके ।
इत्युक्तं कलशं चैव सर्वकामफलप्रदम् ॥ १४ ॥

वराटे द्राविडे चैव भूमिजे च विमानके ।
प्रासादस्य तु षष्ठांशे समस्तवलभीषु च ॥ १५ ॥

तत्षड्‌शयुतं श्रेष्ठं कनिष्ठं तद्विहीनकम् ।
इत्थं मानं समुद्दिष्टं कर्तव्यं सर्वकामदम् ॥ १६ ॥
धर्मार्थकाममोक्षांश्च ईप्सितान् लभते ध्रुवम् ।
युक्तालङ्कारयुक्तं स्थाप्यं कलशं कामरूपकम् ॥ १७ ॥

उच्छ्रयो नवभागः स्यात् षड्भागा विस्तृतिस्तथा ।
अण्डकं चैकपादं स्यात् त्रिपदा पद्मपत्रिका ॥ १८ ॥
ग्रीवा पादोनभागा च सपादं द्वे च कर्णिके ।
मातुलिङ्गं त्रिभिर्भागैः कर्तव्यं सर्वकामदम् ॥ १९ ॥

उच्छ्रयः कथितश्चैवं विस्तरं शृणु साम्प्रतम् ।
पद्मपत्रं त्रिभिर्भागैस्तत्कन्दे च द्विभागकम् ॥ २० ॥
अण्डकं च घटाकारं कुर्यात्षड्भागविस्तृतम् ।
ग्रीवा मध्ये द्विभागाभ्यां चतुर्भिः कर्णिकान्तरम् ॥ २१ ॥
सार्धं द्व्यंशं बीजपूरमग्रे निम्नं सुलक्षणम् ।
प्रमाणं तत्र चाख्यातं कलशे सर्वकामदम् ॥ २२ ॥

इति नागरप्रासादकलशः ॥

अत ऊर्ध्वं पुनश्चाऽन्यं प्रवक्ष्येऽहमनुक्रमम् ।
पूर्ववच्च समुत्सेधो विस्तरः पूर्वकल्पितः ॥ २३ ॥
पद्मपत्रनिभाकारा त्रिपदा पद्मपत्रिका ।
कर्णिका पदमेकं तु सपादः पद्मसम्भवः ॥ २४ ॥
द्विभागं चाण्डकं कुर्याद् वृत्ताकारं सुलक्षणम् ।
ग्रीवा पादोनभागा स्याद् भागार्धं चार्कपट्टिका ॥ २५ ॥
लतिने च प्रकर्तव्या अर्धं वै पद्मपत्रिका ।
त्रिभागं बीजपूरं च अधिकस्य पद्माकृतिः ॥ २६ ॥
उच्छ्रयः कथितश्चेत्थं विस्तरं शृणु साम्प्रतम् ।
पद्मपत्रं त्रिभिर्भागैर्द्विभागा कर्णिका वृता ॥ २७ ॥
पद्माग्रे पत्रिका चैव चतुर्भागा च विस्तरे ।
षड्भागमण्डकं चैव ग्रीवा मध्ये द्विभागिका ॥ २८ ॥
अर्कपट्टी चतुर्भागा सार्धत्र्यंशा च पत्रिका ।
सार्धद्वयं बीजपूरं निम्नाग्रे पद्माकृति ॥ २९ ॥
पद्मनिबंधतिलकं मुक्तारत्नं सुवृत्तकम् ।
अर्केऽर्कपट्टिकां कुर्यात् पद्मपत्राग्र उन्नता ॥ ३० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां कलशप्रमाणलक्षणाधिकारो नाम त्रिचत्वारिंशदुत्तरशततमं सूत्रम् ॥

## (१४४) प्रासादध्वजदण्डलक्षणं चतुश्चत्वारिंशदुत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

अथातः संप्रवक्ष्यामि प्रासादध्वजलक्षणम् ।
दण्डोच्छ्रयप्रमाणं च पताकामण्डकीं तथा ॥ १ ॥
जया च विजया चैव वेणुकं घण्टचामरम् ।
कलशोर्ध्वे समाख्यातं कर्तव्यं सर्वकामदम् ॥ २ ॥
ध्वजाधारस्तम्भिका च कलशैश्च विभूषिता ।
वंशाधारो वज्रबन्धो वंशानां वेष्टनादिकम् ॥ ३ ॥
आदिशिलोद्भवं मानं ऊर्ध्वे च कलशान्तिके ।
तृतीयांशे प्रकर्तव्यो ध्वजादण्डः प्रमाणतः ॥ ४ ॥
अष्टमांशे ततो हीने मध्यमं शुभलक्षणम् ।
कनिष्ठं तद्भवेद् दण्डं ज्येष्ठतः पादवर्जितम् ॥ ५ ॥
प्रासादपृथुमानेन ध्वजादण्डं तु कारयेत् ।
मध्यमं दशमांशोनं कनिष्ठं चोनपञ्चमम् ॥ ६ ॥
मूलरेखाप्रमाणेन ज्येष्ठः स्याद् दण्डसम्भवः ।
मध्यमं द्वादशांशोनं षडंशोनं कनिष्ठकम् ॥ ७ ॥
एकहस्ते तु प्रासादे दण्डं पादोनमङ्गुलम् ।
अर्धाङ्गुला भवेद् वृद्धिः पञ्चाशद्धस्तकावधि ॥ ८ ॥
पृथुत्वं च प्रकर्तव्यं सुवृत्तं पर्वकान्वितम् ।
एकादिपर्वतः कार्यः पञ्चविंशतिकावधि ॥ ९ ॥
विषमपर्वोद्गमाश्च शस्ताः स्वस्वाभिधानतः ।
त्रयोदश स्युर्दण्डा वै पर्वभेदैस्तथोत्तमाः ॥ १० ॥
जयन्तः शत्रुमर्दनः पिङ्गलो नाम सम्भवः ।
श्रीमुखश्च तथानन्दस्त्रिदेवो दिव्यशेखरः ॥ ११ ॥
कालदण्डो महाकूटः सूर्याख्यः कमलोद्भवः ।
विश्वकर्मा समाख्याताः कर्तव्याः सर्वकामदाः ॥ १२
जयन्तस्त्वेकपर्वश्च त्रिपर्वः शत्रुमर्दनः ।
पिङ्गलः पञ्चपर्वश्च सप्तपर्वश्च सम्भवः ॥ १३ ॥
श्रीमुखो नवपर्वश्च आनन्दो रुद्रपर्वकः ।
त्रिदेवो विश्वपर्वश्च तिथिभिर्दिव्यशेखरः ॥ १४ ॥
मुनीन्दुभिः कालदण्डो महोत्कटो नवेन्दुतः ।
सूर्याख्यस्त्वेकविंशत्या कमलो वह्निनेत्रतः ॥ १५ ॥
तत्त्वपर्वो विश्वकर्मा दण्डनामानि पर्वतः ।
शस्ताशस्तत्वमेतेषामभिधानगुणोद्भवम् ॥ १६ ॥
मण्डकी तस्य कर्तव्या अर्धचन्द्राकृतिस्तथा ।
पृथुदण्डसप्तगुणा हस्तादि पञ्चकावधि ॥ १७ ॥

षड्गुणा च द्वादशान्तं शेषाः पञ्चगुणास्तथा ।
तथा त्रिभागविस्ताराः कर्तव्याः सर्वकामदाः ॥ १८ ॥
अर्धचन्द्राकृति चैव पक्षे कुर्याद् गगारकम् ।
वंशोर्ध्वे कलशं चैव पक्षे घण्टाप्रलम्बनम् ॥ १९ ॥
चामरैर्भूषितं कुर्याद् घण्टा पक्षे विचक्षणः ।
पताका पापहारी च शत्रुपक्षक्षयंकरी ॥ २० ॥
वंशमयस्तु कर्तव्यः सारदारुसमन्वितः ।
निर्व्रणः सुदृढः कार्यो ज्वालादोषविवर्जितः ॥ २१ ॥
समग्रन्थिर्विधातव्यो विषमपर्वसमन्वितः ।
ध्वजादण्डप्रमाणेन पताकां च प्रलम्बयेत् ॥ २२ ॥
पृथुत्वमष्टमांशेन त्रिशाखाग्रविभूषितम् ।
शिखाः पञ्च प्रकर्तव्या ध्वजाग्रे च विचक्षणैः ॥ २३ ॥
दिव्यवस्त्रपताका च अर्धचन्द्रैश्च किंकिणीः ।
... ... ... घुर्घुरान्वितम् ॥ २४ ॥
रेखार्धं त्रिभागोर्ध्वे सूत्रांशे पादवर्जितम् ।
ध्वजोन्नतिस्तु कर्तव्या ईशाने नैर्ऋतेऽथवा ॥ २५ ॥
प्रासादपृष्ठदशे तु प्रतिरथे च दक्षिणे ।
स्तम्भवेधस्तु कर्तव्यो भित्तेरष्टमांशके ॥ २६ ॥
निलयो यस्य देवस्य तस्य देवस्य वाहनम् ।
ध्वजा तु कारयेच्चैव मुखबिम्बप्रमाणतः ॥ २७ ॥
यस्य यस्य हि देवस्य प्रासाद आलयो हि सः ।
आयुधं तस्य देवस्य मुखबिम्बप्रमाणतः ॥ २८ ॥
ध्वजच्छन्देषु पीठेषु अग्रस्थानेषु दर्शयेत् ।
त्रीणि वाहनस्थानानि कलशाग्रेषु चाऽयुधम् ॥ २९ ॥
शैलजे चैव प्रासादे कलशस्य पदानुगम् ।
खादिरमिन्द्रकीलं तु प्रवेश्य कलशान्तिके ॥ ३० ॥
चतुरश्रमष्टाश्रं वा वृत्तं वाऽग्राग्रवर्तुलम् ।
सुदृढं निर्व्रणं कुर्याद् गर्भशुद्धं प्रमाणतः ॥ ३१ ॥
ध्वजावती स्तम्भिका च चतुरश्रा चाष्टांशका ।
– – – – – – – – – वृत्तोर्ध्वे चतुरश्रिका ॥ ३२ ॥
तदूर्ध्वं कलशं कुर्यात् सुरूपं लक्षणान्वितम् ।
विकुञ्चनचालिके द्वे वंशाधारस्य बाह्यतः ॥ ३३ ॥
वंशबन्धाश्च कर्तव्या हस्ते हस्ते तथा पुनः ।
हस्ते सपादे सार्धे वा द्विहस्ते वाऽन्यथोच्यते ॥ ३४ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां प्रासादध्वजदण्डलक्षणाधिकारो नाम चतुश्चत्वारिंशदुत्तरशततमं सूत्रम् ॥

———

## (१४५) समस्तध्वजानिर्णयो नाम पञ्चचत्वारिंशदुत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

वापीकूपतडागेषु कुण्डे च पुष्कराह्वये ।
ध्वजास्तत्रापि कर्तव्याः स्थानमानं च लक्षितम् ॥ १ ॥
पुरे च नगरे चैव कोटे कुर्याद् ध्वजारुहान् ।
राजगृहे रथे वापि ध्वजास्तत्राऽपि कारयेत् ॥ २ ॥
कटकादेश्च भवने महाराज्ञ्या ध्वजोद्भवः ।
यत्र राजा ध्वजा तत्र अनेकाकाररूपिणी ॥ ३ ॥
विधातव्या पताकाभिर्ध्वजा राज्ञोऽति वल्लभा ।
संग्रामारोहणे चैव गजारोहे मनोरमा ॥ ४ ॥
वसन्तादिकोत्सवेषु ध्वजाः सर्वेषु शोभनाः ।
नगरे पुरे ग्रामादौ होलिकाया महोत्सवे ॥ ५ ॥
राजप्रवेशे नगरे नृत्यमाडे महोत्सवे ।
दिव्यवस्त्रपताका च तोरणैर्वस्त्रसम्भवैः ॥ ६ ॥
ततस्ता वाद्यभवने कोटे नित्यं तथैव च ।
कपिशीर्षाङ्कुरे कुर्यात्पश्चैवाणथोच्यते ? ॥ ७ ॥
प्रतोल्याद्यालमालादिप्राकारे सर्वतस्तथा ।
ध्वजामालाकुलं कुर्यात् कैलाससदृशोपमम् ॥ ८ ॥
अर्कयुद्धोद्भवस्थाने पुष्पप्राकारसंकुले ।
अष्टषोडशद्वात्रिंशद् ध्वजा वै दिव्यवस्त्रतः ॥ ९ ॥
राजप्रवेशे कर्तव्यं प्रतोल्यग्रे सुशोभनम् ।
ध्वजाः स्तम्भगताः कीर्तिपताकाश्चैव हस्तिषु ॥ १० ॥
जयन्तश्च प्रतापाख्यः कीर्त्यानन्दो महोत्सवः ।
एकच्छत्रस्तथा कार्याः कीर्तिस्तम्भाश्च पञ्च हि ॥ ११ ॥
एकविंशतिहस्तैश्च जयन्तो नाम नामतः ।
उच्छ्रितश्च प्रतापस्त्रिचत्वारिंशत्करैस्तथा ॥ १२ ॥
पञ्चषष्ठिकरैश्चैव स भवेत्कीर्तिनन्दनः ।
सप्ताशीतिकरैश्चैव कामदस्तु महोत्सवः ॥ १३ ॥
नवोत्तरशतहस्तैरेकच्छत्रो भवेत्तथा ।
एवं पञ्च महास्तम्भा महाराजपुरे मताः ॥ १४ ॥
पृथुत्वं चतुर्थांशेन तत्षडंशेन चोर्ध्वतः ।
पञ्चमांशेनाधः कुर्यात् षडंशोच्छ्रयमानतः ॥ १५ ॥
तत्षडंशेन ऊर्ध्वेषु ऊर्ध्वमानं त्रिभमिकम् ।
वृत्ताकारं प्रकर्तव्यं घण्टाकलशसंयुतम् ॥ १६ ॥
दक्षिणे तत्र वै कीर्ति-पताका हस्तकास्तथा ।
आद्ये धर्मो द्वितीये तु यशः कीर्तिस्तदूर्ध्वतः ॥ १७ ॥
धर्मयशःकीर्तिदं स्यादेवं माडं त्रिभूमिकम् ।
पीठबन्धोपरि कुर्यादूर्ध्वे चैवं तु मेखला ॥ १८ ॥

दिक्पालल्लोकपालानां वसूनां च महत्तमाः ।
चतुःषष्टिश्च दिव्यानां स्वर्गिणां त्वेकविंशतिः ॥ १९ ॥
माडोपरि ध्वजादण्डपताकाः शत्रुमर्दनः ।
एवंविधं प्रकर्तव्यं कीर्तिस्तम्भस्य लक्षणम् ॥ २० ॥

इति कीर्तिस्तम्भलक्षणम् ।

तडागेषु च सर्वेषु खन्यमानेषु चादितः ।
महायशं तदा कुर्याद् ध्वजास्तम्भांस्तथैव च ॥ २१ ॥
आनन्दो दुन्दुभिः कान्तः श्रीमुखः सुमनोहरः ।
नवहस्तो भवेदाद्यः सप्तदशकरोऽन्ततः ॥ २० ॥
द्विहस्तान्तरतो भेदा आनन्दादिकसंज्ञकाः ।
मनोहरान्ताश्चाख्याता पञ्च स्तम्भा भवन्ति हि ॥ २३ ॥
तदग्रे कलशं कुर्याद् ध्वजावंशसमुद्भवम् ।
पताका पापहारी च शत्रुपक्षक्षयंकरी ॥ २४ ॥

इति तडागे ध्वजाधिकारः ।

समस्तासु च वापीषु ध्वजास्तम्भस्तथा भवेत् ।
दक्षिणे द्वारनिष्कासे ध्वजास्तम्भं प्ररोपयेत् ॥ २५ ॥
पीठबन्धः सुकर्तव्य एकद्वित्रिकरोन्नतः ।
ततः प्ररोपयेत् स्तम्भं सारदारुदृढोत्तमम् ॥ २६ ॥
त्रिहस्तः पञ्चहस्तश्च सप्तहस्तः समुन्नतः ।
ज्ञानमर्थश्च कामश्च त्रिभिश्चैतत् त्रिकं भवेत् ॥ २७ ॥
तदूर्ध्वे कलशं दिव्यं कर्तव्यं लक्षणान्वितम् ।
ध्वजावंशो भवेदूर्ध्वे पताका च प्रलम्बनम् ॥ २८ ॥
स्तम्भार्धे च भवेद्वंशो वंशतुल्या पताकिका ।
एवंविधः प्रकर्तव्यः वापीनां तु ध्वजोद्भवः ॥ २९ ॥

इति वापीध्वजाधिकारः ।

कुण्डेषु पुष्करे कूपे ध्वजास्तम्भः समुद्भवेत् ।
वापीस्तम्भप्रमाणेन कर्तव्यः सर्वकामदः ॥ ३० ॥
त्रिपञ्चसप्तहस्तान्ते उदकान्तरशतं शुभम् ।
तथा प्राचीशानमध्ये विभजेन्नवभागतः ॥ ३१ ॥
वामे त्रयं परित्यज्य दक्षिणे च त्रयं त्यजेत् ।
भुक्तिदश्चान्तरे भागे प्राचीतो मुक्तिदो भवेत् ॥ ३२ ॥
सुखावहश्च मध्यस्थो धर्मार्थकाममोक्षदः ।
एवंविधं प्रकर्तव्यं ध्वजानां लक्षणं शुभम् ॥ ३३ ॥

इति कुण्डपुष्करकूपध्वजाधिकारः ।

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां समस्तध्वजानिर्णयाधिकारो नाम पञ्चचत्वारिंशदुत्तरशततमं सूत्रम् ॥

---

# (१४६) ध्वजामाहात्म्यनिर्णयो नाम षट्चत्वारिंशदुत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

पातालभूधरा लोकास्तथा वै द्वीपसागराः ।
यत्र निवासात्मकानां धर्मस्थानमनोद्भवः ॥ १ ॥

त्रीणि कुर्यादूर्ध्वतश्च अधस्तात् त्रीणि यत्र च ।
स्वर्गारिततडागानि यशो देवकुलं कुलम् ॥ २ ॥

यत्र देवकुलाग्रे च ध्वजावंशश्च वंशकृत् ।
पताका पापहारी च शत्रुपक्षक्षयंकरी ॥ ३ ॥

पञ्चात्मपञ्चभूतानि पञ्चतत्त्वेन्द्रियाणि च ।
पञ्चैव लोकपालाः स्युः पताकाग्रे शिखास्तथा ॥ ४ ॥

पञ्चभिः पञ्चभिः पाल्यं धर्मो यत्र कुले भवेत् ।
पञ्चैः स्यात् हम्यमानैः धर्मारितत्कालारिजम् ? ॥ ५ ॥

पवनैर्दोल्यमानाश्च क्रीडयन्ति दिशो दश ।
फलन्ति फलकाले च हेन्यपापं पुण्योद्भवा ? ॥ ६ ॥

मण्डुकी मण्डुकाकारा कीर्तिस्योर्द्धमहोद्भवाः ? ।
मण्डपं दिव्यमाख्यातं जन्मजन्मनि कुलवासनम् ? ॥ ७ ॥

जयविजयपताका गङ्गार्कतनयाभवा ।
सुरनिलयोत्तराख्या या यस्ये पृथिव्यातके ? ॥ ८ ॥

कीर्ति घण्टा त्रिलोकेषु जन्म वा कुल उत्तमे ।
ध्वजा भूष्या चामरैश्च व्यञ्जकैः सवराटकैः ॥ ९ ॥

वंशपताकोत्तरस्थां तत्त्वंक्षे कुलसम्भवा ।
सहृदये हृदयात्मा च ब्रह्मज्ञान सउन्मीलता ? ॥ १० ॥

तदूर्ध्वे कलशं स्थाप्यं घोरसंसारतारकम् ।
महात्मानः पुरं यान्ति शुभं रत्नमयं तथा ॥ ११ ॥

ध्वजोदये तु तुष्यन्ति देवाश्च पितरस्तथा ।
सदा सा कुलसन्तानसुपुष्ट्यायुष्करी भवेत् ॥ १२ ॥

ध्वजारोपे कृतं पुण्यं दशाश्वमेधिकं भवेत् ।
सर्वपृथ्वीतीर्थपुण्यं ते व्रजन्ति शिवालयम् ॥ १३ ॥

पूर्वान्परांश्च पञ्चाशदात्मानं च तथाधिकम् ।
कुलमेकोत्तरशतं नरकात्तारयन्ति च ॥ १४ ॥

आचार्यैशिल्पिभिश्चैव यजमानो गृहानुगैः ।
स याति परमं स्थानं यत्र देवो महेश्वरः ॥ १५ ॥

काञ्चनेन विमानेन घण्टावितानशोभिना ।
स याति देवनिलयं सेव्यते चाऽप्सरोगणैः ॥ १६ ॥

शिल्पाचार्ययजमाना विष्णुलोकगतास्तथा ।
आत्मवंशं भूमितले तारयन्ति भवार्णवात् ॥ १७ ॥

बलीवर्दकर्मकराः सर्वे यान्ति शिवालयम् ।
मर्त्यलोके वृक्षशिलास्तिष्ठयुश्च शिवानुगाः ॥ १८ ॥

बलीवर्दधराः सर्वाः स्वेच्छया चैव सर्वतः ।
गच्छन्ति दिव्यरूपेण त्रिषु लोकेषु मध्यतः ॥ १९ ॥

लभन्ते चेप्सितं राज्यं स्वर्गं वा भूमिशासनम् ।
अमितां लभते लक्ष्मीं यथा सुरैर्निष्कण्टकम् ॥ २० ॥

यजमानशिल्पाचार्याः शिवसान्निध्यगाः सदा ।
अधस्ताच्च पुरे रम्ये कैलाससदृशे तथा ॥ २१ ॥

दिव्यरत्नमये चैव प्राकारैः काञ्चनैर्युते ।
सप्तकोटिगणैर्युक्ताश्चन्द्रार्कतारकावधि ॥ २२ ॥

सूत्रकारापवरका यजमानहितैषिणः ।
सुधया रत्नालेपे यान्ति ते परमां गतिम् ॥ २३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छाया ध्वजामाहात्म्यनिर्णयाधिकारो नाम षट्चत्वारिंशदुत्तरशततमं सूत्रम् ॥

## (१४७) सप्तप्रतिष्ठायज्ञमण्डपकुण्डविधिनिर्णयो नाम सप्तचत्वारिंशदुत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच--

अथातः संप्रवक्ष्यामि प्रतिष्ठाविधिसप्तकम् ।
तेषां मन्त्रक्रियाश्चैव कथयामि समासतः ॥ १ ॥

आदौ पादप्रतिष्ठा स्यात्तत्र कूर्मं च स्थापयेत् ।
शिलाप्रतिष्ठा द्वितिया पीठान्ते भित्तिमध्यतः ॥ २ ॥

उदुम्बरस्तृतीया च द्वारस्थापननामतः ।
पद्माकारा पद्मशिला प्रतिष्ठा सा चतुर्थिका ॥ ३ ॥

प्रासादे पञ्चमी चैवं पुरुषस्य निवेशनम् ।
षष्ठी च कलशारोपः प्रासादाग्रे च यो भवेत् ॥ ४ ॥

महायज्ञो महोत्साहो ध्वजानां तु समुच्छ्रयः ।
सा सप्तमी प्रतिष्ठा च प्रयुक्ता वास्तुवेदिभिः ॥ ५ ॥

इति पुण्याहसप्तकम् ।

भूम्यारम्भपदे कूर्मे शिलायां सूत्रपातने ।
खुरे द्वारोदये स्तम्भे पट्टे पद्मशिलासु च ॥ ६ ॥

शुकाग्रे पुरुषे चैव घण्टायां कलशोच्छ्रये ।
आख्यातानि ध्वजारोपे शान्तिकानि चतुर्दश ॥ ७ ॥

इति चतुर्दशशान्तिकानि ।

प्रासादादग्र ईशाने चोत्तरे यज्ञमण्डपम् ।
हस्तास्त्रयः पञ्चसप्तनवचैकादशाऽन्तरम् ॥ ८ ॥

त्रयोदश तथा हस्ताः षोडशाऽथ तथोत्तमम् ।
चतुरश्रं समं शुद्धं भुजकर्णविशोधितम् ॥ ९ ॥

तथा भित्तिपुटं कृत्वा नवांशां मध्यवेदिकाम् ।
षोडशस्तम्भसंयुक्तं चतुर्द्वारोपशोभितम् ॥ १० ॥

तार्ऽयंशोन्नता वेदी दर्शितोदरमस्तका ।
पृथक् च विदिते स्थाने मण्डलं च समुद्धरेत् ॥ ११ ॥

उदयार्धान्तरे वेद्याः करमात्रं च विस्तृतम् ।
कुण्डकानि तथा दिक्षु कर्तव्यानि क्रमेण तु ॥ १२ ॥

विताने पुण्यकलशाः पद्मपुष्पोपशोभिताः ।
विदिक्षु दिक्षु मध्ये च ध्वजामालाकुलं तथा ॥ १३ ॥

मण्डपस्य चतुर्द्वाःसु ललाटोच्छ्रयतोरणम् ।
प्लक्षोदुम्बरन्यग्रोधाश्वत्थाः पूर्वादितः क्रमात् ॥ १४ ॥

तत्तत्काष्ठमयान् कुर्यात् स्तम्भान्वै तोरणोदये ।
उत्तरङ्गे त्रिशूलानि कर्तव्यानि क्रमेण तु ॥ १५ ॥

इन्द्रगोपोपमाः कृष्णाः पीताः सर्षपपुष्पवत् ।
श्वेताश्चैव पताकाश्च पूर्वादिक्रमयोगतः ॥ १६ ॥

मध्ये च सर्ववर्णाश्च पताकाश्च समुच्छ्रयेत् ।
वितानैर्विविधाकारैः पद्मपत्रोपशोभितैः ॥ १७ ॥

मण्डपे दिव्यमाख्यातं पुरे च निलयोपमम् ।
चतुःकर्णेषु वेद्याश्च षडंशोन्नतवेदिकाः ॥ १८ ॥

तासामुत्तरपार्श्वे तु कुर्याद्वै स्नानमण्डपम् ।
कार्यं च कामदं मूलमण्डपस्य त्रिभागतः ॥ १९ ॥

इति यज्ञमण्डपाधिकारः ।

विदिक्षु दिक्षु कुण्डानि कर्तव्यानि क्रमेण च ।
उदयार्धान्तरं वेद्याः करमात्रश्च विस्तरः ॥ २० ॥

हस्तमात्रं खनेत्कुण्डं विस्तृतं हस्तमेव च ।
मेखला त्र्यङ्गुलैश्चैव कर्तव्या क्रमयोगतः ॥ २१ ॥

तथाश्वत्थदलाकारा कुण्डनाभिश्च विस्तृता ।
उत्तराभिमुखं कृत्वा गजोष्ठसदृशानना ॥ २२ ॥

कुण्डयोनिस्तु कर्तव्या सर्वकामफलप्रदा ।
इत्थं गुणाः समाख्याताः कुण्डदोषानथ शृणु ॥ २३ ॥

उत्तानमर्थनाशं च तथा चिन्तामधोमुखम् ।
विकर्णं रोगबाहुल्यमिति दोषास्तथा स्मृताः ॥ २४ ॥

चतुरस्रं भवेत्पूर्वे आग्नेय्यां च भगोपमम् ।
अर्धचन्द्रसमं याम्ये पञ्चकोणं तु नैऋते ॥ २५ ॥

वारुणे वर्तुलाकारं वायव्ये रसकोणकम् ।
सौम्ये पद्मदलाकारमैशान्यां चाष्टकोणकम् ॥ २६ ॥

मध्ये च दर्पणाकारं कुण्डान्युक्तानि वै नव ।
मध्यस्थाने वेदिकावत् कुर्याद्वै कुण्डकाष्टकम् ॥ २७ ॥

साधारणेषु यज्ञेषु शस्यते कुण्डपञ्चकम् ।
आदौ चाऽयुतहोमे तु कुण्डं चैककरं स्मृतम् ॥ २८ ॥

अयुताधिकलक्षार्धे कुण्डं कुर्याद् द्विहस्तकम् ।
लक्षहोमे त्रिहस्तान्तं दशलक्षे चतुष्करम् ॥ २९ ॥

त्रिंशल्लक्षे पञ्चहस्तं कोट्यर्धे षट्करं मतम् ।
सप्ततिलक्षेऽद्रिकरं कोटिहोमे कराष्टकम् ॥ ३० ॥

ग्रहादिसर्वपूजासु कुण्डं स्यादेकहस्तकम् ।
अङ्गुलत्रयतो वृद्धिः शूद्रादेर्ब्राह्मणान्ततः ॥ ३१ ॥

निरीक्ष्या प्रेक्षणं चैव तडनषडणस्तथा ? ।
अधिकरणं वेधेन कुटिलसमस्ततः ? ॥ ३२ ॥

कुण्डार्चनां कण्ठप्रधानरेखा चतुःषष्ठिवज्रिकरणकः ।
अष्टादश कुण्डविस्तरः न्यासउपनः ? ॥ ३३ ॥

स्वस्तिश्री वह्निआवाहनम् । आव्हाहन शान्ततेयगो
रुद्रपत्यौ रेखात्रयं प्रकर्तव्यम् ॥ ३४ ॥

ब्रह्माऽऽद्यायां तु रेखायां द्वितीयायां जनार्दनः ।
शिवःस्थितस्तृतीयायां हूंकारे सर्वदेवताः ॥ ३५ ॥

ॐ ह्रां ह्रीं ह्रूं वह्निमूर्तये नमः स्वाहा ।
ॐ स्वाहा पनये नमः । हुंति हवनांतान्यकारेषु देशयेत् ॥ ३६ ॥

उत्तरवेद्यां तु मध्योयः सह्ययो समवर्पया ? ।
अनये सूत्रवेदेयं स्थण्डिले तु शय्यासनम् ॥ ३७ ॥

शिल्पिनं पूजयेत्तत्र वस्त्रालङ्कारभूषणैः ।
तथा गां शिल्पिने दद्यादलङ्कारसमन्विताम् ॥ ३८ ॥

लक्षणोद्धारकं कुर्यात् शास्त्रदृष्टेन कर्मणा ।
पञ्चगव्यैस्तथा स्नात्वा पञ्चकषायसंयुतैः ॥ ३९ ॥

क्षीरवृक्षत्वचाभिश्च पञ्चघटैरहीनकैः ।
चत्वारो विप्रहस्तेषु सूत्रधारे तु पञ्चमः ॥ ४० ॥

शतसाहस्रकलशैः स्नानं तत्र समाचरेत् ।
मन्त्रं चैव समुच्चार्य नानार्थेषु विघ्नापहम् ॥ ४१ ॥

समुद्रो ज्येष्ठ सलिला समुद्रो ज्येष्ठ न सलिला समुद्रो ज्येष्ठस्त सलिला अपांदेवी
उत्तराश्रवन्ति या सृता वरणानां चतुष्टयम् ? ॥ ४२ ॥

मन्त्रानेतान्समुच्चार्य स्नानं च देवताकृतेः ।
शतसाहस्रकलशैः कृत्वा देवं च स्थापयेत् ॥ ४३ ॥

भेरीमृदङ्गवाद्यादिशङ्खशब्दैश्च मङ्गलैः ।
वेददुन्दुभिनिस्वानैर्नृत्यगीतसमन्वितैः ॥ ४४ ॥

आरोपयेद्रथे देवं कृत्वा च त्रिप्रदक्षिणम् ।
प्रविशेदुत्तरद्वारात् स्नानवारि न लङ्घयेत् ॥ ४५ ॥

लङ्घिते दोषमाप्नोति विघ्नं कष्टमहाभयम् ।
आनयेदीशानवेद्यां तुलामारोपयेत्ततः ॥ ४६ ॥

उत्तरेऽङ्घ्री शिरो याम्ये पूर्वे वा पश्चिमे तथा ।
कलशं तच्छिरो देशे वामे स्याद् दर्पणः शुभः ॥ ४७ ॥

व्यजनं दक्षिणे देशे पादस्थाने कमण्डलुम् ।
आच्छादयेद् दिव्यवस्त्रैर्विताने दिव्यवस्त्रके ॥ ४८ ॥

स्थण्डिलानि ततो ह्यष्टौ द्वारयोः कलशानि च ।
अकृष्टं चेतिमन्त्रेण द्वारपालान् निवेशयेत् ॥ ४९ ॥

बलिकर्म प्रकुर्वीत दिक्पतींश्च क्षमापयेत् ।
गन्धधूपैश्च बलिभिरिन्द्रादीन् दशदिक्षु च ॥ ५० ॥

द्वे द्वे चाहुती हवनामस्वजाप्यश्च मेव च ? ।
इत्यनुक्रमं कुण्डेश्च ऋत्विजानां तु सङ्ख्यया ॥ ५१ ॥

ब्रह्माचार्य ऋत्विजश्च द्वारपालास्तथा परे ।
चत्वार इति कुण्डेषु ऋत्विजश्चैव षोडश ॥ ५२ ॥

अष्टौ तु द्वारपालाश्च दिशांपालास्तथोत्तमाः ।
एवंविधः प्रकर्तव्यो मण्डपे तु महोत्सवः ॥ ५३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां सप्तप्रतिष्ठायज्ञमण्डपकुण्डविधिनिर्णयाधिकारो नाम सप्तचत्वारिंशदुत्तरशततमं सूत्रम् ॥

## (१४८) मण्डलविधिर्नामाष्टचत्वारिंशदुत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

मण्डलेषु च सम्पूज्या निर्वाणदीक्षितादिषु ।
विधिज्ञेयानि तत्रैव मण्डलानि भवन्ति हि ॥ १ ॥

सर्वतोभद्रं भद्रं च लतालिङ्गोद्भवं तथा ।
लिङ्गं च गौरीतिलकं अर्धचन्द्रं च स्वस्तिकम् ॥ २ ॥

योन्याकारं न च वाच्यं चापाकारं च टङ्कमम् ।
गजदन्तं पुरुषाक्षं चतुरश्राणि भेदतः ॥ ३ ॥

एकहस्तं द्विहस्तं वा हस्तत्रयमथोच्यते ।
ज्येष्ठमध्यकनिष्ठानि उदितानि त्रिधा क्रमात् ॥ ४ ॥

ब्रह्मविष्ण्वर्कपूजासु सर्वभद्रं तु कामदम् ।
भद्रं तु सर्वदेवानां भुवनानां त्रयं यथा ॥ ५ ॥

लतालिङ्गोद्भवं पूज्यं लिङ्गं चैव शिवात्मनः ।
पूजायां सर्वदेवानां गौरीतिलकभद्रकम् ॥ ६ ॥

अर्धचन्द्रं तडागेषु चापाकारं तथैव च ।
टंकाभं स्वस्तिकं चैव वापीकूपेषु पूजितम् ॥ ७ ॥

जलपट्टपीठिकासु योन्याकारं तु कामदम् ।
गजदन्तं महादुर्गे प्रशस्तं मण्डलं शुभम् ॥ ८ ॥

वर्णार्थं च शिलापृष्ठे श्वेतं कुर्याच्च मण्डलम् ।
रक्तं मिश्रं च सिन्दूरैः पीतं मिश्रं हरीतकैः ॥ ९ ॥

हरिद् मिश्रं बालरसैः श्वेतं दुग्धं वशादिजम् ।
इत्येतद्वर्णमाकारे मण्डलार्थं प्रयुज्यते ॥ १० ॥

चतुरश्रं समं कृत्वा भुजकर्णविशोधितम् ।
भाजयेत् षोडशभागैः षट्पञ्चाशच्छतद्वयम् ॥ ११ ॥

मध्ये भागचतुष्के च पद्मं चैव प्रदापयेत् ।
तदनन्तरपङ्क्तौ च भवेत् पद्मार्धवीथिका ॥ १२ ॥

पद्मतुल्यानि द्वाराणि चतुर्दिक्षु प्रकल्पयेत् ।
स्वस्तिवापीलताभद्रं द्वे द्वे च प्रतिकर्णकम् ॥ १३ ॥

शस्तं द्वारं चतुर्भागं द्वारकण्ठस्तदर्धतः ।
काकिलं वै कण्ठसमं द्वारशोभिकपालकम् ॥ १४ ॥

द्वारस्योभयपक्षे तु वापी स्यादष्टकोष्ठकैः ।
वीथीकर्णे भवेद् भद्रं पञ्चकोष्ठसमन्वितम् ॥ १५ ॥

तस्याग्रे स्वस्तिकं कुर्यात् पादतश्चतुरश्रकम् ।
तस्याग्रे तु भवेद् भद्रं स्वस्तिकं च तदन्ततः ॥ १६ ॥

वापीभद्रकयोर्मध्ये लता कोष्ठचतुष्कतः ।
अष्टौ वाप्यश्च भद्राणि लताश्च स्वस्तिकानि च ॥ १७ ॥

चतुर्द्वारसमायुक्तं वीथिकान्तरजन्मे ? ।
सर्वतोभद्रमेवं तु कर्तव्यं चैव मानतः ॥ १८ ॥

मध्यं द्व्यष्टककोष्ठैश्च चतुष्कस्य न कारयेत् ।
द्वात्रिंशद्रेखिका बाह्येऽष्टपत्राणि द्वितीयके ॥ १९ ॥

केशराणि तृतीये च नवबीजांश्चतुर्थके ।
एवंविधं प्रकर्तव्यं सर्वदैवतपूजनम् ॥ २० ॥

तीर्थानि नवपीतानि चतुर्धा केशराणि च ।
रक्तानि पद्मपत्राणि बाह्यरेखा चतुर्विधा ॥ २१ ॥

सत्वं रजस्तमश्चेति त्रिवृत्ता वीथिका भवेत् ।
चतुर्द्वाराणि श्वेतानि वीथिकर्णान्वितानि च ॥ २२ ॥

चतुर्भद्रा भवेद्रेखा श्वेतानां च चतुष्टयम् ।
पीतं स्वस्तिचतुष्कं च रक्तानां च चतुष्टयम् ॥ २३ ॥

पीतवर्णा लता कार्या वाप्यर्धहरिताऽप्यथ ।
अर्धपीतां ततः कुर्यात्कर्णान्ते वृत्तबाह्यतः ॥ २४ ॥

तथा द्व्यङ्गुलवृत्तानि सत्त्वरजस्तमांसि च ।
रजो ब्रह्मा तमो विष्णुः सत्त्वं चैव महेश्वरः ॥ २५ ॥

इति सर्वतोभद्रमण्डलम्

एकद्वित्रिचतुःपञ्चषड्रात्रैश्चाऽधिवासनम् ।
सुमुहूर्ते शुभे लग्ने प्रतिष्ठाप्यादि चाऽऽनयेत् ॥ २६ ॥

स्वमानीतो यदा देवो निमित्तं लक्षयेत्तदा ।
शुभे च सिद्धिमाप्नोति अशुभे च वधादिकम् ॥ २७ ॥

रत्नन्यासं ततः कुर्याल्लिङ्गार्चायां विचक्षणः ।
धात्वौषधीश्च रत्नानि धान्यान्यष्ट तथैव च ॥ २८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां मण्डलविध्यधिकारो नामाष्टचत्वारिंशदुत्तरशततमं सूत्रम् ॥

## (१४९) रत्नन्यासप्रतिष्ठा नामैकोनपञ्चाशदुत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

धात्वौषधीश्च रत्नानि धान्यान्यष्ट तथैव च ।
वक्ष्ये मन्त्रानुक्रमं च यथोक्तं च पृथग् बुधैः ॥ १ ॥

ॐ इन्द्रस्तु महतां दीप्तः सर्वदेवाधिपो महान् ।
वज्रहस्तो गजारूढस्तस्मै नित्यं नमो नमः ॥ २ ॥

ॐ अग्निस्तु महतां दीप्तः सर्वतेजोऽधिपो महान् ।
मेषारूढः शक्तिहस्तस्तस्मै नित्यं नमो नमः ॥ ३ ॥

ॐ यमस्तु महतां दीप्तः सर्वप्रेताधिपो महान् ।
महिषस्थो दण्डहस्तस्तस्मै नित्यं नमो नमः ॥ ४ ॥

ॐ निर्ऋतिस्तु महादीप्तः सर्वक्षेत्राधिपो महान् ।
खड्गहस्तः शिवारूढस्तस्मै नित्यं नमो नमः ॥ ५ ॥

ॐ वरुणस्तु महादीप्तः सर्ववार्यधिपो महान् ।
नक्रारूढः पाशहस्तस्तस्मै नित्यं नमो नमः ॥ ६ ॥

ॐ वायुस्तु महतां दीप्तः सर्वमण्डलपो महान् ।
ध्वजाहस्तो मृगारूढस्तस्मै नित्यं नमो नमः ॥ ७ ॥

ॐ कुबेरस्तु महादीप्तः सर्वयक्षाधिपो महान् ।
निधिहस्तो गजारूढस्तस्मै नित्यं नमो नमः ॥ ८ ॥

ॐ ईशानस्तु महादीप्तः सर्वयोगाधिपो महान् ।
शूलहस्तो वृषारूढस्तस्मै नित्यं नमो नमः ॥ ९ ॥

ॐ ब्रह्मा तु महतां दीप्तः सर्वसृष्ट्यधिपो महान् ।
हंसारूढः पद्महस्तस्तस्मै नित्यं नमो नमः ॥ १० ॥

ॐ विष्णुस्तु महतां दीप्तः सर्वयोगाधिपो महान् ।
तार्क्ष्यारूढो गदाहस्तस्तस्मै नित्यं नमो नमः ॥ ११
अनेन क्रमयोगेन रत्नन्यासं तथोत्तमम् ।
पूर्वादिक्रमयोगेन रत्नधात्वौषधानि च ॥ १२ ॥

वज्रवैडूर्यमुक्ताश्च इन्द्रनीलसुनीलकम् ।
पुष्परागं च गोमेदं प्रवालं पूर्वतः क्रमात् ॥ १३ ॥
हेमं रौप्यं ताम्रकांस्ये रीतिकां नागवङ्गकौ ।
पूर्वादिक्रमतश्चैव आयसं चैवमन्ततः ॥ १४ ॥
वचा वह्निः सहदेवी विष्णुकान्ता च वारुणी ।
संजीवनी ज्योतिष्मती ईश्वरी पूर्वतः क्रमात् ॥ १५ ॥

यवो व्रीहिस्तथा कङ्गुर्जूर्णाद्याश्च तिलैर्युता ।
शाली मुद्गा समाख्याता गोधूमाश्च क्रमेण तु ॥ १६ ॥

यद्देवाभरणं पूजा वस्त्रालङ्कारभूषणम् ।
स्नानमण्डपोपस्करान् स्थालीपात्रं तु शिल्पिने ॥ १७ ॥

शलाका मधुपात्रं च छत्रिकाद्यं च शिल्पिने ।
स्नानशय्या ध्वजाद्यं च दातव्यं चैव शिल्पिने ॥ १८ ॥

सर्वं यज्ञोपस्करं च शय्यावितानकादिकम् ।
अन्योपस्करकं सर्वमाचार्याय प्रदापयेत् ॥ १९ ॥

इति यज्ञमण्डपविसर्जनम् ।

अतश्चानन्तरं कुर्यादस्य चैव महोत्सवम् ।
नृत्यैश्च गीतवादित्रैः फलपुष्पवितानकैः ॥ २० ॥

प्रकीर्णविविधास्वाद्यैः फलैश्चैवमनेकशः ।
द्वारनालैः सुशोभाढ्यैः पुष्पवितानसंकुलैः ॥ २१ ॥

कदलीस्तम्भशोभाढ्यैर्ध्वजामालाकुलैस्तथा ।
रम्भापत्रैः प्रेक्षणीयैर्लास्यताण्डवकादिकैः ॥ २२ ॥

आरात्रिकैर्गन्धधूपैर्गीतकामलकायकैः ।
भोगैश्चैवातिभोगैश्च कर्पूराद्यैश्च कुङ्कुमैः ॥ २३ ॥

कूर्मादौ च तथा कुर्याच्छिलासंस्थापने तथा ।
द्वारे पद्मशिलायुक्तौ पुरुषस्य निवेशने ॥ २४ ॥

कलशे च ध्वजारोपे प्रतिष्ठासप्तके तथा ।
शान्तिका द्विसप्तके च प्रयुक्तं वास्तुवेदिभिः ॥ २५ ॥

शुभं चेदं कारयेद्यः प्रतिष्ठासप्तकादिकम् ।
स याति परमं लोकं यत्र देवः सदाशिवः ॥ २६ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां रत्नन्यासप्रतिष्ठाधिकारो नामैकोनपञ्चाशदुत्तरशततमं सूत्रम् ॥

---

## (१५०) प्रासाददेवतान्यासो नाम पञ्चाशदुत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

प्रासादे देवतान्यासं स्थापयेच्च समस्ततः ।
तदनुक्रमतो वक्ष्ये शृणुचैकाग्रमानसः ॥ १ ॥

पादे पराक्रमं देवं प्रतिष्ठाप्य भूमध्यतः ।
प्राग्भारोद्भवं देवं शिलायां च तदूर्ध्वतः ॥ २ ॥

शिलोद्भवोद्धृता चादौ दंष्ट्राग्रा भूः समस्तिका ।
वराहरूपेण खरशिलायां धरणीधरः ॥ ३ ॥

सूत्रपातं समासार्य स्थाप्यश्चिन्तामणिस्तथा ।
आद्यस्तरोर्ध्वदेशे च तत्र नागकुलानि च ॥ ४ ॥

प्रतिष्ठाप्याः पन्नगाश्च स्थाने पोत्यभिधानके ।
तदूर्ध्वे कुम्भकाख्ये च संस्थाप्या जलदेवताः ॥ ५ ॥

पुष्पकं च तदूर्ध्वे तु चिप्पिका पुष्पकान्विता ।
संस्थाप्याः किन्नरास्तत्र चिप्पिकापुष्पकाकुलाः ॥ ६ ॥

जाड्यकुम्भे स्थितो नन्दी कर्णाल्यां च ततो हरिः ।
गजपीठे गणेशश्च अश्वपीठे तथाऽश्विनौ ॥ ७ ॥

नरपीठे नरांश्चैव स्थापयेत् क्रमयोगतः ।
क्षमां देवीं च खुरके स्रष्टारं कुम्भके तथा ॥ ८ ॥

निर्गमोद्गमसीमायां ततः सृष्टिर्विनिर्गता ।
सन्ध्यात्रयं प्रतिष्ठाप्यं क्रमतो भद्रकत्रये ॥ ९ ॥

कलशे च स्थिता देवी पार्वती तु हरप्रिया ।
धनदोऽन्तरपत्रे च प्रतिष्ठाप्यो यथाक्रमम् ॥ १० ॥

कपोताल्यां गन्धर्वा अन्तःपत्रे च किन्नराः ।
शारदा मञ्चिकायां च जङ्घायां मेरुरेव च ॥ ११ ॥

लोकपालाश्च दिक्पालाः सुराश्चाथ गणेश्वराः ।
उदीच्यामिन्द्रदेवश्च सावित्री भरणे स्थिता ॥ १२ ॥

भाराधारः शिरावस्यां पट्टे देव्यश्च संस्थिताः ।
विद्याधराः कपोताल्यामन्तःपत्रे सुरास्तथा ॥ १३ ॥

पर्जन्यः कूटच्छाद्ये तु छाद्यनिर्गमसंयुते ।
तदनन्तरतो देवान् स्थापयेद् गर्भमध्यतः ॥ १४ ॥

शाखयोश्चन्द्रसूर्यौ तु त्रिमूर्तीश्चोत्तरङ्गके ।
उदुम्बरे स्थिता यक्षा अश्विनावर्धचन्द्रके ॥ १५ ॥

कोणिकायां धराधारः क्षितिश्चोत्तानपट्टके ।
स्तम्भेषु पर्वताः प्रोक्ता आकाशं च करोटके ॥ १६ ॥

जालके ऋषिसङ्घाश्च सुरा मध्ये प्रतिष्ठिताः ।
मकर जाह्नवी गङ्गा चण्डेशो गोमती तथा ॥ १७ ॥

ब्रह्मा विष्णुस्तथा सूर्य ईश्वरी च सदाशिवः ।
उरःशृङ्गे तथा पञ्च भद्रभद्रेष्वयं विधिः ॥ १८ ॥

शिखरे चेश्वरं विद्याच्छिखायां तु सुराधिपम् ।
ग्रीवायां त्वम्बरं देवमण्डके च निशाकरम् ॥ १९ ॥

पद्माक्षं पद्मपत्रे चाऽमलमामलसारके ।
कलशे च स्थितो रुद्रो व्योमव्यापी सदाशिवः ॥ २० ॥

सद्यो वामस्तथा घोरस्तत्पुरुष ईश एव च ।
कर्णे प्रतिरथे चैव रथे पञ्चरभद्रयोः ॥ २१ ॥

पञ्चवक्त्राणि पञ्चाङ्गसङ्ख्या भद्रान्तगा भवेत् ।
इत्येते च समाख्याताः प्रासादे त्रिदशाः खलु ॥ २२ ॥

न्यूनाधिकं स्थिता यत्र देवास्तत्रैव ते पुनः ।
हीने हीनाः प्रतिष्ठाप्या अधिके चाधिकाः शुभाः ॥ २३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां प्रासाददेवन्यासाधिकारो नाम पञ्चाशदुत्तरशततमं सूत्रम् ।

---

## (१५१) सूत्रधारपूजाविधिर्नामैकपञ्चाशदुत्तरशततमं सूत्रम्

विश्वकर्मोवाच–

इत्यनन्तरतो वत्स पूजित्वा सूत्रधारकम् ।
यज्ञमण्डपमध्ये च मण्डलं कारयेच्छुभम् ॥ १ ॥
पट्टाच्छादनकं कृत्वा स्वस्तिकं च समालिखेत् ।
सूत्रासने सूत्रधारं पादौ प्रक्षाल्य स्थापयेत् ॥ २ ॥
कुङ्कुमालेपनं कृत्वाऽऽवृणुयाद् दिव्यवस्त्रतः ।
मुकुटं कुण्डले सूत्रं कङ्कणं दिव्यमुद्रिकाम् ॥ ३ ॥
हारकेयूरसंयुक्तं पादाभरणकादिकम् ।
देयं स्त्रीनरयुग्मस्य पुत्रपात्रयुतस्य च ॥ ४ ॥
गृहोपस्करकं सर्वं गोमहिष्यश्वकादिकम् ।
दासीकर्मकरांश्चैव यत्सुखासनकादिकम् ॥ ५ ॥
ग्रामं चैव ततो दद्यात् कृष्णां वा भूमिमुत्तमाम् ।
अन्ये ये पूजनीया वै उत्तमाट्टंकपाणिकाः ॥ ६ ॥
वस्त्रप्रावरणैः सर्वे उत्तमादिक्रमेण तु ।
सर्वेषां टङ्कपाणीनां दत्वा दानं च पुण्यकृत् ॥ ७ ॥
सर्वेषां कर्मकराणां धनं दद्याच्च सर्वतः ।
वस्त्रप्रावरणान् कृत्वा पुण्यदानं च सर्वथा ॥ ८ ॥
नाऽपकुर्याद्यथा वत्स सूत्रधारः स्वकर्मसु ।
तस्मिंस्तुष्टे च सन्तुष्टा ब्रह्मविष्णुहरादयः ॥ ९ ॥
भोजनीयास्तत्र सर्वे मिष्टान्नैः खण्डपाचितैः ।
ताम्बूलं लेपनं दद्याद्यावत् संतुष्टिमाप्नुयुः ॥ १० ॥
सूत्रधारट्टङ्कहस्तास्तुष्टा यत्र गृहेषु च ।
तत्र तुष्टः शिवो देवस्त्रिदशैश्चैव संयुतः ॥ ११ ॥
तत्तुष्टे[1] च जगत्तुष्टं त्रैलोक्यं सचराचरम् ।
सर्वतीर्थोद्भवं पुण्यं सर्वदेवप्रतोषणम् ॥ १२ ॥
संतुष्टचेतसः कृत्वा याचनीयं करोदकम् ।
अस्ति पुण्य स्वयं दाता देयं निष्केवलावयम् ॥ १३ ॥
सूत्रधारापण्यावेषु आत्महस्तं तु याचितम् ।
मम सन्तानेन मोक्षं दद्याद् भवप्लवान्तकम् ॥ १४ ॥
मया विरूपं व्यक्तं तु अदत्वंकपातरूपकम् ? ।
क्षमावद्भिः प्रकर्तव्यं सन्तुष्टैः पुण्यदानकम् ॥ १५ ॥
एवमेव प्रदातव्यं सूत्रधारेण चोदकम् ।
निष्केवलं च पुण्यं ते यजमान सदाऽस्तु हि ॥ १६ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां सूत्रधारपूजाविध्यधिकारो नामैकपञ्चाशदुत्तरशततमं सूत्रम् ॥

# (१५२) गुरुयागनिर्णयो नाम द्विपञ्चाशदुत्तरशततमं सूत्रम्

विश्वकर्मोवाच—

गुरुयागं प्रवक्ष्यामि शृणु त्वमपराजित ।
येनाऽसौ लभते पुण्यमिहलोके परत्र च ॥ १ ॥

यज्ञमण्डपमध्ये च पट्टः स्थाप्यस्तथोपरि ।
अष्टपत्रं लिखेत्पद्मं पूजयेद् गुरुपादुकाम् ॥ २ ॥

आच्छाद्य युग्मवस्त्राभ्यां गन्धैर्धूपैश्च पुष्पतः ।
मन्त्रमुद्राक्रियायुक्तं पूजयेद् गुरुपादुकाम् ॥ ३ ॥

आवाहनाय तत्रैव दृष्टयग्रे पादुकाऽपरा ।
पादौ प्रक्षाल्य तत्रैव पूजयेद् भक्तिभावतः ॥ ४ ॥

पाटपट्टैस्तथा पट्टैर्दिव्यवस्त्रादिकैरपि ।
एवं स्त्रीनरयुग्मं च पूजयेद् गुरुपादुकाम् ॥ ५ ॥

हारकेयूरमुकुटैर्मुद्रिकाभिश्च कङ्कणैः ।
कर्णभूषाकटिसूत्रैः पादाभरणकादिकैः ॥ ६ ॥

स्त्री युक्ताभरणैः पूज्या वस्त्रालङ्कारभूषिता ।
हंसतूलयुता शय्या विविधान्यासनानि च ॥ ७ ॥

छत्रं सुखासनं चैव चामरव्यजनादिकम् ।
गजश्चाऽश्वो रथो वाऽपि नैकधा वाहनानि च ॥ ८ ॥

अन्ये चोपस्कराः सर्वे देया धान्यधनादि च ।
देशो ग्रामः पुरं खेटो नगरं कूटकर्वटः ॥ ९ ॥

गुरुभ्यश्च प्रदातव्या ह्यतिसन्तुष्टचेतसा ।
गुरौ हृष्टे च तुष्यन्ति सुराश्च पितरोऽपि च ॥ १० ॥

गुरुः सन्तोषितो येन त्रैलोक्यं तस्य गोचरम् ।
सन्तोषितो गुरुर्येन कैलासे युक्त ईश्वरे ॥ ११ ॥

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुरीशः सदाशिवः ।
तस्माद् दीक्षा गृहीतव्या देवीदेवार्चनक्रियाः ॥ १२ ॥

सन्ध्याश्च तर्पणं चैव सूर्यादेरर्चनाविधिः ।
ततो देवाग्रतो गत्वा उपस्थानानि कारयेत् ॥ १३ ॥

ओषधीस्नपनं चैव यतो व्याधिर्न पीडयेत् ।
महोत्सवं ततः कुर्यात् पुष्पवितानसंकुलैः ॥ १४ ॥

कदलीस्तम्भशोभाढ्यैस्तोरणैर्दिव्यवस्त्रकैः ।
नैवेद्यैः खण्डपक्वैश्च फलपुष्पैरनेकधा ॥ १५ ॥
सधूपामोदबहुलैर्दीपमालादिसंकुलैः ।
आरात्रिकं ततः कृत्वा गीतनृत्यसुवाद्यकैः ॥ १६ ॥
अथ चाऽनन्तरं वत्स आत्मानं विनिवेदयेत् ।
भार्यया युक्त एवं च दण्डवत्प्रणमेद् भुवि ॥ १७ ॥
आत्मवित्तानुसारेण देवे दद्याच्च निग्रहम् ।
भार्यायुक्तश्च देवाग्रे निग्रहं तु समुच्चरेत् ॥ १८ ॥
उभाभ्यां च समुत्थेयं गुरोरेवाज्ञया तदा ।

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां गुरुयागनिर्णयाधिकारो नाम द्विपञ्चाशदुत्तरशततमं सूत्रम् ॥

---

## (१५३) शिलाकूर्मपुरुषप्रमाणं त्रिपञ्चाशदुत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

एकहस्ते तु प्रासादे कूर्मश्चार्धाङ्गुलः स्मृतः ।
अर्धवृद्धिः प्रकर्तव्या पञ्चदशहस्तावधि ॥ १ ॥

एकविंशतिहस्तान्तं पादवृद्धिः प्रकीर्तिता ।
तदर्धेन पुनर्वृद्धिर्मन्वङ्गुलः शतार्द्धके ॥ २ ॥

एतन्मानं मध्यमानं कनिष्ठं पादवर्जितम् ।
पादाधिकं भवेज्ज्येष्ठं कूर्मे मानं त्रिधोदितम् ॥ ३ ॥

हैमो रौप्यश्च कर्तव्यः सर्वपापप्रणाशनः ।
करोति य इमं कूर्मं स यज्ञफलमाप्नुयात् ॥ ४ ॥

स्नानं पञ्चामृतं कार्यं कूर्मस्य तु यथाविधि ।
अर्चयित्वा प्रयत्नेन सुधूपामोदपुष्पकैः ॥ ५ ॥

तिलैर्यवैस्तथा होमं पूर्णाहुतिं प्रदापयेत् ।
निवेशयेत्ततः कूर्मं वेदवादित्रमङ्गलैः ॥ ६ ॥

इति कूर्मप्रमाणम् ।

अतः परं प्रवक्ष्यामि शिलाः प्रासादमानतः ।
एकहस्तं समारभ्य पञ्चाशद्धस्तकावधि ॥ ७ ॥

एकहस्ते तु प्रासादे शिला वेदाङ्गुला भवेत् ।
षडङ्गुला द्विहस्ते च त्रिहस्ते च ग्रहाङ्गुला ॥ ८ ॥

चतुर्हस्ते च प्रासादे शिला स्याद् द्वादशाङ्गुला ।
तृतीयांशोदयः कार्यो हस्तादौ च युगान्ततः ॥ ९ ॥
ततः परेऽष्टहस्तान्तं वृद्धिस्त्र्यङ्गुलतो भवेत् ।
पुनर्द्व्यङ्गुलतो वृद्धिः पञ्चाशद्धस्तकावधि ॥ १० ॥

पादेन चोच्छ्रिता शस्ता तां कुर्यात् पङ्कजान्विताम् ।
कर्तृकारका राजा प्रजा नन्दन्ति वै चिरम् ॥ ११ ॥

अष्टाङ्गुलोच्छ्रिता शस्ता वेदाश्रा करयोगतः ।
शस्तं मानं शैलजे स्यादैष्टिके च तदर्धतः ॥ १२ ॥

शैलजे शैलजा कार्या ऐष्टिके चेष्टिकामयी ।
तत् पिण्डाग्रे भवेत्पद्मं शिला पिण्डाष्टमांशकम् ॥ १३ ॥

पद्मपत्रयुता चैव नन्द्यावर्ता च स्वस्तिका ।
तदेवायुधसंज्ञा च पीठबन्धवशानुगा ॥ १४ ॥

नन्दा भद्रा जया पूर्णा विजया पञ्चमी शिला ।
मङ्गला ह्यजिताऽपराजिता च धरणिभवा ॥ १५ ॥
शिलां निवेशयेत्पूर्वं पश्चात्पीठनिबन्धनम् ।
जङ्घायां शिखरे चैव वेदिका कलशान्तरे ॥ १६ ॥
शिलोपरि समस्तं तच्छिलाधश्चोपपीठकम् ।
इति युक्तिर्विधातव्या शिलानां शुभलक्षणा ॥ १७ ॥
अधःखाते सम्पुटेषु निधिकुम्भांश्च योजयेत् ।
पद्मश्चाथ महापद्मः शङ्खो मकरकच्छपौ ॥ १८ ॥
मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव ।
सुमद्रश्च विमद्रश्च सुनन्दः पुष्पदन्तकः ॥ १९ ॥
जयोऽथ विजयश्चैवं कुम्भः पूर्णस्तथोत्तमः ।
इत्येवं नवकुम्भाश्च नियोज्यास्तत्र वै क्रमात् ॥ २० ॥
अथातः संप्रवक्ष्यामि पुरुषस्य प्रवेशनम् ।
न्यसेद् देवालयेष्वेवं जीवस्थानफलं भवेत् ॥ २१ ॥
छादनोपप्रवेशेषु शृङ्गमध्येऽथवोपरि ।
शुकनासावसानेषु वेद्यूर्ध्वे भूमिकान्तरे ॥ २२ ॥
मध्यगर्भे विधातव्यो हृदयवर्णको विधिः ।
हंसतुलीं ततो कुर्यात् ताम्रपर्यङ्कसंस्थिताम् ॥ २३ ॥
शयनं चापि निर्दिष्टं पद्मं वै दक्षिणे करे ।
त्रिपताकं करं वामं कारयेद्धृदि संस्थितम् ॥ २४ ॥
प्रमाणं तस्य वक्ष्यामि प्रासादादौ समस्तकं ।
यावच्छतार्धे हस्तादेः कल्पयेच्च यथाक्रमम् ॥ २५ ॥
वृद्धिरर्धाङ्गुलाद्धस्ते यावन्मेरुं प्रकल्पयेत् ।
एवंविधं प्रकर्तव्यं सर्वकामफलप्रदम् ॥ २६ ॥
हेमजं तारजं वापि ताम्रजं वापि भागशः ।
कलशे चाम्बुपूर्णे तु सौवर्णं पुरुषं न्यसेत् ॥ २७ ॥
पर्यङ्कस्य चतुःपत्सु कुम्भाश्चत्वार एव च ।
हिरण्यनिधिसंयुक्ता आत्ममुद्राभिरङ्किताः ॥ २८ ॥
एवमारोपयेद् देवं यथोक्तं वास्तुशासने ।
तस्य नैव भवेद् दुःखं यावदाभूतसंप्लवम् ॥ २९ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां शिलाकूर्मपुरुषप्रमाणाधिकारो नाम त्रिपञ्चाशदुत्तरशततमं सूत्रम् ॥

## (१५४) वैराज्योद्भवप्रासादनिर्णयो नाम चतुष्पञ्चाशदुत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच--

अथातः संप्रवक्ष्यामि प्रासादान् क्षेत्रसंस्थितान् ।
तेषां च कथयिष्यामि भेदान् पञ्च समीरितान् ॥ १ ॥

विमानाः प्रथमं पञ्च स्वयं ब्रह्मप्रभाषिताः ।
मनोल्हादकरा ह्येते तथा स्वच्छन्दचारिणः ॥ २ ॥

वैराज्यः प्रथमो नाम पुष्पकश्च द्वितीयकः ।
कैलासो मणिकस्तत्र तथा चैव त्रिविष्टपः ॥ ३ ॥

वैराज्यं चतुरश्रं च कैलासं वृत्तमेव च ।
पुष्पकं कारयेत्प्राज्ञश्चतुरश्रायतं तथा ॥ ४ ॥

वृत्तायतं चैव कुर्यान्मणिकं तत्र बुद्धिमान् ।
त्रिविष्टपमथाष्टाश्रं सर्वदेवालयेषु च ॥ ५ ॥

प्रयुक्ता विविधश्छन्दाः सूत्रमार्गैरनेकधा ।
वैराज्यकुलसम्भूताः सर्व प्रासादसंज्ञकाः ॥ ६ ॥

प्रासादानां समस्तानां वैराज्या देवसम्भवाः ।
भवन्ति चेषुभेदा वै वैराज्योद्भवसद्मनाम् ॥ ७ ॥

प्रासादा वै पञ्चशतान्यष्टाशीत्यधिकानि च ।
सर्वेषां मूलयोनिस्तु वैराज्यं नाम कीर्तिता ॥ ८ ॥

चतुरश्रायतच्छन्दे पुष्पकादिशतत्रयम् ।
अन्ये पञ्चाशतान्येवं वृत्ताः कैलाससम्भवाः ॥ ९ ॥

वृत्तायतास्सार्धशतसङ्ख्यका मणिकोद्भवाः ।
त्रिविष्टपास्तथाष्टाश्रा मताः सार्धशतत्रयम् ॥ १० ॥

सङ्ख्ययाष्टाशीत्युत्तराण्यष्टादशशतानि च ।
उक्ताः श्रेष्ठा ब्रह्मणश्च वैराज्यकुलसम्भवाः ॥ ११ ॥

तन्मध्ये मिश्रकाश्चैव शतं च द्वादशोत्तरम् ।
स्युर्विंशतिशतान्येवं प्रासादा मिश्रसम्युताः ॥ १२ ॥

पञ्चाशत् सहस्राणि पञ्चविंशतिधाः पृथक् ।
एकैके तेऽष्टधा भिन्नाश्चतुर्लक्षमितास्तथा ॥ १३ ॥

चतुरश्राश्च वैराज्या वृत्ताः कैलाससम्भवाः ।
चतुरश्रायताः सर्वे पुष्पाख्यकुलजातकाः ॥ १४ ॥

वृत्तायता मणिकजा अष्टाश्राश्च त्रिविष्टपाः ।
इषुभेदसमुत्पन्नाः प्रासादाः सर्वकामदाः ॥ १५ ॥

एकहस्तं समारभ्य पञ्चाशद्धस्तकावधि ।
हस्तान्तरैस्ततो भेदा हस्तार्धैश्च न संशयः ॥ १६ ॥

हस्तपादैस्त्र्यङ्गुलैश्च कुर्यादङ्गुलकक्रमम् ।
प्रयुक्ता विविधाश्छन्दाः प्रमाणं शास्त्रमानतः ॥ १७ ॥

इषुच्छन्दाग्रजातीनां नामसङ्ख्या च लक्षणम् ।
तथा तदूर्ध्वमार्गेषु तलेष्वभिहितं यथा ॥ १८ ॥

सङ्ख्याताश्च तलच्छन्दभक्तिभागा अनेकधाः ।
चतुर्भागादिकं मध्यं सूर्योत्तरशतान्तकम् ॥ १९ ॥

भागान्तरे ततो भेदा ग्रहाधिकशतं विदुः ।
तत्रोत्पन्ना यथा भेदा उपाङ्गानां तथैव च ॥ २० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां वैराज्योद्भवप्रासादनिर्णयाधिकारो नाम चतुष्पञ्चाशदुत्तरशततमं सूत्रम् ॥

---

# (१५५) वैराज्यादिप्रासादलक्षणं पञ्चपञ्चाशदुत्तरशततम सूत्रम्

विश्वकर्मोवाच—

अथो वक्ष्ये च वैराज्यं प्रासादं सर्वकामदम् ।
वल्लभं सर्वदेवानां शिवस्यापि विशेषतः ॥ १ ॥

अनन्तपुण्यदां चैवं पूजां वै ब्रह्मणोदिताम् ।
तेषामनुक्रमं वक्ष्ये शृणु चैकाग्रमानसः ॥ २ ॥

चतुरस्रीकृते क्षेत्रे तथा षोडशभाजिते ।
तस्य मध्यं चतुर्भागैर्गर्भं सूत्रैश्च कारयेत् ॥ ३ ॥

द्वादशस्वथ शेषेषु बाह्ये भित्तीः प्रकल्पयेत् ।
भित्तिर्भागोच्छ्रयं चैव चतुर्भागैश्च कारयेत् ॥ ४ ॥

भित्त्युच्छ्रयो जन्मतश्च सपादः शिखरोदयः ।
चतुर्गुणः पृथक्सूत्रैः पद्मकोशं समालिखेत् ॥ ५ ॥

स्कन्धकोशान्तरं चैव सप्तभागैश्च भाजयेत् ।
एकभागा भवेद् ग्रीवा सार्धं चामलसारकम् ॥ ६ ॥

पद्मपत्रं तथा सार्धं त्रिभागैः कलशोन्नतिः ।
चतुर्द्वारेषु प्राग्ग्रीवा गर्भतुलाश्च गर्भतः ॥ ७ ॥

हेमरत्नमयैःस्तम्भैः शुक्लपट्टैः सुच्छाद्यकैः ।
मुक्तादिभिश्च खचितैर्वितानैर्दिव्यभूषणैः ॥ ८ ॥

स्फाटिकैर्विविधैर्जालैर्हिरण्यमणिवेदिकैः ।
सिंहकर्णैः सुशोभाढ्यैर्निर्यूहाच्छाद्यकर्णकैः ॥ ९ ॥

शिखरैर्हेमरत्नाढ्यैर्घण्टाकलशकान्वितैः ।
गजाश्वनरपीठाद्यैः सर्वलक्षणसम्युतैः ॥ १० ॥

लोकनाथेऽति दृष्ट्व्या आदौ वैराज्यसम्भवाः ।
वैराज्या वै पञ्चशतान्यष्टाशीत्युत्तराणि च ॥ ११ ॥

इति वैराज्यप्रासादलक्षणम् ।

आयामः पञ्चभागैश्च चतुर्भागैश्च विस्तरः ।
याम्योत्तरे उरःशृङ्गाण्यूर्ध्वं त्रिकलशान्वितम् ॥ १२ ॥

सिंहकर्णपुरः पृष्ठे प्राग्ग्रीवा द्वारबाह्यतः ।
पूर्वालङ्कारशोभाढ्यः पुष्पकः सर्वकामदः ॥ १३ ॥

पुष्पकाच्च समुत्पन्नं प्रासादानां शतत्रयम् ।
चतुरस्रायताः प्रोक्ता आद्येऽन्ते सृष्टिकर्मणा ॥ १४ ॥

इति पुष्पकप्रासादलक्षणम् ।

चतुरश्राः समाः शुद्धाः कर्णोर्ध्वे च सुवृत्तकाः ।
सिंहकर्णैर्भूषितोर्ध्वाः पूर्वालङ्कारशोभिताः ॥ १५ ॥
चतुर्द्वारेषु प्राग्ग्रीवाः सुवितानैर्विभूषिताः ।
कैलासाद्याः समुत्पन्ना वृत्ताः पञ्चशतानि च ॥ १६ ॥

इति कैलासप्रासादलक्षणम् ।

षड्भागैश्च तथाऽऽयामश्चतुर्भागैश्च विस्तरः ।
विस्तरार्धे भ्रमे वृत्तं वामदक्षिणतो भवेत् ॥ १७ ॥
कुक्षिन्यासं बुधः कुर्याद् भागपादं ततः पुनः ।
एवं वृत्तायताः कार्या द्वारवेदीविभूषिताः ॥ १८ ॥
घण्टाकलशशृङ्गादिपूर्वालङ्कारशोभिताः ।
प्रासादा मणिकोत्पन्नास्तथा सार्धशतानि च ॥ १९ ॥

इति मणिकप्रासादलक्षणम् ।

अष्टाश्राश्च ततः शुद्धास्तथा च समकर्णकाः ।
तदर्धे च भवेद् भद्रं कामदाश्च त्रिविष्टपाः ॥ २० ॥
चतुर्द्वारेषु प्राग्ग्रीवाः पूर्वालङ्कारशोभिताः ।
एवं सार्धत्रिशतानि प्रासादाश्च त्रिविष्टपाः ॥ २१ ॥

इति त्रिविष्टपप्रासादलक्षणम् ।

पञ्चकान्तरतश्चैवं मिश्रकाः सर्वकामदाः ।
सूर्योत्तरशतं चैवं मिश्रकाणां समुद्भवाः ॥ २२ ॥
वैराज्याः श्वेतवर्णाढ्याः श्वेतालङ्कारभूषिताः ।
पुष्पकाः हेमवर्णाश्च हेमरत्नैर्विभूषिताः ॥ २३ ॥
कैलासा हिमवर्णाश्च श्वेतालङ्कारभूषिताः ।
मणिकाः सर्ववर्णाः स्युस्तथैव च त्रिविष्टपाः ॥ २४ ॥
पीठोपपीठजङ्घाश्च मेखलाकूटच्छाद्यकम् ।
सिंहकर्णाश्च शिखरः सर्वरत्नविभूषितः ॥ २५ ॥
जालव्यालकपोतालीसिंहकर्णसुच्छाद्यकैः ।
स्फटिकैर्हेमरत्नाढ्यैः सर्वलक्षणसम्युतैः ॥ २६ ॥
पूर्वं च ब्रह्मणा प्रोक्ताः पूजापञ्चमहोत्सवाः ।
तत आदौ समुत्पन्नाः प्रासादाः सर्वकामदाः ॥ २७ ॥
यैरिह क्रियते पूजा शिवस्य पृथिवीतले ।
लभन्ते ते ब्रह्मलोकं शिवलोकमभीप्सितम् ॥ २८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां वैराज्यादिप्रासादलक्षणाधिकारो नाम पञ्चपञ्चाशदुत्तरशततमं सूत्रम् ॥

## (१५६) वैराज्यप्रासादाभिधानं षट्पञ्चाशदुत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

वैराज्याद्यास्ततो वक्ष्ये प्रासादाः पञ्चविंशतिः ।
चतुरश्रो भवेदेकस्त्र्यङ्गाश्च त्रय एव च ॥ १ ॥
भवन्ति पञ्च पञ्चाङ्गाः सप्ताङ्गान् सप्त कारयेत् ।
नवाङ्गाश्च नवाख्याताः प्रासादाः पञ्चविंशतिः ॥ २ ॥
वैराजश्चतुरश्रश्च कर्तव्यो विधिपूर्वकम् ।
अधस्तान्नन्दनश्चैव सिंहः श्रीनन्दनस्तथा ॥ ३ ॥
त्र्यङ्गा इमे त्रयश्चैव कर्तव्याश्च सदा बुधैः ।
मन्दरो मलयश्चैव विमानः सुविशालकः ॥ ४ ॥
कर्णाक्षश्चेति पञ्चाङ्गाः प्रासादाश्च प्रकीर्तिताः ।
सप्ताङ्गान् कथयिष्यामि प्रासादान् सर्वकामदान् ॥ ५ ॥
शान्तिदान् वै विघ्नहरान् शुद्धवंशसमुद्भवान् ।
महेन्द्रो रत्नशीर्षश्च शतशृङ्गोऽथ भूधरः ॥ ६ ॥
भुवनाद्यो मण्डनाख्यस्त्रैलोक्यविजयस्तथा ।
पृथ्वीवल्लभ एवं च सप्ताङ्गाश्च प्रकीर्तिताः ॥ ७ ॥
महीधरश्च कैलासो नवमङ्गल एव च ।
गन्धमादनसर्वाङ्गसुन्दरो तु तथैव च ॥ ८ ॥
विजयानन्दसर्वाङ्गतिलकावेवमेव च ।
महाभोगस्तथा मेरुर्नवाङ्गाः परिकीर्तिताः ॥ ९ ॥
वैराजाद्याः समाख्याताः प्रासादाः पञ्चविंशतिः ।
एतेषां रूपनिर्माणं कथयामि यथाविधि ॥ १० ॥
एते समतला ज्ञेयाः समनिर्गमनिर्गताः ।
समजाति समे सूत्रे शुद्धच्छन्दाः प्रकीर्तिताः ॥ ११ ॥
विभक्तिभिन्नच्छन्दानां भक्तिसूत्रानुनिर्गताः ।
गर्भसूत्रविनिर्गता गर्भा एवमनेकधाः ॥ १२ ॥
समाश्च विषमाः समविषमाश्च समासमाः ।
कार्यास्तथा समसमा तथा च विषमासमाः ॥ १३ ॥
विचित्राङ्गा विभक्ताश्च विचित्रसूत्रान्तर्गताः ।
विचित्रशिखराकीर्णा विचित्रपद्मपत्रकाः ॥ १४ ॥

( चित्रपद्मदलोद्भवाः )

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां वैराज्यप्रासादाभिधानाधिकारो नाम षट्पञ्चाशदुत्तरशततमं सूत्रम् ॥

# (१५७) वैराज्यादिनगरप्रासादलक्षणं सप्तपञ्चाशदुत्तरशततमं सूत्रम्

विश्वकर्मोवाच—

वैराज्यमथ वक्ष्यामि प्रासादं सर्वकामदम् ।
विश्राम्यन्तीशविष्णू च ब्रह्मा यत्र रविस्तथा ॥ १ ॥
एकद्वारं चतुर्द्वारं त्रिद्वारं च तथैव च ।
द्वारद्वयं च कर्तव्यं दूषणं न कदाचन ॥ २ ॥
पूर्वोत्तरयाम्ये चैव पूर्वापरोत्तरे तथा ।
याम्यापरोत्तरे शस्तं त्रिद्वारं त्रिविधं मतम् ॥ ३ ॥
पूर्वापरे स्याद् द्विद्वारं दूषयेच्च याम्योत्तरे ।
एकद्वारं च माहेन्द्यां चतुर्द्वारं चतुर्दिशम् ॥ ४ ॥
पूर्वे च भक्तिदं द्वारं मुक्तिदं वरुणोद्गतम् ।
याम्योत्तरे शिवे द्वारे कृते दोषो महद्भयम् ॥ ५ ॥
एकद्वारं च माहेन्द्यामन्यथा दोषदं भवेत् ।
भद्रं सर्वत्र कल्याणं चतुर्द्वारे शिवालये ॥ ६ ॥
ब्रह्मविष्णुरवीणां च कुर्यात्पूर्वोक्तमेव हि ।
समोसरणे च जैनेन्द्रे दिशा दोषो न विद्यते ॥ ७ ॥
चतुरस्रं समं शुद्धं षोडशांशोपकल्पितम् ।
वेदांशो गर्भ आख्यातो भित्तिः सूर्यपदोद्भवा ॥ ८ ॥
भ्रमनिर्माणतः स्तम्भैः सीमा प्राग्ग्रीवकाग्रतः ।
चतुर्भागोन्नता भित्तिः सपादा शिखरोन्नतिः ॥ ९ ॥
चतुर्गुणैः पृथक्सूत्रैः पञ्चकोशं समालिखेत् ।
स्कन्धकोशान्तरं चैव सप्तभागैश्च कारयेत् ॥ १० ॥
ग्रीवा भागा समुत्सेधे सार्धमामलसारकम् ।
पद्मच्छत्रं तथा सार्धं त्रिभागः कलशोऽन्तरे ॥ ११ ॥
शुकनासान् सिंहकर्णान् चतुर्दिक्षु प्रकल्पयेत् ।
जगती वै पञ्चगुणा कामदा चतुरानना ॥ १२ ॥
इमं वैराज्यकं देवप्रासादं कारयेत्तु यः ।
एकविंशतिस्वर्गाणां लभते राज्यमीप्सितम् ॥ १३ ॥

इति वैराज्यप्रासादः ।

वैराज्यस्य च संस्थाने नन्दनं कारयेच्छुभम् ।
कर्णं तथा चैकभागमुदकान्तरभूषितम् ॥ १४ ॥
द्विभागं च भवेद् भद्रमर्धभागेन निर्गतम् ।
भागार्धं पार्श्वसूत्रं तु निर्गमस्तत्समो भवेत् ॥ १५ ॥

सार्धभागस्तु विस्तार एवं भद्रं विधीयते ।
कर्णेष्वेकैकशृङ्गं च भद्रे द्वे उरुमञ्जरी ॥ १६ ॥
शिखरं त्र्यंशविस्तारं पादोनं वेदमुच्छ्रितम् ।
पद्मकोशोद्भवसूत्रे पञ्चांशः कलशोऽन्तिके ॥ १७ ॥
रथिका तु यदा भद्रे नन्दनः सर्वकामदः ।
इह नन्दति तत्कर्ता स्वर्गे वा त्रिदशैः सह ॥ १८ ॥

इति नन्दनः ।

मुखभद्रे प्रतिभद्रमुद्गमो रथिकोपरि ।
कर्णशृङ्गे सिंहकर्णः सिंहनामा स उच्यते ॥ १९ ॥
देवानां तु प्रकर्तव्यः सिंहस्तत्रैव शाश्वतः ।
तुष्येद्‌गिरिसुता तस्य सौभाग्यधनपुत्रदा ॥ २० ॥

इति सिंहः ।

कर्णे शृङ्गं तु दातव्यं पञ्चाण्डकविभूषितम् ।
तथा श्रीनन्दनो नाम कर्तुः सन्तानवर्द्धकः ॥ २१ ॥

इति नन्दनः ॥ इति त्र्यङ्गास्त्रयः ॥

षड्भागायते भागं कर्णं प्रतिरथं तथा ।
द्विभागं च भवेद् भद्रं निर्गमश्चार्धभागतः ॥ २२ ॥
प्रतिरथं भागनिष्कासं गर्भो वेदांशकैः पृथुः ।
द्वे द्वे कर्णे तथा भद्रे शृङ्गं प्रतिरथेऽथवा ॥ २३ ॥
एवंविधः प्रकर्तव्यो मन्दरस्तु शिवात्मजः ।
मेरुपुण्यार्धकार्धं तु लभ्यते मन्दरे कृते ॥ २४ ॥

इति मन्दरः ।

भद्रे शृङ्गत्रयं कुर्यान्मलयो नाम नामतः ।

इति मलयः ।

त्यक्त्वैकभद्रशृङ्गं तु प्रत्यङ्गानि प्रदापयेत् ॥ २५ ॥
प्रतिरथोर्ध्वतिलको विमानः सर्वकामदः ।

इति विमानः ।

भद्रे तृतीयोरुशृङ्गं स भवेत् सुविशालकः ॥ २६ ॥

इति सुविशालकः ।

त्यक्त्वैकभद्रशृङ्गं तु विक्रमः स्यात्प्रतिरथे ।
कर्णे चाष्टदलं कुर्यान्नाम्ना त्रैलोक्यभूषणः ॥ २७ ॥

इति त्रैलोक्य भूषणः ॥ इति पञ्चाङ्गाः पञ्च ॥

अष्टधा चायते क्षेत्रे भुजकर्णविशोधिते ।
भागं भागं च भद्रार्धं कर्णः प्रतिरथो रथः ॥ २८ ॥

प्रतिरथोंऽशो निष्कासे रथोऽर्धोऽर्धं च भद्रकम् ।
उदकान्तरयुक्तश्च पञ्चांशो गर्भविस्तरः ॥ २९ ॥
द्वे शृङ्गे तिलकं कर्णे शृङ्गे प्रतिरथे तथा ।
एकशृङ्गं चोपरथे उरःशृङ्गाणि द्वादश ॥ ३० ॥
पञ्चांशं मूलशिखरं घण्टाकलशभूषितम् ।
ईप्सितं लभते कर्ता यावदाभूतसम्प्लवम् ॥ ३१ ॥

इति माहेन्द्रः ।

कर्णे शृङ्गत्रयं कुर्याद्रत्नशीर्षः स उच्यते ।

इति रत्नशीर्षः ।

त्यक्तैकशृङ्गं भद्रस्य मत्तालम्बं तु कारयेत् ॥ ३२ ॥
तस्यच्छाद्योर्ध्वकर्णे तु ततः शृङ्गाणि दापयेत् ।
सितशृङ्गस्तदा नाम्ना ईश्वरस्य सदा प्रियः ॥ ३३ ॥

इति सितशृङ्गः ।

तिलकानि च शृङ्गेषु तथोपरथकेषु च ।
रथप्रतिरथोर्ध्वे च तिलकानि प्रकल्पयेत् ॥ ३४ ॥
शेषाः पञ्चाण्डशृङ्गाश्च भूधराख्यः स उच्यते ।

इति भूधराख्यः ।

श्रीवत्सं चैव रेखार्धे भवेद् भुवनमण्डनः ॥ ३५ ॥

इति भुवनमण्डनः ।

तथैव तिलकं कुर्याच्छृङ्गद्वयमथोपरि ।
त्रैलोक्यविजयश्चैव तच्छृङ्गैः क्षितिवल्लभः ॥ ३६ ॥

इति त्रैलोक्यविजयक्षितिवल्लभौ ।

इति सप्ताङ्गाः सप्त ।

महीधरं प्रवक्ष्येऽहं शतमूले विभाजिते ।
पद्मिकश्च ततः कर्णो भद्रं द्विपदमिश्रितम् ॥ ३७ ॥
कर्णस्योभयतस्त्रयस्त्रयः प्रतिरथास्तथा ।
निर्गमास्समभागैश्च भागार्धे भद्रनिर्गमः ॥ ३८ ॥
भागषट्कायतोगर्भः सप्तभागोऽथवोच्यते ।
कर्णे प्रतिरथे भद्रे द्वे द्वे शृङ्गे च कारयेत् ॥ ३९ ॥
रथोपरथे तिलकं प्रत्यङ्गं च रथोपरि ।
मत्तालम्बयुतं भद्रं स्यान्महीधरसंज्ञकः ॥ ४० ॥

इति महीधरः ।

भद्रे शृङ्गं तृतीयं च कैलासः शङ्करप्रियः ।
भद्रे त्यक्त्वा रथे शृङ्गं नवमङ्गल उच्यते ॥ ४१ ॥

इति कैलासनवमङ्गलौ

तथा भद्रे पुनर्दद्यात् स भवेद् गन्धमादनः ।
त्यक्तं भद्रे रथे शृङ्गं युक्तं सर्वाङ्गसुन्दरः ॥ ४२ ॥

इति गन्धमादनसर्वाङ्गसुन्दरौ ।

भद्रे दद्यात्पुनः शृङ्गं विजयानन्दसंज्ञकः ।

इति विजयानन्दः ॥

मत्तालम्बयुते भद्रे उपशृङ्गं परित्यजेत् ॥ ४३ ॥
मत्तालम्बोभयकर्णे कुर्याच्छृङ्गद्वयं तथा ।
सर्वाङ्गतिलको नाम कर्तुः सन्तानभोगदः ॥ ४४ ॥

इति सर्वाङ्गतिलकः ।

उरुशृङ्गं ततो दद्यान्मत्तालम्बसमन्वितः ।
महाभोगस्तदा नाम सर्वकामफलप्रदः ॥ ४५ ॥

इति महाभोगः ।

रथे कर्णे प्रतिरथे शृङ्गं चोपरथे तथा ।
मेरुरेव समाख्यातः सर्वदेवैः सुपूजितः ॥ ४६ ॥

इति मेरुः ।

इति नवाङ्गा नव ॥

सर्वस्वर्णमये मेरौ पुण्यं यत् त्रिः प्रदक्षिणैः ।
शैले एकैकके चैव तत्पुण्यं लभते नरः ॥ ४७ ॥
सृष्टावुक्ता ब्रह्मणा याः पूजा वै पञ्चविंशतिः ।
वैराजाद्याः समुत्पन्नाः सर्वे प्रासादसंज्ञकाः ॥ ४८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां वैराज्यादिनागरप्रासादलक्षणाधिकारो नाम सप्तपञ्चाशदुत्तरशततमं सूत्रम् ॥

# (१५८) पञ्चविंशतिलतिनप्रासादनिर्णयो नामाष्टपञ्चाश-दुत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

लतिनान् कथयिष्यामि प्रासादान् रुचकादिकान् ।
नामानि रूपनिर्माणं कथयामि यथाविधि ॥ १ ॥

रुचको भद्रकश्चैव हंसो हंसोद्भवस्तथा ।
प्रतिहंसस्तथा नन्दो नन्द्यावर्तो धराधरः ॥ २ ॥

वर्धमानो गिरिकूटः श्रीवत्सश्च त्रिकूटकः ।
मुक्तकोणो गजश्चैव गरुडः सिंह एव च ॥ ३ ॥

भवश्च विभवश्चैव पद्मो मालाधरस्तथा ।
वज्रकः स्वस्तिकः शङ्कुर्मलयो मकरध्वजः ॥ ४ ॥

इत्येते च समुद्दिष्टाः प्रासादाः पञ्चविंशतिः ।
लक्षणेन च सम्युक्तान् कथयामि समासतः ॥ ५ ॥

रुचकाद्याः षोडशैव चतुरश्राः प्रकीर्तिताः ।
भवश्च विभवश्चैव चतुरश्रायतौ तथा ॥ ६ ॥

पद्मो मालाधरश्चैव वृत्तौ तौ चैव कारयेत् ।
वृत्तायतौ च कर्तव्यौ मलयो मकरध्वजः ॥ ७ ॥

वज्रकः स्वस्तिकः शङ्कुरष्टाश्राः परिकीर्तिताः ।
तेषां च रूपनिर्माणं कथयामि समासतः ॥ ८ ॥

चतुरश्रीकृते क्षेत्रे चतुर्भागविभाजिते ।
भागा भागा तु भित्ती द्वे शेषं गर्भगृहं भवेत् ॥ ९ ॥

तदग्रतः पुनः कार्यो भागद्वयविनिर्गमः ।
विस्तारे तु त्रयो भागाः प्राग्ग्रीवः स्तम्भभूषितः ॥ १० ॥

पीठोत्सेधश्च भागेन जङ्घा तत्र द्विभागतः ।
वरवण्डयन्तरपत्रं च पादोनभागमश्नुते ॥ ११ ॥

सार्धपञ्चांशतश्चैव पीठोच्छ्रयं प्रकल्पयेत् ।
भागार्धं चैकभागं च भागं भागार्धमेव च ॥ १२ ॥

कुमुदं कलशं चैव कपोताल्यन्तरैः सह ।
अनेन क्रमयोगेन पीठोच्छ्रायं प्रकल्पयेत् ॥ १३ ॥

सपादचतुरंशाश्च उच्छ्राये शिखरस्य च ।
चतुर्गुणैः पृथक्सूत्रैः पद्मकोशं समालिखेत् ॥ १४ ॥

स्कन्धकोशान्तरं चैव सप्तभागांश्च कारयेत् ।
ग्रीवा भागसमुत्सेधा सार्धमामलसारकम् ॥ १५ ॥
पद्मच्छत्रं तथा सार्धं त्रिभागैः कलशोन्नतिः ।
रुचकस्तु समाख्यातो भद्रकं चाप्यथ शृणु ॥ १६ ॥

इति रुचकः ।

द्विभागो भद्रविस्तारः पादषड्भागनिर्गतम् ।
भद्रकस्य समाख्याता शिखान्ते च रथाकृतिः ॥ १७ ॥

इति भद्रकः ।

वार्यन्तरं तथा कुर्यान्मध्ये भद्रककर्णयोः ।
ततो हंसः स विज्ञेयः स्वरूपो लक्षणान्वितः ॥ १८ ॥

इति हंसः ।

वार्यन्तरं भद्रके तु भद्रमध्ये तु कारयेत् ।
हंसोद्भवस्तथा नाम ब्रह्मणश्च सुखावहः ॥ १९ ॥

इति हंसोद्भवः ।

यथा भद्रे तथा कर्णे कारयेदुदकान्तरम् ।
निर्गतं भागपादेन द्वौ स्तम्भौ कर्णभद्रयोः ॥ २० ॥

इति प्रतिहंसः ।

प्राग्ग्रीवं चैव रुचके भद्रमानेन कारयेत् ।
निर्गमे नष्टकर्णं च स नन्दः सर्वकामदः ॥ २१ ॥

इति नन्दः ।

प्राग्ग्रीवे तु पुरोऽलिन्दं कारयेद्विधिपूर्वकम् ।
नन्द्यावर्तस्तथा नाम कर्तव्यो देवतालयः ॥ २२ ॥

इति नन्द्यावर्तः ।

कक्षे जलान्तरं चैव स्तम्भैश्छाद्यविभूषितैः ।
धराधरश्च विज्ञेयः सद्व्यमरवल्लभः ॥ २३ ॥

इति धराधरः ।

दशधा भाजिते क्षेत्रे द्विभागः कर्णविस्तरः ।
त्रिभागं च भवेद् भद्रं सार्धः प्रतिरथो मतः ॥ २४ ॥

इति वर्धमानः ।

कर्णे वार्यन्तरं कुर्याद् गिरिकूटः स उच्यते ।
कर्णे प्रतिरथे चैव श्रीवत्सो वारिसंयुते ॥ २५ ॥

इति गिरिकूटश्रीवत्सौ ।

वर्धमानस्य संस्थाने भद्रमध्ये जलान्तरम् ।
त्रिकूटः स तु विज्ञेयः कर्तव्यः शुभलक्षणः ॥ २६ ॥

इति त्रिकूटः ।

कर्णे भद्राणि देयानि नष्टाङ्गं मूलनासिकम् ।
मुक्तकोणः स विज्ञेयः सर्वकामफलप्रदः ॥ २७ ॥

इति मुक्तकोणः ।

उभौ प्रतिरथौ मध्ये पृष्ठतो वृत्तमालिखेत् ।
एवं विधः प्रकर्तव्यः स गजः सर्वकामदः ॥ २८ ॥

इति गजः ।

वर्धमानस्य संस्थाने पार्श्वे कुर्यात्तदूर्ध्वतः ।
कुर्याद्वृतौ शृङ्गकूटौ पक्षिराजः सुखाश्रयः ॥ २९ ॥

इति गरुडः ।

प्रतिभद्रं च हंसे चेत् सिंहनामा स उच्यते ।
चतुरश्रास्तु कथिताः सर्वकामफलप्रदाः ॥ ३० ॥

इति सिंहः ।

गिरिकूटस्त्रिकूटश्च यदा गर्भायतो भवेत् ।
भवश्च विभवश्चैव त्रिलिङ्गाश्च प्रकीर्तिताः ॥ ३१ ॥

इति भवविभवौ ।

वृत्ते षोडश कर्णाद्याः विना भद्रैश्च पद्मकः ।
विना कर्णं कलाभद्रैर्भवेन्मालाधरः स तु ॥ ३२ ॥

इति पद्ममालाधरौ ।

अष्टकर्णो वज्रकः स्यात्स्वस्तिको भद्रसंयुतः ।
स्वस्तिके प्रतिभद्राणि शङ्कुश्चाग्राश्रसूत्रतः ॥ ३३ ॥

इति वज्रकस्वस्तिकशङ्कवः ।

मलयस्त्वायते पद्मे मालाधृङ् मकरध्वजः ।
लतिनाः कथितास्त्वेवं प्रासादाः पञ्चविंशतिः ॥ ३४ ॥

इति मलयमकरध्वजौ ।

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां पञ्चविंशतिलतिनप्रासादनिर्णयाधिकारो नामाष्टपञ्चाशदुत्तरशततमं सूत्रम् ॥

## (१५९) केशर्यादिसान्धारप्रासादनिर्णयो नामैकोनषष्ट्युत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

सान्धारांश्च ततो वक्ष्ये प्रासादान् पर्वतोपमान् ।
शिखरैर्विविधाकारैरनेकाण्डैश्च विभूषितान् ॥ १ ॥

आद्यः पञ्चाण्डको ज्ञेयः केसरी नाम नामतः ।
तावदन्तं चतुर्वृद्धिर्यावदेकोत्तरं शतम् ॥ २ ॥

केशरी सर्वतोभद्रो नन्दनो नन्दशालिकः ।
नन्दीशो मन्दरश्चैव श्रीवत्सश्चामृतोद्भवः ॥ ३ ॥

हिमवान् हेमकूटश्च कैलासः पृथिवीजयः ।
इन्द्रनीलो महानीलो भूधरो रत्नकूटकः ॥ ४ ॥
वैडूर्यः पद्मरागश्च वज्रको मुकुटोज्ज्वलः ।
ऐरावतो राजहंसो गरुडो वृषभस्तथा ॥ ५ ॥

मेरुः प्रासादराजस्स्याद् देवानामालयो हि सः ।
संयोगेन च सान्धारान् कथयामि यथार्थतः ॥ ६ ॥
दशहस्तादधस्तात्र प्रासादो भ्रमसंयुतः ।
षट्त्रिंशान्तं निरन्धाराः प्राच्ये वेदादिहस्ततः ॥ ७ ॥

पञ्चविंशतिःसान्धाराः प्रयुक्ता वास्तुवेदिभिः ।
भ्रमहीनास्तु ये कार्याः शुद्धच्छन्देषु नागराः ॥ ८ ॥
चतुरस्रीकृते क्षेत्रे अष्टाष्टकविभाजिते ।
भागभागं भ्रमभित्तिर्द्विभागो देवतालयः ॥ ९ ॥
निरन्धारे पदा भित्तिरर्धे गर्भं प्रकल्पयेत् ।
मध्यच्छन्दश्च वेदांशो बाह्ये कुम्भायतं शृणु ॥ १० ॥

क्षेत्रार्धे च भवेद् भद्रं भद्रार्धे कर्णविस्तरः ।
कर्णस्यार्धप्रमाणेन कर्तव्यो भद्रनिर्गमः ॥ ११ ॥

चतुष्कर्णेषु ख्यातानि श्रीवत्सशिखराणि च ।
रथिकोद्गमे च पञ्चैव केशरी गिरिजाप्रियः ॥ १२ ॥

इति केशरी ।

क्षेत्रे विभक्ते दशधा गर्भः षोडशकोष्ठकैः ।
भित्तिं भ्रमं च भित्तिं च भागभागं प्रकल्पयेत् ॥ १३ ॥

द्विभागः कर्ण इत्युक्तो भद्रं षड्भागिकं तथा ।
निर्गतं चैकभागेन भागिका पार्श्वक्षोभणा ॥ १४ ॥

कर्णिका चार्धभागेन भागार्धे भद्रनिर्गतम् ।
भागत्रयं च विस्तारे मुखभद्रं विधीयते ॥ १५ ॥
भद्रे वै तूद्गमाः पञ्च कर्णेऽष्टशृङ्गकानि च ।
श्रीवत्सशिखरं कार्यं घण्टाकलशसंयुतम् ॥ १६ ॥

इति सर्वतोभद्रः ।

श्रीवत्सभद्रमारूढे रथिकोद्गमभूषिते ।
नन्दने नन्दति स्वामी दुरितं हरति ध्रुवम् ॥ १७ ॥

इति नन्दनः ।

तस्योर्ध्वे भवार्धशृङ्गं ? भद्रं तस्यानुरूपतः ।
नन्दिशालो गुणैर्युक्तः स्वरूपो लक्षणान्वितः ॥ १८ ॥

इति नन्दिशालः ।

त्रिभागं च भवेद्भद्रं भद्रार्धे प्रस्थस्तथा ।
कर्णे शृङ्गद्वयं भद्रे एकैकं प्रस्थे तथा ॥ १९ ॥

इति नन्दीशः ।

द्वादशांशस्तु विस्तारो मूलगर्भस्तदर्धतः ।
भागभागं तु कर्तव्या द्वे भित्ती चान्धकारिका ॥ २० ॥
कर्णप्रस्थभद्रार्धे कारयेद् द्विद्विभागतः ।
प्रस्थः समनिष्कासो भद्रं भागेन निर्गतम् ॥ २१ ॥
कर्णे द्वे भद्रके द्वे च चैकं प्रतिरथे तथा ।
सघण्टाकलशा रेखा रथिकोद्गमभूषिता ॥ २२ ॥

इति मन्दरः ।

चतुर्दशांशविस्तारे गर्भश्चाऽष्टांशविस्तरः ।
भागभागं भ्रमो भित्तिर्बाह्यभित्तिस्तु भागिका ॥ २३ ॥
कर्णे शृङ्गद्वयं कुर्याच्छिखरं चाष्टविस्तरम् ।
प्रस्थः कर्णमानेन तिलकं शृङ्गकोपरि ॥ २४ ॥
नन्दिकायां च तिलकं भद्रे शृङ्गत्रयं भवेत् ।
श्रीवृक्षस्तु समाख्यातः कर्तव्यस्तु श्रियः पतेः ॥ २५ ॥

इति श्रीवृक्षः ।

कर्णे शृङ्गत्रयं कुर्यात्प्रस्थः पूर्वकल्पितः ।
अमृतोद्भवनामासौ प्रासादः सुरपूजितः ॥ २६ ॥

इत्यमृतोद्भवः ।

द्वे द्वे शृङ्गे प्रतिरथे त्यमृतोद्भवसंस्थितौ ।
हिमवान् द्वे उरःशृङ्गे पूज्यः सुरनरोरगैः ॥ २७ ॥

इति हिमवान् प्रासादः ।

उरःशृङ्गत्रयं भद्रे नन्दिका तिलकान्विता ।
हेमकूटस्तदा नाम प्रकर्तव्यस्त्रिमूर्तिके ॥ २८ ॥

इति हेमकूटः ।

नन्दिकाग्रान्ततः शृङ्गं रेखाश्च तिलकोत्तमाः ।
कैलासश्च तदा नाम ईश्वरस्य सदाप्रियः ॥ २९ ॥
इति कैलासः ।

रेखोर्ध्वे तिलकं त्यक्त्वा शृङ्गं तत्रैव कारयेत् ।
पृथ्वीजयस्तदा नाम कर्तव्यः सर्वदैवते ॥ ३० ॥
इति पृथ्वीजयः ।

षोडशांशकविस्तारे द्विभागः कर्णविस्तरः ।
नन्दिका चैकभागेन द्व्यंशः प्रतिरथस्तथा ॥ ३१ ॥
पुनर्नन्दी भवेद् भागं भद्रं वेदांशविस्तरम् ।
समस्तं समनिष्कासं भद्रे भागो विनिर्गमः ॥ ३२ ॥
चतुःषष्ठ्यंशको गर्भो वेष्टितो भित्तिभागतः ।
बाह्यभित्तिर्भवेद् भागा द्विभागा च भ्रमन्तिका ॥ ३३ ॥
कर्णे शृङ्गद्वयं कार्यं शिखरं सूर्यविस्तरम् ।
नन्दिकायां तु तिलकं प्रत्यङ्गं च द्विभागिकम् ॥ ३४ ॥
शृङ्गद्वयं प्रतिरथे उरःशृङ्गं षडंशकम् ।
शृङ्गद्वयं नन्दिकायामुरःशृङ्गं युगांशकम् ॥ ३५ ॥
द्विभागं भद्रशृङ्गं तु शृङ्गार्धे चैव निर्गमः ।
कर्णे प्रतिरथे चैव ह्युद्कान्तरभूषितम् ॥ ३६ ॥
इन्द्रनीलस्तदा नाम इन्द्रादिसुरपूजितः ।
वल्लभः सर्वदेवानां शिवस्यापि विशेषतः ॥ ३७ ॥
इतीन्द्रनीलः ।

कर्णे नन्दी तथा शृङ्गं रेखोर्ध्वे तिलकं तथा ।
महानीलस्तदा नाम कर्तव्यः सर्वदैवते ॥ ३८ ॥
इति महानीलः ।

कार्यं शृङ्गं च तिलके रेखा मध्ये प्रशस्यते ।
भूधरस्स समाख्यातः प्रासादो देवतालयः ॥ ३९ ॥
इति भूधरः ।

भूधरस्य यथा प्रोक्तं द्विभागं वर्द्धयेत् पुनः ।
पूर्ववद् दलसङ्ख्यायां भद्रपार्श्वे द्विनन्दिके ॥ ४० ॥
द्विभागं बाह्यभित्तिश्च शेषं पूर्वप्रकल्पितम् ।
तलच्छन्दमिति ख्यातमूर्ध्वमानमतः शृणु ॥ ४१ ॥
कर्णे द्विशृङ्गं तिलकं शिखरं सूर्यविस्तरम् ।
तिलके द्वे नन्दिकायां प्रत्यङ्गं तु द्विभागिकम् ॥ ४२ ॥
शृङ्गत्रयं प्रतिरथे षड्भागा चोरुमञ्जरी ।
तिलके द्वे पुनर्नन्द्यामुरःशृङ्गं युगांशकम् ॥ ४३ ॥

नन्द्यां च शृङ्गतिलके त्रिभागा चोरुमञ्जरी ।
द्विभागं भद्रशृङ्गं च अर्धे चार्धे च निर्गमः ॥ ४४ ॥
रत्नकूटस्तदा नाम शिवलिङ्गेषु कामदः ।
प्रशस्तः सर्वदेवेषु राज्ञां तु जयकारणम् ॥ ४५ ॥

इति रत्नकूटः ।

शृङ्गं तृतीयं रेखोर्ध्वे कर्तव्यं सर्वशोभनम् ।
वैडूर्यश्च तदा नाम कर्तव्यः सर्वदैवते ॥ ४६ ॥

इति वैडूर्यः ।

तथैव तिलकं नन्द्यां शृङ्गयुग्मं तु संस्थितम् ।
पद्मरागस्तदा नाम सर्वदेवसुखावहः ॥ ४७ ॥

इति पद्मरागः ।

रेखोर्ध्वे च ततः शृङ्गं कर्तव्यं सर्वशोभनम् ।
वज्रकश्चेति नामासौ शक्रादिसुरवल्लभः ॥ ४८ ॥

इति वज्रकः ।

भक्ते विंशतिधा क्षेत्रे द्विभागः कर्णविस्तरः ।
सार्धभागं भवेन्नन्दी कर्णवत्प्रथस्तथा ॥ ४९ ॥
पुनर्नन्दी सार्धभागं भागा वै भद्रनन्दिका ।
वेदांशो भद्रविस्तार एकभागस्तु निर्गमः ॥ ५० ॥
द्विभागा बाह्यभित्तिश्च द्विभागा च भ्रमन्तिका ।
तत्समा मध्यभित्तिश्च गर्भोऽष्टांशैः प्रकल्पितः ॥ ५१ ॥
कर्णे द्विशृङ्गं तिलकं रेखा द्विसप्तविस्तरा ।
नन्द्यां शृङ्गं च तिलकं प्रत्यङ्गं तु तदूर्ध्वतः ॥ ५२ ॥
शृङ्गत्रयं प्रतिकर्णे सप्तांशा चोरुमञ्जरी ।
नन्द्यां शृङ्गं च तिलकमुरःशृङ्गं षडंशकम् ॥ ५३ ॥
भद्रनन्द्यां तथा शृङ्गमिषुभागोरुमञ्जरी ।
भद्रशृङ्गं द्विभागं स मुकुटोज्ज्वलउच्यते ॥ ५४ ॥

इति मुकुटोज्ज्वलः ।

रेखोर्ध्वे च ततः शृङ्गं कर्तव्यं सर्वकामदम् ।
ऐरावतस्तदा नाम शक्रादिसुरवल्लभः ॥ ५५ ॥

इत्यैरावतः ।

तथैव तिलकं कुर्याद् भद्रकर्णे तु शृङ्गकम् ।
राजहंसः समाख्यातः कर्तव्यो ब्रह्ममन्दिरे ॥ ५६ ॥

इति राजहंसः ।

रेखोर्ध्वे च ततः शृङ्गं कर्तव्यं सर्वकामदम् ।
पक्षिराजस्तदा नाम कर्तव्यः स श्रियः पतेः ॥ ५७ ॥

इति पक्षिराजः ।

द्वाविंशत्या विभक्ते च द्विभागा भित्तिका भवेत् ।
भ्रमणी तत्समा चैव पुनर्भित्तिश्च तत्समा ॥ ५८ ॥
शतमूलपदैर्गर्भः कर्तव्यो लक्षणान्वितः ।
कर्णप्रतिरथरथोपरथा द्वि द्वि विस्तराः ॥ ५९ ॥
भद्रनन्दी भवेद् भागं वेदांशो भद्रविस्तरः ।
भागो भद्रे निर्गमः स्याच्छेषा वै पूर्वकल्पिताः ॥ ६० ॥
कर्णे द्विशृङ्गं तिलकं शिखरं षोडशांशकम् ।
शृङ्गद्वयं प्रतिरथे प्रत्यङ्गं च त्रिभागिकम् ॥ ६१ ॥
रथे शृङ्गत्रयं कुर्याच्छृङ्गोर्ध्वे चोरुमञ्जरी ।
द्वे द्वे शृङ्गे उपरथे उरःशृङ्गं षडंशकम् ॥ ६२ ॥
भद्रनन्द्यां भवेच्छृङ्गं वेदांशा चोरुमञ्जरी ।
द्विभागं भद्रशृङ्गं च कर्तव्यं च मनोरमम् ॥ ६३ ॥
सप्तनवत्यण्डकयुक् कर्तव्यो लक्षणान्वितः ।
वृषभो नाम विख्यात ईश्वरस्य सदा प्रियः ॥ ६४ ॥

इति वृषभः ।

कर्णे शृङ्गत्रयं चैव एकोत्तरशताण्डकः ।
मेरुश्चापि समाख्यातः कर्तव्यश्च त्रिमूर्तिके ॥ ६५ ॥

इति मेरुप्रासादः ।

सर्वस्य हेममेरोश्च यत्पुण्यं त्रिः प्रदक्षिणैः ।
कृते शैलेष्टकाभिश्च तत्पुण्याल्लभतेऽधिकम् ॥ ६६ ॥
हरो हिरण्यगर्भश्च हरिर्दिनकरस्तथा ।
एते देवाः स्थिता मेरौ नान्येषां स कदाचन ॥ ६७ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां केशर्यादिसान्धारप्रासादनिर्णयाधिकारो नामैकोनषष्ठ्युत्तरशततमं सूत्रम् ॥

## (१६०) नागरोद्भवविमानपुष्पकप्रासादलक्षणं षष्ट्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

पुष्पको विजयश्चैव सुभद्रो नन्दश्रीधरौ ।
विशालो दुन्दुभिः प्रान्तो गरुडश्चारुवर्धनः ॥ १ ॥
सिंहः पद्मः सम्भवश्च सुव्रतश्चामृतोद्भवः ।
गृहराजः सिद्धिकामो नन्दिघोषः सुनन्दनः ॥ २ ॥
तारागणो वृहच्छालो हंसः सर्वाङ्गसुन्दरः ।
तथा च पुष्पविजयो मेरुः प्रासादनायकः ॥ ३ ॥
पञ्चविंशतिरित्युक्ताः प्रासादाः पुष्पकादयः ।
विमानपुष्पकच्छन्दे सर्वदेवसुखावहाः ॥ ४ ॥
विज्ञेयः केशरी पूर्वं पञ्चाण्डः कर्णशृङ्गतः ।
विमानं शिखरं कुर्यान्मत्तालम्बेषु पुष्पकः ॥ ५ ॥

इति पुष्पकः ।

छन्दे च दशधा भक्ते कर्णे शृङ्गे तु नन्दनः ।
मल्लतलोर्ध्वरेखायां विजयः पुष्पकद्वयात् ॥ ६ ॥

इति विजयः ।

केशरी च प्रतिरथे सुभद्रः सर्वकामदः ।
कर्णोर्ध्वे केशरी कार्यः पूर्ववन्नन्दसंज्ञकः ॥ ७ ॥

इति सुभद्रनन्दौ ।

तृतीयो पुष्पको भद्रे श्रीधरश्चेति संज्ञितः ।

इति श्रीधरः ।

मन्दरतिलकरेखा कार्या मल्लतले तथा ॥ ८ ॥
उरुमञ्जरी विमाने तदग्रे पुष्पकद्वयम् ।
प्रत्यङ्गं पुष्पकश्चैव विशालः सर्वकामदः ॥ ९ ॥

इति विशालः ।

रेखोर्ध्वे तिलकं कुर्याच्छृङ्गं पञ्चाण्डकं खलु ।
दुन्दुभिर्नाम प्रासादः कर्त्तव्यः सर्वदैवते ॥ १० ॥

इति दुन्दुभिः ।

रेखोर्ध्वे च ततः शृङ्गं पञ्चाण्डकविभूषितम् ।
प्रान्तश्चेति समाख्यातः कर्तव्यः शान्तिमिच्छता ॥ ११ ॥

इति प्रान्तः ।

उरुमञ्जरी प्रत्यङ्गे तां कुर्यात् कुमुदोद्भवाम् ।
पुष्पकं मञ्जरीस्थाने गरुडश्चेति संज्ञितः ॥ १२ ॥

इति गरुडः ।

पृथ्वीजयो भवेत्पूर्वं शिखरं वै मलुतलम् ।
उरःशृङ्गे पुष्पकस्तु स भवेच्चारुवर्धनः ॥ १३ ॥

इति चारुवर्धनः

द्विपुष्पकयुतं भद्रं विमाने मञ्जरीद्वयम् ।
सिंहसंज्ञः स कर्तव्यो देवीनां शान्तिमिच्छता ॥ १४ ॥

इति सिंहः ।

पञ्चाण्डकानि शृङ्गाणि रेखोर्ध्वे तिलकं शुभम् ।
पद्मसंज्ञस्तदा नाम कर्तव्यः सर्वदैवते ॥ १५ ॥

इति पद्मः

कर्तव्या च तृतीयोरुमञ्जरी कुमुदोद्भवा ।
तदग्रे पुष्पको नन्द्यां तिलकं स तु संभवः ॥ १६ ॥

इति संभवः ।

पञ्चाण्डकश्च रेखोर्ध्वे सुभ्रतो नाम शोभनः ।

इति सुभ्रतः ।

शृङ्गाणि भद्रकर्णेष्वमृतोद्भवो द्विपुष्पकः ॥ १७ ॥

इत्यमृतोद्भवः ।

रेखोर्ध्वे तिलकं चैव पुष्पकाकारसंस्थितम् ।
गृहराजस्तदा नाम कर्तुः सन्तानवर्द्धनः ॥ १८ ॥

इति गृहराजः ।

इन्द्रनीले मूलरेखा उरःशृङ्गे तु पुष्पकः ।
प्रत्यङ्गे पञ्च तद्रूपाः सिद्धिकामः स उच्यते ॥ १९ ॥

इति सिद्धिकामः ।

कार्या ऊर्ध्वेऽर्कमञ्जर्यः स्वच्छन्दाश्च विमानकाः ।
नन्दिघोषस्तदा नाम कर्तव्यः सर्वदैवते ॥ २० ॥

इति नन्दिघोषः ।

तस्य शृङ्गाणि सर्वाणि कुर्यात् पञ्चाण्डकानि च ।
सुनन्दनस्तदा नाम सर्वशान्तिप्रदः सदा ॥ २१ ॥

इति सुनन्दनः ।

प्रत्यङ्गे च उरःशृङ्गं कुर्यात् तु कुमुदोपमम् ।
रेखोर्ध्वे चैव तिलकं स तारागण उच्यते ॥ २२ ॥

इति तारागणः ।

भद्रे कर्णे च शृङ्गाणि मत्तालम्बद्वयं तथा ।
बृहच्छालस्तु नाम्नाऽसौ कर्तव्यः सर्वदैवते ॥ २३ ॥

इति बृहच्छालः ।

रेखोर्ध्वे च ततः शृङ्गं पञ्चाण्डकविभूषितम् ।
हंस नामा स च प्रोक्तः सर्वदेवेषु शाश्वतम् ॥ २४ ॥

इति हंसः ।

रत्नकूटे मूलरेखा कार्यं मल्लतलं तथा ।
पुष्पकाश्च त्रयो भद्रे विमाने चोरुमञ्जरी ॥ २५ ॥
सर्वाङ्गसुन्दरो नाम कर्तव्यस्तु शिवात्मजे ।
उरुमञ्जरी प्रत्यङ्गे तदग्रे च द्विपुष्पकम् ॥ २६ ॥
रेखोर्ध्वे तिलकं कुर्यात् पुष्पकाकाररूपकः ।
स ख्यातः पुष्पविजयः कर्तव्यः सर्वकामदः ॥ २७ ॥
तस्य शृङ्गाणि सर्वाणि कुर्यात्पञ्चाण्डकानि च ।
मेरुसंज्ञकमित्येवं सर्वकामप्रदायकम् ॥ २८ ॥
मल्यातलं द्वादशधा द्विभागः कर्णविस्तरः ।
सार्धभागः प्रतिरथो भागार्धा चैव कर्णिका ॥ २९ ॥
चतुर्भागायतं भद्रमर्धभागं तु निर्गतम् ।
कर्णानुगानि शृङ्गाणि भूमिजे पञ्चभूमवत् ॥ ३० ॥
श्रीवत्से कर्णशृङ्गाणि पञ्चभू भूमिजे यथा ।
कर्णिका चार्धभागा स्यात्पञ्चभद्रं विमानके ॥ ३१ ॥
भद्रे कर्णे च शृङ्गाणि त्रिभूमे भूमिजे यथा ।
कुमुदाख्यस्तदा नाम भद्रलक्षणसंयुतः ॥ ३२ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां नागरोद्भवविमानपुष्पकप्रासादलक्षणाधिकारो नाम षष्ट्युत्तरशततमं सूत्रम् ॥

---

## (१६१) कुम्भकाद्युद्भवप्रासादात्मकमेकषष्ट्युत्तरशततमं सूत्रम्

---

विश्वकर्मोवाच—

अथातः सम्प्रवक्ष्यामि प्रासादानां तु लक्षणम् ।
नामपादप्रमाणं च प्रयुक्तं कुम्भकादिकम् ॥ १ ॥
कुम्भकः स्वामिभद्रश्च गरुडश्च सुशीलकः ।
स्वस्तिकश्चैव कैलासो नलिनो भिन्नमन्दरः ॥ २ ॥
गजभद्रस्तथा तुङ्ग उदकुम्भश्च मोदकः ।
गवाक्षः सिंहभद्रश्च इन्द्रमित्रश्च नन्दकः ॥ ३ ॥
पद्माक्षः कीर्तिदश्चैव वज्रकश्चन्द्रहर्षणो ।
निषधो नाम प्रासादः सर्वकामार्थसाधनः ॥ ४ ॥
सर्वाङ्गतिलको ज्ञेयः स्वामिभरण एव च ।
भिन्नमेरुस्तथा नाम प्रासादा देवदुर्लभाः ॥ ५ ॥
वेदाश्रमष्टभिर्भक्तं कर्णान्ते तु सुवृत्तकम् ।
पीठोपपीठजङ्घाश्च मेखलाकूटच्छाद्यकम् ॥ ६ ॥
वृत्ताकारं सर्वमिदं सपादं शृङ्गमुन्नतम् ।
घण्टाकलशशोभाढ्यं प्राग्ग्रीवाग्रसुशोभितम् ॥ ७ ॥
कैलासच्छन्दकोत्पन्न आद्यः कुम्भकसंज्ञितः ।
कुम्भकादिसमुत्पन्नाः प्रासादाः पञ्चविंशतिः ॥ ८ ॥
परिधावष्टधा भक्तं द्विद्व्यंशं दिक्षु भद्रकम् ।
निर्गमश्चार्धभागेन स्वामिभद्रश्च नामतः ॥ ९ ॥
प्रतिभद्रे पक्षिराजः सुशीलो वारिमार्गतः ।
कर्णाष्टकं चाष्टभद्रं स्वस्तिकः स तु नामतः ॥ १० ॥
भद्रकर्णकयोर्मध्ये भद्रपादे तु कर्णिका ।
कैलासश्च तदा नाम सिद्धकिन्नरसेवितः ॥ ११ ॥
कुर्याद् भद्राणि तस्यैव भद्रार्धेन विनिर्गतम् ।
नलिनश्च तदा नाम कर्तव्यो देवतालयः ॥ १२ ॥
षोडशोरुकशृङ्गाणि अष्टभद्रं तु योजयेत् ।
स भिन्नमन्दरः ख्यातः कर्तव्यः सर्वशान्तिदः ॥ १३ ॥
चतुर्भद्रेषु प्राग्ग्रीवा गजभद्रश्च नामतः ।
कीर्णवृत्तेषु कर्णेषु तुङ्गनामा स उच्यते ॥ १४ ॥
कर्णाश्च कर्णिकाश्चैव स्वस्ववृत्तसमुद्भवाः ।
उदकुम्भस्तदा नाम मोदकश्चोदकान्तरे ॥ १५ ॥
अष्टौ प्राग्ग्रीवकान् कुर्यात् कर्णयोः स्वस्तिकाकृतीन् ।
गवाक्षस्तु तदा नाम सिद्धकिन्नरसेवितः ॥ १६ ॥

भद्रे सिंहावलोका वै उद्गमाकारसंस्थिता: ।
अग्रौ भद्रेषु कर्तव्या: सिंहभद्र: स नामत: ॥ १७ ॥
अशीत्यंशैश्च परिधौ चतुर्भद्रं षडष्टत: ।
कर्णाश्च द्विपदा उक्ता भद्रमध्ये त्रयस्त्रय: ॥ १८ ॥
इन्द्रमिश्रस्तदा नाम पूजितस्त्रिदशैरपि ।
भद्रं रथाश्चतुष्पादा: षण्णवत्यंशतस्तलम् ॥ १९ ॥
द्वे द्वे शृङ्गे च भद्रेषु पद्माक्ष: स तु नामत: ।
कर्णाश्चाष्टदला: कार्या: कीर्तिद: सर्वशोभन: ॥ २० ॥
प्राग्ग्रीवाश्चैव भद्रेषु स्थिता दिक्षु विदिक्षु च ।
वज्रकाख्यस्तदा नाम शक्रादिसुरवल्लभ: ॥ २१ ॥
प्राग्ग्रीवाश्च तथाऽऽलेख्या ईलिकाकारशोभना: ।
चन्द्रकश्च तदा नाम वल्लभो रोहिणीपते: ॥ २२ ॥
परिधौ षण्णवत्यंशैर्द्व्यष्टभद्रं चतुष्पदम् ।
द्विपदा: षोडशाकर्णा हर्षणश्च समीरित: ॥ २३ ॥
चतुर्भद्रेषु प्राग्ग्रीवा: कर्तव्या: सर्वकामदा: ।
निषधश्च तदा नाम सुरकिन्नरसेवित: ॥ २४ ॥
भद्रकेषु च सर्वेषु प्राग्ग्रीवांश्च प्रदापयेत् ।
सर्वाङ्गतिलको नाम सर्वदेवेषु पूजित: ॥ २५ ॥
वज्रकस्य तु कर्णांश्च कुर्यादष्टदलाकृतीन् ।
आख्यात: स्वामिभरण: पूजितस्त्रिदशैरपि ॥ २६ ॥
कुर्यात् षोडशभद्रेषूर:शृङ्गाद्वयं द्वयम् ।
भिन्नमेरुस्तदा नाम सेवित: सिद्धकिन्नरै: ॥ २७ ॥
सर्वे वृत्तास्तु कर्तव्या: प्रासादा: कुम्भकादय: ।
कैलासचछन्दजाश्चैव कुम्भकाद्याश्च कामदा: ॥ २८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां कुम्भकाद्युद्भवप्रासादाधिकारो नामैकषष्ट्युत्तरशततमं सूत्रम् ॥

## (१६२) विमाननागरच्छन्दजपुष्पकादिप्रासादलक्षणात्मकं त्रिषष्ट्युत्तरशततमं सूत्रम् ॥

---

अपराजित उवाच—

विमाननागरच्छन्दे पुष्पकैश्च विभूषिते ।
विमानपुष्पकच्छन्दाः क्रमान्नागरजातयः ॥ १ ॥
कथं विभक्तिच्छन्दाश्च रूपालङ्कारका वृत्ताः ।
कथयस्व प्रसादेन विश्वेश जगतः प्रभो ॥ २ ॥

विश्वकर्मोवाच—

अथातः सम्प्रवक्ष्यामि प्रासादानां तु लक्षणम् ।
विभक्तिच्छन्दमाकारं प्रयुक्तं पुष्पकादिकम् ॥ ३ ॥
पुष्पको विजयश्चैव सुभद्रो नन्दश्रीधरौ ।
विशालो दुन्दुभिः प्रान्तो गरुडश्चारुवर्धनः ॥ ४ ॥
सिंहः पद्मः सम्भवश्च सुव्रतश्चाऽमृतोद्भवः ।
गृहराजः सिद्धिकामो नन्दिघोषः सुनन्दनः ॥ ५ ॥
तारागणो बृहच्छालो हंसः सर्वाङ्गसुन्दरः ।
तथा च पुष्पविजयो मेरुः प्रासादनायकः ॥ ६ ॥
पञ्चविंशतिरित्युक्ताः प्रासादाः पुष्पकादयः ।
वल्लभाः सर्वदेवानां विमानपुष्पकास्तथा ॥ ७ ॥
चतुरश्रीकृते क्षेत्रे अष्टाष्टकविभाजिते ।
क्षेत्रार्धे च भवेद् भद्रं भद्रार्धे कर्णविस्तरः ॥ ८ ॥
कर्णार्धस्य प्रमाणेन कर्तव्यो भद्रनिर्गमः ।
भद्रोपभद्रयुक्कर्ण उदकान्तरभूषितः ॥ ९ ॥
वेद कृत्वाङ्गवेदाग्रे वेदगर्भसंस्थितिः ? ।
सूर्या भित्त्या भ्रमनेखे वसुयुग्मैस्तलित्विया ॥ १० ।
वेदकृत्वान्तवेदाश्रे वेद वा लिङ्गपीठयोः ।
आयवत्सादि सूर्यैश्च विग्मंशेषभित्तिया: ? ॥ ११ ॥
पीठोपपीठजङ्घाश्च मेखलामाल्यच्छाद्यकम् ।
यन्मानं नागरे प्रोक्तं तच्छस्तं सर्वकामदम् ॥ १२ ॥
सान्धारेषु प्रकर्तव्या भद्रे चन्द्रावलोकना ।
मण्डोवरपञ्चमांशहीनं भद्रेषु छाद्यकम् ॥ १३ ॥
या तदूर्ध्वे संवरणा घण्टाकूटैरलङ्कृता ।
उद्गमे सिंहकर्णाढ्या भद्रे भद्रे प्रशस्यते ॥ १४ ॥

प्रहरस्य ततश्चोर्ध्वे त्रिभागं शृङ्गमुन्नतम् ।
लताख्यसर्वतोभद्रं कर्णे कर्णे नवाण्डकम् ॥ १५ ॥
षडंशं मूलशिखरमग्रभागसमुन्नतम् ।
विमानं पञ्चभूमं च शृङ्गैर्विंशतिभिर्वृतम् ॥ १६ ॥
अर्धोदयोक्ता घण्टा च विभक्ता पञ्चभागतः ।
कण्ठो ग्रीवा कुड्मलं च पद्मच्छत्रोपच्छत्रकम् ॥ १७ ॥
तदूर्ध्वे कलशं स्थाप्यं क्षीरार्णवसमुद्भवम् ।
मत्तालम्बयुतं भद्रं पुष्पकैः समलङ्कृतम् ॥ १८ ॥
समत्तावरणच्छाद्यं घण्टाकूटैरलङ्कृतम् ।
द्वितीयभूमिकोर्ध्वे तु घण्टा वै पुष्पकोन्नता ॥ १९ ॥
इमं यः कारयेच्चैवं प्रासादं पुष्पकाह्वयम् ।
पुष्पकीर्णं भवेद्राज्यं स्वर्गे वा भूमिशासने ॥ २० ॥

इति पुष्पकः ॥ १ ॥

चतुरस्रीकृते क्षेत्रे शतमूलविभाजिते ।
भागं भित्तिर्भ्रमो भागं गर्भश्चन्द्रकलांशकैः ॥ २१ ॥
अतश्चैवं निरन्धारान् प्रकुर्याच्च भ्रमैर्विना ।
षट्त्रिंशत्पदको गर्भः शेषा भित्तिर्द्विभागिका ॥ २२ ॥
द्विभागः कर्ण इत्युक्तो द्विभागो भद्रविस्तरः ।
भद्रार्धे च प्रतिष्ठानमुभयोरपि पक्षयोः ॥ २३ ॥
निर्गमश्चैकभागेन भद्रे प्रतिरथेऽथवा ।
तलच्छन्दमिति प्रोक्तमूर्ध्वमानमतः शृणु ॥ २४ ॥
चतुरो नन्दनान्कर्णे कुर्याच्च विधिपूर्वकम् ।
शिखरं चाग्रविस्तारं सार्धद्विभिः समुच्छ्रितम् ॥ २५ ॥
मल्लतलं पञ्चभूमं षष्टिशृङ्गसमावृतम् ।
कर्णे पञ्चाण्डकाः कार्याः श्रीवत्सः प्ररथे तथा ॥ २६ ॥
अर्धोदये भवेद् घण्टा कलशं भूमिजावृतम् ।
उरःशृङ्गक्रमयोगे द्वौ द्वौ मत्तावलम्बकौ ॥ २७ ॥
पीठोपपीठजङ्घाश्च मेखलामाल्यछाद्यकम् ।
नागरच्छन्द आख्यातः पूर्वमानप्रकल्पितः ॥ २८ ॥
शुकनासाग्रसंयुक्त-दिव्यमण्डपभूषितम् ।
जगत्याततयायुक्तं कुर्याच्छान्ति ? च्छृङ्गसमुच्छ्रितम् ॥ २९ ॥
इत्थं यः कारयेच्चैव प्रासादं विजयोद्भवम् ।
लभेत परमाँल्लोकान् भुक्त्वा भोगान् स स्वर्गजान् ॥ ३० ॥

इति विजयः ॥ २ ॥

विजयस्य च संस्थाने केशरी प्ररथे भवेत् ।
सुभद्रो नाम विज्ञेयः कर्तुः कल्याणकारकः ॥ ३१ ॥

इति सुभद्रः ॥ ३ ॥

कर्णोर्ध्वे क्रमसंस्थाने प्रदेयश्चैव केशरी ।
पादोनद्वयं पृथुत्वं ? सार्धद्वयं समुच्छ्रितिः ॥ ३२ ॥
शृङ्गं षडंशविस्तारं सार्धसप्तांशमुच्छ्रितम् ।
इदं मल्लतलं प्रोक्तमेकषष्टिस्तथाण्डकाः ॥ ३३ ॥
मत्तालम्बद्वयं भद्रे उरःशृङ्गक्रमेण च ।
विधेयं पूर्ववच्छेषं स नन्दः सर्वकामदः ॥ ३४ ॥

इति नन्दः ॥ ४ ॥

वेदयुग्मैकवेदास्रे गर्भः स्याच्चतुरंशतः ।
द्वे भित्ती भ्रमयुक्ते चैकैकं पदं च कल्पयेत् ॥ ३५ ॥
द्विभागः कर्ण इत्युक्तो भागार्धे चैव कर्णिका ।
सार्धभागः प्रतिरथो निर्गमे विस्तरे तथा ॥ ३६ ॥
पुनः कर्णी चार्धभागा त्रिभागो भद्रविस्तरः ।
निर्गमश्चैकभागेन शिखरादिसमुद्भवे ॥ ३७ ॥
वेदांशो भद्रविस्तारस्तदर्धेन तु निर्गमः ।
भद्रावलोकनं कुर्याच्छाद्यघण्टासमन्वितम् ॥ ३८ ॥
विधेयं पूर्ववच्छेषं पीठाद्यं छाद्यकान्तकम् ।
नागरोक्तविधं मानं प्रयुक्तं वास्तुवेदिभिः ॥ ३९ ॥
उक्तद्विक्रमके कर्णे नन्दनः सर्वतो भवेत् ।
प्रस्थे सर्वतोभद्रं शृङ्गं मल्लतलं तथा ॥ ४० ॥
द्वौ पुष्पकौ युतौ भद्रे तवङ्गाकाररूपिणौ ।
प्रत्यङ्गे पुष्पकं कुर्याच्छाद्यघण्टाद्यलङ्कृतम् ॥ ४१ ॥
घण्टाकुम्भशुकाग्रे च जगतीमण्डपादिकम् ।
पूर्ववच्च विधातव्यं प्रशस्तं सर्वकामदम् ॥ ४२ ॥
श्रीधरोऽयं समाख्यातः प्रासादो देवतालयः ।
लक्ष्म्यानन्दयुतो नित्यं कर्तुः सन्तानवर्धनः ॥ ४३ ॥

इति श्रीधरः ॥ ५ ॥

तद्रूपश्च तदाकारो युक्तः पूर्वगुणैस्तथा ।
तृतीयः पुष्पको भद्रे विशालः सर्वशान्तिदः ॥ ४४ ॥

इति विशालः ॥ ६ ॥

ऋत्वङ्कचन्द्रवेदाश्रे गर्भस्यारिराष्ट्रकैः ? ।
भ्रमभित्तिश्चैकपादा द्विभागा बाह्यभित्तयः ॥ ४५ ॥
द्विभागः कर्णइत्युक्तो भागार्धे चैव कर्णिका ।
कर्णतुल्यः प्रतिरथो विस्तरे निर्गमे तथा ॥ ४६ ॥
पुनश्च कर्णिका भागं वेदांशो भद्रविस्तरः ।
निर्गमश्च तदर्धेन कर्तव्यः शान्तिसिद्धिदः ॥ ४७ ॥

पीठोपपीठजङ्घाश्च मेखलामल्लच्छाद्यकम् ।
शुकाग्रं मण्डपाद्यं च पूर्वमानप्रकल्पितम् ॥ ४८ ॥
कर्णे शृङ्गद्वयं कुर्यान्नन्दनेन समावृतम् ? ।
प्रतिरथे च तत्तुल्यं कर्तव्यं शान्तिमिच्छता ॥ ४९ ॥
दिग्विस्तरं च शिखरं त्रयोदशसमुच्छ्रितम् ।
तद्रूपमानं मल्लं तु एकषष्टिस्तथाण्डकाः ॥ ५० ॥
उरःशृङ्गक्रमयोगे पुष्पकद्वयमुद्गमे ।
प्रत्यङ्गके पुष्पकं कुर्यात् तवङ्गाकाररूपिणम् ॥ ५१ ॥
घण्टा कुम्भशुकाग्रे च जगत्याद्यं च पूर्ववत् ।
एवंविधः प्रकर्तव्यः प्रासादोऽयं तु दुन्दुभिः ॥ ५२ ॥
क्षेमं चाऽत्र सुभिक्षं च नृपादौ वर्धते प्रजा ।
धर्मार्थकाममोक्षाणां प्राप्तिहेतुरभीप्सितः ॥ ५३ ॥

इति दुन्दुभिः ॥ ७ ॥

तृतीयं पुष्पकं दद्यात् स भवेत् प्रान्तसंज्ञकः ।
प्राप्नोति भोगं मुक्तिं च स्वर्गं वा प्रभुशासनम् ॥ ५४ ॥

इति प्रान्तः ॥ ८ ॥

त्यक्त्वा पुष्पकमेकं च भद्रं पञ्चांशविस्तरम् ।
अलङ्कृतं संवरणैस्त्रिभिर्भागैश्च निर्गमः ॥ ५५ ॥
एवं गरुडमाख्यातं कुर्याद् यो विष्णुमन्दिरे ।
प्राप्नोति विष्णुलोकं स यावदाभूतसंप्लवम् ॥ ५६ ॥

इति गरुडः ॥ ९ ॥

पुनः कुर्यात्तथा भद्रमुरःशृङ्गं विमानके ।
प्रत्यङ्गाग्रे पुष्पकश्च स भवेच्चारुवर्धनः ॥ ५७ ॥
वर्धते धनपुत्रैश्च जन्मजन्मनि भूतले ।
अतस्तु भोगभोक्ता स्यात् स्वर्गे भूयोऽपवर्गभाक् ॥ ५८ ॥

इति चारुवर्धनः ॥ १० ॥

मत्तालम्बद्वयं भद्रे सिंहनामा स शोभनः ।
पार्वत्यादिकदेवीनां सर्वासां शान्तिदायकः ॥ ५९ ॥

इति सिंहः ॥ ११ ॥

द्वितीयं चाऽपि प्रत्यङ्गे कुर्यात् कुमुदवच्च तत् ।
पद्मसम्भवनामानौ कर्तव्यौ परमेष्ठिते ॥ ६० ॥

इति पद्मसम्भवौ ॥ १२-१३ ॥

पद्मसम्भवसंस्थाने तद्रूपे तदवस्थिते ।
कर्णे प्रतिरथे चैव क्रमाद्दद्यात्तृतीयकम् ॥ ६१ ॥
पूर्वोद्गमसमाकारस्वरूपं लक्षणान्वितम् ।
उरःशृङ्ग परित्यज्य भद्रे दद्याद् द्विपुष्पकम् ॥ ६२ ॥

५१ अ.

प्रत्यङ्गके पुष्पकवदसौ सुव्रतसंज्ञकः ।
क्रियते यैः शुभं तेषामिह लोके परत्र च ॥ ६३ ॥

इति सुव्रतः ॥ १४ ॥

तृतीयं पुष्पकं दद्यात्स भवेदमृतोद्भवः ।
येन प्राप्येताऽमरत्वं भुक्तिश्च त्रिदशैः सह ॥ ६४ ॥

इत्यमृतोद्भवः ॥ १५ ॥

कर्णिका चैकभागा स्याच्छेषं पूर्वप्रकल्पितम् ।
षट्पञ्चाशं द्विशतकं वास्तुसंस्थानमेव च ॥ ६५ ॥

महोरःशृङ्गं विमानं प्रत्यङ्गाद्यं सपुष्पकम् ।
सर्वशृङ्गं नन्दनवत् क्रमात्त्रित्रिभिरावृतम् ॥ ६६ ॥

गृहराजस्तदा नाम कर्तव्यः सर्वदैवते ।
कैलाससदृशं चैव गृहं जन्मसु निश्चलम् ॥ ६७ ॥

इति गृहराजः ॥ १६ ॥

बृहच्छृङ्गे मल्लतलं विमानस्तस्य चाग्रतः ।
कार्यो विमानः प्रत्यङ्गे सिद्धिकामः स सिद्धिदः ॥ ६८ ॥

इति सिद्धिकामः ॥ १७ ॥

तृतीयं पुष्पकं कुर्यात् कर्णे प्रतिरथे तथा ।
नन्दिघोषस्तदा नाम सर्वदैवतवल्लभः ॥ ६९ ॥

इति नन्दिघोषः ॥ १८ ॥

क्षेत्रेऽष्टादशधा भक्ते त्रिभागः कर्णविस्तरः ।
रथोपरथिकौ चैव द्वौ द्वौ भागौ प्रकल्पयेत् ॥ ७० ॥

वेदांशो भद्रविस्तारस्तदर्धेन च निर्गमः ।
द्वौ द्वौ भागौ भ्रमो भित्ती शेषं गर्भगृहं भवेत् ॥ ७१ ॥

कुर्याच्च मन्दरं कर्णे पञ्चविंशतिरण्डकाः ।
पृथग् द्विभागविस्तारो नन्दनः स्यात्तदूर्ध्वतः ॥ ७२ ॥

शतमूले भवेद्रेखा तथा मल्लतलोद्भवा ।
घण्टाकलशशोभाढ्या सर्वकामफलप्रदा ॥ ७३ ॥

शृङ्गद्वयं प्रतिरथे एकं चोपरथे तथा ।
त्रिपुष्पकयुतं भद्रं प्रत्यङ्गं च सपुष्पकम् ॥ ७४ ॥

एवंविधः प्रकर्तव्यः प्रासादोऽसौ सुनन्दनः ।
भुक्त्वा तु भूमिजान् भोगान् स्वर्गे नन्दति भूपतिः ॥ ७५ ॥

इति सुनन्दनः ॥ १९ ॥

महोरःशृङ्गः पुष्पको विमानः पञ्चभूमिकः ।
तारागणः समाख्यातः प्रासादो ह्यमरालयः ॥ ७६ ॥

इति तारागणः ॥ २० ॥

बृहच्छृङ्गे मल्लुतलं तदर्धे च विमानकः ।
प्रत्यङ्गं चैव तद्रूपं बृहच्छालः स उच्यते ॥ ७७ ॥

इति बृहच्छालः ॥ २१ ॥

कुर्याच्चतुष्पुष्पकं च कर्णे प्रतिरथोर्ध्वतः ।
तदा नाम्ना हंस इति ब्रह्मणश्च सदा प्रियः ॥ ७८ ॥

इति हंसः ॥ २२ ॥

कुर्याद् द्विपुष्पकं कर्णे स भवेत्सर्वसुन्दरः ।
सर्वदेवे शुभः शस्तः सर्वकामफलप्रदः ॥ ७९ ॥

इति सर्वाङ्गसुन्दरः ॥ २३ ॥

विंशतिर्धामविस्तारो वेदांशः कर्णविस्तरः ।
त्रिभिर्भागैः प्रतिरथो निर्गमो विस्तरस्तथा ॥ ८० ॥
षडंशो भद्रविस्तारस्त्रिभागश्चास्य निर्गमः ।
द्वौ द्वौ भागौ भ्रमो भित्ती शेषं गर्भगृहं भवेत् ॥ ८१ ॥
कर्णे पृथ्वीजयं कुर्यान्मन्दरं प्रथे तथा ।
द्विपुष्पकयुतं भद्रं प्रत्यङ्गे पुष्पकं तथा ॥ ८२ ॥
मूलरेखां मल्लुतले षोडशांशैश्च विस्तरः ।
स पुष्पविजयो नाम्ना सर्वदेवहितात्मकः ॥ ८३ ॥

इति पुष्पकविजयः ॥ २४ ॥

विमानं वृद्धोरुशृङ्गं पुष्पकं प्रतिभद्रके ।
भद्रे द्विपुष्पकं कुर्यात् प्रत्यङ्गे चैव पुष्पकम् ॥ ८४ ॥
मेरुश्चासौ समाख्यातः कर्तव्यः सर्वदैवते ।
मेरुर्मेरूपमो दिव्यः सर्वरत्नमयोऽपि च ॥ ८५ ॥
एतैश्च लभ्यते पुण्यं पूजा स्याच्छिवमोदिका ॥ ८६ ॥

इति मेरुः ॥ २५ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
पुष्पकादिप्रासादलक्षणाधिकारो नाम द्विषष्ट्युत्तरशततमं सूत्रम् ॥

## (१६३) श्रीधरादिप्रासादलक्षणात्मकं त्रिषष्ट्युत्तरशततमं सूत्रम् ॥

---

अपराजित उवाच—

पुष्पकाः कथिता देवानेकपुष्पकसंकुलाः ।
कथयस्व तथान्यांश्च ये प्रोक्ताः श्रीधरादिकाः ॥ १ ॥

विश्वकर्मोवाच—

अथातः सम्प्रवक्ष्यामि प्रासादान् श्रीधरादिकान् ।
नामलक्षणसम्युक्तान् वास्तुवेदसमुद्भवान् ॥ २ ॥

श्रीधरो हेमकूटश्च सुभद्रो रिपुकेसरी ।
पुष्पो विजयभद्रश्च श्रीनिवासः सुदर्शनः ॥ ३ ॥

कुसुमकेशर नामा च तथा च सुरसुन्दरः ।
नन्द्यावर्तश्च पूर्णश्च सिद्धार्थशङ्खवर्धनः ॥ ४ ॥

त्रैलोक्यभूषणः पद्मो वज्रबाहु र्विशालकः ।
कमलोद्भवहंसौ च लक्ष्मीधरोऽतिवज्रकः ॥ ५ ॥

रतिदेहः सिद्धिकामः पञ्चचामरसंज्ञकः ।
नन्दिघोषो मनुनूत् कीर्णः सुप्रभः सुरनन्दनः ॥ ६ ॥

हर्षो दुर्धरो विजयस्त्रिकूटो नवशेखरः ।
पुण्डरीकः सुनाभश्च महेन्द्रः शिखिशेखरः ॥ ७ ॥

वराटः सुमुखश्चेति चत्वारिंशत् प्रकीर्तिताः ।
शुद्धच्छन्दास्तथैते च मिश्रकास्तु दशैव च ॥ ८ ॥

शुद्धानां लक्षणं वक्ष्ये विभक्ति भागसङ्ख्यया ।
तलच्छन्दमलङ्कारैः प्रयुक्तं वास्तुवेदिभिः ॥ ९ ॥

चतुरश्रीकृते क्षेत्रे चतुर्विंशतिभाजिते ।
कर्णः प्रतिरथो भद्रं वेदैर्वेदैस्तथाऽष्टभिः ॥ १० ॥

त्रिनिष्कासः प्रतिरथो भद्रं वेदांशनिर्गमम् ।
द्वौ द्वौ भागौ तथा भित्ती भ्रमणी वेदविस्तरा ॥ ११

षड्दारुकं भ्रमादौ च चतुःषष्टिश्च गर्भकः ।
सार्धायामो मण्डपश्च जगतीषु गुणोत्तमा ॥ १२ ॥

पीठोपपीठजङ्घाश्च मेखलाकूटच्छाद्यकम् ।
प्रशस्तं नागरे नाम भद्रे चन्द्रावलोकना ॥ १३ ॥

कर्णे भद्रे द्विद्विशृङ्गमेकं प्रतिरथे भवेत् ।
पञ्चविंशत्यण्डकस्तु श्रीधरश्च सुरालयः ॥ १४ ॥

घण्टाकलशशुकाग्रपताकाध्वजशोभितः ।
श्रीदानन्दो भवेन्नित्यं स्वर्गे वा भूमिशासने ॥ १५ ॥

इति श्रीधरः ॥

चतुरश्रीकृते क्षेत्रे शतमूलविभाजिते ।
द्विभागः कर्णइत्युक्तः सार्धः प्रतिरथो भवेत् ॥ १६ ॥

त्रिभागो भद्रविस्तारो निर्गमस्तु तदर्धतः ।
सार्धभागः प्रतिरथ-निर्गमश्च प्रकीर्तितः ॥ १७ ॥

भागं भागं भ्रमो भित्तिः शेषं गर्भगृहं भवेत् ।
मण्डोवरजगत्याद्यं पूर्वमानप्रकल्पितम् ॥ १८ ॥

कर्णे च नन्दनं कुर्यात् केशरी प्ररथे भवेत् ।
भद्रे शृङ्गद्वयं कुर्यात्तिलकं तिलकोपरि ॥ १९ ॥

रेखा षडंशविस्तारा तिलकं सार्धमुच्छ्रितम् ।
प्रत्यङ्गं नष्टकर्णं च हेमकूटः स उच्यते ॥ २० ॥

हेमरत्नपुरे रम्ये हेमप्राकारशोभिते ।
ईप्सितं लभते राज्यं स्वर्गे वा भूमिशासने ॥ २१ ॥

इति हेमकूटः ॥

ऋत्वङ्कचन्द्रवेदाश्रे वेदर्तुगर्भ उच्यते ।
शशी चन्द्रश्चन्द्रश्च भ्रमोभित्तिश्च कल्पिताः ॥ २२ ॥

वेदकर्णऋतुभद्रमुदकान्तरभूषितम् ।
कर्णे च सर्वतोभद्रं भद्रे चन्द्रावलोकनम् ॥ २३ ॥

दिग्भागं मूलशिखरं घण्टाकलशभूषितम् ।
सुभद्रो नाम विज्ञेयः सर्वकल्याणकारकः ॥ २४ ॥

इति सुभद्रः ॥

कर्णे द्वितीयमुपरि सर्वतोभद्रकं भवेत् ।
द्विभागं तिलकं कुर्यात् प्ररथे चोरुमञ्जरी ॥ २५ ॥

मत्तालम्बयुतं भद्रं नाम्ना स रिपुकेसरी ।
हन्ति सर्वान् रिपूंश्चासौ इहलोके परत्र च ॥ २६ ॥

इति रिपुकेसरी

सुभद्रस्य च संस्थाने तद्रूपे तदवस्थिते ।
कर्णे चाष्टदलं कुर्यात्तिलकं चैव शोभनम् ॥ २७ ॥

तद्वसन्तमहाराज्ये प्राप्यते जन्मजन्मनि ।
पुष्पकः पुष्पप्रकर-युक्तो वाराङ्गना यथा ॥ २८ ॥

इति पुष्पकः ॥

हेमकूटस्य संस्थाने तद्रूपे तदवस्थिते ।
कर्णेकुर्याद्द्वितिलकं केशरी च भवेदथ ॥ २९ ॥

कर्णे नन्दनपर्यन्तं तिलकं तत्र कारयेत् ।
शेषं च पूर्ववद् ज्ञेयं नाम्ना विजयभद्रकः ॥ ३० ॥

इति विजयभद्रः ॥

प्रतिरथोऽर्धनिष्कासः संस्थाने श्रीधरस्य च ।
क्रममूर्ध्वे परित्यज्ज कर्णे वै सर्वभद्रकम् ॥ ३१ ॥
तदूर्ध्वमुदकं कुर्यात् प्रमाणेन पृथुत्ववत् ।
सप्तविंशतिभक्तं च पृथुघ्ने भद्रकाकृतिः ॥ ३२ ॥
द्वितीया भूमिका मूर्ध्नि ततो माडाश्चतुष्किकाः ।
कर्णे भद्रे प्रकर्तव्या ऊर्ध्वे मध्यचतुष्किका ॥ ३३ ॥
मत्तावरणछाद्ययुग् घण्टाकूटैरलङ्कृता ।
भद्रोद्गमाश्च शृङ्गोर्ध्वे माडाद्याश्चाद्यभूमिका ॥ ३४ ॥
श्रीनिवासस्तदानाम यत्र वै रमते ध्रुवम् ।
भुक्त्यर्थं च प्रकर्तव्यः प्रासादः सूरपूजितः ॥ ३५ ॥

इति श्रीनिवासः ॥

पुष्पकस्य च संस्थाने तद्रूपे तदवस्थिते ।
भद्रकं कर्णतिलकं भद्रे स्यात् सिंहकर्णकः ॥ ३६ ॥
सुदर्शनस्तदा नाम कर्तव्यं विष्णुमन्दिरम् ।
क्रीडते विष्णुलोके च सेव्यते सुरयोषिता ॥ ३७ ॥
चतुरस्रीकृते क्षेत्रेऽष्टकर्णा भिन्नसूत्रतः ।
कर्णार्धा च भवेत् कर्णी उभयकर्णमध्यतः ॥ ३८ ॥
कूटावृतः पञ्चभूमो घण्टाकलशभूषितः ।
तद्रूपं मण्डपं पीठं लभतेऽनङ्गशर्म च ॥ ३९ ॥

इति पुष्पशिखरः ॥

द्वितीयकं क्रमं त्यक्त्वा पूर्ववद्रिपुकेशरी ।
तिलकं तत्र संस्थाने स भवेत् सुरसुन्दरः ॥ ४० ॥

इति सुरसुन्दरः ॥

चतुरस्रीकृते क्षेत्रे कर्णान्ते वृत्तकं भवेत् ।
अष्टचत्वारिंशदंशैः परिधिं च प्रकल्पयेत् ॥ ४१ ॥
विदिक्षु दिक्षु भद्राणि चतुष्पादानि कल्पयेत् ।
पृथक् कर्णाश्च द्विपदा एकैकं भद्रकान्तरे ॥ ४२ ॥
द्विक्रमोर्ध्वे तु रेखाश्च भद्रे वै सिंहकर्णकाः ।
पञ्चभूमोर्ध्वे-शिखरं घण्टाकलशभूषितम् ॥ ४३ ॥
तद्रूपं मण्डपं पीठं नाऽन्यत्रैवं स्वरूपतः ।
नन्दते स चिरं लोके नन्द्यावर्तः स उच्यते ॥ ४४ ॥

इति नन्द्यावर्तः ॥

क्षेत्रऽष्टादशधा भक्ते वेदांशः कर्णविस्तरः ।
कर्णिका चैकभागा स्याद् भद्रं चाऽष्टांशविस्तरम् ॥ ४५ ॥
भद्रावलोकनं कुर्याद् भित्तिकर्णेषु कर्णिकाः ।
कर्णे च सर्वतोभद्रं श्रीवत्सस्तस्य कर्णिका ॥ ४६ ॥
अधोदये चाद्रिभूः स्याच्छेषा वै पादभागिकाः ।
तृतीया भूमिका चोर्ध्वे ततो माडान्निवेशयेत् ॥ ४७ ॥
सार्धचतुर्भूमियुक्तः पूर्णः स्यात्सर्वकामदः ।
पूर्णस्वर्गसुखं लोके स्वर्गे वा भूमिशासनम् ॥ ४८ ॥
इति पूर्णः ॥
सुदर्शनस्य संस्थाने तद्रूपे तदवस्थिते ।
कर्णे च सर्वतोभद्रं स तु सिद्धार्थको भवेत् ॥ ४९ ॥
इति सिद्धार्थकः ॥
वृत्तं पूर्ववत् परिधौ चतुर्विंशतिभाजिते ।
शास्ता द्वयंशा अष्टकर्णा अन्तरे कर्णिकाः पदाः ॥ ५० ॥
शङ्खावर्तसमं मध्ये वितानं दिव्यभूषणम् ।
तद्रूपं शिखरं कार्यं शङ्खावर्ते च मण्डपम् ॥ ५१ ॥
शङ्खवर्धननामाऽसौ कर्तव्यो विष्णुमन्दिरम् ।
कर्ता यायाद्विष्णुलोके यावदाभूतसंप्लवम् ॥ ५२ ॥
इति शङ्खवर्धनः ॥
त्रैलोक्यभूषणं वक्ष्ये वन्दितं त्रिदशैरपि ।
शतार्धहस्तके ज्येष्ठो मध्यो दशकरोनकः ॥ ५३ ॥
त्रिंशद्धस्तैः कनिष्ठः स्यात्त्रिधोदितक्रमागतः ।
वल्लभः सर्वदेवानां शिवस्यापि विशेषतः ॥ ५४ ॥
त्रिंशद् भागैस्त्रिधा भक्ते गर्भः स्याद् दशभागिकः ।
द्वौ द्वौ भागौ भ्रमो भित्तिः कर्तव्यमविशङ्कितैः ॥ ५५ ॥
भित्तित्रयं प्रकर्तव्यं तथा च भ्रमणीद्वयम् ।
भद्रकं मध्यच्छन्देषु द्वितीये वर्धमानकः ॥ ५६ ॥
अन्तर्भित्ति परित्यज्य कुर्यात् पङ्दारुकद्वयम् ।
त्रैलोक्यभूषणं बाह्ये भद्रे चन्द्रावलोकनम् ।
वृत्तस्य पञ्चमांशे तु भित्तिः शेषस्तु गर्भकः ॥ ५७ ॥
चतुष्पदा रथाः कर्णा एकभागा च कर्णिका ।
भद्रकर्णौ भवेद् भागा भद्रं स्याद्दिक्प्रविस्तरम् ॥ ५८ ॥
अङ्गमानेन निष्कासो भद्रं पञ्चांशनिर्गमम् ।
पादमानोच्छ्रितं पीठं पञ्चपीठादिभूषणम् ॥ ५९ ॥
उपपीठं तथा जङ्घा मेखलाकूटच्छाद्यकम् ।
त्रयोविंशतिरुत्सेधे भद्रं षोडश चोन्नतम् ॥ ६० ॥

कर्णे प्रतिरथे चैव द्वे द्वे शृङ्गे च कारयेत् ।
अष्ट सप्ताण्डकाः कर्णाः प्ररथाश्च षडण्डकाः ॥ ६१ ॥

उरःशृङ्गाण्यष्ट कुर्यात् प्रत्यङ्गानि ततोऽष्टभिः ।
भद्रं संवरणायुक्तं कुर्यात् त्रैलोक्यभूषणम् ॥ ६२ ॥

कर्णाश्चाष्टदलाः कार्याः प्रत्यङ्गे वर्धमानकः ।
घण्टाकलशशोभाढ्यः कर्तव्यः शुभलक्षणः ॥ ६३ ॥

इति त्रैलोक्यभूषणः ॥

द्वात्रिंशद्भक्ते परिधौ वृत्ताकारस्तु पूर्ववत् ।
द्वि द्वि भागं भवेत्कर्णः पद्मपत्राकृतिस्तथा ॥ ६४ ॥

मण्डोवरश्च पादोनः सपादा शिखरोन्नतिः ।
तलच्छन्दोद्भवं रूपं पञ्च भू घण्टिकावधि ॥ ६५ ॥

पद्माख्यश्च तदा प्रोक्तः पद्मनाभस्य मन्दिरम् ।
कर्तृकावरकाश्चैव विष्णुलोकं व्रजन्ति हि ॥ ६६ ॥

दशधाभाजिते छन्दे द्विभागः कर्णविस्तरः ।
भागं भागं भवेत्कर्णी वेदांशो भद्रविस्तरः ॥ ६७ ॥

द्विभागो भद्रनिष्कास एकभागा च कर्णिका ।
द्विभागा च भवेद् भित्तिः शेषं गर्भगृहं मतम् ॥ ६८ ॥

मण्डोवरश्च पादोनः सपादा शिखरोन्नतिः ।
कुर्यात् कर्णेषु कूटानि विमानं पञ्चभूमिकम् ॥ ६९ ॥

भद्रे भद्रे तु प्राग्ग्रीवाच्छाद्यघण्टाद्यलङ्कृताः ।
पक्षबाहुस्तदा नाम कर्तव्यः सर्वदैवते ॥ ७० ॥

इति पक्षबाहुः ॥

त्रयोदशाण्डकं पूर्वं नागरच्छन्दनन्दनः ।
चतुर्द्वारेषु प्राग्ग्रीवाः विशालस्तु शिवालयः ॥ ७१ ॥

इति विशालः

वृत्ताकारो ह्यसौ पूर्वः परिधिर्युगवेदतः ।
कर्णाश्च द्विपदाः प्रोक्ता भद्रं वै पञ्चविस्तरम् ॥ ७२ ॥

चतुर्भद्रं सूर्यकर्णा विकर्णे तत्र लाञ्छिताः ।
मण्डोवरश्च पादोनः सपादः शिखरोदयः ॥ ७३ ॥

पञ्चभूमिसमायुक्त एकषष्टिस्तथाण्डकाः ।
घण्टाकलशपूर्वं च शुकाग्रं समलङ्कृतम् ॥ ७४ ॥

विधेर्विष्णो रवेः कुर्याच्छिवस्याऽपि विशेषतः ।
जगतीगर्भसम्युक्तं नाम्ना वै कमलोद्भवम् ॥ ७५ ॥

इति कमलोद्भवः ॥

सिद्धार्थस्य च संस्थाने तद्रूपे तदवस्थिते ।
विमानं पञ्चभूमं च कुर्याच्छृङ्गं तु कामदम् ॥ ७६ ॥
हंसध्वजस्तदा नाम चतुर्द्वारैरलङ्कृतः ।
चतुर्भिर्मण्डपैः ख्यातः स्वर्गादिभोगदायकः ॥ ७७ ॥
इति हंसध्वजः ॥
पूर्वं पृथ्वीजयश्चैव षण्णवत्युत्तरं शतम् ।
रेखोर्ध्वे तिलकं कुर्यान्नन्दिका तिलकंतथा ॥ ७८ ॥
अण्डकैः सप्तत्रिंशद्भिर्लक्ष्मीधर इतीरितः ।
रमते तत्र लक्ष्मीश्च सहिता विष्णुना सदा ॥ ७९ ॥
इति लक्ष्मीधरः ॥
वृत्तं पूर्वं च परिधौ षट्त्रिंशद्भिर्विभाजिते ।
द्विपदाः सूर्यकर्णाश्च पादा द्वादश कर्णिकाः ॥ ८० ॥
मण्डोवरश्च पादोनः सपादाः शिखरोच्छ्रयः ।
षड्भूमिकयुतश्चैव वज्रकः सर्वकामदः ॥ ८१ ॥
इति वज्रकः ॥
श्रीनिवासस्य संस्थाने तद्रूपे तदवस्थिते ।
चतुष्की भद्रप्राग्ग्रीवे तदग्रे वेदमण्डपाः ॥ ८२ ॥
सार्धेषु भूमिकोत्सेधं माडं कुर्याच्च कामदम् ।
रतिदेहस्तदा नाम कामदेवस्य चालयः ॥ ८३ ॥
इति रतिदेहः ।
भद्रकं पूर्वविज्ञेयं यदुक्तं रुचकादिके ।
भद्रोद्गमसमायुक्तः सिद्धिकामस्स उच्यते ॥ ८४ ॥
इति सिद्धिकामः ॥
नन्दिशालगुणैर्युक्तस्त्यक्तैकाग्रोरुमञ्जरीः ।
मत्तालम्बं ततः कुर्यात् स भवेत् पञ्चचामरः ॥ ८५ ॥
इति पञ्चचामरः ॥
रतिदेहत्रिभूम्यूर्ध्वे कुर्याच्च शिखरोत्तमम् ।
नन्दिघोषस्तदानाम कर्तव्यः सर्वदेवते ॥ ८६ ॥
इति नन्दिघोषः ॥
अग्रांशैश्च कृतं क्षेत्रं ह्यष्टभद्रमलङ्कृतम् ।
अष्टकर्णोदकैर्युक्तं तद्रूपं शिखरोत्तमम् ॥ ८७ ॥
मनूत्कीर्णं तदा नाम चतुर्दश मनुप्रियम् ।
विधेर्विष्णो रवेः कुर्याच्छिवस्यापि विशेषतः ॥ ८८ ॥
इति मनूत्कीर्णः ॥
विशाले कर्णतिलकं कर्णोर्ध्वे तिलकं तथा ।
चतुः प्राग्ग्रीवसंयुक्तः सुप्रभो नाम नामतः ॥ ८९ ॥
इति सुप्रभः ॥
भूमिजं वै मल्लतलं कर्णे कूटं चद्राविडम् ।
वराटं तु प्रतिरथे सुरानन्दः स उच्यते ॥ ९० ॥
इति सुरानन्दः ॥

कर्णशृङ्गं भद्रशृङ्गं सन्त्यजेत्पञ्चचामरे ।
सिंहकर्णद्वयं कार्यं हर्षणो नाम नामतः ॥ ९१ ॥
इति हर्षणः ॥

सिद्धार्थश्च भवेत्पूर्वं सिंहकर्णैः स दुर्धरः ।
दुर्धरो नाम गुणतः शिवसान्निध्यदः सदा ॥ ९२ ॥
इति दुर्धरः ॥

श्रीवत्सश्च भवेत्पूर्वं विजयो भद्रकोद्गमैः ।
विजयं सर्वकल्याणमायुरारोग्यवर्धनम् ॥ ९३ ॥
इति विजयः ॥

कर्णेच भवेद् भद्रं त्रिकूटः पञ्चभूमिकः ।
देशभाग्योद्घाटनार्थे शिवः स्याद् दक्षिणाननः ॥ ९४ ॥
इति त्रिकूटः ॥

त्यक्तकर्णद्वयं शृङ्गं तिलकं कामदं भवेत् ।
नवशेखर नामाऽसौ कर्तव्यः सर्वदैवते ॥ ९५ ॥
इति नवशेखरः ॥

केशरीसिंहकर्णश्च युक्तश्छन्दैस्तु नागरैः ।
पुण्डरीकस्तदा नाम कर्तव्यं विष्णुमन्दिरम् ॥ ९६ ॥
इति पुण्डरीकः ॥

हंसोद्भवे कर्णशृङ्गं सुनाभः सुभद्रोद्गमैः ।
सुनाभश्च गुणैः प्रोक्तो यावदाहृतसंप्लवम् ॥ ९७ ॥
इति सुनाभः ॥

मल्लं वराटशृङ्गैश्च तिलकं च महेन्द्रकः ।
महेन्द्रो नाम गुणत इन्द्रलोके पतिर्भवेत् ॥ ९८ ॥
इति महेन्द्रः ॥

चतुर्भिः सर्वतोभद्रैर्गर्भः स्यादुदकान्तरे ।
शिखरं शिखिसंयुक्तं नाम्नाऽसौ शिखिशेखरः ॥ ९९ ॥
इति शिखिशेखरः ॥

लताख्यं सर्वतोभद्रं मत्तालम्बे वराटकः ।
वराटो नाम गुणतस्तिष्ठेत्स शिवसन्निधौ ॥ १०० ॥
इति वराटः ॥

भूमिजं वै मल्लतलं मत्तालम्बैस्तु सन्मुखः ।
सान्धारमथवा कुर्यात् कस्तो ? मिश्रकोद्भवः ? ॥ १०१ ॥
इति सन्मुखः ॥

चत्वारिंशदिमे प्रोक्ताः प्रयुक्ताः श्रीधरादिकाः ।
सर्वे शस्ताश्च शुभदाः सर्वकामफलप्रदाः ॥ १०२ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां श्रीधरादि प्रासादलक्षणाधिकारो नाम त्रिषष्ट्युत्तरशततमं सूत्रम् ॥

---

## (१६४) पूर्णभद्रादिनागरप्रासादलक्षणात्मकं चतुःषष्ट्युत्तरशततमं सूत्रम्॥

---

विश्वकर्मोवाच—

पूर्णभद्रः सुभद्रश्च श्रीशैलः कुमुदोद्भवः।
सर्वतोभद्र इत्युक्ताः प्रासादा ब्रह्मणः प्रियाः॥ १॥

कीर्तिपताकर्षिकूटौ श्रीवत्सो विजयस्तथा।
गरुडश्च समाख्याताः प्रासादा हरिवल्लभाः॥ २॥

पद्मरागो विशालाख्यो विभवो रत्नसंभवः।
लक्ष्मीकोटर इत्येवं पञ्चैते तु जिनाश्रयाः॥ ३॥

हंस ऐरावतश्चैव त्रिमुखः पद्मकस्तथा।
स्वस्तिकश्च समाख्याताः पञ्चैते भानुवल्लभाः॥ ४॥

वृषभो गिरिकूटश्च कैलासश्चामरस्तथा।
महेन्द्रश्च समाख्याताः पञ्चैते शिववल्लभाः॥ ५॥

विभक्ति तलच्छन्दानामूर्ध्वमानं विशेषतः।
प्रयुक्ता विविधाश्छन्दा वास्तुवेदसमुद्भवाः॥ ६॥

भक्ते विंशतिधा क्षेत्रे त्रिभागः कर्णविस्तरः।
तत्समश्च प्रतिरथो विस्तरे निर्गमे तथा॥ ७॥

भागा नन्दी च षड्भद्रं द्विभागो भद्रनिर्गमः।
चतुर्भागा भवेद् भित्तिः शेषं गर्भगृहं भवेत्॥ ८॥

कर्णे द्विशृङ्गं तिलकं शिखरं सूर्यविस्तरम्।
रथेकशृङ्गतिलकमष्टांशा चोरुमञ्जरी॥ ९॥

नन्दिकायां च तिलकमुरःशृङ्गं षडंशकम्।
रथोद्गमस्ततो भद्रे पूर्णभद्रस्य लक्षणम्॥ १०॥

उरःशृङ्गं च वेदांशं भद्रे कुर्यात्तृतीयकम्।
सुभद्रश्च तदा नाम प्रासादः क्षितिभूषणः॥ ११॥

भद्रे शृङ्गं परित्यज्य नन्दीशृङ्गाणि कारयेत्।
श्रीशैलश्च तदा नाम कथितश्च विरञ्चिना॥ १२॥

भद्रे शृङ्गे कुमुदकः कर्तव्यः शुभलक्षणः।
कर्णे च तिलकं शृङ्गं सर्वतोभद्रलक्षणम्॥ १३॥

इति ब्रह्मप्रासादपञ्चकम्॥

क्षेत्रे च द्वाविंशतिधा पूर्ववत्तलसंस्थितिः।
कर्णप्ररथमध्ये च नन्दिका चैकभागिका॥ १४॥

कर्णे प्रतिरथे चैव द्वे द्वे शृङ्गे च कारयेत्।
त्रिभिर्भागैश्च प्रथमं सार्धद्व्यंशं द्वितीयकम्॥ १५॥

नन्दिकायां ततः शृङ्गं शृङ्गं षोडश विस्तरम्।
शिखरोर्ध्वे उरःशृङ्गं षड्भागं च तदग्रतः॥ १६॥

प्रत्यङ्गं त्र्यंशतः कीर्ति-पताकस्य च लक्षणम् ।
उरःशृङ्गं तृतीयं च ऋषिकूटः स उच्यते ॥ १७ ॥
रेखोर्ध्वे तिलकं नन्द्यां शृङ्गं श्रीवत्स उच्यते ।
ततः शृङ्गैश्च (ङ्गे च) विजयः सर्वकामफलप्रदः ॥ १८ ॥
कर्णे कूटं नन्दिशृङ्गं कर्णस्योभयपक्षतः ।
पक्षिराजः समाख्यातः प्रासादो भवनोत्तमः ॥ १९ ॥

इति विष्णुप्रासादपञ्चकम् ॥

कर्णे नन्दीप्रतिरथौ पूर्ववच्च सुसंस्थितौ ।
नन्दिका भागनिष्कासा द्विभागं पार्श्वक्षोभणा ॥ २० ॥
भागा नन्दी पुनः कार्या वेदांशो भद्रविस्तरः ।
निष्कासश्चक भागस्तु कर्तव्यः शुभलक्षणः ॥ २१ ॥
चतुर्भागं भवेद् भित्तिः शेषं गर्भगृहं भवेत् ।
कर्णे शृङ्गत्रयं कार्यं क्रमतो भागनिर्गतम् ॥ २२ ॥
षोडशांशं च शिखरमुरःशृङ्गं तदर्धतः ।
तत्पदोनं तदग्रं च तस्याग्रं च युगांशकम् ॥ २३ ॥
कर्णे प्रतिरथे तुल्या द्विक्रमा चैव नन्दिका ।
कर्णे प्रतिरथे भद्रे शृङ्गाणि त्रीणि त्रीणि च ॥ २४ ॥
द्वौ द्वौ कूटौ नन्दिकायां प्रत्यङ्गानि ततोऽष्टभिः ।
भद्रनन्द्येककूटं च पद्मरागः स उच्यते ॥ २५ ॥
भद्रशृङ्गे विशालाख्यो विभवं च तथा शृणु ।
कर्णकूटं नन्दिशृङ्गं नाम्ना वै विभवस्तथा ॥ २६ ॥
ततः शृङ्गे कामदस्तु कर्तव्यो रत्नसंभवः ।
भद्रे चेन्नन्दिका त्यक्ता लक्ष्मीकोटर उच्यते ॥ २७ ॥

इति जिनेन्द्रप्रासादपञ्चकम् ॥

तद्रूपं च तदाकारं भद्रं षड्भागविस्तरम् ।
द्वौ द्वौ नन्दी पार्श्वतश्चैकैकभाग प्रकल्पितौ ॥ २८ ॥
चतुष्पदा रथकर्णाः शृङ्गं षोडशविस्तरम् ।
उरःशृङ्गं तथाष्टांशं षडंशं तस्य चाग्रतः ॥ २९ ॥
चतुर्भागमुरःशृङ्गं भद्रे कुर्यात्तथोद्गमम् ।
कर्णे प्रतिरथे चैव शृङ्गाणि त्रीणि त्रीणि च ॥ ३० ॥
नन्दिकायामेकशृङ्गं शेषे कूटानि कारयेत् ।
इति शास्त्र ? (शस्त) गुणैर्युक्तो हंसनामा स उच्यते ॥ ३१ ॥
भद्रे शृङ्गं पुनर्दद्यात् स्यादैरावतलक्षणम् ।
त्यक्तं नन्दिद्वयं भद्रे त्रिमुखः सर्वकामदः ॥ ३२ ॥
भद्रशृङ्गे पद्मरागः कर्तव्यो लक्षणान्वितः ।
शृङ्गं त्यक्त्वा भद्रनन्दी स्वस्तिकस्तु भवेत्तदा ॥ ३३ ॥

इति सूर्यप्रासादपञ्चकम् ॥

चतुरश्रीकृते क्षेत्रे द्वाविंशतिविभाजिते ।
चतुष्पदा रथकर्णा एकैकांशा च नन्दिका ॥ ३४ ॥

षड्भागं च भवेद् भद्रं द्विद्व्यंशा युग्मनन्दिकाः ।
भद्रे शृङ्गत्रयं कार्यं द्वाविंशत्यंशशृङ्गकम् ॥ ३५ ॥

कर्णे प्रतिरथे कुर्याद् द्वादशांशोरुमञ्जरी ।
तथा नन्दौ द्वितिलकं प्रत्यङ्गं स्याद्युगांशकम् ॥ ३६ ॥

रथे शृङ्गं तिलकं तु नन्दावष्टांशमञ्जरी ।
भद्रनन्द्यां द्वितिलकं षडंशा चोरुमञ्जरी ॥ ३७ ॥

भद्रे शृङ्गं चतुर्थं च चतुर्भागैस्तु विस्तरः ।
एवंविधः प्रकर्तव्यः प्रासादो वृषभाभिधः ॥ ३८ ॥

भद्रनन्द्यामेकशृङ्गं गिरिकूटस्य लक्षणम् ।
कर्णोर्ध्वे च ततः शृङ्गं कैलासः सर्वकामदः ॥ ३९ ॥

तथैव तिलकं कुर्याद् द्विशृङ्गा रथनन्दिका ।
अमरोऽसौ समाख्यातः कर्तव्यः सर्वकामदः ॥ ४० ॥

ततः शृङ्गे तु माहेन्द्रः कर्तव्यः शान्तिमिच्छता ।
प्रासादपञ्चकं चैतत्कर्तव्यं शिववल्लभम् ॥ ४१ ॥

इति शिवप्रासादपञ्चकम् ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां पूर्णभद्रादिनागरप्रासादलक्षणाधिकारो नाम चतुःषष्ट्युत्तरशततमं सूत्रम् ॥

## (१६५) भूधरादिप्रासादलक्षणात्मकं पञ्चषष्ट्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

अत ऊर्ध्वं प्रवक्ष्यामि प्रासादानां तु लक्षणम् ।
भक्त्या छन्दैस्तथाकारैर्नागरा भूधरादयः ॥ १ ॥

भूधरो भद्रकश्चैव नन्दीशो नन्दिवर्धनः ।
पुष्पको मन्दरश्चैव गरुडो वृषभस्तथा ॥ २ ॥

ऐरावतो राजहंसः सुभद्रः पृथिवीजयः ।
इन्द्रनीलो महापद्मो वैडूर्यः सिंह एव च ॥ ३ ॥

त्रिविष्टपस्तु विज्ञेयः कैलासः पुण्यवर्धनः ।
वर्धमानो गिरिकूटः हंसः सर्वाङ्गसुन्दरः ॥ ४ ॥

श्रीनिवासः श्रियानन्दो मेरुः प्रासादनायकः ।
पञ्चविंशतिराख्याता जातिशुद्धाश्च नागराः ॥ ५ ॥

चतुर्भेदैस्तलोर्ध्वे तु प्रासादाः पञ्चविंशतिः ।
इषुपञ्चाष्टसप्ताऽत्र प्रयुक्ता वास्तुवेदिभिः ॥ ६ ॥

भूधरे वर्धमाने तु भद्रं वै चतुरंशकम् ।
मन्दरे च सुभद्रे च त्रिभागो भद्रविस्तरः ॥ ७ ॥

केशरी पूर्ववज्ज्ञेयः पञ्चाण्डकविभूषितः ।
मत्तालम्बयुतं भद्रं भूधरो नाम नामतः ॥ ८ ॥

भद्रशृङ्गे भद्रकं च द्वितीये नन्दिशालकः ।
भद्रे त्र्यक्तं च कर्णोर्ध्वे दद्यात्स्यान्नन्दिवर्धनः ॥ ९ ॥

तथैव च यदा शृङ्गं मत्तालम्बोऽग्रभद्रके ।
पुष्पको नाम विज्ञेयः सर्वकामफलप्रदः ॥ १० ॥

नवभक्ते तलच्छन्दे नन्दिका भागमेव च ।
भद्रे कर्णे द्विद्विशृङ्गं नन्द्यां शृङ्गे तु मन्दरः ॥ ११ ॥

भद्रे शृङ्गं तृतीयं च गरुडो विष्णुमन्दिरम् ।
भद्रे कर्णे यदा शृङ्गं मत्तालम्बे वृषस्तथा ॥ १२ ॥

तथैव भद्रे चेच्छृङ्गं शुभ ऐरावतो मतः ।
चतुर्थे भद्रशृङ्गे तु ब्रह्मोक्तो राजहंसकः ॥ १३ ॥

विभक्तमेकादशभिर्नन्दिकायां द्विशृङ्गकम् ।
नन्दनश्च तथा कर्णे श्रीवत्सस्तु तदूर्ध्वतः ॥ १४ ॥

नन्दिकायां ततः शृङ्गं द्वितीये तिलकं भवेत् ।
मत्तालम्बत्रिभद्रेषु सुभद्रो नाम नामतः ॥ १५ ॥

पृथ्वीजयो भद्रशृङ्गे इन्द्रनीलो द्वितीयके ।
तृतीयके महापद्मो वैडूर्य्यश्च चतुर्थके ॥ १६ ॥

त्यक्तं भद्रे नन्दिशृङ्गं सिंहो वै सर्वकामदः ।
तस्य भद्रे यदा शृङ्गं तदा नाम त्रिविष्टपः ॥ १७ ॥

स्यात्कर्णे च यदा शृङ्गं भवेत्पञ्चाण्डकं तथा ।
कैलासो नाम विज्ञेय ईश्वरस्य सदा प्रियः ॥ १८ ॥

त्रयोदशविभक्ते च द्विभागः कर्णविस्तरः ।
सार्धभागः प्रतिरथो भागतश्चैव नन्दिका ॥ १९ ॥

चतुर्भागं भवेद् भद्रं मुखभद्रविभूषितम् ।
चत्वारो मन्दराः कर्णे केशरी च तदूर्ध्वतः ॥ २० ॥

पञ्चाण्डकं प्रतिरथे नन्द्यां च तिलकं तथा ।
त्रिमत्तालम्बप्रभद्रं वर्धमानः स उच्यते ॥ २१ ॥

गिरिकूटो भद्रशृङ्गे द्वितीये हंस एव च ।
तृतीये च भवेच्छृङ्गं नाम्ना सर्वाङ्गसुन्दरः ॥ २२ ॥

चतुर्थशृङ्गे कुर्यात्तु श्रीनिवासं तथोत्तमम् ।
त्यक्तभद्रं नन्दिशृङ्गं श्रियानन्दस्ततो भवेत् ॥ २३ ॥

चतुर्थे भद्रशृङ्गे तु मेरुः स्याद् भवनोत्तमः ।
प्रासादानां समस्तानां मेरू राजा विधीयते ॥ २४ ॥

सान्धारका इमे कार्याः सभ्रमा भ्रमवर्जिताः ।
दशहस्ताद्यदा हीनं न कुर्याद् भ्रमसंयुतम् ॥ २५ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां भूधरादिप्रासादलक्षणाधिकारो नाम पञ्चषष्ट्युत्तरशततमं सूत्रम् ॥

## (१६६) सुरतर्वादिप्रासादलक्षणात्मकं षट्षष्ट्युत्तरशततमं सूत्रम् ॥

अपराजित उवाच—

उक्ता ये सुरतर्वाद्याः प्रासादाः सर्वकामदाः ।
प्रशस्ताश्च विना दोषैः कथयस्व प्रसादतः ॥ १ ॥

विश्वकर्मोवाच—

अथातः सम्प्रवक्ष्यामि प्रासादानां तु लक्षणम् ।
नाम पादप्रमाणं च संस्थानोन्मानलक्षणम् ॥ २ ॥
सुरतरुः श्रियानन्दः सुरानन्दस्तृतीयकः ।
नन्दाख्यो नन्दनश्चैव ह्यमृतोद्भव एव च ॥ ३ ॥
पृथ्वीजयश्च वैडूर्यो मुकुटोज्ज्वल एव च ।
लक्ष्मीभूषणनामा च तथा सर्वाङ्गभूषणः ॥ ४
भुवनमण्डनश्चैव श्रीरथः पुण्यवर्धनः ।
मन्दरो हिमवांश्चैव राजहंसो मनुप्रभः ॥ ५ ॥
सुरवल्लभस्त्रैलोक्यः सिद्धार्थश्च रतिप्रभः ।
महाकान्तः पद्मरागो मेरुश्च त्रिदशालयः ॥ ६ ॥
पञ्चविंशतिरित्युक्ता महाप्रासादनायकाः ।
वक्ष्यामि लक्षणं तेषां प्रस्तारच्छन्दनिर्णयम् ॥ ७ ॥
चतुरस्रीकृते क्षेत्रे त्रयोदशविभाजिते ।
त्रिभागो भद्रविस्तारः कर्णमानं द्विभागिकम् ॥ ८ ॥
भद्रार्धे च प्रतिरथो युग्माकारावुभौ च तौ ।
षडंशः पदनिष्कासः सर्वेषां च सुखावहः ॥ ९ ॥
उदकान्तरसंयुक्तं घण्टाकलशभूषितम् ।
चतुर्विंशतिवल्लीकमेकाण्डकविभूषितम् ॥ १० ॥
प्रासादं सुरतर्वाख्यमिमं यः कारयेन्नरः ।
इच्छितं लभते राज्यं भुक्त्वा भोगांश्चस्वर्पतिः ॥ ११ ॥

इति सुरतरुः ।

भद्रं कर्णे भवेद् भागं सपादः प्ररथस्तथा ।
वल्लभः सर्वदेवानां श्रियानन्दः शुभंकरः ॥ १२ ॥

इति श्रियानन्दः ॥

कर्णे शृङ्गं विधातव्यं रथिका भद्रशोभिता ।
सुरतरुस्तच्छिखरं सुरानन्दः स उच्यते ॥ १३ ॥

इति सुरानन्दः ॥

भद्रे तु शिखरं देयं घण्टाकलशभूषितम् ।
सर्वतो भद्रकाकारो नन्दाख्योऽसौ भवेत्तदा ॥ १४ ॥

तद्रूपे तत्प्रमाणे च भद्रपक्षे तु कर्णिका ।
भद्रे कर्णे द्विशृङ्गं च नन्दनः सर्वकामदः ॥ १५ ॥

इति नन्दनः ॥

अष्टधा भाजिते चैव समक्षेत्रे विचक्षणैः ।
द्विभागः कर्ण इत्युक्तः कर्णिका चार्धभागतः ॥ १६ ॥
तत्समा च द्वितीया च निर्गमे विस्तरे तथा ।
द्विभागं मुखभद्रं च अर्धभागेन निर्गमः ॥ १७ ॥
कर्णे शृङ्गं विधातव्यं सघण्टं त्र्यंशकोन्नतम् ।
तदूर्ध्वे तिलकं चैव द्विभागश्च तथोदयः ॥ १८ ॥
कर्णशृङ्गोभयपक्षे कर्ण्यां शृङ्गं समोदयम् ।
द्विभागमुन्नतं कुर्याच्छृङ्गं च प्रतिकर्णके ॥ १९ ॥
भागोन्नता च रथिका तद्विस्तारो द्विभागिकः ।
षड्भागा मूलरेखा च त्रिभागा चोरुमञ्जरी ॥ २० ॥
द्वितीया च द्विभागा स्यादेकभागा तृतीयका ।
द्वादशैवोरुमञ्जर्यः शृङ्गाणां विंशतिस्तथा ॥ २१ ॥
चतुस्तिलकसंयुक्तं त्रयस्त्रिंशत्तथाऽण्डकाः ।
अमृतोद्भवनामाऽसौ वन्दितस्त्रिदशैरपि ॥ २२ ॥

इत्यमृतोद्भवः ॥

दशधा भाजिते क्षेत्रे द्विभागः कर्णविस्तरः ।
अर्धभागा कर्णिका च सपादा च द्वितीयका ॥ २३ ॥
अर्धभागा तृतीया च भद्रं स्यात्सार्धभागिकम् ।
कर्णे शृङ्गद्वयं कुर्यात् षड्भागा मूलमञ्जरी ॥ २४ ॥
कर्णशृङ्गे सङ्गता च सार्धद्व्यंशोरुमञ्जरी ।
द्विभागा च द्वितीया स्यात् प्रत्यङ्गं च तदूर्ध्वतः ॥ २५ ॥
एकभागां मञ्जरिकां रथिकोपरि दापयेत् ।
पुनरग्रे चार्धभागां चतुर्थीमुरुमञ्जरीम् ॥ २६ ॥
चतुर्विंशति शृङ्गाणि चोरःशृङ्गाणि षोडश ।
लघुकर्ण्यां च तिलकं प्रत्यङ्गे तु ततोऽष्ट च ॥ २७ ॥
पृथ्वीजयस्तथैकोनपञ्चाशच्चाण्डकैर्भवेत् ।
एकच्छत्रं धराराज्यं भवेज्जन्मनि जन्मनि ॥ २८ ॥

इति पृथिवीजयः ॥

क्षेत्रे द्वादशधा भक्ते द्विभागः कर्णविस्तरः ।
कर्णिका चार्धभागा स्यात् सार्धः प्रतिरथो भवेत् ॥ २९ ॥
अर्धभागा पुनः कर्णी तत्समा भद्रकर्णिका ।
निष्कासो विस्तरसमः कर्णिका प्ररथे तथा ॥ ३० ॥
द्विभागो भद्रविस्तारो निर्गमश्चैकभागिकः ।
भागोत्सेधा च रथिका भागा स्याच्चोरुमञ्जरी ॥ ३१ ॥

द्वितीयका तद्विगुणा त्रिभागा तु तृतीयका ।
चतुर्थी च चतुर्भागा तृतीयावत् प्रत्यङ्गकम् ॥ ३२ ॥
उरुमञ्जर्यर्धभागा प्रदाप्या रथिकोर्ध्वतः ।
रथकर्ण्यां भवेच्छृङ्गं प्रत्यङ्गे च द्विकर्णकम् ।
कर्णे प्रतिरथे चैव द्विद्विशृङ्गं प्रदापयेत् ॥ ३३ ॥
चत्वारिंशच्च शृङ्गाण्युरुमञ्जर्यश्च विंशतिः ।
प्रत्यङ्गे चाष्टमञ्जर्यः शेषं च तिलकान्वितम् ॥ ३४ ॥
ख्यातो वैडूर्य एकोनसप्तत्यण्डकतो भवेत् ।
कर्ता चाऽप्सरकैः सार्धं शिवलोके महीयते ॥ ३५ ॥

इति वैडूर्यः ॥

क्षेत्रे विभक्ते सप्तांशैर्द्विभागः कर्णविस्तरः ।
अर्धभागा कर्णिका च सार्धः प्रतिरथो भवेत् ॥ ३६ ॥
पुनः कर्णी चार्धभागा नन्दिका चैकभागिका ।
अर्धा कर्णी विधातव्या द्विभागो भद्रविस्तरः ॥ ३७ ॥
कर्णे द्विशृङ्गं तिलके द्वे द्वे नन्द्यां प्रतिरथे ।
षट् त्रिद्विसार्धैकार्धमुरःशृङ्गाणि कल्पयेत् ॥ ३८ ॥
षोडशप्रत्यङ्गयुक्तं शेषं वै कूटकं तथा ।
मुकुटोज्ज्वल आख्यातः कर्तव्यः सर्वदैवते ॥ ३९ ॥

इति मुकुटोज्ज्वलः ॥

चतुर्विंशतिभिर्भक्ते द्विभागाः कर्णकानुगाः ।
त्रिसंघाटा मध्यकर्णे शेषा भागेन कल्पिताः ॥ ४० ॥
द्विभागं पृथुभद्रं स्यादर्धे द्वे द्वे च कर्णिके । ?
द्व्यंशोदया च रथिका सार्धद्व्यंशा तु कर्णिका ॥ ४१ ॥
द्वितीया तु त्रिभागास्यादर्धयुक्ता तृतीयका ।
तत्तुल्या तु चतुर्थ्यूर्ध्वे तिलकं त्वेकभागिकम् ॥ ४२ ॥
पञ्चमी च चतुर्भागा द्विभागं तिलकं तथा ।
षष्ठी चतुर्था विज्ञेया प्रत्यङ्गतिलकोपरि ॥ ४३ ॥
चतुर्थी पञ्चमी षष्ठी त्रिसंघाटं तदुच्यते ।
स्यात् कर्णे रथिकामध्ये संघाटस्तत्प्रमाणतः ॥ ४४ ॥
पोषयेन्मध्यकर्णार्धे शोषयेत्पक्षकर्णिकाम् ।
तत्प्रत्यङ्गे मध्यकर्णी लघुस्था वामदक्षिणे ॥ ४५ ॥
एकद्वित्रिचतुःषट् अग्रस्यादावुभौ च च ? ।
ऊरुमञ्जरी त्यागानि द्विरष्टौस्यान्मूलमञ्जरी ? ॥ ४६ ॥
त्रिभागमुच्छ्रितं शृङ्गं भागास्यात्पद्मपत्रिका ।
द्राविडे वराटकूटं त्रिसंघाटे प्रकल्पयेत् ॥ ४७ ॥
कर्णे प्रतिरथे चैव त्रित्रिशृङ्गं समुन्नतम् ।
षट्त्रिंशच्छृङ्गाणि कर्ण्यां चतुःषष्टिस्तथैव च ॥ ४८ ॥

अष्टाविंशत्युरःशृङ्गं प्रत्यङ्गानि च द्वात्रिंशत् ।
शृङ्गाणि सर्वाणि शतं सप्तपञ्चाशदुत्तरम् ॥ ४९ ॥
लक्ष्मीभूषणनामाऽसौ सर्वदेवहितावहः ।
कर्तृकारून् प्रापयेत्तद् यत्स्थानं देवदुर्लभम् ॥ ५० ॥

इति लक्ष्मीभूषणः ॥

अष्टाविंशतिभक्ते च द्विभागः कर्णविस्तरः ।
तत्समश्च प्रतिरथो निर्गमश्चैकभागिकः ॥ ५१ ॥
रथश्चाऽनुगतश्चैव द्विभागं विस्तरे पृथक् ।
सार्धभागा नन्दिका च तत्समा प्रतिनन्दिका ॥ ५२ ॥
अर्धमर्धं विधातव्याश्चतस्रः कर्णिका बुधैः ।
द्विभागो भद्रविस्तारो निर्गमश्चार्धभागिकः ॥ ५३ ॥
रथिकांशोन्नता सार्धं कर्णशृङ्गं समुन्नतम् ।
द्विभागं द्वितीयं चैव सार्धत्र्यंशं तृतीयकम् ॥ ५४ ॥
त्र्यंशोन्नतं चतुर्थं च चतुरंशैस्तु पञ्चमम् ।
षष्ठं च तत्समं ज्ञेयमूर्ध्वशृङ्गं तु द्व्यंशकम् ॥ ५५ ॥
अन्यानि सर्वशृङ्गाणि वेदांशानि समुच्छ्रितौ ।
त्रिभागा चोच्छ्रिता शृङ्गे भागा स्यात् पद्मपत्रिका ॥ ५६ ॥
त्रिशृङ्गमुच्छ्रितं कर्णे द्व्यंशं प्रतिरथे तथा ।
रथे कर्णे समन्ताच्च प्ररथे च तथानुगाः ॥ ५७ ॥
षट्पञ्चाशत्कर्णशृङ्गमष्टषष्टिर्दलाण्डकाः ।
उरःशृङ्गाणि द्वात्रिंशत् प्रत्यङ्गानि ततोऽष्टभिः ॥ ५८ ॥
रेखाविंशतिभागाश्च शृङ्गगर्भे च मञ्जरी ।
पञ्चषष्ट्युत्तरशतमण्डकानां प्रशस्यते ॥ ५९ ॥
सर्वाङ्गभूषणश्चैव प्रासादः सुरवल्लभः ।
सुरैः सह क्रीडयन्ते यावदाहूतसंप्लवम् ॥ ६० ॥

इति सर्वाङ्गभूषणः ॥

भद्रे शृङ्गं प्रदातव्यं नाम्ना भुवनमण्डनः ।
प्रियश्च नित्यं देवानां नवषष्टिशताण्डकः ॥ ६१ ॥

इति भुवनमण्डनः ॥

विमानवत्सुरतरौ कर्णे शृङ्गं त्रिभूमिकम् ।
भद्रे रथोद्गमश्चैव श्रीरथः सर्वकामदः ॥ ६२ ॥

इति श्रीरथः ॥

श्रीवत्से कर्णशृङ्गाणि विमानः पञ्चभूमिकः ।
रथिकाभद्रशोभाढ्यो नाम्नाऽसौ पुण्यवर्धनः ॥ ६३ ॥

इति पुण्यवर्धनः ॥

सुरानन्दं कर्णशृङ्गे सर्वतोभद्रमालिखेत् ।
मन्दरोऽसौ समाख्यातः सुरूपो लक्षणान्वितः ॥ ६४ ॥

इति मन्दरः ॥

विमानच्छन्दं नन्दाख्यं शिखरे चोरुमञ्जरी ।
हिमवांश्च तदा नाम वन्दितस्त्रिदशैरपि ॥ ६५ ॥

इति हिमवान् ॥

तद्रूपे तु द्वितीया च त्रिभूमा चोरुमञ्जरी ।
राजहंसस्तदा नाम सिद्धकिन्नरसेवितः ॥ ६६ ॥

इति राजहंसः ॥

अमृते कर्णशृङ्गं च कर्तव्यं तु नवाण्डकम् ।
मनुप्रभस्तदा नाम प्रासादो देवतालयः ॥ ६७ ॥

इति मनुप्रभः ॥

पृथ्वीजये सर्वशृङ्गं कर्तव्यं च नवाण्डकम् ।
सुरवल्लभनामासाविच्छाभुक्तिप्रदायकः ॥ ६८ ॥

इति सुरवल्लभः ॥

वैडूर्ये सर्वशृङ्गाणि कर्तव्यानि च सर्वतः ।
त्रैलोक्यस्तु तदा नाम पूज्यः सुरनरोरगैः ॥ ६९ ॥

इति त्रैलोक्यः ॥

मुकुटोज्ज्वलवच्छृङ्गं कर्तव्यं च नवाण्डकम् ।
सिद्धार्थकस्तदा नाम सिद्धिभुक्तिप्रदायकः ॥ ७० ॥

इति सिद्धार्थकः ॥

लक्ष्मीभूषणशृङ्गं च भूषणीयं नवाण्डकैः ।
चतुर्मुखो रतिप्रभः कामदेव सुखालयः ॥ ७१ ॥

इति रतिप्रभः ॥

सर्वाङ्गभूषणे शृङ्गं कर्तव्यं सर्वतोभवम् ।
महाकान्तस्तदा नाम कर्तव्यः सर्वदैवते ॥ ७२ ॥

इति महाकान्तः ॥

नवाण्डकं च कर्तव्यं शृङ्गं भुवनमण्डने ।
पद्मरागस्तदा नाम कर्तव्यः पद्मयोनये ॥ ७३ ॥

इति पद्मरागः ॥

केतकीस्वर्णदलतस्तादृशी चोरुमञ्जरी ।
विमाने नव शृङ्गाणि शिखरे चोरुमञ्जरी ॥ ७४ ॥
प्रत्यङ्गानि विमाने च मूलरेखा च शृङ्गतः ।
लताः पञ्चैकादशांशा मेरुर्दशशताण्डकः ॥ ७५ ॥

इति सहस्राण्डको मेरुः ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां सुरतर्वादिप्रासादलक्षणाधिकारो नाम षट्षष्ट्युत्तरशततमं सूत्रम् ॥

## (१६७) एकविंशतिमेरुलक्षणं सप्तषष्ट्युत्तरशततमं सूत्रम्

विश्वकर्मोवाच—

मेरुर्वृषभो गरुडो मन्दरो लक्ष्मीकोटरः ।
कैलासः पञ्चवक्त्रश्च विमानो गन्धमादनः ॥ १ ॥

मुक्तकोणो गिरिश्चैव तिलकश्चन्द्रशेखरः ।
मन्दरतिलकश्चैव सौभाग्यः सुन्दरस्तथा ॥ २ ॥

श्रीतिलको विशालश्च श्रीकूटो नन्दिवर्धनः ।
पद्मसम्भव आख्याताः प्रासादास्त्वेकविंशतिः ॥ ३ ॥

दशधा चाऽष्टधा चैव नवधा च प्रकल्पयेत् ।
भागो भागा भ्रमो भित्तिः शेषं गर्भगृहं भवेत् ॥ ४ ॥

मेरुर्वृषभो गरुड एषां युक्तिर्विधीयते ।
ज्येष्ठो मध्यः कनिष्ठश्च मेरुस्त्रिविध उच्यते ॥ ५ ॥

दशहस्तादधो नास्ति प्रासादो भ्रमसंयुतः ।
लतिने त्वेकहस्तादि पञ्चाशद्धस्तकावधि ॥ ६ ॥

नागरैः शुद्धछन्दाश्च कर्तव्याः सर्वकामदाः ।
कर्णाद्यं गर्भपर्यन्तं विभागानां तु निश्चयः ॥ ७ ॥

एकविंशतिप्रासादा मेरुकाद्यसमुद्भवाः ।
क्रमयुक्त्या विधातव्याः प्रयुक्ता वास्तुवेदिभिः ॥ ८ ॥

षड्ढस्तवेदयुगका युगवेदद्विपड्वसु ।
पृथुमानेन निष्कासो भद्रं पद्भिर्विनिर्गतम् ॥ ९ ॥

कर्णे च नन्दिकां कुर्यात् तत्तुल्यां प्ररथे तथा ।
केशरी स्यादुपरथे श्रीवत्सो नन्दिकोद्गमे ॥ १० ॥

त्रीणि षट् चत्वारि कर्णे नन्द्यां प्ररथके क्रमात् ।
प्रत्यङ्गे चैव द्वात्रिंशदुरःशृङ्गाणि विंशतिः ॥ ११ ॥

चन्द्रावलोकना भद्रे छाद्यघण्टाद्यलङ्कृता ।
आमलसारं कलशं शुकनासयुता ध्वजा ॥ १२ ॥

मण्डपैः सुवितानैश्च सभ्रमा जगती तथा ।
शालाकुलो युक्ति कीर्ण सहस्राण्डक मेरुकः ॥ १३ ॥

इति मेरुप्रासादः ॥

इषुपक्षर्तुयमला स्तत्त्व द्व्यग्नियमर्तवः ।
भद्रं चार्धार्धनिष्कासं पृथक् शेषा विनिर्गताः ॥ १४ ॥

कर्णे च सर्वतोभद्रं श्रीवत्सं रथनन्दिके ।
त्रीणि षट् चन्यानि क्रमादुरःशृङ्गाणि षोडश ॥ १५ ॥
द्वात्रिंशच्चैव प्रत्यङ्गे जगत्याद्य च पूर्ववत् ।
ज्ञेयो वृषभमेरुश्च सार्धसप्तशताण्डकः ॥ १६ ॥
इति वृषभमेरुः ॥

इषुवेदेषुवेदाश्च भद्रं षट् च यथाक्रमम् ।
नन्दनद्विक्रमं कर्णे तत्तुल्यं प्ररथे तथा ॥ १७ ॥
केशरर्युपरथे देयस्तिलकानि तदूर्ध्वतः ।
द्वादशैवोरःशृङ्गाणि प्रत्यङ्गे तु तथाऽष्ट च ॥ १८ ॥
मेरुसंज्ञश्च गरुडो ज्ञेयः पञ्चशताण्डकः ।
विष्णोर्विष्णो रवेः कार्यो जैनादीनां च शाश्वतः ॥ १९ ॥
इति गरुडमेरुः ॥

इषुपञ्चत्रिषट्कं चाऽष्टाविंशति भाजिते ।
कर्णे केशरिको द्वौ द्वावेकः प्रतिरथे तथा ॥ २० ॥
उरःशृङ्गद्वयं चैव नन्द्यां च तिलकं तथा ।
पञ्चवेदचतुःषट्कं कर्णाद्या भ्रमभित्तयः ॥ २१ ॥
पञ्चाशीत्यण्डकैर्युक्तः कर्तव्यः सर्वकामदः ।
मन्दरो मेरुसंज्ञश्च शिवसूर्यादिके भवेत् ॥ २२ ॥
इति मन्दरमेरुः ॥

वेदेन्दुवेदेन्दुयुगा अष्टाविंशतिभाजिते ।
कर्णे प्रतिरथे चैव द्वे द्वे शृङ्गे च सर्वतः ॥ २३ ॥
नन्द्यां च लघुशृङ्गाणि कर्णतुल्यानि चोच्छ्रये ।
तदूर्ध्वे लघुतिलकं रथिका त्र्यंशकोन्नता ॥ २४ ॥
षोडश चोरःशृङ्गाणि प्रत्यङ्गे तु तथाऽष्ट च ।
चतुस्त्रिंशत्सर्वभद्रं भद्रकाणां च सङ्ख्यया ॥ २५ ॥
चतुर्विंशतितिलकैः सभ्रमो वा भ्रमैर्विना ।
पञ्चषष्टिश्च द्विशतं लक्ष्मीकोटरकाण्डकाः ॥ २६ ॥
इति लक्ष्मीकोटरमेरुः ॥

वेदरामाब्धित्रिवेदाः षट्त्रिंशद्भिर्विभाजिते ।
भ्रमैर्विना सभ्रमो वा कर्तव्यः सर्वकामदः ॥ २७ ॥
कर्णे प्रतिरथे चैव द्वे द्वे शृङ्गे पञ्चाण्डकाः ।
द्वादश चोरःशृङ्गाणि प्रत्यङ्गानि तथाऽष्ट च ॥ २८ ॥
कर्ण्यां तिलकानि कुर्यात्कैलासो नामतो भवेत् ।
इति कैलासमेरुः ॥
एकचत्वारिंशदेव प्रशस्यन्तेऽण्डकास्तथा ॥ २९ ॥

पक्षयुग्मचन्द्रवेदैर्भक्तेऽष्टादशभिस्तथा ।
कर्णे शृङ्गद्वयं चैव पञ्चाण्डकविभूषितः ॥ ३० ॥

दापयेत्तिलकं कर्ण्यां शृङ्गं प्रतिरथे तथा ।
कार्याण्यष्टोरुशृङ्गाणि पञ्चवक्त्रस्तु नामतः ॥ ३१ ॥

इति पञ्चवक्त्रमेरुः ॥

पक्षचन्द्रगुणाश्चैव विभक्ते सूर्यसङ्ख्यया ।
चत्वारो नन्दनाः कर्णे विमानः शिखरोद्गमे ॥ ३२ ॥

त्रिसप्तत्यण्डको ज्ञेयो भद्रे च रथिकोद्गमः ।
विमानोऽसौ समाख्यातः कर्तव्यः सर्वकामदः ॥ ३३ ॥

इति विमानमेरुः ॥

अष्टैकपक्षचन्द्राश्च चतुर्विंशतिभाजिते ।
कर्णे च केशरी कार्यो भद्रे शृङ्गद्वयं तथा ॥ ३४ ॥

प्रत्यङ्गे चाऽष्टशृङ्गाणि अण्डकाः सप्तविंशतिः ।
सर्वदेवालयो युक्तो नाम्ना वै गन्धमादनः ॥ ३५ ॥

इति गन्धमादनमेरुः ॥

षड्रसचन्द्रतत्त्वानि षट्त्रिंशद्भिश्च भाजिते ।
कर्णे शृङ्गद्वयं चैवमेकं प्रतिरथे भवेत् ॥ ३६ ॥

भद्रे शृङ्गत्रयं कार्यं पञ्चाण्डं दलशृङ्गकम् ।
त्रिनवत्यण्डकः कार्यो मुक्तकोणश्च लक्षितः ॥ ३७ ॥

इति मुक्तकोणमेरुः ॥

पक्षैकयुग्ममेकं च युग्मं षोडशभाजिते ।
कर्णे प्रतिरथे द्वे द्वे शृङ्गं पञ्चाण्डभूषितम् ॥ ३८ ॥

द्वादशैवोरुशृङ्गाणि प्रत्यङ्गानि तथाऽष्ट च ।
अण्डकाः शतमेकं चैवं चत्वारिंशदुत्तरम् ॥ ३९ ॥

इति गिरिमेरुः ॥

यमेन्दुद्वयेकैकपक्षा अष्टादशविभाजिते ।
कर्णेऽनुगे त्रिशृङ्गं च पञ्चाण्डकविभूषितम् ॥ ४० ॥

प्रत्यङ्गानि तथा चाऽष्टावुरःशृङ्गाणि षोडश ।
तिलकेऽण्डकानां त्रयोदशाधिकशतद्वयम् ॥ ४१ ॥

इति तिलकमेरुः ॥

त्रिद्वित्रियुग्मेन्दुरसाश्चतुस्त्रिंशद्विभाजिते ।
तिलकतुल्याण्डकयुक् तादृक् शृङ्गेऽब्जशेखरः ॥ ४२ ॥

इति चन्द्रशेखरः ॥

पक्षमयुग्मद्वयं शस्तं भक्तं द्वादशधा तथा ।
कर्णे शृङ्गद्वयं कुर्यात्तिलकं प्ररथे तथा ॥ ४३ ॥

प्रत्यङ्गे च तथा चाऽष्टावुरःशृङ्गाणि षोडश ।
मन्दरोमेरुराख्यातः पञ्चविंशतिरण्डकाः ॥ ४४ ॥

इति मन्दरतिलकोमेरुः ॥

पक्षयुग्मैकयुग्मान्ताश्चतुर्दशविभाजिते ।
केशरी श्रीवत्सकर्णे प्ररथे तिलकं तथा ॥ ४५ ॥

द्वादशैवोरुशृङ्गाणि सप्तसप्ततिरण्डकाः ।
सौभाग्यनामा कर्तव्यो भुक्तिकामार्थदस्तथा ॥ ४६ ॥

इति सौभाग्यः ॥

गुणेन्दुरामैकगुणा द्वाविंशतिविभाजिते ।
कर्णे रथे द्विद्विशृङ्गं पञ्चाण्डकविभूषितम् ॥ ४७ ॥

प्रत्यङ्गे च तथा चाऽष्टावुरःशृङ्गाणि षोडश ।
चत्वारिंशं शतं सङ्ख्याऽण्डकानां सर्वसुन्दरे ॥ ४८ ॥

इति सर्वसुन्दरः ॥

पक्षैकद्वयेकपक्षाश्च क्षेत्रे षोडश भाजिते ।
रथे कर्णे द्विद्विशृङ्गं पञ्चाण्डकविभूषितम् ॥ ४९ ॥

षोडशैवोरुशृङ्गाणि प्रत्यङ्गे तु ततोऽष्टभिः ।
पञ्च चत्वारिंशं शतं तथा श्रीतिलकेऽण्डकाः ॥ ५० ॥

इति श्रीतिलकः ॥

पञ्च त्रियुग्मवेदास्स्युरष्टाविंशतिभाजिते ।
कर्णे शृङ्गद्वयं कार्यं नवाण्डकविभूषितम् ॥ ५१ ॥

अष्टौ चैवोरुशृङ्गाणि प्रत्यङ्गानि तथाऽष्ट च ।
अण्डा एकोननवतिर्विशालः सर्वकामदः ॥ ५२ ॥

पक्षेन्दुरामा एवं तु क्षेत्रे द्वादशभाजिते ।
शृङ्गमेकं तथा कर्णे पञ्चाण्डकविभूषितम् ॥ ५३ ॥

भद्रे संवरणा चैव घण्टाकूटैरलङ्कृता ।
एकविंशत्यण्डकयुक् श्रीकूटो नाम शोभनः ॥ ५४ ॥

इति श्रीकूटमेरुः ॥

गुणरामद्वयेकपक्षा द्वाविंशतिविभाजिते ।
अनुगे शृङ्गतिलकं कर्णे कार्यं द्विशृङ्गकम् ॥ ५५ ॥

शृङ्गं चोपरथेऽथोरुमञ्जर्यो द्वादशैव च ।
शृङ्गैः पञ्चाण्डकैर्युक्तो नन्दिवर्धननामकः ॥ ५६ ॥

इति नन्दिवर्धनः ॥

वेदरामैकपक्षाश्च क्षेत्रे विंशतिभाजिते ।
क्रमोत्तरक्रमयुक्तास्त्रयस्त्रयः कर्णानुगे ॥ ५७ ॥

द्वादशैवोरुशृङ्गाणि प्रत्यङ्गे च तथाऽष्टभिः ।
त्रिंशद्विंशतिर्द्वादश चाण्डकाः कर्णशृङ्गके ॥ ५८ ॥

पञ्चविंशतिरेव स्युर्दिक्षु प्रतिरथे तथा ।
मूलरेखाकर्णशृङ्गे कुर्यात्पञ्चाण्डकास्ततः ॥ ५९ ॥

एकोत्तरसहस्राण्डो नाम्नाऽसौ पद्मसंभवः ।
हरिर्हिरण्यगर्भश्च हरो दिनकरस्तथा ॥ ६० ॥

इति पद्मसंभवः ॥

एतेषामेव मेरुः स्यान्नाऽन्येषां च कदाचन ।
एकोत्तरसहस्राण्डः पद्मसंभवमेरुकः ॥ ६१ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छाया-
मेकविंशतिमेरुलक्षणाधिकारो नाम सप्तषष्ट्युत्तरशततमं सूत्रम् ॥

---

## (१६८) मिश्रकप्रासादलक्षणात्मकमष्टषष्ट्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

मिश्रकान् कथयिष्यामि ये चोक्ताः पूर्वमेवहि ।
पृथगेकादिसम्भूताः प्रशस्ताः सर्वकामदाः ॥ १ ॥
सुभद्रश्च किरीटश्च सर्वतोभद्र एव च ।
सिंहकेशरी नामा च चित्रकूटो धराधरः ॥ २ ॥
तिलकोऽथ श्रीतिलकस्तथा सर्वाङ्गसुन्दरः ।
सर्वेते मिश्रकाः ख्याता रुचकाद्यसमुद्भवाः ॥ ३ ॥
विजयो नन्दसंज्ञश्च महाघोषस्तथापरः ।
वृद्धिरामाभिधानश्च प्रासादोऽन्यो वसुन्धरः ॥ ४ ॥
मुद्गरोऽथ वृहच्छालस्तथैव च सुधाधरः ।
संवराख्यश्च सर्वाङ्गः प्रयुक्ताः श्रीधरादिके ॥ ५ ॥
केशर्याद्यान् कथयिष्ये जाताः शस्ताश्च ये ततः ।
श्रीतिलकोद्भवाख्यादिः प्रोक्तः प्रथममिश्रकः ॥ ६ ॥
लताख्यस्त्रिपुराख्यश्च पञ्चवक्त्रश्चतुर्मुखः ।
नवात्मकश्च विज्ञेयः गूढात्मकसमुद्भवाः ॥ ७ ॥
भद्रकस्य च संस्थाने भद्रे शृङ्गं यदा भवेत् ।
सुभद्रो नाम विज्ञेयः किरीटः कर्णकूटतः ॥ ८ ॥
केशरी च भवेत्पूर्वं भद्रे शृङ्गं यदा भवेत् ।
लताख्यः सर्वतोभद्रः सर्वकामफलप्रदः ॥ ९ ॥
भद्रे शृङ्गं परित्यज्य सिंहं तत्रैव कारयेत् ।
मिश्रयोगेन यो मिश्रः स भवेत् सिंहकेसरी ॥ १० ॥
श्रीवत्सस्यैव संस्थाने भद्रे कूटं सुविश्रुतम् ।
कर्णे तेनैव योगेन प्रतिशृङ्गोपशोभिते ॥ ११ ॥
कुम्भकैः सप्तदशभिः पद्मघण्टाद्यलङ्कृतः ।
चित्रकूटः समाख्यातो विचित्रशिखरान्वितः ॥ १२ ॥
कर्णे भद्रे प्रतिष्ठाने पूर्णं शृङ्गं यदा भवेत् ।
अण्डकाः षोडशैको वा स भवेच्च धराधरः ॥ १३ ॥
श्रीवत्सस्य च संस्थाने कर्णे कूटं निधापयेत् ।
शृङ्गं भद्रोपभद्रे तु स नाम्ना तिलकः स्मृतः ॥ १४ ॥
यथा कर्णे तथा भद्रे यो भवेच्चित्रकूटवत् ।
उत्तमाङ्गेषु योगेषु स भवेत् सर्वसुन्दरः ॥ १५ ॥

इति रुचकोद्भवनवमिश्रकप्रासादाः ॥

कर्णे च सर्वतोभद्रः केशरी प्रथे भवेत् ।
विजयो भद्र उत्पन्नो विजयो नाम नामतः ॥ १६ ॥
चतुर्भिः सर्वतोभद्रैर्भद्रोत्सेधस्तु कर्णवत् ।
उद्गमः शिखरोर्ध्वे च भवेत्तिलकसंज्ञकः ॥ १७ ॥
नन्दिघोषः कर्णशृङ्गैर्महाघोषः स उच्यते ।
रतिदेहेऽभित्तौ वृद्धिरामेऽण्डाश्चैकविंशतिः ॥ १८ ॥
वसुन्धरो रतिदेहे मत्तावरणकैर्भवेत् ।
षडश्रैः केशरी (कर्णे) मुद्गको नाम कीर्तितः ॥ १९ ॥
बृहच्छालः कमलजे प्रथे भद्रकर्णिका ।
भद्रे शृङ्गं यदा तस्य स सुधाकरसंज्ञकः ॥ २० ॥
प्रतिरथेषु सर्वेषु यदा कूटं निधापयेत् ।
मिश्रकस्तु स विज्ञेयो नाम्ना श्रीतिलकः खलु ॥ २१ ॥
सर्वे कूटान्विताः कार्याः सर्वे कार्याश्चतुर्मुखाः ।
मिश्रका बहुतिलकाः शेषा वै कूटसंज्ञकाः ॥ २२ ॥

इति श्रीधराया दशमिश्रप्रासादाः ॥

भक्ते द्वादशधा क्षेत्रे षट्त्रिंशत्कोष्ठगर्भकः ।
भागो भागा भ्रमो भित्तिर्भागा वै बाह्यभित्तिका ॥ २३ ॥
कर्णानुगं द्विभागं च भद्रं द्विगुणविस्तरम् ।
एकैकभागनिष्कासो भद्रे प्रतिरथेऽथ वा ॥ २४ ॥
कर्णे प्रतिरथे कुर्याच्छृङ्गं वै सर्वतोभवम् ।
द्वितीयक्रमः कर्णोर्ध्वे कूटं स्यात्तिलकान्वितम् ॥ २५ ॥
शिखरं चाष्टविस्तारं षड्भागा चोरुमञ्जरी ।
प्रथमे च चतुर्भागः श्रीतिलकस्तु कामदः ॥ २६ ॥
श्रीतिलकाग्रसंस्थाने तत्प्रमाणांशतस्तथा ।
संलग्ना बाह्यभित्तौ च भद्रे चन्द्रावलोकना ॥ २७ ॥
मध्यकोष्ठकद्वारं तु भवेच्छ्रीतिलकाग्रतः ।
केशरि द्वाद्वयं कुर्यात् लताख्यः सर्वकामदः ॥ २८ ॥
यथाऽग्रतस्तथा पृष्ठे त्रिपुष्कर इतीरितः ।
याम्योत्तरेऽग्रतः पृष्ठे पञ्चवक्त्रो महेश्वरः ॥ २९ ॥
पञ्चवक्त्रस्य संस्थाने स्याच्चतुर्दिक्षु केशरी ।
द्विकोष्ठकं त्यजेत्स्तम्भं दापयेच्च चतुष्किकाम् ॥ ३० ॥
चतुर्मुखस्तदा नाम प्रासादः स्यान्मनोहरः ।
विधेर्विष्णो रवेः कुर्याच्छम्भोः कुर्याद्यदृच्छया ॥ ३१ ॥
पञ्चषष्टिकरैर्ज्येष्ठो मध्यमः स्याच्छतार्धतः ।
कनिष्ठः पञ्चत्रिंशद्भिस्त्रिविधः स्यान्नवात्मकः ॥ ३२ ॥

चतुरस्रीकृते क्षेत्रे चैकविंशतिभाजिते ।
षड्भागिको भवेत् कर्णो निर्गमः पञ्चभागिकः ॥ ३३ ॥
समाकारो भवेत्कर्णः शतमूलविभाजितः ।
भागो भागा भ्रमो भित्तिः शेषं गर्भगृहं भवेत् ।
तत्प्रमाणेन कर्तव्या भ्रमन्ती बाह्यभित्तिका ॥ ३४ ॥
नवभागं मध्यकोष्ठं क्षेत्रभागोर्ध्वतो भवेत् ।
चतुर्भद्रं चतुष्कर्णं मध्ये स्याद् गर्भकोष्ठकम् ॥ ३५ ॥
कर्णे तथा द्विद्विशृङ्गं सर्वभद्रो नवाण्डकः ।
नवांशं मूलशिखरं वलभी भद्रभद्रतः ॥ ३६ ॥
घण्टाकलशसम्युक्तपताकाध्वजभूषितः ।
नवात्मकस्तदा नाम कर्तव्यो नव देवतं ॥ ३७ ॥
ईशान्यामीशदेवःस्यादाग्नेय्यां पुरुषोत्तमः ।
ब्रह्मा च वायुदिग्भागे नैर्ऋत्य च दिवाकरः ॥ ३८ ॥
मध्यगर्भे शिवः स्थाप्यः प्राच्यां चैव पुरन्दरः ।
धर्मो याम्येऽथवा वरुणः पश्चिमे सोम उत्तरे ॥ ३९ ॥
इमं देवालयं कुर्यात् प्रासादं सर्वशान्तिदम् ।
सुभिक्षं क्षेममारोग्यं यत्र देशेऽयमुद्भवेत् ॥ ४० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
मिश्रकप्रासादलक्षणाधिकारो नामाष्टषष्ट्युत्तरशततमं सूत्रम् ॥

---

# (१६९) सागरतिलकादिप्रासादलक्षणात्मकमेकोनसप्तत्युत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

अथातः सम्प्रवक्ष्यामि प्रासादानां तु लक्षणम् ।
विभक्तिच्छन्दतिलकैस्तिलकाः सागरादिकाः ॥ १ ॥

क्षीरार्णवसमुत्पन्नो नाम्ना तिलकसागरः ।
गौरीरुद्राख्यतिलकौ श्रीहरिप्रियपूर्वकौ ॥ २ ॥

लक्ष्मीभूतिलकौ चैव रम्भेन्द्रतिलकौ तथा ।
मन्दरो हिमवांश्चैव कैलासतिलकस्तथा ॥ ३ ॥

पृथिव्यादिस्त्रिभुवन इन्द्रनीलस्तथोत्तमः ।
सर्वाङ्गतिलकश्चैव तिलकः सुरवल्लभः ॥ ४ ॥

सिंहोनकध्वजश्चैव मङ्गलस्तिलकाख्यकः ।
पद्मकः सोमविजयौ त्रैलोक्यतिलकस्तथा ॥ ५ ॥

पञ्चविंशति इत्युक्तास्तिलकाः सागरादिकाः ।
छन्दालङ्कारसम्युक्ताः कथ्यन्ते त्वपराजित ॥ ६ ॥

वैराज्यश्च चतुःस्तम्भैर्दिशावृत्योरुमावृतम् ? ।
छाद्यघण्टाकूटयुक्तो नाम्ना तिलकसागरः ॥ ७ ॥

इति सागरतिलकः ॥

अष्टौ तिलकसंघाटाः कर्णगर्भोर्ध्वरेखिका ।
दिक्तिलकार्धनिष्कासो गौरीतिलक ईरितः ॥ ८ ॥

इति गौरीतिलकः ॥

केशरी पूर्ववज्ज्ञेयः शृङ्गे च तिलकं भवेत् ।
ख्यातोऽसौ रुद्रतिलकः कर्तव्यः सर्वदैवते ॥ ९ ॥

इति रुद्रतिलकः ॥

कर्णशृङ्गोर्ध्वतिलकं भद्रोर्ध्वे सिंहकर्णकः ।
कर्तुः शान्तिश्रीप्रदोऽसौ ख्यातः श्रीतिलकाभिधः ॥ १० ॥

इति श्रीतिलकः ॥

भद्रे शृङ्गं प्रदातव्यं नन्दनाकारवत्तथा ।
तिलकान्तो हरिनामा सिद्धकिन्नरसेवितः ॥ ११ ॥

इति हरितिलकः ॥

भद्रे शृङ्गं द्वितीयं च स्थापयेद् रथिकोर्ध्वतः ।
लक्ष्मीतिलक आख्यातः क्रीडाहेतुश्च श्रीपतेः ॥ १२ ॥

इति लक्ष्मीतिलकः ॥

नन्दनस्य च संस्थाने कर्णोर्ध्वे तिलकं न्यसेत् ।
प्रत्यङ्गे पार्श्वकर्णी च स स्याद् भूतिलकोऽर्थदः ॥ १३ ॥
इति भूतिलकः ॥

कर्णे शृङ्गद्वयं कुर्यात् प्ररथे तिलकं तथा ।
रम्भातिलक आख्यातः कर्तव्यः शान्तिमिच्छता ॥ १४ ॥
इति रम्भातिलकः ॥

शृङ्गं प्रतिरथे चैव कर्णोर्ध्वे तिलकं न्यसेत् ।
नाम्नाऽसाविन्द्रतिलकः पूज्यः सुरनरोरगैः ॥ १५ ॥
इतीन्द्रतिलकः ॥

मन्दरः पूर्ववत्कर्यात्तिलकं प्ररथोर्ध्वतः ।
प्रत्यङ्गं नष्टकर्णं च भद्रे शृङ्गत्रयं तथा ॥ १६ ॥
इति मन्दरतिलकः ॥

कर्तव्यं तिलके शृङ्गं कर्णोर्ध्वे तिलकं न्यसेत् ।
हिमवानिति नामाऽसौ कर्तव्यः सर्वशान्तिदः ॥ १७ ॥
इति हिमवन्ततिलकः ॥

भद्रकर्णोद्गमे शृङ्गं तिलकं प्ररथोर्ध्वतः ।
कर्णोर्ध्वेऽपि यदा शृङ्गं नाम्ना कैलाससम्भवः ॥ १८ ॥
इति कैलासतिलकः ॥

कर्णोर्ध्वे तु तिलकं स्याच्छृङ्गं प्रतिरथोर्ध्वतः ।
पृथ्वीतिलकनामाऽसौ पृथिवीतीर्थपुण्यदः ॥ १९ ॥
इति पृथ्वीतिलकः ॥

पृथ्वीजयस्य संस्थाने नन्दिकोर्ध्वे तु कर्णिका ।
तद्रूपा कर्णपार्श्वे च द्विशृङ्गं कर्णानुगे ॥ २० ॥
कर्ण्यां च शृङ्गतिलकं भद्रे शृङ्गे चतुर्भयम् ।
प्रत्यङ्गे चाऽष्टकार्याणि रेखोर्ध्वे तिलकं तथा ॥ २१ ॥
इति त्रिभुवनतिलकः ।

तथैव कुर्याच्छृङ्गं च तिलकं प्ररथोर्ध्वतः ।
इन्द्रनीलस्तदानाम कर्तव्यः शान्तिमिच्छता ॥ २२ ॥
इतीन्द्रनीलतिलकः ॥

भद्रे कर्णे च शृङ्गाणि शेषं वै पूर्ववत् स्थितम् ।
सर्वांगतिलको नाम कर्तव्यः सर्वदैवते ॥ २३ ॥
इति सर्वाङ्गतिलकः ॥

शृङ्गं प्रतिरथोर्ध्वे च रेखोर्ध्वे तिलकं शुभम् ।
सुरवल्लभ आख्यातो धर्मकामार्थसाधकः ॥ २४ ॥
इति सुरवल्लभतिलकः

हर्म्यादितिलके शृङ्गं कार्याः पञ्चाण्डकास्तथा ।
कर्तव्यः सिंहतिलकः पार्वत्य शान्तिमिच्छता ॥ २५ ॥
इति सिंहतिलकः ॥

पूर्वे भवेद् भूतिलकः शृङ्गं पञ्चाण्डकं तथा ।
मकरध्वजनामा च कार्यो रतिपतेरसौ ॥ २६ ॥

इति मकरध्वजतिलकः ॥

रम्भातिलकशृङ्गेषु प्रकर्तव्या नवाण्डकाः ।
तिलकान्तो मङ्गलोऽसौ कर्तव्यः सर्वदैवते ॥ २७ ॥

इति मङ्गलतिलकः ॥

शृङ्गाणि चेन्द्रतिलके कार्याः पञ्चाण्डकास्तथा ।
तिलकाख्यस्तदा नाम कार्यः शान्तिमहोत्सवः ॥ २८ ॥

इति तिलकाख्यः ॥

तथा शृङ्गेषु कर्तव्याः सर्वभद्रनवाण्डकाः ।
पद्मको हि तदा नाम कर्तव्यः शान्तिश्रीप्रदः ॥ २९ ॥

इति पद्मतिलकः ॥

मन्दरे तिलके शृङ्गं कर्तव्याश्च नवाण्डकाः ।
तदा तु सोमतिलकः कर्तव्यः सर्वदैवते ॥ ३० ॥

इति सोमतिलकः ॥

पृथ्वीजये तु शृङ्गेषु प्रकर्तव्या नवाण्डकाः ।
नाम्ना त्रैलोक्यतिलकः कर्तव्यः शान्तिमिच्छता ॥ ३१ ॥

इति त्रैलोक्यतिलकः ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां सागरतिलकादिप्रासादलक्षणाधिकारो नामैकोनसप्तत्युत्तरशततमं सूत्रम् ॥

## (१७०) मेरुविंशतिर्नाम सप्तत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच

मेरुः प्रासादराजस्तु देवानां सततं प्रियः ।
ख्यातो मन्दरमेरुश्च तथा कैलासमेरुकः ॥ १ ॥

विविधो भवेन्मेरुमेरुश्च पृथिवीजयः ।
पृथ्वीभूषणमेरुश्च सर्वतोभद्रमेरुकः ॥ २ ॥

भवेद् विमानमेरुश्च नन्दनः स्वस्तिकस्तथा ।
मुक्तकोणश्च श्रीवत्सो हंसो वै मेरुरुच्यते ॥ ३ ॥

स्वस्तिको वर्धमानश्च वैनतेयो गजस्तथा ।
सिंहश्च पद्मको मेरुमेरुर्वै नन्दिवर्धनः ॥ ४ ॥

छन्दाश्च विविधाः ख्यातास्तलच्छन्दास्तथोर्ध्वगाः ।
मेरुविंशतिराख्याताः प्रयुक्ता वास्तुवेदिभिः ॥ ५ ॥

द्विकरादिशतार्धान्ताः प्रासादा भ्रमसंयुताः ।
तस्याधो भ्रमयुक्तिश्चेन्महादोष इति स्मृतः ॥ ६ ॥

षट्त्रिंशत्करतोऽधस्ताद्यावद्धस्तचतुष्टयम् ।
विना भ्रमैर्निरन्धाराः कर्तव्याः शान्तिमिच्छता ॥ ७ ॥

चतुरश्रीकृते क्षेत्रे शतमूलविभाजिते ।
पदैः षोडशभिर्गर्भो भागभित्त्या च वेष्टिता ॥ ८ ॥

बाह्यभित्तिर्भवेद् भागा भागा चान्धारकारिका ।
मध्यच्छन्दे वर्धमानः कपोतालयभूषितः ॥ ९ ॥

कपोताली भवेद् द्वारे सीमान्ते चाऽथवोच्यते ।
मध्यच्छन्दः समाख्यातो बाह्यच्छन्दमतः शृणु ॥ १० ॥

द्विभागः कर्णविस्तार उदकान्तरभूषितः ।
सार्धभागः प्रतिरथो निर्गमे विस्तरे तथा ॥ ११ ॥

त्रिभागं च भवेद् भद्रं विस्तरे निर्गमे समः ।
कर्णतुल्यानुगे भित्तिर्भद्रे चन्द्रावलोकना ॥ १२ ॥

न कार्या तस्य कपिली बाह्यच्छन्देषु वर्जिता ।
कर्णाग्रे मण्डपं कुर्यात् समं सपादं सार्धकम् ॥ १३ ॥

शिखरोर्ध्वच्छन्द एवं तथा वै कथ्यतेऽधुना ।
कर्णो द्विभाग इत्युक्त उदकान्तरभूषितः ॥ १४ ॥

सार्धभागः प्रतिरथस्तत्तुल्यो निर्गमस्तथा ।
पक्षद्वये वारिमार्गः प्ररथेऽस्य समुद्भवः ॥ १५ ॥

नन्दिका चार्धभागा स्याद्विस्तरे निर्गमे तथा ।
कर्णिका भागपादेन भद्रं सार्धं च विस्तरे ॥ १६ ॥
निर्गमे चार्धभागेन भागपादेन कर्णिका ।
एवंविधः प्रकर्तव्यो मेरोश्च तलच्छन्दकः ॥ १७ ॥
कर्णे वार्यन्तरं कुर्याच्छेषं सूर्यांशभाजितम् ।
द्विभागश्च भवेत्कर्णस्तत्तुल्यः प्ररथो भवेत् ॥ १८ ॥
वेदांशं च भवेद् भद्रमेकभागेन निर्गतम् ।
अनुगे शृङ्गतिलकं कुर्यात् कर्णे द्विशृङ्गकम् ॥ १९ ॥
मत्तालम्बयुतं भद्रमुरःशृङ्गद्वयं भवेत् ।
प्रत्यङ्गैश्च समायुक्तं शिखरं चाष्टविस्तरम् ॥ २० ॥
घण्टाकलशशोभाढ्यं कर्तव्यं सर्वकामदम् ।
तदूर्ध्वे मन्दरं कुर्याच्छुद्धच्छन्दे तु नागरे ॥ २१ ॥
शृङ्गोद्गमः प्रतिरथे नन्दिशालोर्ध्वनन्दनः ।
स्तम्भोत्सेधो नन्दिकायां भागैकार्धमाख्यातम् ? ॥ २२ ॥
पद्मावती तदूर्ध्वेऽर्धा शृङ्गं पद्माण्डभूषितम् ।
स्तम्भोर्ध्वे लघुकर्णी च कर्तव्या तिलकात्मिका ॥ २३ ॥
कण्ठोर्ध्वे रथिकां दद्यादुद्गमैः समलङ्कृतम् ।
प्रथमं चोरःशृङ्गं च भागार्धं पादनिर्गतम् ॥ २४ ॥
द्वितीयमुरःशृङ्गं चैकभागं चार्धनिर्गतम् ।
तृतीयं नन्दिकोर्ध्वे च द्विभागं भागनिर्गतम् ॥ २५ ॥
प्रत्यङ्गं चैव तद्रूपं तलच्छन्दप्रमाणतः ।
चतुर्थमुरःशृङ्गं च त्रिभागं द्व्यंशनिर्गतम् ॥ २६ ॥
शृङ्गं षडंशविस्तारं सार्धसप्तांशमुच्छ्रितम् ।
प्रकर्तव्यं मल्लतलं शृङ्गे शृङ्गे शराण्डकम् ॥ २७ ॥
कण्ठो ग्रीवा कुड्मलं च पद्मच्छत्रोपच्छत्रकम् ।
तदूर्ध्वे कलशः स्थाप्यः क्षीरार्णवसमुद्भवः ॥ २८ ॥
आदिद्वितीयोरःशृङ्गे कर्तव्या कुमुदाकृतिः ।
तृतीये च चतुर्थे च विमानः सर्वकामदः ॥ २९ ॥
प्रत्यङ्गकविमानास्तु शुकाग्रोद्गमसंयुताः ।
ध्वजान्वितपताकाश्च कर्तव्याः सर्वकामदाः ॥ ३० ॥
इमं यः कारयेच्चैव मेरुं च पृथिवीपतिः ।
एकच्छत्रं महीराज्यं लभते जन्मजन्मनि ॥ ३१ ॥
सर्वपृथ्वीतीर्थपुण्यं फलं स्यादश्वमेधजम् ।
दशकोटिगवां दानं राहोश्चन्द्रार्कलिङ्गने ॥ ३२ ॥

इति मेरुप्रासादः १ ॥

दशधा भाजिते पूर्वे मन्दरे सर्वकामदे ।
भागो भागा भ्रमो भित्तिर्देवकोष्ठं द्विरष्टतः ॥ ३३ ॥
द्विभागः कर्णविस्तारो भद्रं षड्भागिकं तथा ।
कर्णे च नन्दिशालश्च शिखरं च विमानजम् ॥ ३४ ॥
पञ्चभूकर्णशोभाढ्यं सर्वतोभद्रमालिखेत् ।
रथिका कर्णशृङ्गाढ्या भद्रं तत्राऽपि कारयेत् ॥ ३५ ॥
नागरा हि प्रतिरथा रथानां वामदक्षिणे ।
मन्दरो मेरुराख्यातः शिवार्कहरिब्रह्मणाम् ॥ ३६ ॥

इतिमन्दरमेरुः २ ॥

मन्दरस्य तलच्छन्दे भद्रं प्राग्ग्रीवभूषितम् ।
त्रिक्रमादूर्ध्वशिखरं पञ्चभूम्यो विमानजाः ॥ ३७ ॥
नन्दिशालं नन्दनं च कर्णशृङ्गेषु दापयेत् ।
सदाशिवप्रियश्चाऽसौ कैलासः सर्वकामदः ॥ ३८ ॥

इति कैलासमेरुः ३ ॥

मन्दरस्य च संस्थाने तद्रूपे तदवस्थिते ।
भद्रे द्वे उरुमञ्जर्यौ विमानाः कुमुदोद्भवाः ॥ ३९ ॥
कैलासवत्कर्णशृङ्गं शिखरं मन्दरात्मकम् ।
त्रिविष्टपः समाख्यातः प्रासादः सुरवल्लभः ॥ ४० ॥

इति त्रिविष्टपमेरुः ४ ॥

त्रिविष्टपस्य संस्थाने तद्रूपे तदवस्थिते ।
प्ररथे सर्वतोभद्रं कर्तव्यं तु नवाण्डकम् ॥ ४१ ॥
पृथ्वीजयस्तदा नाम कर्तव्यः सर्वकामदः ।
एकच्छत्रं धराराज्यं तस्य पृथ्वीं च शासतः ॥ ४२ ॥

इति पृथ्वीजयमेरुः ५ ॥

छन्देऽष्टधा विभक्ते च भित्तिगर्भभ्रमन्तिकाः ।
द्विभागश्च भवेत्कर्णो भद्रं भागचतुष्टयम् ॥ ४३ ॥
निर्गतं सार्धभागेन कर्णे स्यादुदकान्तरम् ।
कर्णे च नन्दिका कार्या शिखरं वै विमानजम् ॥ ४४ ॥
पञ्चाण्डकं भवेच्छृङ्गं घण्टाकलशभूषितम् ।
सिंहकर्णात्मकं भद्रं पृथ्वीभूषणसंज्ञकः ॥ ४५ ॥

इति पृथ्वीभूषणमेरुः ६ ॥

पृथ्वीभूषणसंस्थाने तद्रूपे तदवस्थिते ।
उरःशृङ्गं ततो भद्रे कर्तव्यं च विमानजम् ॥ ४६ ॥
रथोद्गमस्तदग्रे च स्वरूपो लक्षणान्वितः ।
सर्वतोभद्रनामाऽसौ सर्वकल्याणकारकः ॥ ४७ ॥

इति सर्वतोभद्रमेरुः ७ ॥

दशधा च तलच्छन्दः सान्धारः पूर्वविस्तरः ।
द्विभागश्च भवेत्कर्णः कर्णिका चार्धभागिका ॥ ४८ ॥
एकभागः प्रतिरथश्चाऽर्धभागस्तु निर्गमे ।
पुनर्द्विभागा कर्णी स्याद् भागपादेन निर्गता ॥ ४९ ॥
द्विभागो भद्रविस्तारो निर्गमो भाग एव च ।
कर्णे प्रतिरथे शृङ्गं पञ्चभूम्यो विमानजाः ॥ ५० ॥
कर्णे नवाण्डकं शृङ्गं पञ्चाण्डकमथाऽनुगे ।
घण्टाकलशशोभाढ्यो विमानः सर्वकामदः ॥ ५१ ॥
इति विमानमेरुः ॥ ८ ॥
कर्णे द्विक्रमतः कार्या नन्दिशाले च नन्दिका ।
नन्दनाख्यः प्रतिरथे भद्रे शृङ्गद्वयं भवेत् ॥ ५२ ॥
अष्टप्रत्यङ्गसंयुक्ता विमाने चोरुमञ्जरी ।
नन्दनः कामदश्चेत्थं विमाने मूलमञ्जरी ॥ ५३ ॥
इति नन्दनमेरुः ॥ ९ ॥
चतुरश्रीकृते क्षेत्रे कर्णान्ते वृत्तमालिखेत् ।
वेदर्त्वंशैश्च परिधौ षट्पदं भद्रकाष्टकम् ॥ ५४ ॥
पदिका कर्णिका प्रोक्ता भद्रं वेदांशविस्तरम् ।
निर्गमश्चैकभागेन कर्तव्यः सर्वकामदः ॥ ५५ ॥
कर्णाश्च द्विपदा अष्टौ तत्र शृङ्गाणि कारयेत् ।
सीमां द्विभागिकां त्यक्त्वा पुनर्वृत्तं तु कारयेत् ॥ ५६ ॥
अष्टचत्वारिंशद्भक्ते ह्यष्टभद्रं चतुष्पदम् ।
द्विपदा अष्टकर्णाश्च लताण्डं भूमिपञ्चकम् ॥ ५७ ॥
घण्टाकलशशोभाढ्या भद्रं द्विद्वयुरुमञ्जरि ।
स्वस्तिकोऽसौ समाख्यातः कर्तव्यः शान्तिमिच्छता ॥ ५८ ॥
इति स्वस्तिकमेरुः ॥ १० ॥
मन्दरस्य च संस्थाने मध्ये तत्रैव तादृशः ।
वेदांशो भद्रविस्तारस्तदर्धं तु विनिर्गतम् ॥ ५९ ॥
वार्यन्तरं भद्रपक्षे त्रिभागः कर्णविस्तरः ।
मूलनासास्थानतश्चैकभागोभयनिर्गता ॥ ६० ॥
द्विभागो भद्रविस्तारो भागमेकैकनिर्गतम् ।
कर्णभद्रं वृत्तभद्रे एकांशमुदकान्तरम् ॥ ६१ ॥
संस्थाने मूलनासाया भागं स्यात्कर्णकक्षकम् ।
निर्गमः कर्णमानेन पृथुत्वं चतुरंशकम् ॥ ६२ ॥
अष्टभागा भवेद्रेखा मल्लभूतलपञ्चका ।
कर्णे तिलकसंघाटो भद्रे वै कूटघण्टिके ॥ ६३ ॥

शृङ्गं च घण्टाकलश-ध्वजमालाकुलं भवेत् ।
मुक्ताः संसारतस्ते यैर्मुक्तकोणो विधीयते ॥ ६४ ॥

इति मुक्तकोणमेरुः ॥ ११ ॥

स्यान्मध्ये पूर्ववत्तत्र श्रीवत्सो बाह्यच्छन्दके ।
कर्णे प्रतिरथे चैव लताण्डं भूमिपञ्चकम् ॥ ६५ ॥
कर्णे वराटशृङ्गाणि प्रथे द्राविडानि च ।
छाद्यप्राग्ग्रीवकौ भद्रे श्रीवत्सो मेरुरुच्यते ॥ ६६ ॥

इति श्रीवत्समेरुः ॥ १२ ॥

बार्यन्तरं भद्रके च कर्णेऽण्डं भूमिपञ्चकम् ।
वराटः कूटभद्रे च कर्णे वै द्राविडो भवेत् ॥ ६७ ॥
घण्टाकलशसम्युक्तो भद्रे प्राग्ग्रीवको भवेत् ।
हंसमेरु स्तदा नाम ब्रह्मणः स सदा प्रियः ॥ ६८ ॥

इति हंसमेरुः ॥ १३ ॥

रुचकस्तु भवेत्पूर्वं कर्णेऽण्डं भूमिपञ्चकम् ।
मेघनककूटपालैः कण्टकैरावृतः शुभः ॥ ६९ ॥
भद्रे युक्तश्च प्राग्ग्रीवच्छाद्यघण्टाद्यलङ्कृतः ।
रुचकश्च समाख्यातः कर्तव्यो देवतालयः ॥ ७० ॥

इति रुचकमेरुः ॥ १४ ॥

वर्धमानो भवेत्पूर्वं कर्णेऽण्डं भूमिपञ्चकम् ।
शृङ्गं तस्य च कर्तव्यं द्राविडे कर्मचर्चितम् ॥ ७१ ॥
घण्टाकलशशोभाढ्यो भद्रे प्राग्ग्रीवसंयुतः ।
वर्धमानस्तदा नाम नित्यं श्रीर्वर्धते यशः ॥ ७२ ॥

इति वर्धमानमेरुः ॥ १५ ॥

वर्धमानः पूर्वमयं तदूर्ध्वे वामदक्षिणे ।
त्रिपुष्कराकृतिः कार्या शृङ्गैर्मल्लतलोद्भवैः ॥ ७३ ॥
विमानपक्षे शृङ्गाणि पृष्ठे प्राग्ग्रीवकस्तथा ।
अग्रतो मण्डपैर्युक्तः पक्षिराजश्च श्रीपदः ॥ ७४ ॥

इति गरुडमेरुः १६ ॥

वर्धमानो ह्यसौ पूर्वं पृष्ठतो वृत्तमालिखेत् ।
वामे दक्षे च भद्राद्यं सप्तभूवलयाकृति ॥ ७५ ॥
वेद्यां लेख्यं गजपृष्ठं घण्टाकलशसंयुतम् ।
दिव्यमण्डपशोभाढ्यः सगजः सर्वकामदः ॥ ७६ ॥

इति गजमेरुः १७ ॥

विज्ञेयः केशरी पूर्वं शिखरं च विमानजम् ।
प्राग्ग्रीवयुक्तं भद्राद्यं कर्णाण्डं भूमिपञ्चकम् ॥ ७७ ॥

घण्टाकलशशोभाढ्यो दिव्यमण्डपसंयुतः ।
देवीनामालयः कार्यः सिंहो भगवतीगृहम् ॥ ७८ ॥

इति सिंहमेरुः १८ ॥

वृत्तं वेदाश्रके कर्णे द्वात्रिंशद्भिर्विभाजिते ।
षोडश द्विपदाः कर्णाः कर्तव्या भद्रवर्जिताः ॥ ७९ ॥
भूमिजं शृङ्गमेवं च भूमिजं भूमिपञ्चकम् ।
घण्टाकलशशोभाढ्यं कारयेन्मेरुपञ्चकम् ॥ ८० ॥

इति पञ्चकमेरुः १९ ॥

तलच्छन्दं मल्लतलमुच्छ्रये सप्तभूमिकम् ।
नागरशृङ्गाणि कर्णे प्रत्थे द्राविडानि च ॥ ८१ ॥
भद्रे वराटकूटांश्च लतां वै वामदक्षिणे ।
नन्दिवर्धन आख्यातः सुरूपो लक्षणान्वितः ॥ ८२ ॥

इति नन्दिवर्धनमेरुः २० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां-
विंशतिमेर्वधिकारो नाम सप्तत्युत्तरशततमं सूत्रम् ॥

---

## (१७१) भूमिजप्रासादलक्षणात्मकमेकसप्तत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

अथातः सम्प्रवक्ष्यामि प्रासादान् भूमिजाभिधान् ।
वेदाश्रा वृत्तसंस्थाना अष्टशालास्ततः परम् ॥ १ ॥
निषधः सिंहनन्दाख्यौ मलयाद्रिश्च मन्दरः ।
प्रभामणिर्माल्यवांश्च मलयो नवमालिकः ॥ २ ॥
पृथ्वीध्वजस्तथा चेमे चतुरस्राः प्रकीर्तिताः ।
त्रिपञ्चाश्वनवाङ्गाश्च सङ्ख्यया तु दशैव च ॥ ३ ॥
वृत्तानां च ततो वक्ष्ये नाम सङ्ख्यां च लक्षणम् ।
कुमुदः कमलः कमलोद्भवः किरणस्तथा ॥ ४ ॥
शतशृङ्गो निरावेदस्तथा सर्वाङ्गसुन्दरः ।
त्र्यङ्गादितोऽङ्गवृद्धिश्च नवाङ्गान्तं च सङ्ख्यया ॥ ५ ॥
स्वस्तिकोऽथ स्वस्तिकान्तवज्रो हर्म्यतलस्तथा ।
श्रीतिलकः समाख्यात उदयोद्भव एव च ॥ ६ ॥
पृथिवीभूषणश्चाऽथ गन्धमादन एव च ।
त्रैलोक्यभूषणश्चेति ह्यष्टशालाः प्रकीर्तिताः ॥ ७ ॥
पंचविंशतिराख्याताः प्रासादा भूमिजोद्भवाः ।
तदनुक्रमरूपं च कथये तव साम्प्रतम् ॥ ८ ॥
निषधादौ दशैमेच चतुरस्राः प्रकीर्तिताः ।
वृत्ताकाराश्चतुःशालाः सप्तैव कुमुदादयः ॥ ९ ॥
स्वस्तिकाद्यास्तथा चाऽष्टावष्टशालाः प्रकीर्तिताः ।
त्रिविधा विधितः ख्याता भूमिजाः पुरभूषणाः ॥ १० ॥
निषधं संप्रवक्ष्यामि यथावदनुपूर्वशः ।
चतुरश्रीकृते क्षेत्रे दशधा प्रविभाजिते ॥ ११ ॥
द्विभागः कोण इत्युक्तो भागार्धमुदकान्तरैः ।
षड्भागं तु भवेद्भद्रं विभजेद् दशभागिकम् ॥ १२ ॥
एकैकभागाः कर्ण्यश्च निर्गमे विस्तरे तथा ।
द्विभागो भद्रनिष्कासः सर्वभद्रेष्वयं विधिः ॥ १३ ॥
द्विभागं क्षोभयेत्पार्श्वे निर्गमो भाग एव च ।
चतुर्भागं च विस्तारे मुखभद्रं विधीयते ॥ १४ ॥
षड्भागश्च भवेद्गर्भो भित्तिस्तत्र द्विभागिका ।
भित्तितुल्याग्रकपिली शुकाग्रं च सुरालये ॥ १५ ॥
द्विभागमेकभागं वा त्रिभागमथवोच्यते ।
इत्थं शुकाग्रं त्रिविधं ज्येष्ठमध्यकनिष्ठकम् ॥ १६ ॥

पृथग्मानोदयं कृत्वा क्षित्यन्तं भागसङ्ख्यया ।
सपादोदयशृङ्गं च शेषं मण्डोवरो भवेत् ॥ १७ ॥

एकादशोदयश्चोर्ध्वे त्र्यङ्गादौ च समस्तके ।
पञ्चाङ्गादौ च सूर्यांशाः सप्ताङ्गादौ त्रयोदश ॥ १८ ॥

चतुर्दशोच्छ्रये भागा नवाङ्गेषु च सर्वतः ।
एष चोदय आख्यातः शृङ्गाणां मालिकाक्रमः ॥ १९ ॥

निषधः सिंहनन्द्याख्यौ त्र्यङ्गा वै वेदभूमिकाः ।
निषधो दशभागैः स्यात्तथा सिंहोऽष्टभागिकः ॥ २० ॥

नन्दाख्यो नवभिर्भागैः कर्तव्यः सर्वकामदः ।
निषधश्च चतुर्भूमिः सिंहनन्दौ त्रिभूमिकौ ॥ २१ ॥

सिंहे भद्रं चतुर्भागं नन्दाख्ये पञ्चभागिकम् ।
षड्भागं च भवेद् भद्रं प्रासादे निषधे तथा ॥ २२ ॥

सिंहे भद्रं चतुरस्रं नन्दाख्ये कर्णिकायुतम् ।
कर्णिका मुखभद्रे च निषधे भद्ररूपकम् ॥ २३ ॥

द्वादशोच्छ्रयभद्रं च प्रासादे निषधे तथा ।
चतुःसार्धत्रयत्रय सार्धभागोर्ध्ववेदिका ॥ २४ ॥

घण्टोदयश्च स्कन्धोर्ध्वे कुम्भस्तत्तुल्य उच्छ्रये ।
प्रथमा क्षितिजा नाम द्वितीया सूर्यसेनिका ।
तृतीया चैव पर्यन्ता चतुर्थी गजकुम्भिका (कन्यका) ॥ २५ ॥

पञ्चमी सिंहरूपा च नरसिंहा च षष्ठिका ।
सप्तमी सर्वतोभद्रा चाष्टमी गगनोदरी ॥ २६ ॥

नवमी चित्रसंघाटा वेदिकास्त्रिदशालये ।
कण्ठो ग्रीवा कुड्मलं च पद्मच्छत्रोपच्छत्रकम् ॥ २७ ॥

त्र्यङ्गाः शस्ताश्चतुर्भूमा निषधः सिंहनन्दकौ ।
पञ्चाङ्गाः पञ्चभूमास्तु सप्ताङ्गाः सप्तभूमिकाः ॥ २८ ॥

नवाङ्गा नवभूमास्तु भूमिजाः पुरभूषणाः ।
ततःपरं न कर्तव्यं शुद्धच्छन्दे तु भूमिजे ॥ २९ ॥

इति त्र्यङ्गास्त्रयः ॥

छन्दे द्वादशधा भक्ते द्विभागः कर्णविस्तरः ।
सार्धभागः प्रतिरथश्चार्धभागा तु कर्णिका ॥ ३० ॥

पञ्चभागं भवेद् भद्रं निर्गमश्चैकभागिकः ।
मलयाद्रौ शुद्धच्छन्दे प्ररथः सार्धभागिकः ॥ ३१ ॥

कर्णतुल्यः प्रतिरथो भद्रं द्विगुणविस्तरम् ।
भद्रे प्रतिरथे वापि निर्गमो भागभागतः ॥ ३२ ॥

मन्दरस्तु समाख्यातः क्रमत्यागे प्रभामणिः ।
भित्त्यन्ते च क्रमं त्यक्त्वा ततो रेखाश्च भूमिजाः ॥ ३३ ॥
कर्णे प्रतिरथे चैव लताशृङ्गाणि कारयेत् ।
त्र्यंशपादत्रयं कुर्यात्पादोनत्रयमेव च ॥ ३४ ॥
सार्धत्रयं प्रकर्तव्यं सार्धभागा तु वेदिका ।
पञ्चाङ्गाः पञ्चभूमाश्च घण्टाकलशमूर्ध्वतः ॥ ३५ ॥

इति पञ्चाङ्गात्रयः ॥

क्षेत्रे च पञ्चदशभिर्भुजकर्णविशोधिते ।
द्विभागः कर्णकः सार्धो रथः प्रतिरथस्तथा ॥ ३६ ॥
पञ्चभागं भवेद् भद्रं विस्तरे च प्रकीर्तितम् ।
रथे प्रतिरथे भद्रे भागभागो विनिर्गमः ॥ ३७ ॥
माल्यवानिति सम्प्रोक्तो मलयं च ततः शृणु ।
रथो भागः सपादश्च प्ररथश्च ततोऽधिकः ॥ ३८ ॥
एवं मलय आख्यातः कथ्यते भूमिकोदयः ।
सूर्यसेना त्रिभिर्भागैः पादह्रस्वैः सप्ताङ्गके ॥ ३९ ॥
सार्धभागा भवेद्वेदी घण्टाकलशमूर्ध्वतः ।
सप्ताङ्गाः सप्तभूमाश्च माल्यवान्मलयस्तथा ॥ ४० ॥

इति सप्ताङ्गद्वयम् ॥

क्षेत्रेऽष्टादशधा भक्ते शुद्धच्छन्दे नवाङ्गकाः ।
कर्णो द्विभागो विस्तारे शेषा वा पादह्रासिताः ॥ ४१ ॥
कर्णे रथे प्रतिरथे बालपञ्जरभद्रकम् ।
पञ्चभागं भवेद् भद्रं भागः स्याद्दलनिर्गमः ॥ ४२ ॥
नवमालिक आख्यातः पृथ्वीध्वजमतः शृणु ।
सार्धभागः प्रतिरथो भद्रं वै सार्धपञ्चकम् ॥ ४३ ॥
कृत्वा पञ्चदशोत्सेधमष्टादशविभाजितम् ।
त्रिभागा चोच्छ्रिता भूमिः शेषाः पादेन ह्रासिताः ॥ ४४ ॥
ऊर्ध्ववेदी भवेद् भागा घण्टा पूर्वं प्रकल्पिता ।
नवाङ्गा नवभूमाश्च प्रासादा भूमिजा मताः ॥ ४५ ॥

इति नवाङ्गद्वयम् ॥

चतुरश्रीकृते क्षेत्रे प्रासादा वृत्तजातयः ।
पञ्चमांशे भवेद् भित्तिः कर्णान्ते वृत्तमालिखेत् ॥ ४६ ॥
अष्टाविंशत्यंशपरिधौ भद्रं पञ्चभागिकम् ।
द्विपदश्च भवेत्कर्णास्त्रिभूमः कुमुदो भवेत् ॥ ४७ ॥
कर्णाश्चाष्टदलाः कार्याः भद्रालेखैरलङ्कृताः ।
ऊर्ध्वे घण्टाकलशयुक् कुमुदः सर्वकामदः ॥ ४८ ॥

षट्त्रिंशद्भक्तपरिधौ भद्रान्तर्द्विद्विकर्णिका: ।
चतुर्भूमश्च कमलो घण्टाकलशकोन्नत: ॥ ४९ ॥
कर्णाश्चाष्टदलाकारा: कर्तव्यास्सुमनोरमा: ।
एवंविध: प्रकर्तव्य: कमलो नाम शोभन: ॥ ५० ॥

कमलोद्भवक्षेत्रं तु चतुर्दशविभाजितम् ।
द्विभाग: कर्णविस्तारो भद्रं षड्भागिकं तथा ॥ ५१ ॥
कर्णतुल्य: प्रतिरथो विकर्णे चाऽपि संस्थित: ।
पञ्चभूम्युच्छ्रितं कुर्याद् घण्टाकलशभूषितम् ॥ ५२ ॥
पञ्चमांशे भवेद् भित्ति: शेषं गर्भगृहं भवेत् ।
एवंविध: प्रकर्तव्यो नाम्नाऽसौ कमलोद्भव: ॥ ५३ ॥

शतशृङ्गमथो वक्ष्ये प्रासादं सर्वकामदम् ।
वल्लभं सर्वदेवानां शिवस्यापि विशेषत: ॥ ५४ ॥

वेदाश्रे भक्तिभागाश्च विंशतिस्त्वेकवर्जिता ।
पञ्चभागं भवेद् भद्रं द्विभाग: कर्णविस्तर: ॥ ५५ ॥

भद्रकर्णकयोर्मध्ये द्वौ द्वौ प्रत्यङ्गकौ स्मृतौ ।
पञ्चमांशे भवेद् भित्ति: शेषं गर्भगृहं भवेत् ॥ ५६ ॥
सप्तभूमसमुत्सेधो घण्टाकलशभूषित: ।
कर्णाश्चाष्टदला: कार्या: प्रत्यङ्गं वर्धमानवत् ॥ ५७ ॥
अर्जुनफलसंयुक्ता बालपञ्जरिका मता ।
एवंविधं प्रकर्तव्यं शतशृङ्गस्य लक्षणम् ॥ ५८ ॥

विभक्तं पञ्चविंशत्या वक्ष्ये सर्वाङ्गसुन्दरम् ।
यथा भद्रं तथा कर्ण: प्रभद्रं शतशृङ्गवत् ॥ ५९ ॥

भद्रकर्णकयोर्मध्ये त्रित्रिप्रत्यङ्गकं तथा ।
कर्णाश्चाष्टदला: प्रोक्ता: प्रत्यङ्गं वर्धमानवत् ॥ ६० ॥

अग्रेऽर्जुनफलैस्तुल्यं तदग्रे भद्रकं भवेत् ।
पञ्चमांशयुता भित्ति: शेषं गर्भगृहं भवेत् ॥ ६१ ॥
नवभूमिसमायुक्तं कुर्यात्सर्वाङ्गसुन्दरम् ।
अष्टचत्वारिंशदंशैर्भक्ते भद्रं युगांशकम् ॥ ६२ ॥

वेदा वेदा भद्रमध्ये कर्णा: कार्या द्विपादका: ।
भद्रान्ते वर्धमानाश्च ह्यष्टांशा युग्मत: स्थिता: ॥ ६३ ॥
षड्भूमिकोच्छ्रित: कार्य: किरण: सर्वकामद: ।
नष्टकर्णे रथयुग्मं कमल: पूर्ववत् स्थित: ॥ ६४ ॥

उच्छ्रये किरणच्छन्दो निरावेद: कलाधिक: ।
निरावेदस्य परिधौ चतुष्षष्ट्या विभाजिते ॥ ६५ ॥

चतुष्पदानि भद्राणि कर्णा द्विपदविस्तराः ।
षट् षट् कार्या भद्रमध्ये ह्यष्टभूमिसमुच्छ्रितिः ॥ ६६ ॥

द्वौ द्वावष्टदलाः कार्या वर्धमानद्विकद्विकम् ।
द्वौ द्वौ भद्रकयुकाश्च कर्तव्याः सर्वकामदाः ॥ ६७ ॥

घण्टाकलशशस्ताश्च शान्तिदाश्च पुरः पतेः ।
इति मानं समुद्दिष्टं वृत्तानां भूमिजेषु च ॥ ६८ ॥

इति सप्तवृत्तजातयः ॥

कर्णान्तवृत्तं वेदाश्रे परिधौ द्विनगांशतः ।
भद्राणि पञ्चपादानि ख्यातानि पूर्वच्छन्दके ॥ ६९ ॥

चतुष्पदो भवेत्कर्णः पञ्चभूमिसमुच्छ्रितः ।
घण्टाकलशशोभाढ्यः स्वस्तिको नाम नामतः ॥ ७० ॥

भद्रकेषु च कर्णेषु वज्रशृङ्गं निधापयेत् ।
वज्रस्वस्तिक आख्यातः शक्रादिसुरवल्लभः ॥ ७१ ॥

वेदोत्तरशतांशैश्च परिधिं तत्र कारयेत् ।
सप्तभूमो हर्म्यतलः कलाकर्णोऽष्टभद्रकः ॥ ७२ ॥

हर्म्यतले श्रीतिलकः स्वस्तिके वज्रकस्तथा ।
भागतः परिधौ भक्ते शतं षट् त्रिंशदुत्तरम् ॥ ७३ ॥

ऽयष्टकर्णोऽष्टभद्रश्च नवभूमिसमुच्छ्रितः ।
पृथिवीभूषणो वज्रे वज्रस्वस्तिकपूर्वके ॥ ७४ ॥

अन्यथा पृथ्वीभूषण छन्दैकोद्भवाख्यकम् ? ।
पूर्वे ज्ञेयः स्वस्तिकश्च भद्रं वै सप्तभागिकम् ॥ ७५ ॥

कर्णोद्गमो द्विभागः स्याद् - - - - - - - - - ।
भद्रे च शृङ्गमेकैकं स भवेद् गन्धमादनः ।
त्रैलोक्यभूषणो नाम द्विद्विशृङ्गसमुद्भवः ॥ ७६ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां भूमिजप्रासादलक्षणाधिकारो नामैकसप्तत्युत्तरशततमं सूत्रम् ॥

## (१७२) विमानप्रासादलक्षणात्मकं द्वासप्तत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

विमानांश्च प्रवक्ष्यामि प्रासादान् शिखरोत्तमान् ।
नागरश्छन्द आख्यातो भूमिजः शिखरोद्गमः ॥ १ ॥

विमानो गरुडो ध्वजो विजयो गन्धमादनः ।
हिमवान् हेमकूटश्च कैलासस्त्रिपुरोद्भवः ॥ २ ॥

श्रियो हंसो हंसपक्ष उद्योतो वज्रसंभवः ।
पुराख्यः सुन्दरश्चैत्यो विशालो भद्रसंज्ञकः ॥ ३ ॥

मन्दरः कूर्मसौम्यौ च ऐरावतो मालाधरः ।
मेरुर्विमानान्वयजाः प्रासादाः पञ्चविंशतिः ॥ ४ ॥

नवधा भाजिते क्षेत्रे द्विभागः कर्णविस्तरः ।
पञ्चभागं भवेद् भद्रमेकभागेन निर्गतम् ॥ ५ ॥

भागार्धे क्षोभयेत्पार्श्वे निर्गमश्चार्धभागिकः ।
चतुर्भागं च विस्तारे मुखभद्रं विधीयते ॥ ६ ॥

कर्णे शृङ्गं वारिमार्गैर्भूमिजानामनुक्रमैः ।
घण्टाकलशसंयुक्तो विमानः पञ्चभूमिकः ॥ ७ ॥

प्राग्ग्रीवाश्च चतुर्भद्रे गरुडः सर्वकामदः ।
चतुर्द्वारैर्ध्वजो नाम सर्वदेवसुखावहः ॥ ८ ॥

रुद्रांशैर्भाजिते छन्दे भागा स्यात्पक्षकर्णिका ।
विधेयं पूर्ववच्छेषं विजयः सर्वकामदः ॥ ९ ॥

कर्णिकाभिश्चोर्ध्वशृङ्गं स भवेद् गन्धमादनः ।
भक्ते द्वादशधा छन्दे प्रथः सार्धभागतः ॥ १० ॥

कर्णे प्रतिरथे चैव शिखरे पञ्चभूमिकः ।
आख्यातो हिमवान् हेम-कूटस्तु समनिर्गमः ॥ ११ ॥

कर्णत्यागे भवेद्रेखा कैलासः पञ्चभूमिकः ।
भद्रकर्णे च कुमुदः स भवेत्त्रिपुरोद्भवः ॥ १२ ॥

मत्तालम्बो मुखभद्रे श्रियो वै सर्वकामदः ।
शिखरे वै लता कार्या हंसनामा स उच्यते ॥ १३ ॥

प्राग्ग्रीवास्तस्य मध्ये च हंसपक्षस्तु ब्रह्मजः ।
चतुर्द्वारसमायुक्त उद्योत उदयोद्भवः ॥ १४ ॥

सान्धारो मध्य आख्यातो भद्रे चन्द्रावलोकना ।
वज्रसम्भव आख्यातः कर्तव्यः सर्वशान्तिदः ॥ १५ ॥

भक्ते छन्दे च मन्वंशैः स्तम्भकः सार्धभागतः ।
हिमवत्पूर्वकं ज्ञेयं पुराख्यः सर्वकामदः ॥ १६ ॥

सुन्दरः प्राग्ग्रीवयुक्तश्चैत्यो वाराटशृङ्गतः ।
विशालो हीनप्राग्ग्रीवः सान्धारे भद्रसंज्ञकः ॥ १७ ॥

द्राविडे पक्षशृङ्गाणि मन्दरः सर्वकामदः ।
लतायुक्तस्तु कूर्माख्यः सौम्यो मत्तावलम्बकैः ॥ १८ ॥

ऐरावतश्च प्राग्ग्रीवैश्चतुर्वक्त्रैर्मालाधरः ।
सान्धारश्छन्द आख्यातो भद्रे चन्द्रावलोकना ॥ १९ ॥

मेरुः प्रासाद आख्यातः कर्तव्यः सर्वदैवते ।
कर्त्ता शिवपुरं याति कौबेरं पदमाप्नुयात् ॥ २० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां विमानप्रासादलक्षणाधिकारो नाम द्वासप्तत्युत्तरशततमं सूत्रम् ॥

---

## (१७३) द्राविडप्रासादपञ्चपीठलक्षणात्मकं त्रिसप्तत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

द्राविडांश्च प्रवक्ष्यामि प्रासादान् शुभलक्षणान् ।
पीठान्पञ्चैव सम्प्रोक्तान् कथयिष्याम्यनुक्रमात् ॥ १ ॥

पादबन्धन आद्यः स्याच्छ्रीबन्धाख्यो द्वितीयकः ।
तृतीयो वेदबन्धाख्यश्चतुर्थश्च प्रतिक्रमः ॥ २ ॥

पञ्चमः पीठ आख्यातो नाम्ना खुरकबन्धनः ।
एकैकानुक्रमं वक्ष्ये शृणु चैकाग्रमानसः ॥ ३ ॥

उत्सेधं भागविंशत्या विभजेत्पादबन्धने ।
श्रीबन्धे सप्तविंशत्या विंशत्या वेदिबन्धने ॥ ४ ॥

प्रतिक्रमे नवदश विंशत्या खुरके तथा ।
तदनुक्रमतः प्रोक्तं प्रवक्ष्ये पादबन्धने ॥ ५ ॥

खुरकः पञ्चभागस्तु द्विभागा पद्मपत्रिका ।
त्रिभागश्च कपोतः स्याच्छेदो भागः प्रकीर्तितः ॥ ६ ॥

कण्ठो द्विभागः कर्तव्यस्त्रिभागा पद्मपत्रिका ।
त्र्यंशः कपोतः पट्टी तु भागा स्यात्पादबन्धने ॥ ७ ॥

नीडवर्त्ती चतुर्भागा द्विभागा पद्मपत्रिका ।
एकभागा कर्णिका च कुमुदे त्र्यंशकोन्नतिः ॥ ८ ॥

छेदो मेषश्च मकरो नक्रपट्टी च छेदकः ।
कण्ठश्च पट्टिका वेदी छेदः स्युर्भागभागतः ॥ ९ ॥

द्विभागः कण्ठ इत्युक्तः पट्टिका भागमेव च ।
पद्मपत्री भवेद् भागा कपोताली त्रिभागिका ॥ १० ॥

छेदस्तथैकभागः स्याच्छ्रीबन्धाख्यः समुन्नतः ।
सप्तविंशत्युन्नतः स्यात् प्रवक्ष्ये वेदिबन्धनम् ॥ ११ ॥

नीडवर्त्ती चतुर्भागा द्विभागा पद्मपत्रिका ।
कर्णिका भागमेकं तु त्रिभागा कुमुदोन्नतिः ॥ १२ ॥

छेदो मेषश्च मकरो नक्रपट्टी च छेदकः ।
कण्ठः पद्मपत्री च भागभागं समुन्नतः ॥ १३ ॥

वेदी त्रि(द्वि)भागा कर्तव्या भागा स्याच्छेदकोन्नतिः ।
वेदीबन्धन उक्तश्च विंशत्यंशैः समुच्छ्रितः ॥ १४ ॥

नीडवर्त्ती पञ्चभागा द्विभागा पद्मपत्रिका ।
एकभागा कर्णिका च कुमुदं त्रिपदोन्नतम् ॥ १५ ॥

छेदो भागं द्वयं कण्ठः पट्टिका भागमेव च ।
पद्मपत्री भवेद् भागं रसना च द्विभागिका ॥ १६ ॥

छेदो भागः प्रकर्तव्यो नाम्ना स स्यात् प्रतिक्रमः ।
ऊनविंशतिभागैश्च कर्तव्या तु समुच्छ्रितिः ॥ १७ ॥

नीडवर्त्ती चतुर्भागा द्विभागा पद्मपत्रिका ।
कर्णिका चैकभागेन द्विभागा कुमुदोन्नतिः ॥ १८ ॥

मेघो नक्रश्च मकरी-पट्टी छेदश्च भागतः ।
कण्ठः पट्टी भागभागं भागा स्यात्पद्मपत्रिका ॥ १९ ॥

कपोतस्तु त्रिभागैः स्याच्छेदो वै भाग एव च ।
आवृतः पञ्चमः पीठो नाम्ना खुरकबन्धनः ॥ २० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां-
द्राविडप्रासादपञ्चपीठलक्षणाधिकारो नाम त्रिसप्तत्युत्तरशततमं सूत्रम् ॥

## (१७४) द्राविडप्रासादलक्षणात्मकं चतुःसप्तत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

इदानीं द्राविडान् वक्ष्ये प्रासादान् सर्वकामदान् ।
पीठपञ्चकमित्युक्तं तलच्छन्दास्तु पञ्चधा ॥ १ ॥

ऐन्द्रोद्भवो राजहंसो नन्दनः सिंहपञ्जरः ।
त्र्यङ्गाश्चत्वार एवोक्ता द्राविडा एकभूमिकाः ॥ २ ॥

गरुडो वर्धमानश्च श्रीतरुः प्रमदाप्रियः ।
नन्दिघोषः समाख्याताः पञ्चाङ्गाश्च त्रिभूमिकाः ॥ ३ ॥

स्वस्तिकः शङ्कुकर्णाख्यो गोविन्दो नन्दिवर्धनः ।
पृथ्वीजयः पताकश्च सप्ताङ्गाः पञ्चभूमिकाः ॥ ४ ॥

सर्वाङ्गः सर्वतोभद्रः सर्वसुन्दरसम्भ्रमौ ।
जनानन्दः क्षितिधरो नवाङ्गाः सप्तभूमिकाः ॥ ५ ॥

पद्मसूत्रो महापद्मः कैलासो मेरुनायकः ।
चत्वारो वृत्तका उक्ता द्राविडाः पञ्चविंशतिः ॥ ६ ॥

भक्तं वेदाश्रकं चार्धे भद्रं पादं च निर्गतम् ।
ऐन्द्रोद्भवः पदं कर्ण उदकान्तरभूषितः ॥ ७ ॥

भद्रार्धे मुखभद्रं च राजहंसश्च नामतः ।
भद्रोदये नन्दनाख्यः कर्णभद्रे च पञ्जरः ॥ ८ ॥

पीठोर्ध्वं कर्णमानेन विभक्तं पञ्चभागिकम् ।
सार्धभागे भवेज्जङ्घा सपादः कूटकोदयः ॥ ९ ॥

वेदी पादोनभागा स्याद् घण्टा वै सार्धभागिका ।
ऊर्ध्वे कलशमाख्यातं कर्तव्यं सर्वकामदम् ॥ १० ॥

एकभूमाश्च चत्वारो गरुडं च ततः शृणु ।
षड्भागश्चैव विस्तारो भागः प्रतिरथो भवेत् ॥ ११ ॥

निर्गमोऽर्धे वार्मार्गयुक् शेषं पूर्वप्रकल्पितम् ।
गरुडाख्यो मुखभद्रे वर्धमानः स उच्यते ।
भद्रोदके श्रीधरो भद्रकर्णे प्रमदाप्रियः ॥ १२ ॥

यदा प्रतिरथे भद्रं नन्दिघोषः स उच्यते ।
पीठोर्ध्वे कर्णमानेनोदये त्रिदशभाजिते ॥ १३ ॥

सपादद्व्यंशका जङ्घा कूटं भागद्वयोन्नतम् ।
पादोनद्व्यंशका जङ्घा सार्धः कूटसमुच्छ्रयः ॥ १४ ॥

सपाद् जङ्घांऽशकः कूटो वेदी स्यादर्धभागिका ।
पादोनत्र्यंशका घण्टा कर्तव्याश्च त्रिभूच्छ्र्याः ॥ १५ ॥
इति त्रिभूमिकाः पञ्च ॥

विभक्ते चाऽष्टधा छन्दे द्विभागः भद्रविस्तरः ।
भागभागं रथकर्णौ तत्तदर्धे स निर्गतम् ॥ १६ ॥
स्वस्तिकश्च समाख्यातः शङ्कुकर्णस्तु भद्रके ।
गोविन्दो मुखभद्रेषु भद्रोदनन्दिवर्धनः ॥ १७ ॥
द्वौ द्वौ प्रतिरथौ भद्रे स भवेत्पृथिविजयः ।
वर्धमानो यदा कर्णः पताकः सर्वकामदः ॥ १८ ॥
पीठोर्ध्वे कर्णमानेन षड्विंशतिभाजिते ।
जङ्घा सार्धत्रयं कुर्यात् कूटं वै पादयुक्त्रयम् ॥ १९ ॥
त्रिभागं च पुनर्जङ्घा कूटं पदविवर्जितम् ।
सार्धद्विभागा जङ्घा च कूटं पादयुतद्वयम् ॥ २० ॥
द्विभागं च तथा जङ्घा कूटं पादोनद्व्यंशकम् ।
जङ्घा च सार्धभागोक्ता कूटं भागसमुच्छ्रितम् ॥ २१ ॥
अर्धभागा भवेद् वेदी घण्टा पादोनद्व्यंशका ।
एवमादिगुणोपेताः कर्तव्याः पञ्चभूमिकाः ॥ २२ ॥
इति पञ्चभूमिकाः षट् ॥

विभक्ते दशधा छन्दे द्विभागो कर्णविस्तरः ।
पादास्त्रयः प्रतिरथा स्तत्तदर्धे विनिर्गतम् ॥ २३ ॥
मध्ये भद्रस्य कर्णस्य प्ररथाश्च त्रयस्त्रयः ।
उदकान्तरसंयुक्ताः कर्तव्याः सर्वकामदाः ॥ २४ ॥
सर्वाङ्गः स समाख्यातः प्रभद्रे सर्वभद्रकः ।
सुन्दरः कर्णभद्रे स्याद् भद्रोदके तु सम्भ्रमः ॥ २५ ॥
भद्राणि च प्रतिरथे जनानन्दः स उच्यते ।
कर्णे चाऽष्टदलं कार्यं द्वितीयं प्ररथे तथा ॥ २६ ॥
शेषे युग्मप्रतिरथे कार्या वै वर्धमानकाः ।
क्षितिधरस्तदा नाम प्रासादः सुरवल्लभः ॥ २७ ॥
पीठोर्ध्वे कर्णमानेन पञ्चत्रिंशत्समुच्छ्रितिः ।
आदिजङ्घा चतुर्भागं पादोनं कूटमुच्छ्रितम् ॥ २८ ॥
पादह्स्वा भवेज्जङ्घा पादोनं कूटमुन्नतम् ।
एवमादिक्रमयोगे भागं कूटं तु सप्तमम् ॥ २९ ॥
अर्धभागं भवेद्वेदी घण्टा भागद्वयोन्नता ।
एवंविधं प्रकर्तव्यं नवाङ्गं सप्तभूमिकम् ॥ ३० ॥
इति सप्तभूमिकाः षट् ॥

अष्टकोणाः पञ्चभूमा पद्मनामा च कामदः ।
पञ्चभूमा द्व्यष्टदला महापद्म इति स्मृतः ॥ ३१ ॥

चतुर्विंशतिभिर्वृत्तः कैलासः सप्तभूमिकः ।
द्वात्रिंशद्भिर्दलैर्वृत्तः स भवेन्मेरुनायकः ॥ ३२ ॥

घण्टाकलशशोभाढ्यान् शुकनासाग्रसंयुतान् ।
चित्रकूटान्वितान् कुर्यात् प्रासादान् सर्वकामदान् ॥ ३३ ॥

कूटांश्चाऽथ प्रवक्ष्यामि द्राविडकर्मचर्चितान् ।
तदनुक्रमयुक्तीं च कथये तव साम्प्रतम् ॥ ३४ ॥

पञ्चभागैः पृथुः कूट उच्छ्रये सप्तभागिकः ।
वेदीबन्धत्रयं कार्यं त्रिसंघाटमिति स्मृतम् ॥ ३५ ॥

वेदीघण्टाद्वयोरूर्ध्वे द्विसंघाटाभिधः स्मृतः ।
एकवेदीबन्धकोर्ध्वे वेदीघण्टाद्यलङ्कृतः ॥ ३६ ॥

एकसंघाटसंज्ञोऽयं कर्तव्यः सर्वकामदः ।
द्विभागं सार्धभागं च भागिकं चार्धभागिकम् ॥ ३७ ॥

त्रिसंघाट इति प्रोक्तश्चार्धभागाश्च वेदिकाः ।
द्विभागकोच्छ्रिताः कूटाः कर्तव्या नासिकोद्भवाः ॥ ३८ ॥

कर्तव्य एकसंघाटो द्विसंघाटस्तथोच्यते ।
त्रिसंघाटस्तु कर्तव्यो वेदीघण्टा तदूर्ध्वतः ॥ ३९ ॥

संघाटे प्रथमे कुर्यान्मकरान्विकृताननान् ।
द्वितीये कोटपालांश्च कण्टकांश्च तृतीयके ॥ ४० ॥

वेदीघण्टा तदूर्ध्वे तु कार्या पूर्वगुणैर्युता ।
एवंविधं प्रकर्तव्यं स्कन्धमानाद्विनिर्गतम् ॥ ४१ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
द्राविडप्रासादलक्षणाधिकारो नाम चतुःसप्तत्युत्तरशततमं सूत्रम् ॥

---

# (१७५) वराटप्रासादलक्षणात्मकं पञ्चसप्तत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

प्रासादान् सम्प्रवक्ष्यामि वराटान्वयजानथ ।
नामपादप्रमाणं च संस्थानोन्मानलक्षणम् ॥ १ ॥

वराटः पुष्पकश्चैव श्रीपुञ्जश्च तृतीयकः ।
सर्वतोभद्रनामा च सिंहो वै सिंहभद्रकः ॥ २ ॥

कर्णिकारश्च कुमुदो वर्द्धमानः श्रीवत्सकः ।
पुण्डरीकः सुनाभश्च वेणुकः सिंहपञ्जरः ॥ ३ ॥

नन्द्यावर्तश्च पुण्याख्यः पताको नन्दनस्तथा ।
श्रीतिलको महाकान्तः सुन्दरश्चारुवर्द्धनः ॥ ४ ॥

कम्बलः किरणश्चैव महापद्मस्तथापरः ।
पञ्चविंशतिराख्याताः प्रासादाः सर्वकामदाः ॥ ५ ॥

चतुरश्रीकृते क्षेत्रे एकभागविभाजिते ।
चतुःस्तम्भसमायुक्तमेकद्वारेणभूषितम् ॥ ६ ॥

क्षेत्रे भागोदयं स्तम्भं रथभूफलकान्तरम् ।
आदिभूम्युदयार्धेन पीठबन्धं प्रकल्पयेत् ॥ ७ ॥

कर्तव्या तत्र छाद्योर्ध्वे घण्टा मन्दारपुष्पवत् ।
वराटश्च समाख्यातः कर्तव्यः सर्वदैवते ॥ ८ ॥

इति वराटः १ ॥

चतुर्धा भाजिते छन्दे द्विभागो भद्रविस्तरः ।
निर्गतः पादपादेन सर्वभद्रेष्वयं विधिः ॥ ९ ॥

कर्णे भद्रेषु घण्टा च रूपे मन्दारपुष्पवत् ।
मध्योर्ध्वे च बृहद्घण्टा पुष्पको नाम नामतः ॥ १० ॥

इति पुष्पकः २ ॥

चतुःपुष्पकसंघाट ऊर्ध्वे घण्टा तु पञ्चमी ।
श्रीपुञ्जोऽसौ समाख्यातः कर्तव्यः सर्वदैवते ॥ ११ ॥

इति श्रीपुञ्जः ३ ॥

अधस्तादष्टसंघाटं पुनः कुर्यात्तदूर्ध्वतः ।
तृतीया तु तदूर्ध्वे च घण्टा मन्दारपुष्पवत् ॥ १२ ॥
पादहस्त्वोर्धभूमिश्च रसाः स्कन्धो दिशा अधः ? ।
सर्वतोभद्र आख्यातः कर्तव्यः सर्वदैवते ॥ १३ ॥

इति सर्वतोभद्रः ४ ॥

क्षेत्रार्धे च भवेद् भद्रं भद्रार्धे कर्णविस्तरः ।
कर्णार्धस्य प्रमाणेन कर्तव्यो भद्रनिर्गमः ॥ १४ ॥

पञ्चभागो भवेद् गर्भश्चत्वारश्चार्धपञ्चमाः ।
कर्णे भद्रे च कूटानि सर्वभद्राणि कारयेत् ॥ १५ ॥

एकभूम्यूर्ध्वघण्टां च कुर्यान्मन्दारपुष्पवत् ।
सिंहनामा समाख्यातः प्रासादः पार्वतीसुखः ॥ १६ ॥

इति सिंहः ५ ॥

प्रतिभद्रे सिंहभद्रो भद्रे छिद्रिजलान्तरम् ।
कर्णिकारोऽथ कुमुदः कर्णे तद्रूपके तथा ॥ १७ ॥

इति सिंहभद्रकर्णिकारकुमुदाः । इत्येकभूमिका अष्टौ ॥

चतुरस्रं समं क्षेत्रं शतमूलविभाजितम् ।
द्विभागः कर्णविस्तारो भद्रं भागत्रयं भवेत् ॥ १८ ॥

भद्रार्धे च प्रतिस्थानमुभयोर्वामदक्षयोः ।
भागपादेन निष्कासो भद्रे प्रतिरथेऽथवा ॥ १९ ॥

कर्णे प्रतिरथे सर्वभद्राणि त्रीणि त्रीणि च ।
वलभीत्रितयं भद्रे घण्टामन्दारपुष्पवत् ॥ २० ॥

वर्धमानस्तदा नाम कर्तव्यः सर्वकामदः ।

इति वर्धमानः ९ ॥

भद्रे वार्यन्तरे द्वे चेद् श्रीवत्सः स तदोच्यते ॥ २१ ॥

इति श्रीवत्सः १० ॥

यथा भद्रे तथा कर्णे पुण्डरीकश्च नामतः ।

इति पुण्डरीकः ११ ॥

तथा रूपं प्रतिरथे सुनाभो नाम उच्यते ॥ २२ ॥

इति सुनाभः १२ ॥ इतित्रिभूमाश्चत्वारः ॥

कर्णतुल्यः प्रतिरथश्चतुर्भागं च भद्रकम् ।
पञ्चभूमिसमायुक्तो वेणुको नाम शोभनः ॥ २३ ॥

इति वेणुकः १३ ॥

कर्णं प्रतिरथं भद्रं चतुरश्रं प्रकल्पयेत् ।
भद्रं च कर्णिकायुक्तं स भवेत् सिंहपञ्जरः ॥ २४ ॥

इति सिंहपञ्जरः १४ ॥

छिद्रिवार्यन्तरं भद्रे नन्द्यावर्तश्च नामतः ।
यथा भद्रे तथा कर्णे पूर्णाक्षो नाम नामतः ॥ २५ ॥

इति नन्द्यावर्तपूर्णाक्षौ १५-१६ ॥

कर्णे त्यक्त्वाऽनुगे दद्यात् पताको नाम शोभनः ।
रथे प्रतिरथे कर्णे भवेन्नन्दन उत्तमः ॥ २६ ॥

इति पताकनन्दनौ १७-१८ ॥

इति पञ्चभूमाः षट् ॥

चतुर्दशविभक्ते च द्विभागः कर्णविस्तरः ।
भवेत्तद्द्विगुणं भद्रं निर्गमश्चार्धभागिकः ॥ २७ ॥
भद्रकर्णकयोर्मध्ये द्वौ द्वौ प्रतिरथौ तथा ।
निर्गतं चार्धभागेन सार्धभागस्तु विस्तरः ॥ २८ ॥
सप्तभूमिश्च कर्तव्यः स श्रीतिलकनामकः ।
भद्रे वार्यन्तरे द्वे च महाकान्तस्स उच्यते ॥ २९ ॥

इति श्रीतिलकमहाकान्तौ १९-२० ॥

कर्णोदकैः सुन्दरः स्यात् प्ररथे चारुवर्धनः ।
भद्रेषु प्रतिभद्रं च भवेत् कमलसंज्ञकः ॥ ३० ॥

इति सुन्दरचारुवर्धनकमलाः ॥
२१ २२ २३

नन्दोदकान्तरे द्वे द्वे किरणो नाम नामतः ।

इति किरणः २४ ॥

सप्तभूमाश्च कर्तव्याः प्रासादाः शुभलक्षणाः ॥ ३१ ॥

इति सप्तभूमाः षट् ॥

छन्देऽष्टादशधा भक्ते द्विभागः कर्णविस्तरः ।
पादोनद्व्यंशः प्ररथः सार्धं स्यात्तत्र चानुगम् ॥ ३२ ॥
वालपञ्जरः सपादो भद्रं स्यात्पञ्चभागिकम् ।
भागावुभे कर्णिके च वेदांशं मुखभद्रकम् ॥ ३३ ॥
नवभूमाश्च कर्तव्या घण्टा मन्दारपुष्पवत् ।
शुकाग्रयुक्तश्च महा-पद्मः स्यात् सर्वकामदः ॥ ३४ ॥

इति महापद्मः २५ ॥ इति नवभूमएकः ॥

स्तम्भाद्याश्चैव गर्भाद्याः पादाः श्रीतर्यमानतः ? ।
चतुर्विंशतिभिश्चारैः रेखाभिश्च वराटकाः ॥ ३५ ॥
वराटे द्राविडे चैव घण्टान्त उदयः स्मृतः ।
प्रोक्ताश्च विविधाश्छन्दाः प्रयुक्ता वास्तुवेदिभिः ॥ ३६ ॥
कर्णमानोदयं सर्वं घण्टान्तं च प्रकल्पयेत् ।
दशभागोदयं कृत्वा विभजेत्तदनन्तरम् ॥ ३७ ॥
द्विभागा च भवेज्जङ्घा द्विगुणः कूटकोदयः ।
चतुर्भागोदया घण्टा विभागो ह्येकभूमिके ॥ ३८ ॥

इत्येकभमिकः ॥

द्व्यष्टभागोदयं कृत्वा विभजेत्तदनन्तरम् ।
द्विभागा च भवेज्जङ्घा द्विगुणः कूटकोदयः ॥ ३९ ॥
एकभागा भवेज्जङ्घा त्रिभागं कूटमुन्नतम् ।
जङ्घार्धे सार्धद्व्यांशं कूटं घण्टा च त्र्यंशिका ॥ ४० ॥

इति त्रिभूमिकः ॥

विंशत्यंशोदयं कृत्वा विभजेत्तदनन्तरम् ।
द्विभागा च भवेज्जङ्घा द्विगुणः कूटकोदयः ॥ ४१ ॥
सार्धे जङ्घा त्रिभिः कूटं जङ्घैका सार्धद्व्यंशकम् ।
अर्धे जङ्घा द्व्यंशकूटं पदिका सार्धभागिकम् ॥ ४२ ॥
एकांशां च तथा घण्टां कुर्यान्मन्दारपुष्पवत् ।
पञ्चभूम इति ख्यातः कर्तव्यः सर्वकामदः ॥ ४३ ॥

इति पञ्चभूमिकः ॥

त्रिचत्वारिंशद्भाजितं कथ्यते सप्तभूमिकः ।
त्र्यंशा जङ्घा सप्तकूटं त्र्यंशा जङ्घा च षट् ततः ॥ ४४ ॥
जङ्घा द्व्यंशाः पञ्चकूटं द्वौ जङ्घा वेदकूटकः ।
सार्धं जङ्घा त्रिभिः कूटं जङ्घैकांशा द्विकूटकम् ॥ ४५ ॥
अर्धं जङ्घा भागकूटं घण्टा भागद्वयोन्नता ।
इतीत्थं सप्तभूमश्च कर्तव्यः सर्वकामदः ॥ ४६ ॥

इति सप्तभूमिकः ॥

एकषष्ठ्युदयं कृत्वा विभजेन्नवभूमिकम् ।
वेदा जङ्घा चाष्टकूटं वेदा जङ्घाऽश्वकूटकम् ॥ ४७ ॥
त्र्यंशाजङ्घा च षट्कूटं त्रिजङ्घा पञ्चकूटकम् ।
द्वौ जङ्घा कूटकं वेदा द्वौ जङ्घा कूटकं त्रयः ॥ ४८ ॥
सार्धा जङ्घा सार्धद्वयं भागं जङ्घा द्विकूटकम् ।
जङ्घार्धे कूटको भागो घण्टास्यात्सार्धभागिका ॥ ४९ ॥

इति नवभूमोदयः ॥

वराटः पुष्पकश्चैव श्रीपुञ्जः सर्वतोभद्रः ।
एते कूटैः समावृत्ताः कर्तव्याः सर्वकामदाः ॥ ५० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां वराटप्रासादलक्षणाधिकारो नाम पञ्चसप्तत्युत्तरशततमं सूत्रम् ॥

## (१७६) श्रीसंज्ञकवलभीप्रासादलक्षणात्मकं षट्सप्तत्युत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

अथातः सम्प्रवक्ष्यामि श्रीसंज्ञानमरालयान् ।
वलभ्यन्वयविख्यातानायतान् शुभलक्षणान् ॥ १ ॥
नन्दिनी हस्तिनी चैव शान्ता च कुमुदोद्भवा ।
हंसिनी हंसतिलका शृङ्गारा चाब्जमञ्जरी ॥ २ ॥
कुमुदा स्वस्तिका रम्या माहेन्द्री पर्यन्तकी ।
अशोका चम्पकाख्याता वसन्ता नककेतकी ॥ ३ ॥
गान्धारी सर्वतोभद्रा वर्धमानी श्रीशैलजा ।
नन्द्यावर्ता महाकान्तिर्मेरुकूटाभिधानका ॥ ४ ॥
त्रैलोक्यतिलका चैव विख्याताः पञ्चविंशतिः ।
इत्युक्ता वलभीसंज्ञाः स्त्रीलिङ्गाश्च प्रकीर्तिताः ॥ ५ ॥
चतुर्भागश्च विस्तार आयतं पञ्चभागिकम् ।
भित्तिर्भागा शुभो रम्यो गर्भः षट्पद उच्यते ॥ ६ ॥
गर्भतुल्या स्कन्धवेदी घण्टा स्कन्धाकृतिर्भवेत् ।
वेद्यूर्ध्वे चैव वलभी गजपृष्ठाकृतिर्भवेत् ॥ ७ ॥
वामदक्षिणतो लेख्या पुरः पृष्ठे ठकारिका ।
शुकनासाऽग्रतःख्याता नन्दिनी सर्वकामदा ॥ ८ ॥
त्रिभागं पृष्ठभद्रं च द्विभागं पक्षभद्रकम् ।
हस्तिनी च समाख्याता कर्तव्या सर्वकामदा ॥ ९ ॥
कर्णे वार्यन्तरं कार्यं भद्रे भद्रे ठकारिका ।
शान्ता सा च समाख्याता कूटाक्षा सर्वकामदा ॥ १०
वार्यन्तरं भद्रमध्ये सा भवेत् कुमुदोद्भवा ।
यथा भद्रे तथा कर्णे हंसिनी सर्वकामदा ॥ ११ ॥
पृष्ठभद्रे मुखभद्रं सा हंसतिलका मता ।
तलच्छन्देषु चाऽऽद्येषु वलभीषट्कमेव च ॥ १२ ॥

इत्येकभूमिकाः षट् ॥

षड्भागश्चैव विस्तार आयामोऽष्टांश एव च ।
सार्धभागा भवेद् भित्तिः शेषं गर्भगृहं भवेत् ॥ १३
कर्णे कूटानि कार्याणि भूमिकात्रयमेव च ।
तदूर्ध्वे वेदिकास्कन्धो वलभ्यश्च तदूर्ध्वतः ॥ १४ ॥
चतुर्भागं पृष्ठभद्रं तदर्धं वामदक्षिणे ।
अर्धभागस्तुनिष्कासः कर्णे स्यादुदकान्तरम् ॥ १५ ॥

भद्रे भद्रे च वलभी वाराटाकूटघण्टिका ।
शृङ्गारा च तदा नाम दुर्लभा देवदानवैः ॥ १६ ॥
अर्धभागा भद्रकर्णा भवेत् कुमुदमञ्जरी ।
भद्रेऽम्बुमार्गैः कुमुदा स्वस्तिका कर्णसादृशैः ॥ १७ ॥
पृष्ठभद्रे मुखभद्रं रम्या नाम तथोच्यते ।
पक्षभद्रे मुखभद्रं माहेन्द्री सर्वकामदा ॥ १८ ॥
पृष्ठभद्रे प्रतिभद्रं नाम्ना पर्यन्तकी मता ।
द्वितीयतलच्छन्देषु वलभीसप्तकं तथा ॥ १९ ॥

इति त्रिभूमिकाः सप्त ॥

अष्टभागश्च विस्तार आयामो दशभागिकः ।
द्विभागो भित्तिविस्तारः शेषं गर्भगृहं भवेत् ॥ २० ॥
द्विभागः कर्णविस्तार उदकान्तरभूषितः ।
त्रिभागं भद्रमित्युक्तं भद्रार्धे प्ररथो भवेत् ॥ २१ ॥
भागार्धे निर्गमं कुर्याद् रथे प्रतिरथेऽथवा ।
त्रिभागं कुक्षिभद्रं च भागार्धे पक्षकर्णिका ॥ २२ ॥
गर्भतुल्योच्छ्रिता वेदी पञ्चभूमा हिता तथा ।
रथोपरथकर्णे तु कूटैश्च विविधैः क्रमात् ॥ २३ ॥
वेद्यूर्ध्वे वलभी चैव ह्यालेख्या वामदक्षिणे ।
अशोका नाम विख्याता संसारशोकत्रासिनी ॥ २४ ॥
वार्यन्तरं प्रतिरथे चम्पका सर्वकामदा ।
भद्रोदकैर्वसन्ता स्यात् कर्णे मकरकेतकी ॥ २५ ॥
पुनः कार्यं प्रतिरथे गान्धारी सर्वकामदा ।
भद्रे भद्रे प्रतिभद्रं सर्वतो भद्रिका भवेत् ॥ २६ ॥

इति पञ्चभूमाः षट् ॥

दशभागश्च विस्तार आयामश्च द्विसप्तकम् ।
द्विभागा च भवेद् भित्तिः शेषं गर्भगृहं भवेत् ॥ २७ ॥
द्विभागः कर्णविस्तारः सार्धः प्रतिरथो भवेत् ।
द्वितीयस्तेन मानेन भद्रं वेदांशविस्तरम् ॥ २८ ॥
त्रिभागो भद्रविस्तारो भागार्धे पक्षकर्णिका ।
कुक्षिभद्रं त्रिभिर्भागैस्तदर्धः प्ररथो भवेत् ॥ २९ ॥
गर्भतुल्योर्ध्ववेदी च भूमिकाः सप्त चोच्छ्रिताः ।
वराटैर्द्राविडैः कूटैर्नागैश्च विशेषतः ॥ ३० ॥

वर्धमानी तदा नाम वन्दिता त्रिदशैरपि ।
भद्रोदकैः श्रीशैलजा नन्द्यावर्ती कर्णोदकैः ॥ ३१ ॥
वार्यन्तरं प्रतिरथे महाकान्तिश्च कामदा ।
मेरुकूटाभिधानं च कर्णे कुर्याच्च भद्रकम् ॥ ३२ ॥
त्रैलोक्यतिलका ख्याता भद्रे चैत् प्रतिभद्रकम् ।

इतिसप्तभूमाः ॥

श्रीसंज्ञकाश्च प्रासादा वलभ्यः पञ्चविंशतिः ॥ ३३ ॥
वराटे कूटोदयत ऊर्ध्वमानं विभज्यते ।
एषां युक्त्या विधातव्याः प्रासादाः सर्वकामदाः ॥ ३४ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां श्रीसंज्ञकवलभीप्रासादाधिकारो नाम षट्सप्तत्युत्तरशततमं सूत्रम् ॥

## (१७७) सिंहावलोकनप्रासादनिर्णयो नाम सप्तसप्तत्युत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

प्रासादान् सम्प्रवक्ष्यामि जात्या सिंहावलोकनान् ।
छाद्योद्गमेषु घण्टाभिः सिंहकर्णैरनेकधा ॥ १ ॥
पुष्पको भद्रपद्माख्यो नन्दश्च नन्द्यावर्तकः ।
सर्वतोभद्रसिंहौ च मन्दरः पुष्पभद्रकः ॥ २ ॥
कैलासश्च जयः कान्तो मनोहश्चारुवर्धनः ।
सम्भवो रत्नकूटश्च तारागणसुलोचनौ ॥ ३ ॥
हिमवान् हेमकूटश्च पृथ्वीजयसुमिश्रकौ ।
ऐरावतो हंसपक्षः पक्षिराट् पुष्पकोदयः ॥ ४ ॥
दारुकर्मापराजिताश्च दारुजाः पञ्चविंशतिः ।
द्वारच्छाद्यलूमपातघण्टाद्यैः सिंहकर्णकैः ॥ ५ ॥
चतुरश्रीकृते क्षेत्रे चाष्टधा प्रतिभाजिते ।
भागो भागा भ्रमो भित्तिस्तथा स्युर्मध्यभित्तयः ॥ ६ ॥
शेषं गर्भगृहं कुर्याद् विस्तारसममुच्छ्रितम् ।
मध्यगर्भे भित्तिसूत्रे भ्रमन्तीस्तम्भमोक्षयोः ॥ ७ ॥
सूत्रमानायतं कुर्यान्मण्डपं समसूत्रकैः ।
एकं द्वारं त्रीणि वाऽपि भद्रे चन्द्रावलोकनम् ॥ ८ ॥
तत्र छाद्यत्रयं कार्यं चत्वारः सिंहकर्णकाः ।
ऊर्ध्वघण्टा तथैकैव पुष्पकः सर्वकामदः ॥ ९ ॥
द्विभागः कर्णविस्तारो भद्रं भागचतुष्टयम् ।
निर्गतं चैकभागेन सर्वभद्रेष्वयं विधिः ॥ १० ॥
अष्टैव सिंहकर्णाश्च प्रतिकर्णाष्टकं तथा ।
भद्रको नाम विख्यातः सर्वदा भद्रकारकः ॥ ११ ॥
भद्रं तु कर्णिकायुक्तं चतुर्भिः सिंहकर्णकैः ।
पद्मकस्तु समाख्यातः कर्तव्यः सर्वदैवते ॥ १२ ॥
निर्गमो भद्रभागश्च सीमामानेन विस्तरः ।
नन्दनः स समाख्यातो नन्द्यावर्तः प्रभद्रके ॥ १३ ॥

इति पुष्पकाद्याः पञ्च ॥

विभक्ते दशधा छन्दे द्विभागः कर्णविस्तरः ।
त्रिभागं च भवेद् भद्रं भद्रार्धे प्ररथस्तथा ॥ १४ ॥
भागो भागा भ्रमो भित्तिः शेषं गर्भगृहं मतम् ।
मण्डपं पूर्वमाख्यातं स्तम्भानां गर्भसूत्रतः ॥ १५ ॥

सिंहकर्णास्ततश्चाऽग्रे प्रतिकर्णाश्च षोडश ।
पञ्चघण्टासमायुक्तं सर्वतोभद्रलक्षणम् ॥ १६ ॥

मत्तच्छाद्यं स्यातमूर्ध्वे सिंह नाम स उच्यते ।
मन्द्रो नवघण्टाढ्यः पुष्पभद्रः प्रभद्रके ॥ १७ ॥

इति सर्वतोभद्रचतुष्टयम् ॥

भक्ते द्वादशधा छन्दे द्विभागो भद्रविस्तरः ।
कर्णतुल्यः प्रतिरथः शेषं युञ्जीत पूर्ववत् ॥ १८ ॥

भद्रं वेदांशविस्तारं भद्रे चन्द्रावलोकनम् ।
त्रिच्छाद्यं मत्तच्छाद्योर्ध्वे कैलासो नवघण्टकः ॥ १९ ॥

भद्रे दद्यात् प्रतिभद्रं सिंहकर्णाश्च षोडश ।
जयन्तो नाम विख्यातः कान्तः स्यात् प्रतिभद्रके ॥ २० ॥

इति कैलासादित्रयम् ॥

चतुर्दशविभक्ते च द्विभागा बाह्यभित्तयः ।
विधेयं पूर्ववच्छेषं षडंशो भद्रविस्तरः ॥ २१ ॥

मत्तच्छाद्ये पञ्चछाद्यं शान्तिदः स्यान्मनोहरः ।
चारुवर्धनः प्रभद्रे सम्भवः पक्षकर्णिकः ॥ २२ ॥

प्रत्थान्ते यदा कर्णा रत्नकूटः स नामतः ।
तारागणो द्विघण्टः स्याद् द्विकर्णश्च सुलोचनः ॥ २३ ॥

इतिमनोहराद्याः षट् ॥

भक्ते षोडशधा छन्दे द्विद्वयंशा भ्रमभित्तयः ।
शेषं गर्भं प्रकुर्वीत पूर्वमानप्रकल्पितम् ॥ २४ ॥

मालयच्छाद्ये रामच्छाद्यं घण्टाः सप्तदशैव च ।
हिमवांश्च तदा नाम पूज्यः सुरवरोरगैः ॥ २५ ॥

सिंहकर्णद्विकं कुर्यात् हेमकूटः स उच्यते ।
भद्रं च कर्णिकायुक्तं कामदः पृथिवीजयः ॥ २६ ॥

मिश्रकोऽभ्यन्तरे कर्णा भद्रे ऐरावतस्तथा ।
भद्रार्धे चैव निष्कासो हंसपक्षस्तु नामतः ॥ २७ ॥

द्विनिर्गमः पक्षिराजः कर्तव्यः सर्वकामदः ।
दारुच्छन्देषु चेत्युक्ताः पुष्पाद्याः पञ्चविंशतिः ॥ २८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां सिंहावलोकनप्रासादनिर्णयाधिकारो नाम सप्तसप्तत्युत्तरशततमं सूत्रम् ॥

## (१७८) नपुंसक प्रासादलक्षणात्मकमष्टसप्तत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच-

संक्षेपे फांसनाकाराः प्रासादा ये भवन्ति च ।
तेषां नामानुक्रमं च कथयामि समासतः ॥ १ ॥
सुविशालं भद्रशान्ते श्रीजयं च जयावहम् ।
श्रीवत्सं हंसतिलकं गरुडं चारुवर्धनम् ॥ २ ॥
शङ्खनाभं सुनाभं च जयन्तं गन्धमादनम् ।
निषेधं शेखरं सौम्यं मन्दरं वै कैलासकम् ॥ ३ ॥
पृथ्वीजयं श्रीजयं च कैरातं रत्नसंभवम् ।
वृषभं मेरुकूटं च पञ्चविंशतिरेव च ॥ ४ ॥
रुचकः पूर्ववद् ज्ञेयः शिखरं फांसनाकृति ।
त्रिभूमं चोर्ध्वघण्टाच सुविशालं तु नामतः ॥ ५ ॥
चतुर्भूमं भद्रनामा शान्तं स्यात्पञ्चभूमिकम् ।
षड्भूमं श्रीजयं नाम सप्तभूमं जयावहम् ॥ ६ ॥
पञ्चभद्रं तस्य कार्यं त्रिभूमोर्ध्वोरुघण्टिका ।
पञ्चभूमं च कर्तव्यं श्रीवत्सं नाम शोभनम् ॥ ७ ॥
षड्भूमं हंसतिलकं गरुडं सप्तभूमिकम् ।
सुवर्धनं चाष्टभूमं कर्तव्यं सर्वकामदम् ॥ ८ ॥
शङ्खावर्तं शङ्खाभं सुनाभं वृत्तकं मतम् ।
जयन्तं च तथाऽष्टास्रं स्वस्तिकं गन्धमादनम् ॥ ९ ॥
निषधं पद्मदलवच्छेखरं नवभूमिकम् ।
सौम्यं तु दशभूमं स्यान्मन्दरं रुद्रभूमिकम् ॥ १० ॥
द्वादश प्ररथा भद्रे भद्रे द्विद्वयुरुघण्टिकाः ।
नवभूमिकसम्युक्तं कैलासं सर्वकामदम् ॥ ११ ॥
पृथ्वीजयं दशभूमं श्रीजयं रुद्रभूमिकम् ।
सूर्यभूमं च कैरातं विश्वभू रत्नसंभवम् ॥ १२ ॥
वृषभाख्यं शक्रभूमं तिथिभू मेरुकूटकम् ।
इति मानसमुद्दिष्टाः प्रासादाः फांसनोपमाः ॥ १३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां नपुंसकप्रासादलक्षणाधिकारो नामाष्टसप्तत्युत्तरशततमं सूत्रम् ॥

## (१७९) विमानादि चतुःषष्टिप्रासादलक्षणात्मकमेकोनाशीत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

विमानः सर्वतोभद्रो गजपृष्ठश्च पद्मकः ।
वृषभो मुक्तकोणश्च नलिनीकश्च द्राविडः ॥ १ ॥

अष्टौ श्रेष्ठाश्च सर्वे वै प्रासादाः सर्वकामदाः ।
त्रिपुरान्तक एव स्युर्नान्येषु तु कदाचन ॥ २ ॥

गरुडो वर्धमानश्च शङ्खावर्तश्च पुष्पकः ।
गृहराजः स्वस्तिकश्च रुचकः पुण्यवर्धनः ॥ ३ ॥

अष्टौ प्रोक्ताः सर्वदेवः प्रासादाः सर्वकामदाः ।
विष्णुदेवस्य शस्ताश्च कर्तव्याः शान्तिमिच्छता ॥ ४ ॥

मेरुमन्दरकैलासा हंसो वै भद्र एव च ।
उत्तुङ्गो मिश्रकश्चैव तथा मालाधरोऽष्टमः ॥ ५ ॥

इत्यष्टौ ब्रह्मणश्चैव प्रासादाः पुरमध्यगाः ।
स्थापयेद् ब्रह्मकेन्द्रेषु चत्वारो वरुणसंयुतैः ॥ ६ ॥

गवयश्चित्रकूटश्च किरणः सर्वसुन्दरः ।
श्रीवत्सः पद्मनाभश्च वैराजो वृत्त एव च ॥ ७ ॥

सूर्यलोकोद्भवाश्चाष्टौ सृष्टाश्च त्रिदशैरिमे ।
इत्यष्टौ च प्रकर्तव्या रवेः पूर्वापराङ्मुखाः ॥ ८ ॥

नन्द्यावर्तश्च वलभिः सुवर्णः सिंह एव च ।
विचित्रो योगपीठश्च घण्टानादपताकिनौ ॥ ९ ॥

शक्त्यावतारसम्भूता देवीनां च प्रशंसिताः ।
इत्यष्टौ च प्रकर्तव्याः प्रासादाः शुभलक्षणाः ॥ १० ॥

गुहाधारः शलाकश्च वेणुभद्रश्च कुञ्जरः ।
हर्षश्च विजयश्चैव उदकुम्भश्च मोदकः ॥ ११ ॥

अष्टौ सर्वे विघ्नहराः सर्वे शान्तिप्रदायकाः ।
गणनाथस्य कर्तव्याः सर्वदोषः प्रशाम्यति ॥ १२ ॥

हर्म्यश्चैव महापद्मोज्जयन्तौ गन्धमादनः ।
शतशृङ्गो निरावेद्यो विभ्रान्तश्च मनोहरः ॥ १३ ॥

तिर्थङ्करोद्भवाः सर्वे सर्वशान्तिप्रदायकाः ।
जिनेन्द्रस्य प्रकर्तव्याः पुरमध्येषु शान्तिदाः ॥ १४ ॥

वृत्तो वृत्तायतश्चैत्यः किङ्किणी लयनस्तथा ।
पट्टिशो विभवश्चैव तथा तारागणो मतः ॥ १५ ॥
प्रयुक्ताः सर्वदेवेषु प्रासादाः शाश्वताः शुभाः ।
एवमेव चतुःषष्टिः ख्याताः प्रासादकाभिधाः ॥ १६ ॥
इति चतुःषष्टिप्रासादाः ॥

नामानि कथितान्येवं लक्षणं शृणु साम्प्रतम् ।
विभक्तिभागसङ्ख्याश्च तलच्छन्दोर्ध्वमानतः ॥ १७ ॥
दशधा भाजिते क्षेत्रे द्विभागः कर्णविस्तरः ।
पञ्चभागं भवेद् भद्रमर्धभागा तु कर्णिका ॥ १८ ॥
कर्णे शृङ्गाणि कार्याणि भूमिजानामनुक्रमैः ।
घण्टाकलशसम्युक्तो विमानः पञ्चभूमिकः ॥ १९ ॥
भद्रे चैवोद्गमाः पञ्च कर्णे शृङ्गाणि चाष्ट हि ।
नागरच्छन्दजः कार्यः सर्वभद्रो नवाण्डकः ॥ २० ॥
तस्यापि भद्रजं शृङ्गं गजपृष्ठस्तु कामदः ।
द्व्यष्टकर्णः पञ्चभूमो विमानभद्रः पद्मकः ॥ २१ ॥
केशरी पूर्ववज्ज्ञेयः कर्णे तिलकशृङ्गकैः ।
विमानजं च शिखरं वृषभः सर्वकामदः ॥ २२ ॥
सर्वभद्रे कर्णभद्रं नष्टाङ्गं मूलनासिकम् ।
मुक्तकोणः स विज्ञेयः सर्वकामफलप्रदः ॥ २३ ॥
गजपृष्ठेद्व्युरुशृङ्गं कर्तव्यं सर्वकामदम् ।
नलिनीकः स विज्ञेयः कर्तव्यस्त्रिपुरान्तके ॥ २४ ॥
मल्लतलं भूमिजवद् द्राविडकर्मचर्चितः ।
द्राविडस्तु तदा नाम कर्तव्यस्तु महेश्वरे ॥ २५ ॥
इति शिवप्रासादाष्टकम् ॥

वर्धमानस्य संस्थाने पक्षे कुर्यात्तदूर्ध्वतः ।
कूटावृतं च शिखरं पक्षिराजो गृहं श्रियः ॥ २६ ॥
याम्योत्तरे विना पक्षं स भवेद्वर्धमानकः ।
शङ्खनाभिसमाकारः शङ्खावर्तस्तु सूचितः ॥ २७ ॥
श्रीवत्सभद्रकर्णेषु कुर्यात्तिलकशृङ्गकम् ।
प्रथमः स्याल्लतिनजः पुष्पकः सर्वकामदः ॥ २८ ॥
लताख्यसर्वतोभद्रं तादृक् शृङ्गे गृहेश्वरः ।
अष्टभद्रश्चाष्टकोणः स्वस्तिकः पञ्चभूमिकः ॥ २९ ॥
चतुरश्रं विना भद्रे रुचकः शिखरे तथा ।
अष्टभद्रो द्व्यष्टकोणोऽश्वभूमः पुण्यवर्धनः ॥ ३० ॥
इति विष्णुप्रासादाष्टकम् ॥

केशरिभद्रे त्रिशृङ्गं कर्णे कुर्याच्च मन्दरम् ।
नवभूम्युच्छ्रिता रेखा मेरुर्वै ब्रह्मणो मतः ॥ ३१ ॥
भद्रे कर्णे द्वि द्वि शृङ्गमेकैकं प्रत्थे तथा ।
मन्दरः स समाख्यातः पञ्चविंशतिकुम्भकः ॥ ३२ ॥
नन्दिशालकर्णशृङ्गं कर्तव्यं च नवाण्डकम् ।
कैलासश्च तदा नाम कर्तव्यः पुरमध्यगः ॥ ३३ ॥
द्वयं भद्रं च रुचके हंसः कर्णोदकान्तरैः ।
तत्प्राग्ग्रीवाश्च कर्तव्याः स भवेद् भद्रसंज्ञकः ॥ ३४ ॥
तस्य भद्रोद्गमाः पञ्च भवेदुत्तुङ्गसंज्ञकः ।
एकं शृङ्गं भद्रशृङ्गे विदुस्तं मिश्रकाभिधम् ॥ ३५ ॥
वृत्तं मालाधरं कुर्याद् वलभ्याकृतिशृङ्गकम् ।
घण्टा घटयुताः सर्वे कर्तव्याः सर्वकामदाः ॥ ३६ ॥

इति ब्रह्मप्रासादाष्टकम् ॥

विभक्ते चाऽष्टधा छन्दे पञ्चाण्डं कर्णशृङ्गकम् ।
पञ्चोद्गमयुतं भद्रं गवयो नाम नामतः ॥ ३७ ॥
कर्णोर्ध्वे तिलकं दद्याच्चित्रकूटस्स संज्ञितः ।
पञ्चभूमौ विना भद्रैः किरणः सूर्यकर्णतः ॥ ३८ ॥
प्राग्ग्रीवाश्चैव भद्रेषु भवेत्सर्वाङ्गसुन्दरः ।
वर्धमाने तु प्राग्ग्रीवाः श्रीवत्स उदकान्तरैः ॥ ३९ ॥
त्र्यण्डकर्णा विनाभद्रं पद्मनाभोऽब्जपत्रवत् ।
रुचके तु चतुर्द्वारं स वैराज्याभिधानकः ॥ ४० ॥
वृत्तो वृत्तश्च कर्तव्यः शिखरं वलिकाकृति ।
इत्यष्टौ च प्रकर्तव्याः प्रासादाः सूर्यलोकजाः ॥ ४१ ॥

इति सूर्यप्रासादाष्टकम् ॥

सीमाभद्रं रुचकस्य पदपादेन निर्गतम् ।
नन्द्यावर्तस्तदानाम शिखरं कक्षकर्णके ॥ ४२ ॥
तद्वच्चैवाऽऽयतं कुर्याद् वलभी गजपृष्ठवत् ।
सुवर्णः सर्वतोभद्रे तद्रूपैः कर्णशृङ्गकैः ॥ ४३ ॥
केशरी च भवेत्पूर्वं सिंहः कर्णे तु कूटके ।
कूटोर्ध्वे तिलकं दद्याद्विचित्र इति संज्ञितः ॥ ४४ ॥
भद्रशृङ्गाणि भद्रेऽब्धि-प्राग्ग्रीवैर्योगपीठकः ।
वराटयुक् सर्वभद्रो घण्टानादश्चतुर्मुखः ॥ ४५ ॥
केशरी च भवेत्पूर्वं कर्णे कूटानि कारयेत् ।
पञ्चकूटभवा रेखाऽष्टमो भद्ररथोद्गमैः ॥ ४६ ॥

इति देवीप्रासादाष्टकम ॥

विभक्ते दशधा क्षेत्रे कारयेच्च लताख्यजम् ।
तस्य द्वितीयोरुशृङ्गं गुहाधारः स उच्यते ॥ ४७ ॥

भद्रके कर्णजा रेखा भद्रोद्गमविभूषिता ।
शलाको नाम विज्ञेयो वेणुको रुचकोद्गमैः ॥ ४८ ॥

द्राविडे त्वेकभूमिश्चेत् कुञ्जरः सर्वकामदः ।
त्रिभूमो द्राविडरुचयङ्गो भवेद्धर्षाभिधानकः ॥ ४९ ॥

लतिने वर्धमानश्चेद् विजयो भद्रकोद्गमैः ।
अष्टभद्रं विना कर्णैरुद्रकुम्भः स कामदः ॥ ५० ॥

मोदकश्चैत्यकाकारः शिखरं वलिकोऽन्यतः ।

इति गणपतिप्रासादाष्टकम् ॥

त्र्यष्टकर्णा विनाभद्रैः स महापद्मसंज्ञकः ॥ ५१ ॥

द्विभूमिकगृहाकारः कूटे घण्टा तृतीयका ।
विख्यातो हर्म्यनाम्नोऽज्जयन्तः प्रत्यलिन्दकैः ॥ ५२ ॥

चत्वारो मण्डपास्तस्य स भवेद् गन्धमादनः ।
सप्ताङ्गो भूमिजः पञ्चभूमः स्याच्छतशृङ्गकः ॥ ५३ ॥
निरावेद्यस्तु प्राग्ग्रीवैर्विभ्रान्तश्च चतुर्मुखः ।
एकैकमुरुशृङ्गं च कामदः स मनोहरः ॥ ५४ ॥

इति जिनेन्द्रप्रासादाष्टकम् ॥

वृत्तो वृत्तायतश्चैव चैत्यो वै वेद्यलङ्कृतः ।
सुभद्रो भद्रशृङ्गेषु किङ्किणी नाम प्रोच्यते ॥ ५५ ॥

भद्रोद्गमैश्च लयनः पट्टिशृङ्खाद्यवरण्डिकः ।
त्र्यलिन्दकश्च विभवः पट्टिघाटैस्तारागणः ॥ ५६ ॥

चतुःषष्टिश्च कथिताः प्रासादाः सर्वकामदाः ।
पूजिताः सर्वदेवेशेषु सर्वदेवसुखावहाः ॥ ५७ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां-विमानादिचतुःषष्टिप्रासादलक्षणाधिकारो नामैकोनाशीत्युत्तरशततमं सूत्रम् ॥

# (१८०) विमाननागरच्छन्दजनवमेरुनामाशीत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

नवमेरूंस्तथा प्रोक्तान् कथये तव साम्प्रतम् ।
एकैकस्य यथा नाम लक्षणं यस्य यादृशम् ॥ १ ॥
श्रीमेरुः प्रथमो नाम द्वितीयो हेमशीर्षकः ।
सुरवल्लभस्तृतीय स्तुर्यो भुवनमण्डनः ॥ २ ॥
पञ्चमो रत्नशीर्षाख्यः षष्ठो वै किरणोद्भवः ।
सप्तमो कमलहंसः सुवर्णकेतुरष्टमः ॥ ३ ॥
नवमो मेरुराख्यातो नाम्ना तु वृषभध्वजः ।
इत्युक्तश्च महामेरुस्त्रिधोदितक्रमागतः ॥ ४ ॥
भवेत्रिरथिकश्चाऽऽद्यो यावन्नवरथान्तकम् ।
पञ्चसप्तरथाश्चोक्ता अङ्गमित्यभिधीयते ॥ ५ ॥
पञ्चादिहस्ततो मेरुः पञ्चाशद्धस्तकावधि ।
हस्तान्तरे ततो भेदा भूतवेदाश्च सङ्ख्यया ॥ ६ ॥
विना भ्रमैः सभ्रमाश्च महामेरुर्भ्रमद्वयम् ।
इत्युक्तसमलङ्कारः प्रयुक्ता वास्तुवेदिभिः ॥ ७ ॥
श्रीमेरुनामा प्रोक्तोऽसावेकोत्तरशताण्डकः ।
सपादशताण्डको यो हेमशीर्षः स उच्यते ॥ ८ ॥
सुरवल्लभनामा स यस्सार्धद्विशताण्डकः ।
पञ्चसप्तत्युत्तरत्रिशताण्डो लोकमण्डनः ॥ ९ ॥
रत्नशीर्षस्तथा चैकोत्तरपञ्चशताण्डकः ।
सपादषट्शताण्डको मेरुर्वै किरणोद्भवः ॥ १० ॥
सार्धसप्तशताण्डैश्च स्मृतः कमलहंसकः ।
स्वर्णकेत्वभिधानश्च पादोनाङ्कशताण्डकैः ॥ ११ ॥
एकोत्तरसहस्राण्डो मेरुश्च वृषभध्वजः ।
अण्डसङ्ख्याभिधानं च कथितं त्वपराजित ॥ १२ ॥
पञ्चादिहस्ततो मेरुः पञ्चाशद्धस्तकावधि ।
हस्तान्तरे भेदकाः षट्चत्वारिंशच्च सङ्ख्यया ॥ १३ ॥
अण्डविंशतिवृद्ध्या च हस्तभेदा इति स्मृताः ।
षट्चत्वारिंशत्क एको भेद उक्तश्च शाश्वतः ॥ १४ ॥
चतुरश्रीकृते क्षेत्रे अष्टाष्टकविभाजिते ।
भागो भागा भ्रमो भित्तिर्द्विभागो गर्भ उच्यते ॥ १५ ॥

द्विभागो भित्तिविस्तारः शेषं गर्भो भ्रमं विना ।
विना भ्रमं सभ्रमं वा दूषयेन्नहि मेरुकम् ॥ १६ ॥
क्षेत्रार्धे च भवेद् भद्रं भद्रार्धे कर्णविस्तरः ।
कर्णकार्धप्रमाणेन कर्तव्यो भद्रनिर्गमः ॥ १७ ॥
भद्रं गवाक्षकोपेतं मध्ये कुर्याच्च सम्मुखम् ।
याम्योत्तरे शुकाग्रे तु जङ्घायामस्त्रयोदश ॥ १८ ॥
पीठोपपीठजङ्घाश्च मेखलाकूटच्छाद्यकम् ।
पुनर्जङ्घोद्गमश्छाद्यं प्रहरान्ते सप्तोन्नतम् ॥ १९ ॥
राजसेनवेद्यासनस्तम्भोच्छालच्छाद्यान्तकैः ।
षड्भागमुन्नतं कूटं घण्टा कूटैरलङ्कृता ॥ २० ॥

चत्वारो नन्दनाः कर्णे विमानमुरुशृङ्गकम् ।
सार्धत्रिभागिकं कुर्यात्तदूर्ध्वे तु विनिर्गतम् ॥ २१ ॥
षडंशं मूलशिखरं विमानं पञ्चभूमिकम् ।
रथिकोद्गमशोभाढ्यं शुकनासाग्रभूषितम् ॥ २२ ॥
कण्ठो ग्रीवा कुड्मलं च पद्मच्छत्रोपच्छत्रकम् ।
तदूर्ध्वे कलशं स्थाप्यं क्षीरार्णवसमुद्भवम् ॥ २३ ॥

इतिमेर्वभिधानो नामैकोत्तरशताण्डको मेरुः ॥

चतुरश्रीकृते क्षेत्रे शतमूलविभाजिते ।
द्विभागः कर्ण इत्युक्तः सार्धः प्रतिरथो भवेत् ॥ २४ ॥
त्रिभागो भद्रविस्तारो मत्तालम्बैर्विभूषितः ।
उक्ताः प्रतिरथाः सूर्या उरुशृङ्गं विमानकम् ॥ २५ ॥
विमानं मूलशिखरं घण्टाकलशभूषितम् ।
शुकाग्रकसमायुक्तं शेषं पूर्वप्रकल्पितम् ॥ २६ ॥
विना भ्रमं सभ्रमो वा शाश्वतो हेमशीर्षकः ।
हेमकूटपुरे यान्ति यावच्चन्द्रार्कतारकम् ॥ २७ ॥

इति हेमशीर्षाभिधानो नाम सपादशताण्डको मेरुः ॥

भक्ते द्वादशधा क्षेत्रे द्विभागः कर्णविस्तरः ।
पार्श्वकर्णौ भवेद् भागा सार्धः प्रतिरथो भवेत् ॥ २८ ॥
कर्णौ प्रोक्ता चार्धभागा द्विभागो भद्रविस्तरः ।
चत्वारो नन्दनाः कर्णे दशांशैर्नागरोद्भवाः ॥ २९ ॥
तदूर्ध्वे सार्धभागैश्च द्वितीये केशरी क्रमे ।
शिखरं वै मलुतलं प्रत्यङ्गं कुमुदोद्भवम् ॥ ३० ॥
उरुशृङ्गं च कुमुदं विमानः स्याद् द्वितीयकः ।
एवं लक्षणकं कुर्यान्मेरुं च सुरवल्लभम् ॥ ३१ ॥

वल्लभः सर्वदेवानां स्वर्गे वा भूमिशासनम् ।
ईप्सितं लभते राज्यं स्वर्गे वा क्षितिमध्यतः ॥ ३२ ॥

इति सुरवल्लभाभिधानो नाम सार्धद्विशताण्डको मेरुः ॥

चतुर्दशविभक्ते च द्विभागः कर्णविस्तरः ।
नन्दनस्तत्र कर्तव्य ऊर्ध्वे स्यात्सर्वभद्रकः ॥ ३३ ॥

मल्लतले च शिखरं घण्टाकलशभूषितम् ।
भागा च पार्श्वकर्णी स्यात् श्रीवत्सश्च ततो भवेत् ॥ ३४ ॥

कर्णतुल्यः प्रतिरथः सर्वतोभद्रभूषितः ।
तदूर्ध्वे तिलकं स्थाप्यमुरुशृङ्गं मल्लतलम् ॥ ३५ ॥

कर्णिका चैकपादा तु श्रीवत्सस्तत्र भूषितः ।
कुमुदाख्यं चोरुशृङ्गं तद्वत् प्रत्यङ्गकं तथा ॥ ३६ ॥

भद्रे कर्णे च श्रीवत्सः कुमुदं चोरुशृङ्गकम् ।
विना भ्रमं सभ्रमो वा कार्यो भुवनमंडनः ॥ ३७ ॥

रत्नकूटे महाशैले राज्यं यावच्च मेदिनी ।
चन्द्रार्कतारकं यावद् यावद्देवो महेश्वरः ॥ ३८ ॥

इति भुवनमण्डनाभिधानो नाम पञ्चसप्तत्यधिकत्रिशताण्डको मेरुः ॥

द्वात्रिंशद्भाजिते क्षेत्रे पञ्चांशः कर्णविस्तरः ।
पार्श्वकर्णी भवेद् भागा वेदांशः प्ररथस्तथा ॥ ३९ ॥

द्विभागा च पुनः कर्णी भद्रं चाष्टांशविस्तरम् ।
कर्णे च मन्दरं कुर्याच्छिखरं कौमुदं तथा ॥ ४० ॥

सर्वतोभद्र ऊर्ध्वे तु मल्ले शिखरमुत्तमम् ।
द्वाविंशत्यंशविस्तारं घण्टाकलशभूषितम् ॥ ४१ ॥

पार्श्वकर्णा केशरिणः प्रत्यङ्गं च विमानजम् ।
प्ररथे सर्वतोभद्रमूर्ध्वे तद्रूपकं भवेत् ॥ ४२ ॥

मल्लतले चोरुशृङ्गं तद्वत् प्रत्यङ्गकर्णिका ।
मत्तालम्बोऽग्रभद्रेषु चोरुशृङ्गं तु कौमुदम् ॥ ४३ ॥

सभ्रमं च ततः कुर्याद् रेखामर्मवितर्कितम् ।
नवखण्डधरामध्ये तद्राज्यं जन्मजन्मनि ॥ ४४ ॥

इति रत्नशीर्षाभिधानो नामैकोत्तरपञ्चशताण्डको मेरुः ॥

छन्देऽष्टादशधा भक्ते त्रिभागः कर्णविस्तरः ।
पार्श्वकर्णी भवेद् भागा द्विभागः प्ररथस्तथा ॥ ४५ ॥

पुनः कर्णी भवेद् भागा वेदांशो भद्रविस्तरः ।
श्रीवृक्षो ( वत्सो ) मूलकर्णे तु तच्छृङ्गं च विमानजम् ॥ ४६ ॥

मन्दरश्च तदूर्ध्वे तु द्विभागः कर्णविस्तरः ।
द्वादशांशा मूलरेखा मल्लतले च शृङ्गकम् ॥ ४७ ॥

द्वौ मन्दरौ प्रतिरथे चाधऊर्ध्वे तु संस्थितौ ।
तदूर्ध्वतः प्रमाणेन चोरःशृङ्गं मल्लतलम् ॥ ४८ ॥
कर्णे च तिलकं कार्यं प्रत्यङ्गं च विमानजम् ।
तद्रूपा चाग्रकर्णा तु ह्युरुशृङ्गं तु कारयेत् ॥ ४९ ॥
उरःशृङ्गे च कुमुदो मत्तालम्बैर्भद्रोन्नतम् ।
एवमादिगुणोपेतं कुर्याद्वै शुभलक्षणम् ॥ ५० ॥
गत्वा तु सूर्यलोकं वै सूर्यतेजः समन्वितः ।
सूर्या यावच्च विख्यातस्तावत्तिष्ठत्यसौ नरः ॥ ५१ ॥
इति किरणोद्भवाभिधानो नाम सपादपञ्चशताण्डको मेरुः ॥

क्षेत्रे विंशतिधा भक्ते त्रिभागः कर्णविस्तरः ।
पार्श्वकर्णा भवेद् भागा द्विभागः प्ररथो भवेत् ॥ ५२ ॥
तत्समो रथ आख्यातो भद्रं वेदांशविस्तरम् ।
कर्णे कैलास इत्युक्तस्तच्छृङ्गं च विमानजम् ॥ ५३ ॥
तदूर्ध्वे नन्दिशालश्च माल्यवान् शिखरे तथा ।
कर्णिका वै नन्दनजा प्रत्यङ्गं तु विमानजम् ॥ ५४ ॥
नन्दिशालः प्रतिरथे तद्रूपं तु तदूर्ध्वतः ।
मल्लतलोरुशिखरं कर्तव्यं शुभमिच्छता ॥ ५५ ॥
नन्दनो रथ ऊर्ध्वे तु ह्युरुशृङ्गं विमानजम् ।
पृथुत्वे चैव षड्भागः कुमुदो भद्रकारुहः ॥ ५६ ॥
स्थापितो ब्रह्मकेन्द्रेषु ब्रह्मा लोकपितामहः ।
स याति ब्रह्मलोके तु यावदाहूतसंप्लवम् ॥ ५७ ॥
इति कमलहंसाभिधानो नाम सार्धसप्तशताण्डको मेरुः ॥

द्वाविंशतिभक्तक्षेत्रे शतमूलगर्भो भवेत् ।
भागभागा भित्तयः स्युः शेषं चैवान्धकारिका ॥ ५८ ॥
कर्णे पृथुत्वं वेदांशं कैलासं विमानशिखरम् ? ।
तदर्धमूर्ध्वतः शस्तं नन्दनं सर्वकामदम् ॥ ५९ ॥
माल्यवन्तं च शिखरे संसारभयनाशनम् ।
तदूर्ध्वे केशरी पार्श्वे प्रत्यङ्गं च विमानजम् ॥ ६० ॥
सार्धत्रयं प्रतिरथः नन्दनं नन्दनात्परम् ।
अष्टभागैर्मल्लतलं कौमुदी चोरुमञ्जरी ॥ ६१ ॥
एकभागा कर्णिका चाऽऽवृतं केशरिणा युतम् ।
उरुःशृङ्गं विमानं च कर्तव्यं तु भद्राण्डकम् ॥ ६२ ॥
वेदांशो भद्रविस्तार उरुशृङ्गं च कौमुदम् ।
क्रमसूत्रे द्वाविंशतिर्लघुप्रत्यङ्गकानि च ॥ ६३ ॥

एवं तथा पञ्चसप्तत्यधिकाष्टशताण्डकः ।
मानमुक्तं च विधिना लभ्यते चेप्सितं फलम् ॥ ६४ ॥

इति सुवर्णकेत्वभिधानो नाम पञ्चसप्तत्यधिकाष्टशताण्डको मेरुः ॥

चतुरस्रीकृते क्षेत्रे चतुर्विंशति भाजिते ।
षड्भागश्च भवेद्गर्भो द्विद्व्यंशा भ्रमभित्तयः ॥ ६५ ॥
भ्रमणीद्वयकं कार्यं भित्तीनां च त्रयं तथा ।
अधस्ताद् भ्रममेकं तु त्रिभागा भ्रमभित्तयः ॥ ६६ ॥
वेदांशः कर्णविस्तारः पृथ्वीजयविमानकम् ।
ऊर्ध्वे त्रिभागं कुर्याद्वै नन्दिशालं तु कामदम् ॥ ६७ ॥
माल्यवन्तं च शिखरे द्व्यष्टभागैश्च विस्तरः ।
भागा कर्णा कुमुदजा प्रत्यङ्गं तु विमानजम् ॥ ६८ ॥
त्रिभिर्भागैः प्रतिरथं मन्दरं सर्वकामदम् ।
सार्धद्वयं नन्दिशालं तदूर्ध्वे लक्षणान्वितम् ॥ ६९ ॥
मल्यातलमुरःशृङ्गं कल्पयेद् गुणपूर्वकम् ।
कर्णा कुमुद आख्याता चोरुशृङ्गं विमानजम् ॥ ७० ॥
चतुर्भागं चैव भद्रं कुमुदा चोरुमञ्जरी ।
तदर्धं मुखभद्रं च श्रीवत्सा चोरुमञ्जरी ॥ ७१ ॥
एवमापूर्यते शृङ्गैरेकोत्तरसहस्रकैः ।
लभते शिवलोकं स यावदाहूतसंप्लवम् ॥ ७२ ॥

इति वृषभध्वजाभिधानो नामैकोत्तरसहस्राण्डको मेरुः ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
विमाननागरच्छन्दजनवमेर्वधिकारो नामाशीत्युत्तरशततमं सूत्रम् ॥

---

# (१८१) महामेरुप्रासादनिर्णयोनामैकाशीत्युत्तरशततमं सूत्रम्

विश्वकर्मोवाच—

चतुरश्रीकृते क्षेत्रे मेरौ सार्कशतांशके ।
अथापि भाजिते भागैः सनिर्गमतले समे ॥ १ ॥
कर्णान्ताद् गर्भपर्यन्तं विभागानां तु निश्चयः ।
षट्पञ्चाशद्विभागैश्च कथयिष्याम्यनुक्रमात् ॥ २ ॥
ग्रहा रामाः शरा रामा नन्दा रामाः शरा गुणः ।
पक्षौ च भुवनानीति सीमार्धे भक्तिभागतः ॥ ३ ॥
युगा दिशश्च ऋतवः कर्णे कर्ण्यामुपरथे ।
शृङ्गाणामिति सङ्ख्या च कथिताऽसावनुक्रमात् ॥ ४ ॥
क्रमोत्तरं ह्रस्वह्रस्वादुपर्युपरि च क्रमात् ।
अध उर्ध्वं योगतश्च स सोमतो ? क्रमागता ॥ ५ ॥
षड्विभागैर्मूलगर्भो भित्तिका चाऽष्टभागिका ।
दशभागं च भ्रमणमष्टांशा भित्तिका पुनः ॥ ६ ॥
नन्दरसे (रागे) न्द्रियपक्षा द्व्यष्टतो भद्रविस्तरः ।
भागभागं तु निष्कासो रथोपरथकानुगे ॥ ७ ॥
अर्धार्धे कर्णान्तभद्रं मध्यच्छन्दं प्रकीर्तितम् ।
वार्यन्तरं विना कार्यं कुम्भकादिच्छाद्यान्तकम् ॥ ८ ॥
तद्रूपाकारकोऽग्रे तु ततोऽधिकविनिर्गमः ।
फालयेद् भ्रममध्ये तु बाह्यच्छन्दपरिक्रमम् ॥ ९ ॥
चन्द्रावलोकनं भद्रे चत्वारिंशद्भिरुन्नतम् ।
षट्पञ्चाशत्समुत्सेधो मेरूणां प्रहरान्तके ॥ १० ॥
पीठोपरि च कर्तव्यो भद्रशालसमुच्चयः ।
राजसेनो वेदिका च स्तम्भोच्छालकशीर्षकम् ॥ ११ ॥
पट्टोर्ध्वे दण्डच्छाद्यं तदूर्ध्वे संवरणा भवेत् ।
पृथुत्वार्धेन निष्कासो भद्रेषु सकलेषु च ॥ १२ ॥
समस्तभक्तिपादेषु कर्तव्यो मेखलोदयः ।
पीठोपपीठजङ्घाश्च मेखलाकूटच्छाद्यकम् ॥ १३ ॥
पुनर्जङ्घोद्‌गमच्छाद्यं प्रहारान्तोऽर्धमुन्नतः ।
मण्डपा अग्रयुक्ताश्च कर्तव्यामूलसूत्रतः ॥ १४ ॥
पञ्चाशीत्यण्डकाः कार्याः कर्णशृङ्गेष्वैरावतः ।
कर्णे प्रतिरथे ताभ्यां समक्रमसमुद्भवः ॥ १५ ॥
एकादशोद्‌गमो मेरुस्तन्मानः शृङ्गकक्रमः ।
स विंशतिसहस्राण्डैः सूर्यसङ्ख्यैश्च शृङ्गकैः ॥ १६ ॥
कर्णिका शृङ्गमेकं तु सर्वतोभद्रके भवेत् ।
दशक्रमेण वै ताभ्यामण्डानां भवतिस्तथा ॥ १७ ॥

एकादशोद्गमो मेरुः कर्णिकानां तथाऽष्टकम् ।
कर्ण्यण्डकाश्च विंशत्युत्तरसप्तशतानि च ॥ १८ ॥
शृङ्गाण्यशीतिः कर्ण्यः षट् तथा चैकादशोद्गमैः ।
रथस्यानुक्रमं वक्ष्ये ह्यण्डकैः शृङ्गसङ्ख्यया ॥ १९ ॥
एकरथे चाण्डकास्तु सङ्ख्यया पञ्चविंशतिः ।
शृङ्गाणि स्युः षट् क्रमतस्तथा सार्धशताण्डकैः ॥ २० ॥
चतुरथे त्वेकादश कार्याः षट्क्रमतस्तथा ।
पञ्चविंशति, शृङ्गाणां संख्या वै षट्शताण्डकैः ॥ २१ ॥
भद्रे कर्णा केशरिणो नवक्रमत एव च ।
पञ्चचत्वारिंशदण्डः कर्तव्यः सर्वकामदः ॥ २२ ॥
भद्रसंवरणोर्ध्वे च दर्शनीया च कर्णिका ।
प्रकर्तव्याः केशरिणश्चाण्डकाः पञ्च भूषिताः ॥ २३ ॥
चत्वारस्त्रयो द्वावेक उभयभद्रे विंशतिः ।
कुर्याच्छताण्डकं चेत्थं मेरोरेकादशोद्गमः ॥ २४ ॥
एकादशोद्गमो मेरुः प्रत्यङ्गाष्टकमेव च ।
नवशृङ्गाणि वै भद्रे कार्याणि त्वपराजित ॥ २५ ॥
मूलरेखा-पृथुत्वं च द्वासप्तत्यंशकं भवेत् ।
शृङ्गं चतुस्त्रिंशदंशं तदर्धं च विनिर्गतम् ॥ २६ ॥
द्व्यष्ट द्वादश दशाष्ट षट् चत्वारो द्वयं तथा ।
एको भागास्तदग्रे स्यादुरःशृङ्गे ह्यनुक्रमः ॥ २७ ॥
अष्टभागं च प्रत्यङ्गं शेषं स्याद्— — क्रमम् ।
चतुर्विंशति-प्रत्यङ्गं षट्त्रिंशदुरुमञ्जरि ॥ २८ ॥
सर्वे चामलसारास्तु दिव्यकुम्भविभूषिताः ।
एवमेव प्रकर्तव्यं महामेरोश्च लक्षणम् ॥ २९ ॥
एकाधिकं प्रकर्तव्यं दशोत्तरसहस्रकम् ।
महामेर्वभिधानश्च कर्तव्यस्त्रिपुरान्तके ॥ ३० ॥
हरो हिरण्यगर्भश्च हरिर्दिनकरस्तथा ।
एते देवाः स्थिता मेरौ नाऽन्ये चैव कदाचन ॥ ३१ ॥
तत्सन्ताने यैः कृतोऽयं पूर्णमन्नं भवेत्सदा ।
मातृपक्षं पितृपक्षं तारयेन्नरकार्णवात् ॥ ३२ ॥
उत्पन्नश्च भवेत्स्वर्गे स्वेच्छया पृथिवीपतिः ।
महामेरुध्वजारोहे यावच्चन्द्रार्कमेदिनी ॥ ३३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृ श्रीभुवनदेवाचार्योक्तापराजितपृच्छायां महामेरुप्रासादनिर्णयाधिकारो नामैकाशीत्युत्तरशततमं सूत्रम् ॥

# (१८२) श्री चतुर्दशभुवनगिरिमेरुप्रासादलक्षणात्मकं द्व्यशीत्युत्तर-शततमं सूत्रम् ॥

विश्वकर्मोवाच—

शतार्धं च तदर्धं च षट्त्रिंशत्कं तथैव च ।
प्रत्येकं त्रिविधं ज्ञेयं ज्येष्ठमध्यकनिष्ठकम् ॥ १ ॥

त्रिज्येष्ठं च तथाख्यातं त्रिमध्यं त्रिकनिष्ठकम् ।
मेरोरियं हस्तसङ्ख्या विभागश्च ततः परम् ॥ २ ॥

श्रीचतुर्दशभुवनगिरिमेर्वभिधस्य च ।
षट्सप्ततिर्भागसङ्ख्या विभक्ता तु क्रमागता ॥ ३ ॥

आद्यः कर्णप्रतिरथरथयुग् बालपञ्जरः ।
सार्धस्तम्भैर्भूषिताश्च शाला वै वामदक्षिणे ॥ ४ ॥

रथप्ररथसंयुक्तास्तत्परे बालपञ्जराः ।
तत्कर्णा वै नवनवादिकाङ्कविकल्पनात् ॥ ५ ॥

वसुमुनिरसइषु वेदा विकारे सालया ? ।
पृथुत्वे च विधातव्यो विभागोऽयमतः परम् ॥ ६ ॥

गर्भः शुकः शुकोदरः शान्तः श्रीगर्भसुन्दरौ ।
प्रशस्तो वै सप्तगर्भाः प्रासादेषु समागताः ॥ ७ ॥

रथैः प्रतिरथैः कर्णैः पञ्जरादिक्रमत्रयम् ।
द्विकर्मोर्ध्वं ? स्तम्भे भद्रे स्तवङ्गरधिकोदरम् ॥ ८ ॥

कर्णे आदिक्रमैः कुर्यादधस्तात् त्रिशताण्डकैः ।
द्विशताण्डकैस्तदूर्ध्वे शताण्डश्च तदूर्ध्वतः ॥ ९ ॥

पञ्च संघाटजा रेखा भ्रमिका च समुच्छ्रिता ।
एकद्वित्रिशताण्डकाः कर्तव्याः सर्वकामदाः ॥ १० ॥

सभागश्च प्रतिरथः क्रमत्रयसमुच्छ्रितः ।
आदिक्रमैरुद्गमश्च एकद्वित्रिशताण्डकैः ॥ ११ ॥

पञ्चविंशत्यण्ड ऊर्ध्वे तिलकं च तदूर्ध्वतः ।
प्रत्यङ्गान्यष्टभागैश्च स्युर्द्वाविंशतिरण्डकाः ॥ १२ ॥

षड् लघुप्रत्यङ्गकानि तत्सङ्ख्यैरण्डकैस्तथा ।
षड्भागकश्चैव रथस्त्रिक्रमोर्ध्वसमुच्छ्रयः ॥ १३ ॥

आद्यः सार्धशताण्डश्चाऽपरो विंशतिकाधिकः ।
नवाशीत्यण्डस्तृतीयोऽष्टाविंशत्युरुमञ्जरी ॥ १४ ॥

त्रिसंघाटास्सप्तभूमा दश द्विद्विशताण्डकैः ।
पञ्जरः पञ्चभागैश्च क्रमत्रयसमुच्छ्रितः ॥ १५ ॥

एको द्विशताण्ड आद्यो द्वितीये पञ्चविंशतिः ।
पञ्चाण्डकास्तृतीये चाऽष्टादशांशोरुमञ्जरी ॥ १६ ॥

त्रिसंघाटाः पञ्चभूमास्त्रिचत्वारिंशदण्डकैः ।
त्रिनोदकान्तरं स्तम्भा वेदांशकमिताः स्मृताः ॥ १७ ॥

पञ्चविंशत्यण्डमाद्ये पञ्चाण्डाश्च तदूर्ध्वतः ।
भुवनांशं चोरुशृङ्गं विमानं पञ्चभूमिकम् ॥ १८ ॥

षोडशांशं भवेद् भद्रं दशांशैस्तु विमानकम् ।
सप्ताण्डकं तदग्रे तु कुर्यात्कुमुदजं तथा ॥ १९ ॥

मेरुरेकाधिकदशसहस्राण्डक ईरितः ।
एवं शृङ्गोद्भवः कार्यश्छन्दे विमाननागरे ॥ २० ॥

द्वाविंशतिर्मूलगर्भः षड्भागो भद्रविस्तरः ।
भ्रममेकं सूर्यभित्तीः सभ्रमं च प्रकल्पयेत् ॥ २१ ॥

विमाने भूमिजा घण्टा कर्तव्या सर्वकामदा ।
क्षीरार्णवसमुत्पन्नं कलशं तु ध्वजाग्रजम् ॥ २२ ॥

महामेरुध्वजारोहे पुण्यं शताश्वमेधध्वजम् ।
पूर्वापरान् विंशतिकान् तारयेन्नरकार्णवात् ॥ २३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां श्रीचतुर्दशभुवनगिरीमेरुप्रासादलक्षणाधिकारो नाम द्व्यशीत्युत्तरशततमं सूत्रम् ॥

## (१८३) मेरुप्रासादवर्णनिर्णयात्मकं त्र्यशीत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

चतुर्षु पूर्ववर्णेषु विप्रा वै सृष्टिमागताः ।
क्षत्रिया वैश्या अधःस्थाश्चतुर्वर्णा द्विजादयः ॥ १ ॥
विप्रक्षत्रियवैश्याश्च शूद्राश्चेति चतुष्टयम् ।
एकैकस्य क्रमयुक्तौ कथये तव साम्प्रतम् ॥ २ ॥
अपि चेद्देशमध्ये तु विना राज्ञो धनेश्वरः ।
शूद्रोऽपि कारयेन्मेरुं वक्ष्ये तद्गुणदोषकम् ॥ ३ ॥
भवेत्तत्सन्तानवृद्धौ राजराष्ट्रादिकक्षयः ।
स्वल्पवृष्टिरल्पशस्यमुद्वसन्ति शनैः शनैः ॥ ४ ॥
स्यादन्यवंशजो राजा प्रवासिन्यश्च तत्प्रजाः ।
ग्रामोऽरण्ये वनं ग्रामे यथाऽन्यः सृष्टिसम्भवः ॥ ५ ॥
वैश्येनाऽपि यदा मेरुर्विना राज्ञः प्रकार्यते ।
विभ्रमस्तत्र राष्ट्रेषु दुःस्थिता भ्रमति प्रजा ॥ ६ ॥
क्षत्रियोऽपि विना राज्ञो यदि मेरुं च कारयेत् ।
तस्करोपद्रुता लोकास्तत्र राष्ट्रेषु नित्यशः ॥ ७ ॥
विप्रोऽपि कारयेन्मेरुं विना राज्ञो धनेश्वरः ।
परस्परं प्रजाकोपो भवति ग्रामदुःस्थितिः ॥ ८ ॥
शस्तः शताण्डकः शूद्रे वैश्ये पञ्चशताण्डकः ।
तथा विप्रे सहस्राण्डो राज्ञि तद्द्विगुणः स्मृतः ॥ ९ ॥
महाराजेश्वरः स स्यात् महाराज्यमहीपतिः ।
महामेरूद्भवे चैव शान्ती राष्ट्रप्रजादिषु ॥ १० ॥
अर्धनिष्पन्नमात्रं तु त्यजेन्मेरुं महीपतिः ।
तस्य राष्ट्रे विभ्रमः स्याद्यावन्न कलशारुहः ॥ ११ ॥
हरो हिरण्यगर्भश्च हरिर्दिनकरस्तथा ।
एतेषां कारयेन्मेरुं नाऽन्यदेवे कदाचन ॥ १२ ॥
कुर्याद्यदाऽन्यदेवेषु शताण्डादिकमेरुकम् ।
तस्य राज्ञो भवेद्देशे विभ्रमो दुःस्थिता प्रजा ॥ १३ ॥
उक्त एवं शुद्धच्छन्दो महामेरोः समुद्भवः ।
प्रजानां शान्तिदो राज्ञां राष्ट्रादौ च महोत्सवः ॥ १४ ॥
महाराजेन चेन्मेरुः कृतो वै पूर्वतो महान् ।
त्रिवर्णिभिस्तथा मेरुः कर्तव्यस्तदनन्तरम् ॥ १५ ॥

राज्ञाऽकृतो यदा मेरुः क्रियते चाऽन्यवर्णिभिः ।
भयं तत्र च दुर्भिक्षं दुःस्था राजप्रजादयः ॥ १६ ॥
राजेन्द्रैर्यः कृतः पूर्वं महामेरुर्महोदयः ।
ततो हीनश्च कर्तव्यः शेषवर्णैस्तथैव च ॥ १७ ॥
अधस्तान्मेरुतः कार्यः प्रासादोऽन्यश्च राजभिः ।
ततोहीनोऽन्यवर्णैश्च हाण्डकैर्हस्तकैस्तथा ॥ १८ ॥
अधिकैरण्डकैर्हस्तैः क्रियते चाऽन्यवर्णिभिः ।
राजपीडा महादुःखं राहुग्रस्तार्कवद्भवेत् ॥ १९ ॥
तुल्यो यदाऽधिको वापि शालारूपगुणोऽपरः ।
अधिकः स्त्रीजनस्तत्र भृत्या वै तुल्यविग्रहाः ॥ २० ॥
नगरादौ देशमध्ये राजप्रासादतोऽधिकः ।
कृतश्चेदन्यवर्णैश्च राजपीडा भवेत्सदा ॥ २१ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां मेरुप्रासादवर्णनिर्णयाधिकारो नाम त्र्यशीत्युत्तरशततमं सूत्रम् ॥

---

## (१८४) समस्तमण्डपनिर्णयो नाम चतुरशीत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

मण्डपास्त्रिविधा वत्स ज्येष्ठमध्यकनिष्ठकाः ।
प्रासादद्विगुणायामः कनिष्ठो मण्डपो भवेत् ॥ १ ॥
पादोनद्वितयो मध्यो ज्येष्ठः सार्धस्तथैव च ।
एकैकास्त्रिविधा ज्ञेया ज्येष्ठमध्यकनिष्ठकाः ॥ २ ॥
त्रिज्येष्ठमिति च ख्यातं त्रिमध्यं त्रिकनिष्ठकम् ।
नवधापुनरेकैकं सप्तविंशतिसङ्ख्यया ॥ ३ ॥
प्रासादपीठवत् पीठं तत्समा रङ्गभूमिका ।
पट्टः पट्टोदरे कार्यो मूलगर्भविनिर्गतः ॥ ४ ॥
मूलगर्भ समुद्भूतः पट्टो धरः पीठान्तके ।
दशाष्टनवभागैश्च त्रिधा चन्द्रावलोकना ॥ ५ ॥
अथ चोच्छ्रयमध्यं चैकविंशत्यङ्गुलोन्नतम् ।
मत्तावरणशोभाढ्यं कक्षासनं करोन्नतम् ॥ ६ ॥
शेषं सार्धैः पञ्चभिश्च भागैरेवं प्रकल्पयेत् ।
राजसेनः सपादः स्यात् सपाद्यंशा च वेदिका ॥ ७ ॥
भाग आसनपट्टश्च कूटागारैः समन्वितः ।
तदूर्ध्वे सार्धसप्तांशं यावत् पट्टस्य पेटकम् ॥ ८ ॥
सार्धपञ्चोच्छ्रयः स्तम्भो घटिपल्लवभूषितम् ।
भरणं चार्धभागं च सार्धं स्याच्च तथा शिरः ॥ ९ ॥
पादोनं भरणं चाऽधः सपादं शिर उन्नतम् ।
एवंविधं प्रकर्तव्यं शीर्षोच्छालकसंयुतम् ॥ १० ॥
पट्टं भागद्वयं कुर्यान्मध्योर्ध्वे छाद्यमुन्नतम् ।
त्रिभागं निर्गमं छाद्ये ललितं पट्टपेटकैः ॥ ११ ॥
विस्तारस्य दशांशेन हीनां हन्याच्च कर्त्तरीम् ।
कपोताली चार्धभागा दण्डच्छाद्यं तु मस्तके ॥ १२ ॥
चतुष्कं चैव साष्टांशं षोडशांशमथोच्यते ।
द्विभागः पट्टविस्तारस्ततो वृत्तं च भ्रामयेत् ॥ १३ ॥
वृत्तार्धे च समुत्सेधं विचित्रं परिकल्पयेत् ।
स्तम्भोदयश्च भक्तव्यश्चाष्टपञ्चाशदंशतः ॥ १४ ॥
दर्दरी सप्तभागा च द्विभागा ग्रासपट्टिका ।
पद्मं स्वन्तरपत्रं च पादभागा द्विपट्टिका ॥ १५ ॥

छिप्पिका चार्धभागोक्ता स्कन्धः स्यात्सार्धभागिकः ।
अन्तःपट्टी चार्धभागा कर्णको भाग एव च ॥ १६ ॥

छिप्पिका चार्धभागा स्याद् भागार्धे कामरूपिका ।
निर्गमश्चार्धभागो हि सपादा चैव छिप्पिका ॥ १७ ॥

सपादभागं कर्णकं पादार्धं पट्टिके उभे ।
त्रिभागः स्कन्ध इत्युक्तः पादभागं प्रवेशनम् ॥ १८ ॥

रूपकण्ठः पञ्चभागोऽर्धभागान्तरपट्टिका ।
छिप्पिका चार्धभागोक्ता कर्णोऽश उर्ध्व उन्नतः ॥ १९ ॥

पादोनत्र्यंशरूपाणि कर्णश्चैवार्धभागिकः ।
अन्तःपत्रं भागपादं निर्गतं सार्धभागिकम् ॥ २० ॥

सप्तभागश्च विस्तारो निर्गमो दशभागिकः ।
विद्याधरा द्विरष्टांशाः प्रयोक्तव्याः प्रदक्षिणम् ॥ २१ ॥

सार्धपट्टकं गजतालु भागार्धं तत्र छिप्पिका ।
चतुर्भागा भवेल्लूमा भागार्धे कामरूपिका ॥ २२ ॥

अन्तःपत्रं पादभागं छिप्पिका त्र्यंशनिर्गता ।
लूमा लूमासमा कार्या भागार्धे श्रवणं तथा ॥ २३ ॥

प्रथमा स्याद् द्विभागेन द्वितीया षड्भिरेव च ।
सार्धपञ्चभिस्तृतीया कोलं पञ्चाशमुन्नतम् ॥ २४ ॥

एकभागेन वलिका निर्गमेन पदाधिका ।
भागार्धं छिप्पिका ज्ञेया पत्रं स्यात्सार्धभागिकम् ॥ २५ ॥

द्विभागा वलिका ज्ञेया विस्तारे पिण्डके तथा ।
द्विभागा च भवेल्लूमा कर्णा भागत एव च ॥ २६ ॥

पञ्चस्तरोद्गतं कोलं पृथुत्वे पञ्चभागिकम् ।
द्विभागोक्ता च वलिका सर्वे स्तरान्तरेषु च ॥ २७ ॥

पद्मकोणं त्रिकोणं च कोलानां पञ्चकं तथा ।
समाशृङ्गोद्गता कक्ष-सन्धौ स्याद् गजतालुका ॥ २८ ॥

नागविद्याधरा उक्ता गगाराग्रसन्धौ समाः ।
शृङ्गे कीर्तिमुखाः कार्याः शाखापत्रैरलङ्कृताः ॥ २९ ॥

घारिकोक्ता च कर्तव्या ? विद्याधरोपरिस्थिता ।
अष्टषोडश द्वादशाऽऽमलकैर्वृत्तकोपमाः ॥ ३० ॥

रुचका भद्रकाश्चैव वर्धमानास्तृतीयकाः ।
अष्टाश्राः स्वस्तिकाश्चैव स्तम्भाः प्रासादरूपतः ॥ ३१ ॥

चतुरश्राश्च रुचका भद्रका भद्रसंयुताः ।
वर्धमानाः प्रतिरथे तथाऽष्टांशैश्चाष्टाश्रकाः ॥ ३२ ॥

आसी द्यार्ध्वे ? भवेद् भद्रमष्टकर्णैस्तुस्वस्तिकाः ।
प्रकर्तव्याः पञ्चविधाः स्तम्भाः प्रासादरूपिणः ॥ ३३ ॥

प्रासादस्य दशांशेन स्तम्भानां विस्तरः पृथक् ।
एकादशांशैः कर्तव्यो द्वादशांशैस्थोच्यते ॥ ३४ ॥

त्रयोदशांशैः कर्तव्यः शक्रांशैश्च तथोच्यते ।
एतन्मानं समुद्दिष्टं स्तम्भानां विस्तरे पृथक् ॥ ३५ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
समस्तमण्डपनिर्णयाधिकारो नाम चतुरशीत्युत्तरशततमं सूत्रम् ॥

## (१८५) समस्तमण्डपनिर्णयो नाम पञ्चाशीत्युत्तरशततमं सूत्रम्॥

विश्वकर्मोवाच—

अथातः सम्प्रवक्ष्यामि मण्डपानां तु लक्षणम् ।
प्रासादस्य प्रमाणेन मण्डपं कारयेद् बुधः ॥ १ ॥

समं सपादं सार्धं च पादोनद्वयमेवच ।
द्विगुणं चाऽपि कर्तव्यं सपादद्वयमेव च ॥ २ ॥

सार्धद्वयं तु कर्तव्यमत ऊर्ध्वं न कारयेत् ।
सप्तधा प्रमाणसूत्रं वास्तुविद्भिरुदाहृतम् ॥ ३ ॥

प्रासादेषु च सर्वेषु दशहस्ताधिकेषु च ।
उक्तं समं सपादं च मण्डपं वास्तुवेदिभिः ॥ ४ ॥

पञ्चहस्तात्परं चैव यावत्स्याद् दशहस्तकम् ।
सार्धायामं मण्डपं च सृष्टं वै विश्वकर्मणा ॥ ५ ॥

चतुर्हस्ते च प्रासादे पादोनद्वयंशविस्तरः ।
त्रिहस्ते द्विगुणश्चैव तद्विशिष्टा चतुष्किका ॥ ६ ॥

चतुष्कं वाऽपि चाष्टांशं शुकस्तम्भानुसारतः ।
वितानं वै संवरणा चोर्ध्वमानेन मण्डपे ॥ ७ ॥

अलिन्दैर्द्विगुणैश्चाऽत्र द्विगुणं च प्रकल्पयेत् ।
द्वौत्रयश्चत्वारोऽलिन्दा द्विगुणात्परमण्डपे ? ॥ ८ ॥

वितानानि संवरणा विभक्तानि चतुष्किका ? ।
स्वके स्वके च स्थाने तु पादाद्या तद्भुक्तिभिः ॥ ९ ॥

सार्धमानेनाऽर्प्यते च तत्र मूलसंवरणोक्तिः ? ।
शुकनाससमा घण्टा न न्यूना न ततोऽधिका ॥ १० ॥

मूलप्रासादशिखरमुच्छ्रये यत्प्रकल्पितम् ।
छाद्योर्ध्वे स्कन्धपर्यन्तमेकविंशतिभाजितम् ॥ ११ ॥

अङ्कदिशारुद्र सूर्य त्रयोदशान्तमुत्सृजेत् ।
शुकनासस्य संस्थानं छाद्योर्ध्वे पञ्चधोन्नतम् ॥ १२ ॥

तेन मानेन पादान्तं (दांशं) मण्डपोर्ध्वे समुत्सृजेत् ।
तदूर्ध्वे च न कर्तव्यमधःस्थं नैव दूषयेत्॥ १३ ॥

प्रासादा मण्डपाः शाला जगत्यश्च व्यतिक्रमात् ।
अन्योन्यं च यदाग्रस्ता महादोष इति स्मृतः ॥ १४ ॥

स्यान्मण्डपेषु प्रासादग्रस्तेषु स्वामिविग्रहः ।
जगत्यां चैव प्रासादग्रस्तायां तु प्रजाभयम् ॥ १५ ॥

शालाभिर्मूलप्रासादो ग्रस्तः स्याद्दोषकारकः ।
तद्ग्रस्तं नैव कर्तव्यं स्वगोत्रे कलहं रिपुः ॥ १६ ॥

उत्तानपट्टैः प्रासादः प्रजाग्रस्तो नृपो यथा ।
जगतीशालाविभिश्च मूलसूत्रानुसारतः ॥ १७ ॥

जगतीमूलप्रासादौ ग्रस्तौ यदि परस्परम् ।
कुरुतस्तावन्धकारं राहुग्रस्ते दिवाकरे ॥ १८ ॥

ज्येष्ठमध्यकनिष्ठाश्च प्रासादा ये भवन्ति च ।
तदग्रे मण्डपान् कुर्याज्ज्येष्ठमध्यकनिष्ठकान् ॥ १९ ॥

समं तलं च विषमं संघाटो मुखमण्डपः ।
भित्त्यन्तरे यदा स्तम्भपट्टादिर्नैव दूषणम् ॥ २० ॥

क्षणमध्येषु सर्वेषु पदमेकं न दापयेत् ।
युग्मं च दापयेत्तत्र वेधदोषविवर्जितम् ॥ २१ ॥

क्षणमध्येषु सर्वेषु स्तम्भमेकं न दापयेत् ।
दद्याद्युग्माकारमेव मूलगर्भे न पीडयेत् ॥ २२ ॥

मण्डपानां समस्तानां लक्षणं कथ्यतेऽधुना ।
गतिं स्तम्भं च भित्तिश्च विभक्तिभागसङ्ख्यया ॥ २३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तभुवनदेवाचार्योक्तापराजितपृच्छायां समस्तमण्डपनिर्णयाधिकारो नाम पञ्चाशीत्युत्तरशततमं सूत्रम् ॥

---

## (१८६) पुष्पकादिसप्तविंशतिमण्डपा नाम षडशीत्युत्तरशततमं सूत्रम् ।

---

विश्वकर्मोवाच—

पुष्पकः पुष्पभद्रश्च सुप्रभो मृगनन्दनः ।
कौशल्यो बुद्धिसंकीर्णो गजभद्रो जयावहः ॥ १ ॥

श्रीवत्सो विजयश्चैव वस्तुकीर्णश्च श्रीधरः ।
यज्ञभद्रो विशालाख्यः सुश्रेष्ठः शत्रुमर्दनः ॥ २ ॥

भूजयो नन्दनश्चैव तथा विमानभद्रकः ।
सुग्रीवो हर्षणश्चैव कर्णिकारः पद्मधिकः ॥ ३ ॥
सिंहकः सिंहभद्रो च समसूत्रस्तथैव च ।
इत्येते मण्डपा प्रोक्ताः सप्तविंशतिसङ्ख्यया ॥ ४ ॥

चतुरश्रीकृते क्षेत्रे त्रिधा नवपदाङ्कितम् ।
कर्णे स्तम्भाश्च चत्वारो द्वौ द्वौ भद्रे ससूत्रके ॥ ५ ॥

अष्टांशपदयुक्ताश्च सूर्यस्तम्भाः ससूत्रके ।
प्राग्ग्रीवाग्रे पदमेकं स भवेद् भद्रसंज्ञकः ॥ ६ ॥

तद् भद्रं च परित्यज्य सिंहकोऽन्तश्चतुष्किकः ।
प्राग्ग्रीवाद्ग्रयुक्ताश्च सिंहनामा स उच्यते ॥ ७ ॥
चतुष्कीं मध्यतस्त्यक्त्वा प्राग्ग्रीवाश्च चतुर्दिशम् ।
पद्मधिको नामतोऽग्रे त्रिपदः कर्णिकारकः ॥ ८ ॥
त्रिपदे पदमेकं च चतुष्कं हर्षणो मतः ।
सुग्रीवस्त्रिपदाग्रेचाऽपरे विमानभद्रकः ॥ ९ ॥

दद्यात्पक्षेऽपरे त्यक्त्वा नन्दनः सर्वकामदः ।
तदाऽपरे भूजयः स परित्यक्तचतुष्किकः ॥ १० ॥

पूर्वभद्रे चापदिशं कर्णेऽलिन्दश्चतुर्दिशम् ।
स शत्रुमर्दनः ख्यातः सुश्रेष्ठश्चापरे यदि ॥ ११ ॥

कुर्यात्पक्षेऽपरे त्यक्त्वा विशालाक्षः स उच्यते ।
तथाऽपरे यज्ञभद्रो मण्डपः सर्वकामदः ॥ १२ ॥

त्रिपदाग्रे श्रीधराख्यो वास्तुकीर्णस्तथाऽपरे ।
दद्यात् पक्षेऽपरे त्यक्त्वा विजयो नाम नामतः ॥ १३ ॥
तथाऽपरे च श्रीवत्सः पदिकाग्रे जयावहः ।
पदिकं त्यक्तमग्रे तु चतुष्कं गजभद्रकः ॥ १४ ॥

तथाऽग्रे बुद्धिसंकीर्णः कौशल्यश्चापरे तथा ।
दद्यात्कक्षेऽपरे त्यक्त्वा स भवेन्मृगनन्दनः ॥ १५ ॥

तथाऽपरे सुप्रभस्तु कर्तव्यः सर्वकामदः ।
त्रिपदं चाग्रभद्रं च स भवेत् पुष्पभद्रकः ॥ १६ ॥

पुष्पकः सर्वत्रिपदः परित्यक्तचतुष्किकः ।
एवं तु युक्तिर्विज्ञेया मण्डपाः पुष्पकादयः ॥ १७ ॥

चतुःषष्टिस्तम्भयुक्तः पुष्पको नाम विश्रुतः ।
द्विद्विस्तम्भत्यागयुक्त्या पुष्पाद्याः सप्तविंशतिः ॥ १८ ॥

पुष्पकाद्याश्च युक्तास्स्युः समैर्वा विषमैस्तलैः ।
अनुक्रमं युक्तमाद्य ? सप्तविंशति मण्डपाः ॥ १९ ॥

समैः क्षणः समैः स्तम्भैः समैश्चैवमलिन्दकैः ।
विषमे तु तुलापट्टं गूढे चन्द्रावलोकना ॥ २० ॥

निर्गूढे नृत्य आख्यातोऽधस्ताद् भद्रावलोकना ।
चन्द्रावलोकना जालैः कार्याः कर्णानुगास्तथा ॥ २१ ॥

निःस्तम्भा भित्तिका स्तम्भैरष्टांशा च चतुष्किका ।
स्तम्भेषु युग्मस्तम्भाश्च मूलसूत्रसमुद्भवाः ॥ २२ ॥

क्षणमध्येषु सर्वेषु स्तम्भमेकं न दापयेत् ।
युग्मं च दापयेत्तत्र वेधदोषविवर्जितम् ॥ २३ ॥

मूलस्तम्भे यथासूत्रं स्तम्भो देयस्तु मण्डपे ।
तदा नगरनृपेन्द्रयजमानजयः सदा ॥ २४ ॥

उत्पद्यते स्तम्भवेधे पद्मिनी नाम राक्षसी ।
पीडयेत् पुरराजादीन् वास्तुविद्भिरुदाहृतम् ॥ २५ ॥

द्विद्विस्तम्भह्रासयोगे चतुष्षष्ट्या द्वादशान्तम् ।
पुष्पकाद्या इमे सूत्र सप्तविंशतिमण्डपाः ॥ २६ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
पुष्पकादिसप्तविंशतिमण्डपाधिकारोनामषडशीत्युत्तरशततमं सूत्रम् ॥

## (१८७) विंशतिमण्डपा नाम सप्ताशीत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

वर्धमानः स्वस्तिकाख्यो गरुडः सुरनन्दनः ।
सर्वतोभद्रकैलासेन्द्रनीला रत्नसम्भवः ॥ १ ॥

चतुरश्रो वर्धमानः स्वस्तिको भद्रसंयुतः ।
गरुडः सप्रतिरथः सुरानन्दः प्रभद्रकैः ॥ २ ॥

कर्णादैः सर्वतोभद्रः कैलासो भद्रकोदकैः ।
प्रतिरथाविन्द्रनीलः त्रिभिः स्याद्रत्नसंभवः ॥ ३ ॥

इत्यष्टौ च समाख्याता वर्धमानादिमण्डपाः ।
बाह्यच्छन्दे प्रकर्तव्या मण्डपाः सर्वकामदाः ॥ ४ ॥

पादोनकर्णः प्ररथः प्रभद्रो द्विगुणस्ततः ।
भद्रार्धे मुखभद्रं च शेषाश्चैवं षडंशकाः ॥ ५ ॥

निर्गमो दलार्धपादैः कर्तव्यः सर्वकामदः ।
भद्रद्विगुणनिष्कासः कर्तव्यः शान्तिमिच्छता ॥ ६ ॥

दलभक्तिक्रमः प्रोक्तः मूलप्रासादसङ्ख्यया :
कर्तव्या निर्गमैर्हीनाः स्वस्वाकाराश्च मण्डपाः ॥ ७ ॥

सपीठमन्डोवरादि प्रासादाकृतिमेखला ।
भद्रे गवाक्षकोपतं मूलप्रासादसन्निभम् ॥ ८ ॥

उक्ताः कर्णे कुम्भकाद्या मानः प्रासादसीमार्धकम् ।
रथोपरथभद्राणां पीठाद्यं बाह्यनिर्गतम् ॥ ९ ॥

भित्तिः प्रासादमानेन पीठान्तोत्तानपट्टकः ।
एकं वा त्रीणि वा कुर्याद् द्वाराणि कामदानि वै ॥ १० ॥

शुकस्तम्भानुसूत्रेण चाष्टांशं भित्तिमाचरेत् ।
मध्यपीठोच्छ्रयोत्सेधा मण्डपाद्याः समस्तकाः ॥ ११ ॥

अष्टांशवृत्तोर्ध्वतश्च वितानान्तं समुच्छ्रितिः ।
चतुष्किका याम्योत्तरे अग्रे वा वामतोऽथवा ॥ १२ ॥

या प्रासादे द्वारशाखा तद्विधं मण्डपादिकम् ।
करोटकं स्यात्तदूर्ध्वे बुधावन्धो ? तु कारयेत् ॥ १३ ॥

.................................... ।
तत उर्ध्वं संवरणाऽन्तिमं कूटघण्टोच्छ्रितम् ॥ १४ ॥

इति वर्धमानाद्यष्टमण्डपाः ॥

विश्वकर्मोवाच—

सुभद्रश्च किरीटी च दुन्दुभिः प्रान्त एव च ।
मनोहरश्च शान्तश्च नन्दाख्यश्च सुदर्शनः ॥ १५ ॥

रम्यकश्च सुनाभश्च सिंहः सूर्यात्मकस्तथा ।
निर्गूढाग्रे त्रिकं ख्यातं द्वादश मुखमण्डपाः ॥ १६ ॥

द्वाराग्रे चैव निर्गूढं तदग्रे च चतुष्किका ।
सुभद्रो नाम विज्ञेयो मण्डपः सर्वकामदः ॥ १७ ॥

उभयोः कक्षयोर्दद्यात् किरीटी नामतः स्मृतः ।
एकं च दुन्दुभिः पूर्वे अथोभौ प्रान्ततस्तथा ॥ १८ ॥

पूर्वे चतुष्किकायां च कामदश्च मनोहरः ।
शान्तश्चैतदुभाभ्यां च स्तम्भैद्वर्यष्टभिरेव च ॥ १९ ॥

मूलप्रासादद्विगुणं त्रिकाणां पृथुनिर्गतम् ।
त्रिभिश्चतुष्किकाऽऽयामे पृथुत्वे त्रिभिरेव च ॥ २० ॥

सर्वप्रासादपीठस्य समाख्यातं त्रिकं तथा ।
पुनरेव प्रवक्ष्यामि तद्विधान् षट् च मण्डपान् ॥ २१ ॥

तस्य बाह्ये पुनर्दद्यात् प्रत्यलिन्दमनुक्रमात् ।
चतुष्कीक्रमयोगेन मण्डपान् षट् च लक्षयेत् ॥ २२ ॥

चतुष्किके चेत्पूर्वेऽग्रे नन्दाख्यः सर्वकामदः ।
त्यक्त्वाग्रे चोदरे गर्भे दद्याच्चैव सुदर्शनः ॥ २३ ॥

उभे कक्षे पुनःश्चाग्रे रम्यकः समुदाहृतः ।
अग्रे द्विचतुष्किकाभ्यां सुनाभो नाम सम्प्रतः ॥ २४ ॥

अलिन्दयुक्तौ द्वौ पक्षौ सिंहनामा स उच्यते ।
मुक्तकोणाकृतिः स्थित्वा पूर्वकर्णे सूर्यात्मकः ॥ २५ ॥

नालोद्भवः पृथुत्वेच चतुःक्षणाग्रनिर्गतः ।
क्षणे क्षणे चतुष्कया वितानसंवरणोदयः ॥ २६ ॥

इतिसुभद्रादिमण्डपाः ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां विंशतिमण्डपाधिकारो नाम सप्ताशीत्युत्तरशततमं सूत्रम् ॥

---

## (१८८) मण्डपनिर्णयो नामाष्टाशीत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

प्रासादस्याग्रतः कार्या ललितेषु च मण्डपाः ।
ताननुक्रमतः सूत्र कथयामि यथाविधि ॥ १ ॥
प्राग्ग्रीवश्च चतुष्कश्च सन्मुखस्त्रिजगस्तथा ।
श्रीधरः पुष्पगश्चैव श्रीपदः श्रियानन्दकः ॥ २ ॥
संवराख्यः पृथ्वीधरः पुण्यभद्रो जयन्तकः ।
शङ्कुपर्णश्च गोविन्दो महाभोगी दिवौकसः ॥ ३ ॥
द्विरष्ट मण्डपाः प्रोक्ताः प्राग्ग्रीवादि समुद्भवाः ।
छन्दलक्षणसम्युक्ता उक्ता वै सूत्रमार्गतः ॥ ४ ॥
प्रासादाग्रे तु द्वौ स्तम्भौ प्राग्ग्रीवः परिकीर्तितः ।
चतुष्कश्च चतुस्तम्भैः षड्भिः स्तम्भैश्च सन्मुखः ॥ ५ ॥
अष्टस्तम्भैश्च त्रिजगो दशस्तम्भैस्तु श्रीधरः ।
दक्षिणे त्रिकप्रकारे स्तम्भा द्वादश पुष्पकः ॥ ६ ॥
चतुष्किका तदग्रे द्वि-सप्तस्तम्भैश्च श्रीपदः ।
द्व्यष्टस्तम्भैः श्रियानन्दः संवरोऽग्रचतुष्किकः ॥ ७ ॥
त्यक्तचतुष्किकः पक्ष-प्राग्ग्रीवे पृथिवीधरः ।
अग्रे च त्यक्तप्राग्ग्रीवश्चतुष्की मध्यतस्तथा ॥ ८ ॥
पुण्यभद्रस्तदानाम जयन्तश्चाग्रसंयुतः ।
पूर्वे तिस्रश्चतुष्क्यश्च शङ्कुपर्णश्च संज्ञितः ॥ ९ ॥
प्राग्ग्रीवा त्रिपदा पक्षे पूर्वे चैका चतुष्किका ।
गोविन्दश्च तदा नाम भोगी स्यात्त्रिपदाग्रकः ॥ १० ॥
मुक्तकोणोऽथ पूर्वे तु त्रिदशाख्यश्च नामतः ।
पञ्चपट्टो ( पीठो ) परि कुर्याद् विख्यातान्नृत्यमण्डपान् ॥ ११ ॥

इति प्राग्ग्रीवादिषोडष मण्डपाः ॥

मेर्वादींश्च प्रवक्ष्यामि पञ्चविंशति मण्डपान् ।
भित्तिद्वारप्राग्ग्रीवांश्च भूमिकां माडमुच्छ्रयम् ॥ १२ ॥
मेरुमन्दरकैलासा हिमवान गन्धमादनः ।
हेमकूटो रत्नकूटस्तथा वै शृङ्गवांस्ततः ॥ १३ ॥
इन्द्रनीलः पद्मरागो महापद्मस्तथापरः ।
कीर्तिपताकपूर्णाख्यौ शतशृङ्गः सुरप्रियः ॥ १४ ॥
शान्तिदेहश्च पुण्यात्मा भूर्भुवःस्वस्तथैव च ।
महाकान्तः सुरुषान्तः प्रतापवर्द्धनस्तथा ॥ १५ ॥

लक्ष्मीविलासो विरोधस्त्रैलोक्यविजयस्तथा ।
पञ्चविंशतिरित्युक्ता मेर्वाद्या मण्डपास्तथा ॥ १६ ॥

अधः प्रासादकाग्रे तु बलाणकमथोपरि ।
निर्गूढाग्रे त्रिकः प्रोक्तस्तस्याग्रे नृत्यमण्डपः ॥ १७ ॥

राजद्वारे प्रतोल्यां च वापीद्वाराग्र एव च ।
देवागारे जगत्यग्रे जगतिद्वारकं विदुः ॥ १८ ॥

इत्थं समस्तस्थानेषु मेर्वादीन्मण्डपानथ ।
लक्षणेन समायुक्तान् कथयामि समासतः ॥ १९ ॥

चतुरस्रीकृते क्षेत्रे अष्टधा प्रविभाजिते ।
भवेन्मध्ये द्विभागस्तु चतुष्कः संवृतो धरैः ॥ २० ॥

अलिन्दं भागिकं कुर्याद् द्वादशस्तम्भकोच्छ्रितम ।
द्वितीयो विंशतिस्तम्भैरष्टाविंशतिभिः परः ॥ २१ ॥

भद्रं तु भागनिष्कासं षड्भागं चैव विस्तरे ।
प्रतिभद्रं ततो भागे चतुर्भागं तु विस्तरम् ॥ २२ ॥

द्विभागायामविस्तारः प्राग्ग्रीवः स्याच्चतुर्दिशम ।
सूर्योत्तरशतस्तम्भा भूमिका पञ्चधोच्छ्रिता ॥ २३ ॥

मेरुमण्डप उक्तश्च द्विभौमोर्ध्वे च माडतः ।
प्रकर्तव्याः संवरणा शृङ्गाद्यकूटघण्टादितः ॥ २४ ॥

माडोऽपि तादृशः कार्यो यादृशो मेरुमण्डपः ।
द्विद्विस्तम्भह्रस्वयोगान्मण्डपाः स्युरनुक्रमात् ॥ २५ ॥

चतुःषष्टिस्तम्भकान्तं मण्डपाः पञ्चविंशतिः ।
तदूर्ध्वे वै संवरणाऽनेकालिन्दैश्च संयुता ॥ २६ ॥

शेषं विच्छिन्नरूपादि कल्पयेच्च यथाक्रमम् ।
अतः प्रासादतुल्या च द्वितीया भूमिरूर्ध्वतः ॥ २७ ॥

प्रासादस्कन्धहीनाङ्गा प्रकर्तव्या तृतीयका ।
समस्तावरणच्छाद्यसंवरणं वितानकम् ॥ २८ ॥

प्राङ्गणे माडरूपाख्याः कर्तव्याः शुभलक्षणाः ॥ २९ ॥

इति मेर्वादिमण्डपनिर्णयाधिकारः ॥

मन्दरो मलयश्चैव विशालः श्रीधरस्तथा ।
विजयः पञ्चमः प्रोक्तो मण्डपाश्च सुरालये ॥ ३० ॥

माहेन्द्रो विजयश्चैव हेमकूटः सुनन्दनः ।
विमलः पञ्चमः प्रोक्तो यज्ञार्थे मण्डपाः शुभाः ॥ ३१ ॥

समर्थो भूधरो दक्षो देवाक्षः क्षितिभूषण ।
एते सभामण्डपाश्च सर्वकामफलप्रदाः ॥ ३२ ॥

वैष्णवो नन्दनः शङ्खो नन्दः पद्मश्च पञ्चमः ।
राज्ञां विभूषणार्थाय सर्वे ते नृपनन्दनाः ॥ ३३ ॥

पुष्पश्च सूर्यगर्भश्च चन्द्रभागश्च चन्द्रकः ।
सुपर्णश्चाऽथ कर्तव्या नृपाणां भोजने हिताः ॥ ३४ ॥

प्रासादस्याऽनुमानेन मण्डपो द्विगुणायतः ।
शुकनाससमा घण्टा न न्यूना न ततोऽधिका ॥ ३५ ॥

विंशतिभिर्युतैः स्तम्भाः कूटस्तम्भाः षड्विंशतिः ।
मन्दरो नाम विज्ञेयोऽन्तर्विषमतलोन्नतः ॥ ३६ ॥

अष्टाष्टस्तम्भत्यागे च शेषाश्चत्वार ईरिताः ।
चतुःस्तम्भाच्चतुर्वृद्धया विंशत्यन्ताश्च याज्ञिकाः ॥ ३७ ॥

षोडशाद्याश्चतुरश्रा भद्रभेदैः समन्विताः ।
चतुरश्रक्षणत्यागे द्वाभेदैर्गृहमण्डपाः ॥ ३८ ॥

चतुरश्राश्चतुर्वृद्धया राज्ञां वै भोजने हिताः ।
पञ्चविंशतिराख्याता मण्डपा मन्दरादिकाः ॥ ३९ ॥

षोडशांशं कृतं क्षेत्रं द्विमध्ये भ्रमभागिकम् ।
प्रत्यालिन्दैर्द्वितीयं च तृतीयं पूर्वभद्रके ॥ ४० ॥

भद्रे परे चतुर्थं च पञ्चमं कक्षयोस्तथा ।
पूर्वभद्रालिन्दैः षष्ठमपरालिन्दैः सप्तमम् ॥ ४१ ॥

कक्षद्वये चाऽष्टमं चाऽष्टौ वै नन्दनादिकाः ।
तदनुक्रमनामानि कथयामि समासतः ॥ ४२ ॥

नन्दनोऽथो भद्रजयौ विजयो मङ्गलस्तथा ।
पूर्णो माहेन्द्रकश्चैव अष्टमो मकरध्वजः ॥ ४३ ॥

अष्टौ समतलाज्ञेया दिव्यवितानभूषिताः ।
ऊर्ध्वे संवरणाकाराः कर्तव्याः सर्वकामदाः ॥ ४४ ॥

इति नन्दनाद्यष्टौ मण्डपाः ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
मण्डपसूत्रनिर्णयाधिकारो नामाष्टाशीत्युत्तरशततमं सूत्रम् ॥

# (१८९) विताननिर्णयोनाम नवाशीत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

सुरसद्मशुकाग्रान्तं दिव्यमण्डपभूषितम् ।
शुकाग्रे च त्रिकाग्रे च नृत्यरङ्गवलाणकम् ॥ १ ॥
वास्तुवेदोद्भवाः सर्वे रूपच्छन्दक्रमागताः ।
देशजातिकुलस्थानं वर्णभेदैस्तथापरम् ॥ २ ॥
मण्डपानां समस्तानां मध्ये कुर्याद्वितानकम् ।
आद्योत्पत्तिसमं सर्ववितानानां तु लक्षणम् ॥ ३ ॥
वितानानि विचित्राणि क्षिप्तान्युत्क्षिप्तकानि च ।
समतलानि ज्ञेयानि उदितानि त्रिधा क्रमात् ॥ ४ ॥
त्रयोदशाधिकशतं सहस्रं च वितानकाः ।
प्रोक्ताश्च विविधाश्छन्दा लूमास्तत्र त्वनेकधा ॥ ५ ॥
पद्मको नाभिच्छन्दश्च सभामार्गस्तृतीयकः ।
मन्दारक इति प्रोक्तो वितानाश्च चतुर्विधाः ॥ ६ ॥
पद्मको विप्रजातिः स्यात् क्षत्रियो नाभिच्छन्दकः ।
सभामार्गो भवेद्वैश्यः शूद्रो मन्दारकस्तथा ॥ ७ ॥
पद्मकः श्वेतवर्णः स्यात् क्षत्रियो रक्तवर्णकः ।
सभामार्गो भवेत्पीतो मन्दारः सर्ववर्णकः ॥ ८ ॥
विचित्ररत्नवर्णाढ्याः पद्मपत्रमिवाम्भसि ।
पद्मोद्भवास्तथा लूमा नागवीथिपरिभ्रमाः ॥ ९ ॥
पद्मोद्भवं बन्धसन्धौ नागविद्याधरोदितम् ।
कीर्तिमुखपत्रशाखावज्रशृङ्गैर्निरन्तरम् ॥ १० ॥
गजतालू तथापरे लूमा छन्दक्रमोद्गता ।
श्वेतरक्तहरित्पीतैर्वलिकाकारशोभितम् ॥ ११ ॥
क्वचित्तु हेमवर्णं च मेघोदरनिभं क्वचित् ।
क्वचिच्च श्वेतवर्णं स्यात् क्वचिन्नीलोत्पलप्रभम् ॥ १२ ॥
विचित्रवर्णसंकाशं गन्धर्वगणसेवितम् ।
किन्नरविद्याधरोक्तगीतवाद्यसुनृत्यकम् ॥ १३ ॥
केतकीबकुलै रम्भामुचकुन्दैश्च मल्लिकैः ।
पाटलै राजचम्पाभिर्जातिनागकदम्बकैः ॥ १४ ॥
सुसाराशोकपत्रैश्च पुन्नागैर्नागकेशरैः ।
श्वेतरक्तोत्पलैः पद्मपत्रैः संस्कारशोभितैः ॥ १५ ॥

वितानं पुष्पसंकाशं पुष्पजातमनेकधा ।
रम्भापुष्पकसंकाशं वितानाग्रं तु यादृशम् ॥ १६ ॥

वितानानां प्रभेदाश्च सम्प्रोक्ता वास्तुवेदिभिः ।
शुद्धाश्च छन्दसंघाटा भिन्ना उद्भिन्नकास्तथा ॥ १७ ॥

पद्मके शुद्धच्छन्दाश्च चतुःषष्टिः प्रकीर्तिताः ।
षट्त्रिंशच्चैव संघाटास्तथैव परिकीर्तिताः ॥ १८ ॥

शतद्वयं च भिन्नाश्च उद्भिन्नास्तत्समास्तथा ।
एवं पद्मोद्भवे छन्दे शुद्धाद्याश्च प्रकीर्तिताः ॥ १९ ॥

चत्वारिंशच्च संघाटाः शतं भिन्नास्तथैव च ।
उद्भिन्नाश्च समुत्पन्नाः षट्त्रिंशदधिकं शतम् ॥ २० ॥

शुद्धाश्चतुर्विंशतिक-सङ्ख्याकाः सम्प्रकीर्तिताः ।
एवं नाभ्युद्भवच्छन्दे वितानानां शतत्रयम् ॥ २१ ॥

सभामार्गे द्विरष्टौ च शुद्धाश्चैव समीरिताः ।
षट्त्रिंशच्चैव संघाटा भिन्ना वस्ववधिभेदतः ॥ २२ ॥

उद्भिन्नाश्च शतं त्वेकं सभामार्गविनिर्गताः ।
एवं सभामार्गजातवितानानां शतद्वयम् ॥ २३ ॥

मन्दारके तथा प्रोक्ताः शुद्धच्छन्दा दशैव च ।
संघाटा वै पञ्चदश चत्वारिंशच्च भिन्नकाः ॥ २४ ॥

अष्टचत्वारिंशदेवमुद्भिन्नाश्च प्रकीर्तिताः ।
एवं मन्दारकभवा त्रयोदशाधिकं शतम् ॥ २५ ॥

वितानानि समस्तानि एकादशशतानि च ।
त्रयोदशाधिकान्येव विचित्राणि भवन्ति च ॥ २६ ॥

इति सुत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
वितानविनिर्णयाधिकारो नाम नवाशीत्युत्तरशततमं सूत्रम् ॥

# (१९०) वितानवर्णनं नवत्युत्तरशततमं सूत्रम्॥

विश्वकर्मोवाच—

वितानांश्च प्रवक्ष्यामि भेदैस्तत्र चतुर्विधम्।
पद्मकं नाभिच्छन्दं च सभा मन्दारकं तथा॥ १॥

शुद्धश्च छन्दसंघाटो भिन्न उद्भिन्न एव च।
एतेषां सन्ति ये भेदाः कथये तान् समासतः॥ २॥

एकत्वे च भवेच्छुद्धः संघाटश्च द्विमिश्रणात्।
त्रिमिश्राश्च तथा भिन्ना उद्भिन्नाश्चतुरन्विताः॥ ३॥

पद्मनाभं सभापद्मं सभामन्दारकं तथा।
कमलोद्भवमाख्यातं मिश्रकाणां चतुष्टयम्॥ ४॥

अधस्तात् पद्मकं छन्दं नाभिच्छन्दं तदूर्ध्वतः।
पद्मनाभं च तन्नाम मिश्रकं चादिजातकम्॥ ५॥

अधस्तात्तु सभाच्छन्दं पद्मच्छन्दं तदूर्ध्वतः।
सभापद्ममितिख्यातं द्वितीयं मिश्रकं तथा॥ ६॥

अधस्तात्तु सभाच्छन्दं मन्दारकमथोर्ध्वतः।
सभामन्दारकं नाम तृतीयं मिश्रजातकम्॥ ७॥

पद्मके च यथा छन्दे पद्माकृति च लम्बितम्।
कमलोद्भवमाख्यातं चतुर्थं मिश्रजातकम्॥ ८॥

(पद्मोद्भवादिकं) सर्वं वितानच्छन्दसम्भवम्।
कर्तव्यं सर्वदेवानामीश्वरे तु विशेषतः॥ ९॥

नाभिकं विष्णुदेवेशे सभा वै ब्रह्मणस्तथा।
सूर्ये मन्दारकं चैव शुद्धच्छन्दाः प्रकीर्तिताः॥ १०॥

पार्वत्यादिकदेवीनां सर्वासां पद्मनाभकम्।
गणनाथे सभापद्मं कर्तव्यं शान्तिमिच्छता॥ ११॥

सभामन्दारकं नाम वीतरागेऽतिशान्तिदम्।
कमलोद्भवमेवं च सर्वदेववितानकम्॥ १२॥

यद्देवाग्रे वितानं स्यात्तद्गुणं तदाच्छादनम्।
सेवितं गन्धर्वगणैः शान्तिदं श्रीप्रदं तथा॥ १३॥

अष्ट द्वादश द्विरष्ट चतुर्विंशतिर्द्वात्रिंशत्।
चतुःषष्टिर्विद्याधरास्तदूर्ध्वे च वराङ्गनाः॥ १४॥

ततानद्धघनाद्यैश्च वादित्रैः सुस्वरैस्तथा ।
नाटकैर्नृत्यरङ्गाद्यैर्गीतनादैरनेकधा ॥ १५ ॥
पट्टिपाटपटैश्चैव नेत्रपाटैः स्यान्महोमकैः ? ।
क्षीरोदकैस्तु भरवार्मैः पवनाप्लुतैः सुहारिकाः ॥ १६ ॥
सुवर्णरेखानुमानाक्षपुष्पप्रकरमेव च ।
वितानाग्रविद्याधरैर्नागविद्याधरादिकम् ॥ १७ ॥
वस्त्रस्य लंबनं सर्वे देवदेवैस्तु रम्यकम् ।
विचित्रोत्पलसंकाशं कुङ्कुमारुणमोदितम् ? ॥ १८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
वितानवर्णनाधिकारो नामनवत्युत्तरशततमं सूत्रम् ॥

# (१९१) वितानदेवतानुक्रमो नामैकनवत्युत्तरशततमं सूत्रम् ।

---

विश्वकर्मोवाच—

पद्मं चैव विकाशं च ह्यष्टपत्रं सुकर्णिकम् ।
छत्रं च नागवीथी च पुष्पकं भ्रमरावली ॥ १ ॥

आद्योत्पत्तिर्वितानानां सूत्रसम्पातचित्रकम् ।
एते चाष्टवितानाश्च कर्तव्यास्त्रिपुरान्तके ॥ २ ॥

नाभ्यं नाभ्युद्भवं चैव श्रीवत्सं च मालाधरम् ।
नन्दाख्यं सूर्योद्भवं च गरुडं वैष्णवं तथा ॥ ३ ॥

नाभिच्छन्दोद्भवा आद्या स्तत्र सम्पातकर्णिका ।
एते चाष्टवितानास्तु कर्तव्या गरुडध्वजे ॥ ४ ॥

कमलं कमलोद्भवं शङ्खावर्तं मेघोदरम् ।
महापद्मं महाकान्तं हंसं वै हंसपक्षकम् ॥ ५ ॥

आदिसृष्टयुद्भवकाले प्रयुक्ताः परमेश्वरे ।
एते चाऽष्टवितानाश्च कर्तव्याः परमेष्ठिनि ॥ ६ ॥

व्योमं व्योमाङ्कं किरणं व्योमाक्षं सर्वसुन्दरम् ।
मेघच्छत्रं महाबिम्बं दीप्तं कुर्याश्च भास्करे ॥ ७ ॥

पद्मनाभं सुगम्भीरं सिंहकर्णं पताकिनम् ।
घण्टानादं महानादं तिलकं सर्वसुन्दरम् ॥ ८ ॥

पार्वत्यादिकदेवीनां चण्डिकायाः श्रियस्तथा ।
एतान्यष्टवितानानि कर्तव्यानीश्वरीषु च ॥ ९ ॥

सभापद्मं कुञ्जरं च मेघराज्यं मेघोद्भवम् ।
हर्षं च मोदकं शान्तं विजयं च गणाधिपे ॥ १० ॥

सभामन्दारकं रम्यं हर्षं च वसन्तोद्भवम् ।
वसन्ततिलकं सैन्यं विचित्रं च चूडामणेः ॥ ११ ॥

वीतरागे तथा बौद्धे मण्डपे स्युर्नृपा(र्जिना)लये ।
एते चाऽष्टवितानाश्च वीतरागेऽति शान्तिदाः ॥ १२ ॥

कमलोद्भवं रम्यं च विचित्रं चित्रकर्मकम् ।
तारागणं बृद्धिरामं सुच्छत्रं च विमानकम् ॥ १३ ॥

एते चाऽष्टवितानाश्च कार्याः सर्वसुरेषु च ।
श्रियं शान्तिमाप्सितं च लभेते कर्तृकारयौ ॥ १४ ॥

समस्तैः कारयेच्चैवं शिवविष्णुसप्तदशोक्ता ? ।
षट् देवादि विरञ्चि सूर्ये पञ्च आत्मादिकम् ? ॥ १५ ॥
देवीनां चतुर्देवोक्ता गणानां त्रिभिरेव च ? ।
आत्माद्या द्वौ वीतरागैः शेषोद्यः सर्वदेवता ? ॥ १६ ॥
देवानां प्रशस्तानि मिद विभागोक्तानि च ? ॥

इति वितानदेवतानुक्रमाधिकारः ॥ १७ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां वितानदेवतानुक्रमाधिकारो नानैकनवत्युत्तरशततमं सूत्रम् ॥

---

## (१९२) वितानच्छन्दो नाम द्विनवत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

लूमांश्चाऽथ प्रवक्ष्यामि वितानच्छन्दकोद्भवाः ।
शृङ्गारो विनाङ्गनाश्च विना लूमै र्वितानकम् ॥ १ ॥
पुमान विना च सन्तानैः पुत्रपौत्रादिकैस्तथा ।
राष्ट्रं विना दन्तिभिश्च सर्वथैव न शोभते ॥ २ ॥
तदनुक्रमयुक्तीश्च नामानि लक्षणादिकम् ।
कथयामि समासेन विश्वकर्मवचो यथा ॥ ३ ॥
तुम्बिनी लम्बिनी हेला शान्ता चैव मनोरमा ।
गान्धारी हस्तिजिह्वा च नागाङ्गा च पुष्पावली ॥ ४ ॥
ऊक्ता लूमा नवत्वेवं सुरूपाः स्यु र्वितानकैः ।
लूमानुक्रमसंयुक्तं वितानं दिव्यकं भवेत् ॥ ५ ॥
यथोदकं विना भूमि लोंका जीवादिकं विना ।
तथा वितानं निर्लूमं योषितः पुरुषं विना ॥ ६ ॥
क्षिप्ते तु तुम्बिनी ज्ञेया उत्क्षिप्त लम्बिनी तथा ।
हेला समतले चोक्ता त्रिधोदित क्रमागता ॥ ७ ॥
शान्ता गजतालुवृत्ते मेघोदरे मनोरमा ।
गजदंष्ट्रोक्तमाना च गान्धारी च विद्याधरैः (रे)॥ ८ ॥
लम्बिते गजजिह्वाख्या नागाङ्गा क्षिप्तोत्क्षिप्तके ।
मन्दारके पुष्पावली इत्थं लूमाः प्रकल्पिता ॥ ९ ॥
तुम्बिनी पद्मपत्रे च लम्बिनी त्वेककोलजा ।
द्विकोला च भवेद्धेला शान्ता चैव त्रिकोलका ॥ १० ॥
कार्या मनोहराकारा चतुष्कोलै र्मनोरमा ।
गान्धारी पञ्चकोलैश्च हस्तिजिह्वैकतालुका ॥ ११ ॥
नागाङ्गा द्विगजतालु स्त्रितालुः स्यात्पुष्पावली ।
दंष्ट्रा विद्याधरोक्ता च ! तयो र्भवाद्य सूत्रतः ! ॥ १२ ॥

इति लूमाधिकारः ।

चतुरस्रं समं शुद्धं भागमेकं वेदाश्रकम् ।
तत्प्रमाणं चाष्टकोणं भिन्नसूत्रैः प्रभेदितम् ॥ १३ ॥
कक्षान्तरे गर्भसूत्रं व्यक्तदिग् विदिग् मध्यतः ।
क्षोभणा चार्धभागोक्ता अष्टलूमाः पद्मामभसा ॥ १४ ॥
मुकुली भागपादेन अधिकास्य (?) पद्माकृतिः ।
लूमान्तरे चान्तरस्थं कर्तव्यं पद्मकेशरम् ॥ १५ ॥
वत्तस्था चाष्टलूमानां परिधौ पद्मपत्रिका ।
नागप्रकोपम चे लूमाग्रे च गगा (का) रकम् ॥ १६ ॥

बाह्यकर्णं परित्यज्य पद्मकं नाम नामतः ।

इति पद्मम् ॥

अर्धभागं तस्य बाह्ये पङ्क्तौ स्याद् गजतालुका ॥ १७ ॥
अष्टलूमा च्छन्दभवा मुकुल्योऽष्टौ प्रकीर्तिताः ।
तुम्बिकाश्चतुर्विंशतिः..................॥ १८ ॥
निबन्धलूमाग्रपङ्क्तौ परिधौ पद्मपत्रिका ।
एवमादिगुणै र्युक्तं विकाशं नाम नामतः ॥ १९ ॥

इति विकाशम् ॥

गजतालुकयोः स्थानेऽर्धचन्द्रं कमलाष्टकम् ।
विदिक्षुदिक्षुसंस्थाने चाऽष्टपत्रं तु नामतः ॥ २० ॥

इत्यष्टपत्रम् ॥

अष्टकोलकमध्ये तु पद्मं भागं च लम्बयेत् ।
रम्भापुष्पोद्भवादग्रे चाऽष्टशृङ्गैस्तु छत्रकम् ॥ २१ ॥

इति छत्रम् ॥

मध्ये छत्र चाष्टलूमः शृङ्गान्ते चाऽष्टकर्णिकाः ।
गोकर्णसदृशाकाराः कर्णेऽश्वत्थदलाकृतिः ॥ २२ ॥

इति सुकर्णिकम् ॥

अष्टकोणे बाह्यशृङ्गे कर्णिकाश्च शृङ्गान्तरे ।
क्षोभयित्वा ततः शेषं नागबन्धैरनेकधा ॥ २३ ॥
कर्णस्थाने नागवीधि रष्टकोलानि बाह्यतः ।

इति नागवीधिः ॥

पुष्पकं नाम विख्यातं चतुःकोलाष्टकैः कृतम् ॥ २४ ॥

इति पुष्पकम् ॥

अष्टबाह्ये द्विरष्टौ च कुर्यात्पद्माकृतीस्तथा ।
भ्रमरावलीति तन्नाम दुर्लभं देवदानवैः ॥ २५ ॥

इति भ्रमरावली ॥

इति पद्मकच्छन्दोद्भवं वितानम्

चतुरस्रीकृते क्षेत्रे भुजकर्णविशोधिते ।
चतुर्भागाङ्कितं कृत्वा पादषोडशकान्वितम् ॥ २६ ॥
कर्णरेखात्रयं कार्यं विकर्णत्रयमेव च ।
मध्यं चतुष्पदं वृत्तं मूलनाभिसुसंस्थितम् ॥ २७ ॥
तथाऽर्धचन्द्राकृतयो द्वौ द्वौ भागौ चतुर्दिशम् ।
नाभ्यनाम्ना च विख्यातं वितानं विष्णुवल्लभम् ॥ २८ ॥

इति नाभ्यम् ॥

भागमेकं तु परिधौ वर्धयेत्तु समासतः ।
द्वौ द्वौ भागौ दिक्षुकोणं विदिग्मध्ये तदर्धकम् ॥ २९ ॥

इति नाभ्योद्भवम् ॥

पुनश्च वर्धयेद् भागं वेदाश्रमष्टभागकम् ।
विकर्णानां सर्वसूत्रं नाभ्यकर्णे व्यवस्थितम् ॥ ३० ॥

इति पञ्चनाभ्यश्रीवत्सम् ॥

अष्टभागं च विस्तारे आयामे सूर्यभागकम् ।
कुर्यान्मालाधरं प्राज्ञो वितानं दिव्यभूषणम् ॥ ३१ ॥
समतलं च विज्ञेयं कर्णरेखासमस्तकम् (समन्वितम्) ।
पूर्वापरयुक्तियोगे मध्यं कुर्याद् युगांशकैः ॥ ३२ ॥
नाभ्युद्भवाकारमध्यं कर्तव्यं सर्वशान्तिदम् ।
एकैकं पूर्वापरतः तद्रूपालङ्कृतं तथा ॥ ३३ ॥
याम्योत्तरे च पार्श्वाङ्के द्वे द्वे नाभ्ये उदाहृते ।
ऊर्ध्वे नाभ्यादिकं कुर्यात् समस्तं बाह्यतो मुखम् ॥ ३४ ॥
त्रिपङ्क्तौ ऊर्ध्वक्षिप्ताङ्के सप्तान्तं च सुलम्बितम् ।
एवंविधं प्रकर्तव्यं विष्णवे सर्वमण्डनम् ॥ ३५ ॥

इति सप्तनाभ्यमालाधरम् ॥

द्वादशांशं समं क्षेत्रं कर्णसूत्रात्मकं तथा ।
विकर्णं सूत्रयेन्नाभ्यं चतुर्भागं कलांशकम् ॥ ३६ ॥
नाभ्योद्भवाकारमध्यं कुर्यात् समतलं तथा ।
चतुःकर्णेषु चत्वारि चत्वार्मेवं चतुर्दिशम् ॥ ३७ ॥
तथा चैकं गर्भमध्ये कर्तव्यं दिव्यभूषणम ।
नवनाभ्योद्भवं ख्यातं तुम्बिका नव लम्बिताः ॥ ३८ ॥

इति नवनाभ्यं नन्दाक्षम् ॥

पूर्वभागादिका सङ्ख्या पूर्वमानप्रकल्पिता ।
सूत्रात्पञ्च विकर्णानि स्थिताग्यककतस्तथा ॥ ३९ ॥
तथापरमुखान्यष्टावूर्ध्वे वर्धं नाभ्याकृतीनि च ।
कर्णश्चतुर्ध्वा मुनियुक् ! सूर्योद्भवं तु कामदम् ॥ ४० ॥

इति त्रयोदशनाभ्यं सूर्योद्भवम् ॥

द्व्यष्टभागाङ्कितं क्षेत्रं कर्णे नाभ्यं युगांशकम् ।
बाह्ये च द्वादशोकानि श्रीवत्सं मध्यतस्तथा ॥ ४१ ॥

इति सप्तदशनाभ्यं गरुडम् ॥

छन्दं विंशतिधा भक्तं चतुर्मध्ये श्रीवत्सकम् ।
शेषाणि बाह्यपरिधौ कुर्यान्नाभ्यानिषोडश ॥ ४२ ॥

इति वैष्णवम् ॥

इति नाभ्यच्छन्दोद्भवं वितानाष्टकम् ॥

वेदभक्तं तु वेदाश्रमष्टशृङ्गं त्रिच्छत्रकम् ।
एकक शृङ्गमध्ये तु पृथक् कोलत्रयं क्षिपेत् ॥ ४३ ॥

लम्बिता ( ते ) पृष्ठदेशे तु कुर्याद्द् गजतालुके ।
कक्षैर्क कर्णिकायुक्तं कम्बलं नामतो भवेत् ॥ ४४ ॥
इति कम्बलम् ॥

तस्य बाह्ये पुनर्देय'दष्टशृङ्गाणि पङ्क्तितः ।
क्षिपेत् कोलत्रयं हस्ति-तालुकं कर्णिकाभवम् ॥ ४५ ॥
इति कम्बलोद्भवम् ॥

शङ्कुभि र्वेष्टयेत्सूत्रं वृत्तं कोले तु भ्रामयेत् ।
शङ्खावर्तक्रमशृङ्ग-हंसवृद्धिक्रमोदितः ॥ ४६ ॥
इति शङ्खावर्तम् ॥

कमलोद्भवस्य बाह्ये मेघमालाद्वयोद्भवः ।
गजतालुकाकृति च वलणैरष्टधाकुलम् ॥ ४७ ॥
इति मेघोदरम् ॥

तस्य मेघं परित्यज्य दद्यादष्टशृङ्गाकुलम् ।
षोडशादि त्रिकोणानि कर्णिका स्याच्छृङ्गान्तरे ॥ ४८ ॥
इति महापद्मम् ॥

तस्यैव तु त्रिकोणाग्रे पद्माकाराणि षोडश ।
तस्याग्रे लम्बितं कुर्यादष्टशृङ्गैः समाकुलम् ॥ ४९ ॥
इति महाकान्तम् ॥

त्रिरष्टौ पद्मकोलानि तत्कुर्याज्जिनसङ्ख्यया ।
हंसनामेति विख्यातं वितानं सर्वकामदम् ॥ ५० ॥
इति हंसम् ॥

पद्मकोणलम्बितयो र्मध्ये चाष्टशृङ्गाकुलम् ।
लम्बितं च तदूर्ध्वे तु हंसपक्षमितीरितम् ॥ ५१ ॥
इति हंसपक्षम् ॥
इतिसभामार्गोद्भवाष्टवितानानि ॥

अष्टकोणायते छन्दे वि(त्रि)च्छत्रं कर्णिकायुतम् ।
व्योमनामेति विख्यातं सूर्यलोकसमुद्भवम् ॥ ५२ ॥
इति व्योम ॥

द्विभागवृद्धिः परिधौ चतुःकर्णै व्योमाकृति ।
चत्वारि त्वेकभूम्यग्रे व्योमार्कं लम्बितं भवेत् ॥ ५३ ॥
इति व्योमार्कम् ॥

षट्कोणायते छन्दे त्रिच्छत्रं कर्णिकायुतम् ।
शृङ्गषड्भिश्च तद्रूपैः सप्तमन्दारकं विदुः ॥ ५४ ॥
इति सप्तमन्दारककिरणम् ॥

पूर्ववद् व्योमयुक्तौ तु द्वौ द्वौ भागौ च वर्धयेत् ।
भागद्वयेऽष्टव्योमानि एकं वै चाग्रलम्बितम् ॥ ५५ ॥
इति नवमन्दारकव्योमाक्षम् ॥

व्योमार्कस्य च बाह्ये तु अष्टौ मन्दारकाणि च ।
त्रयोदशाख्यमाख्यातं कार्यं मन्दारकं च तत् ॥ ५६ ॥

इति सर्वसुन्दरम् ॥

नवमन्दारकबाह्ये चाष्टमन्दारकं तथा ।
मेघच्छत्रं नाम सप्त-दशमन्दारकं हि तत् ॥ ५७ ॥

इति मेघच्छत्रम् ॥

सप्तमन्दारकबाह्ये पुनः कुर्यात्तु द्वादश ।
एकोनविंशतिकान्तं कर्तव्यं सर्वकामदम् ॥ ५८ ॥

इति महाबिम्बम् ॥

नवमन्दारकबाह्ये पुनर्दद्यात्तु षोडश ।
पञ्चविंशत्यन्तमेतत् कर्तव्यं शान्तिमिच्छता ॥ ५९ ॥

इति दीप्तम् ॥

एकैकस्य क्रमयोगे मिश्राण्युक्तानि वै क्रमात् ।
एवमादिगुणोपेतं सर्वं मन्दारकं विदुः ॥ ६० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां-वितानच्छन्दाधिकारो नाम द्विनवत्युत्तरशततमं सूत्रम् ॥

---

# (१९३) मण्डपोर्ध्वे संवरणा नाम त्रिनवत्युत्तरशततमं सूत्रम्

विश्वकर्मोवाच—

सम्वरणाः प्रवक्ष्यामि यथोक्ताः पूर्वमेव हि ।
तासां नामानुक्रमं च कथयामि समासतः ॥ १ ॥
पुष्पिका नन्दिनी चैव दशाक्षा देवसुन्दरी ।
कुलतिलका रम्या च उद्भिन्ना च नारायणी ॥ २ ॥
नलिका चम्पका चैव पद्माख्या च समुद्भवा ।
त्रिदशा देवगान्धारी रत्नगर्भा चूडामणिः ॥ ३ ॥
हेमकूटा चित्रकूटा हिमाख्या गन्धमादनी ।
मन्दरा मालिनीख्याता कैलासा रत्नसम्भवा ॥ ४ ॥
मेरुकूटोद्भवा ख्याताः सङ्ख्यया पञ्चविंशतिः ।
पृथगेकैक संस्थाने भक्ता भागैश्च सङ्ख्यया ॥ ५ ॥
आद्या वै पञ्चघण्टा च पुष्पिका नाम नामतः ।
तावच्चैव चतुर्वृद्धि यावदेकोत्तरं शतम् ॥ ६ ॥
पञ्चविंशतिराख्याता विभक्तिभागसङ्ख्यया ।
अष्टभागोद्भवा चाऽद्या पुष्पिका नाम नामतः ॥ ७ ॥
तदनन्तरं वृद्धिश्च चतुर्भाग यथोत्तरम् ।
चतुर्घण्टोद्भवा वृद्धिः सङ्ख्याभेदाश्च नामतः ॥ ८ ॥
चतुरश्रीकृते क्षेत्रे अष्टधा प्रतिभाजिते ।
उच्छ्रयः स्याच्चतुर्भागैः सर्वासामथार्धोदयः ॥ ९ ॥
मूलकूटोद्भवाः कर्णा द्विभागैः पृथग्विस्तराः ।
भागोदया विधातव्याः कूटा वै सर्वकामदाः ॥ १० ॥
........................................... ।
छाद्योद्गमास्तदर्धे च कर्णे कर्णे च घण्टिका ॥ ११ ॥
तद्रूपा भद्रकूटाश्च शृङ्गकूटास्तदर्धतः ।
सिंहस्थाना कर्णघण्टी बृहद्घण्टी तदूर्ध्वतः ॥ १२ ॥
संवरणा गर्भमूले रथिका द्व्यंशविस्तरा ।
भागैका चोदये कार्या भागा पक्षतवङ्किका ॥ १३ ॥
तदूर्ध्वे चोद्गमो भाग स्तवङ्कोर्ध्वे च कूटकः ।
सिंहं वै उद्गमोर्ध्वेतु उरोघण्टा भागोपरि ॥ १४ ॥
तदुपरि सिंहस्थानं भागैकं च विनिर्गतम् ।
तस्योपरि मूलघण्टा द्विभागा च भागोच्छ्रया ॥ १५ ॥
अष्टसिंहैः पञ्चघण्टैः कूटै रेवं द्विरष्टभिः ।
चतुर्भि मूलकूटश्च पुष्पिका नाम नामतः ॥ १६ ॥

तवङ्गकूटयोर्मध्ये तिलकं द्व्यंशविस्तरम् ।
भागोदयं विधातव्यं रूपसंघाटभूषितम् ॥ १७ ॥
तवङ्गरथिकाश्चैव द्विभागोदयिनः स्मृताः ।
अष्टचत्वारिंशत्कूटा मूलेस्युः पूर्ववत्तथा ॥ १८ ॥
नवघण्टा समायुक्ता स्याद्वै द्वादशसिंहतः ।
नन्दिनी नाम विख्याता कर्तव्या शान्तिमिच्छता ॥ १९ ॥
कार्या तिलकवृद्धिश्च यावत्क्षेत्रं वेदाश्रकम् ।
मण्डपदलनिष्कासै र्भक्तिभागैस्तु कल्पना ॥ २० ॥
बृहद्दलै र्भिन्नोद्भिन्ना मण्डपक्रमभागतः ।
आसां युक्ति र्विधातव्या मेरुकूटान्तकल्पना ॥ २१ ॥

इति सूत्रसन्तानगुणकिर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां-
मण्डपोर्ध्वे संवरणाधिकारो नाम त्रिनवत्युत्तरशततमं सूत्रम् ॥

## (१९४) पञ्चतोरण हिन्दोलका नाम चतुर्नवत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

तोरणाः पञ्चधा वत्स पञ्च हिन्दोलकाः स्मृताः ।
मठाः सप्तैव सम्प्रोक्ता रथा श्च नव सङ्ख्यया ॥ १ ॥
एकैकस्य यथान्यायं कथये तव साम्प्रतम ।
उत्तुङ्गं मालाधरं च विचित्रं चित्ररूपकम् ॥ २ ॥
मकरध्वजस्तथा प्रोक्तस्तोरणः पञ्चम स्तथा ।
एकैकस्य तथा भेदाः कथयिष्याम्यनुक्रमात् ॥ ३ ॥
पीठं प्रासादपीठस्य किञ्चिन्न्यूनं तु कारयेत् ।
पट्टं पट्टानुसारेण पट्टं दद्यात्तु तोरणे ॥ ४ ॥
पादोन द्व्यंशकं पीठं भागेनैकेन कुम्भिका ।
तदूर्ध्वे तु विधातव्यः स्तम्भः पञ्चांशकोदयः ॥ ५ ॥
भागार्धं भरणं चैव शिरः पादोनभागिकम् ।
पादोनद्व्यंशा गडवी शिरोच्छालस्तु पूर्ववत् ॥ ६ ॥
एकभागं तथा पट्टं तदूर्ध्वं खूं ( कू ) ट छाद्यकम ।
तिलकं स्तम्भगर्भे स्यान् मकारो दिक्षु चोन्नतः ( चतुर्दिक्षु समुन्नतम् ) ॥ ७
तिस्रस्तिस्रस्तथा कार्या इल्लिका वलणै र्युताः ।
सदाशिवं मध्यदेशे ब्रह्मविष्णू याम्योत्तरे ॥ ८ ॥
तदूर्ध्वे क्षणोद्भवा ! ( क्षोभणा ) कार्या इल्लिकाना मलङ्कृतिः ।
उत्तुंगं नाम विख्यातं तोरणं प्रथमं विदुः ॥ ९ ॥

इत्युत्तुङ्गः ॥

तद्रूपाकारादग्रे तु युग्माकारै र्द्वितीयकः ।
मालाधरस्तदा नाम तोरणश्च द्वितीयकः ॥ १० ॥

इति मालाधरः ॥

तस्योपरि पदानि ? ( च ) चतुष्काकार संस्थितम् ।
पूर्वापरयाम्योत्तरे इल्लिकाश्च चतुर्दिशाम् ॥ ११ ॥

इति विचित्रम् ॥

स्तम्भोभयपक्षौ तु मत्तावरणवेष्टितौ ।
चित्ररूपं तदा नाम कर्तव्यं तोरणं शुभम् ॥ १२ ॥

इति चित्ररूपकम्

षड्भिः स्तम्भैस्तु रूपाढ्यै र्मत्तावरणवेष्टितैः ।
मकरध्वजनामा तु तोरणस्त्रिपुरान्तके ॥ १३ ॥

इति मकरध्वजः ॥

इति पञ्चतोरणाः ॥

उत्तुङ्गस्य च संस्थाने दारुपट्टमधः शिरम् ।
महोत्सवं तु तन्नाम कार्यं हिन्दोलकं तथा ॥ १४ ॥
इति महोत्सवः ॥

महोत्सवो वसन्तश्च क्रीडामणिः श्रियोद्भवः ।
मकरपताकोद्भवो हिन्दोलः पञ्चमस्तथा ॥ १५ ॥
महोत्सवस्य संस्थाने अर्धे शीर्षे समुन्नतम् ।
पक्षस्तम्भौ च प्रत्येक मिल्लिका तिलकान्वितौ ॥ १६ ॥
एकस्मिन्ब्रह्मलोकश्च विष्णुलोको द्वितीयके ।
शिवलोकस्तदूर्ध्वे तु वसन्तो नाम नामतः ॥ १७ ॥
इति वसन्तः ॥

पक्षयो द्वे चतुष्के च कर्तव्ये तत्समोन्नते ।
क्रीडामणिस्तु नाम्ना वै मतावरणवेष्टितः ॥ १८ ॥
इति क्रीडामणिः ॥

द्विभूमिका चतुष्कयुक्ता मध्ये कुर्यात्त्रिभूमिकाम् ।
श्रियोद्भवस्तदा नाम कार्यो हिन्दोलकस्तथा ॥ १९ ॥
इति श्रियोद्भवः ॥

चतुरश्रीकृते क्षेत्रे पदमेकं विभाजितम् !
सीमासूत्रे निर्गता च सूर्यस्तम्भे द्विभूमिका ॥ २० ॥
तदूर्ध्वे च चतुः स्तम्भा भूमिकाभि रलङ्कृताः ।
पञ्चसंवरणाढ्यं च मध्ये हिन्दोलकं भवेत् ॥
मकरपताकोद्भवं कर्तव्यं च महेश्वरे ॥ २१ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां पञ्चतोरण हिन्दोलकाधिकारो नाम चतुर्नवत्युत्तरशततमं सूत्रम् ॥

## (१९५) सप्तमठ नवरथ निर्णयो नाम पञ्चनवत्युत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

मठाः सप्त प्रकर्तव्याः प्रासादराजकोपमाः ।
पृथगेकैक संस्थानं कथये भूमिकाक्रमम् ॥ १ ॥
मन्दरो हेमकूटाख्यो वर्धनः पृथिवीजयः ।
कैलासो रत्नकूटाख्यो मेरुसंज्ञोऽभिधानतः ॥ २ ॥
षड्दारुकाय वरकै र्युग्माकारैः सुसंस्थिताः ।
द्विक्षणा च पट्टशाला मत्तगजा याम्योत्तरे ॥ ३ ॥
ऊर्ध्वेऽपवरकयुक्ताः पट्टशाला विवर्जिताः ।
प्राकारकपिशीर्षाढ्याः प्रतोल्यग्र सुशोभिताः ॥ ४ ॥
इति मन्दरः ॥
मध्ये चतुष्की स्तम्भाढ्या अलिन्दैः परिवेष्टिता ।
द्विक्षणाग्र पट्टशाला मूलगृहोर्ध्वभूमिका ॥ ५ ॥
द्वितीयभूमस्तके तु कर्तव्या पुष्पकाकृतिः ।
हेमशीर्षन्तु तन्नाम कर्तव्यं तु तपस्विनाम् ॥ ६ ॥
इति हेमशीर्षः ।
याम्योत्तरे पट्टशाला षड्दारुकापवरकैः ।
वर्धमानस्तु तन्नाम कर्तव्यः शान्तिमिच्छता ॥ ७ ॥
इति वर्धमानः ॥
द्विभूमिका तथा ताभ्यां त्रिक्षणा पट्टशालिका ।
पृथ्वीजयश्च तन्नाम कर्तव्यस्तु मुनीन्द्रकः ॥ ८ ॥
इति पृथ्वीजयः ॥
द्विक्षणा पट्टशाला च कर्तव्या चैव दक्षिणैः ।
मत्तावरणयुक्तैक भूमिका कपिशीर्षकैः ॥ ९ ॥
याम्योत्तरेऽपवरकान् त्यक्त्वा न्यसेच्चतुः क्षणाम् ।
अग्रशालां प्रकुर्वीत कैलासं तु भवालयम् ॥ १० ॥
इति कैलासः ॥
तृतीयभूमस्तके तु कर्तव्या पुष्पकाकृतिः ।
रत्नशीर्षमितिख्यातं मुनीनां जितचेतसाम् ॥ ११ ॥
इति रत्नशीर्षः ॥
पञ्चभौमः प्रकर्तव्यः सुवेदी संस्थितो मठः ।
द्विभौमा च पट्टशाला पुष्पकं तु तदूर्ध्वतः ॥ १२ ॥
एवं तु मेरुसंज्ञश्च कर्तव्यस्तु मठाधिपः ।
तपस्तेजोभवो नित्यं नृपराष्ट्रस्य शान्तिदः ॥ १३ ॥
इति मेरुः ॥
इति सप्तमठाधिकारः ॥

विश्वकर्मोवाच—

रथांश्चैव प्रवक्ष्यामि प्रोक्तांश्च नवसङ्ख्यया ।
तदभिधानमाने च कथयामि विशेषतः ॥ १४ ॥
नन्दश्च नन्द्यावर्तश्च नन्दिघोषः पराजयः ।
पताकः पद्मको नाम पृथ्वीजयो महोद्भवः ॥ १५ ॥
श्रीमेरुश्च तथा ख्यातः कर्तव्यः सर्वकामदः ।
एवमाद्योक्तसङ्ख्याश्च रथाश्च नवकामदाः ॥ १६ ॥
दशाङ्गुलो भवेन्नाहो वृत्तव्यासप्रमाणतः ।
एकादश द्वादश च त्रयोदश चतुर्दश ॥ १७ ॥
पञ्चदश तथा मानं वृत्तव्याससमुद्भवम् ।
तत्समा दीर्घता ज्ञेया छिच्छत्राकारकोऽग्रतः ॥ १८ ॥
नाहे व्यासोद्भवारका स्तत्समो गण्डकोद्भवः ।
बाह्याभ्यन्तरतो गण्डं तुलिकाकारवृत्तकम् ॥ १९ ॥
गण्डोर्ध्वे च भवेत्पिण्डो वृत्तः (तः) पञ्च सुगण्डकैः ।
विंशत्यरकसंयुक्तं चक्रमानस्य लक्षणम् ॥ २० ॥
उभयोश्चक्रयोर्गर्भो ह्यङ्गुलैः पञ्चषष्टिभिः ॥
चतुरङ्गुलतो वृद्धि र्यावत् पञ्चप्रमाणकम् ॥ २१ ॥
चक्रार्धे भवेत् सेद्धं छटकारं पावतो दिवि ? ।
गुह्यमस्तकपीठाङ्कं पीठान्ते च समुन्नतम् ॥ २२ ॥
हस्तका गुह्य ग्राह्यं त्रिण्टि वाणेषु निश्चला ? ।
त्राणानां तत्समोपेता मुद्घट्टपारकोन्नता ? ॥ २३ ॥
हस्तका गुह्यग्राह्यादि धुरिकाश्चैव वेष्टिताः ।
प्रवेशे चतुरश्राक्षा शेषाणां च वृत्तोद्भवः ॥ २४ ॥
अर्गली च डिम्बला च गुत्यके चक्रबाह्यतः ।
धुरिका चार्गला कार्या आयसैः सुदृढोत्तमा ॥ २५ ॥
ऊर्ध्वे ऊर्ध्वे च शीर्षाणामग्रवृत्ता च कावरी ।
टंकापाणि पूर्वापरे उन्नता मध्यतस्तुला ॥ २६ ॥
छन्दकं (वटिकं) फलकः कुर्यात्तुलारक्षाभिकीलिता ।
पंशुलीकाग्रपादं च तस्याग्रे कर्कटीत्रयम् ॥ २७ ॥
मकरानोन्नतं कार्यं धरं रथाग्रशोभनम् ।
तस्योर्ध्वे मायूरपदं ! तत्रान्ते स्यात्तृतीयकम् ॥ २८ ॥
अपरोभयचक्रान्ते चाधमांशे हलाग्रकम् ।
चक्रत्रयोद्भवं कार्यवाहिनी स्याद् दृढात्मका ॥ २९ ॥
तस्यार्धे तध्वानैश्च ? छन्दकं (वटिकं) सुदृढात्मकम् ।
तस्योर्ध्वे च रथः कार्यः सर्वलक्षण संयुतः ॥ ३० ॥

नन्दो वै नन्दतः प्रोक्तो नन्द्यावर्तस्तु शालिकः ।
नन्दिघोषो मन्दराभः सतिलकः पराजयः ॥ ३१ ॥
पताकः श्री(वृक्ष)वत्सश्च पद्मको हेमशीर्षकः ।
पृथ्वीजयश्च कैलास इन्द्रनीलो महोद्भवः ॥ ३२ ॥
श्रीनिरुद्भवाकारो नाम्ना वै रत्नशीर्षकः ।
इत्युक्ता वै नवरथाः प्रयुक्ता वास्तुवेदिभिः ॥ ३३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां सप्तमठनवरथाधिकारो नाम पञ्चनवत्युत्तरशततमं सूत्रम् ॥

— —

## (१९६) ब्रह्मविष्णुसंवादे लिङ्गाधिकारो नाम षण्णवत्युत्तरशततमं सूत्रम्॥

---

विश्वकर्मोवाच–

पुरा चैकार्णवे घोरे नष्टे स्थावरजङ्गमे ।
समुद्भूतौ तदादेवौ ब्रह्मा विष्णु स्तथैव च ॥ १ ॥
तदुद्भवा चाऽऽद्यसृष्टि र्जगत्स्थावरजङ्गम् ।
कल्पान्ते च तयो र्वादो रौद्रे च दिवसे स्थिते ॥ २ ॥
तयोर्विवदतोर्मध्ये लिङ्गं तेजोमयं महत् ।
उद्भिन्नं धरणीं भित्त्वा सप्तलोकमयं शुभं ॥ ३ ॥
सप्तलोकोर्ध्वतो मेरुः प्रकारस्फुटितोदितः ।
त्रिदशाकुलसभायां पीठिकाग्रसमुद्भवः ॥ ४ ॥
वाचाऽशरीरिणी प्राह दीयतां मे तथोत्तरः ।
अस्य लिङ्गस्य को ह्यन्तो मध्ये चाऽग्रस्तथोर्ध्वतः ॥ ५ ॥
स्रष्ट्रा प्रोक्तं च भगवन् नाहं द्रष्टा तव प्रभुः ।
श्रुत्वा वाक्यं ब्रह्मणस्तु किञ्चिदाकुपिताननः ॥ ६ ॥
ब्रह्मविष्णूद्भवस्त्वेवं संवादोऽभूत्परस्परम् ।
अहं द्रक्ष्याम्यस्य चान्तं वदन्ता च परस्परम् ॥ ७ ॥
संवादो भयसम्पातमवलोक्य परस्परम् ।
द्वयो र्मध्येऽभवल्लिङ्गं सुविस्तीर्ण महोद्भवम् ॥ ८ ॥
योजनायुतविस्तीर्ण मुभयोःसन्मुखेऽभवत् ।
शम्भुस्तावदद्वाक्यं श्रूयतां वचनं मम ॥ ९ ॥
ब्रह्मा चोर्ध्वे विष्णुरधः अन्तं च बृहदात्मनः ।
आगतौ च पुनस्तत्र लज्जयाधोमुखौ स्थितौ ।
पुनरेव ततो वाणी लिङ्गमध्याद्विनिःसृता ॥ ९ ॥
नादयन्ती जगत्सर्वं मेघगम्भीरनिस्वना ।
न त्वं श्रेष्ठोऽसि वै ब्रह्मन् न च विष्णो त्वमीश्वरः ॥ १० ॥
अहं ज्येष्ठ स्तथेशश्च युवयोः प्रभुरेव च ।
भवद्भ्यां मम चैतस्य प्रमाणमुपलक्ष्यताम् ॥ ११ ॥
यश्चाऽस्य वेद वै चान्तं स श्रेष्ठो युवयो र्भवेत् ।
इत्युक्तौ तौ विलक्ष्यौ तु विप्लुतौ च दिदृक्षया ॥ १२ ॥
लिङ्गार्चनपरौ भूत्वा द्रष्टुकामौ व्यवस्थितौ ।
तत्प्रमाणपरौ भूत्वा तन्निष्ठौ तत्परायणौ ॥ १३ ॥
दिव्ये तु ( ऽब्दे ) द्विशते पूर्णे ताभ्यां मध्येऽर्चितो हरः ।
प्रत्यक्षतां गतो देवः परितुष्टेन चेतसा ॥ १४ ॥
त्रिशूलपाणि र्वरदश्चार्धकृतशेखरः ।
त्रिलोचनो वृषारूढो नागयज्ञोपवीतकः ॥ १५ ॥

तुष्टोऽहं युवयो भक्तो वरद: समुपस्थित: ।
ब्रह्मन् विष्णो भवद्भ्याम् तत् प्रयच्छामि न संशय: ॥ १६
योजनायुतविस्तीर्णमुच्छ्रितं च समन्तत: ।
तन्मध्यतोऽवदद्वाक्यमुभौ वै श्रूयतामिति ॥ १७ ॥
ब्रह्मा चोऽर्ध्वमधो विष्णुरन्तं च बृहदात्मन: ।
तद्शब्दोद्भवाज्ज्ञानौ गतावूर्ध्वमधस्तदा ॥ १८ ॥
अधो धूमाकुलं दृष्ट्वा ततो विष्णुर्निवर्त्तित: ।
ब्रह्मोर्ध्वे तु यदा याति केतकी सन्मुखेऽभवत् ॥ १९ ॥

ब्रह्मोवाच—

भो भो गन्धमादनाक्षि कुत: स्थानात्त्वमागता ।
लिङ्गान्तं द्रष्टुकामोऽहं केतकि तत्र का कथा ॥ २० ॥

केतक्युवाच—

नैकयुगसहस्राणि आयाता लिङ्गमस्तकात् ।
तस्य व साक्ष्यमहं ब्रह्मन् लिङ्गान्ताद्विनिवर्तिता ॥ २१ ॥
गन्धमादनेति वाक्य ? ब्रह्मण: स्तुतिनन्दिता ।
त्वया (यि) समाहितात्मा च तव स्नेहान्निवर्तिता ॥ २२ ॥
परमेष्ठी स केतक्या निवृत्त: क्ष्मातले तदा ।
लिङ्गाग्रे च समुत्थाय केतकी ब्रह्मणो हृदि ॥ २३ ॥
किमर्थमागतौ दृष्टं लिङ्गान्तमधऊर्ध्वत: ।
एवं वचोऽवदल्लिङ्गं ब्रूतं हरि पितामहौ ॥ २४ ॥

विष्णुरुवाच—

नाऽन्तो दृष्ट: श्रुतो वाऽपि न वा वेदागमादित: ।
धूमाकुलोऽवदद्विष्णु र्विशेषान्न मयेक्षितम् ॥ २५ ॥
मया दृष्टो नैव चाऽन्तो नैव चापि सुरासुरै: ।
इत्युक्तानन्तरं चाथ वचस्तु परमेष्ठिन: ॥ २६ ॥

ब्रह्मोवाच—

अवदत् पञ्चमशिरो दृष्टोऽन्तो व्योमत: परम् ।
अमृतं जल्पितं चेन्मे साक्षिणी गन्धमादनी ॥ २७ ॥
ब्रूहि मेत्वं सत्यात्मिके पुष्पराजादिजातिके ।
मया ह्यन्त: परोदृष्ट: लिङ्गस्य व्योमत: परम् ॥ २८ ॥
क: साक्षी भवत: कार्ये ईश्वरो लिङ्गमब्रवीत् ।
ज्ञानलिङ्गस्याऽन्तिके च समानीता पुष्पावती ॥ २९ ॥

ईश्वर उवाच—

भो भो गन्धमादनाक्षि सत्यं वद पुष्पावती ।
नाऽनृतं सत्यमेवत्वमाख्याहि श्वेतकर्णिके ॥ ३० ॥
तव वंशो नाऽनृतं च पुष्पदीर्घाग्रके खलु ।
वक्रकीट (कण्) कुलाकीर्णे वक्राग्रे ब्रूहि शाश्वतम् ॥ ३१ ॥

केतक्युवाच—

लिङ्गमस्तकतश्चाऽहमानीता परमेष्ठिना ।
मम सत्यमिदं वाक्यं नाऽनृतं परमेश्वर ॥ ३२ ॥
अथेश्वरेणाऽनुवाक्यं शापिता गन्धमादनी ।
परोपकारहेतुत्वे पूजानर्हा भविष्यति ॥ ३३ ॥
पञ्चमं तु शिरश्छिन्नं ब्रह्मणोऽनृतवादिनः ।
अनामिकाङ्गुष्ठकोटान्निहतं च तदाननम् ॥ ३४ ॥
त्रुटितं चेश्वरकरे लग्नं तद् ब्रह्मणः शिरः ।
अथ स्मृतं स्कन्दवाक्यं हन्याऽऽसन्निम नानृतम् ॥ ३५ ॥
आहूतश्च तथा नीतो मयूरस्थः षडाननः ।
प्रणतश्च तदा देवः स्कन्देन परमेश्वरः ॥ ३६ ॥

ईश्वर उवाच—

भो पुत्र ते महद् ज्ञानं सत्यवादी षडानन ।
करावलोकमात्रेण हित्यं भाष्यं तु कार्त्तिक ॥ ३७ ॥
वाक्यं स्कन्दपुराणस्य नाऽसत्यं तु षडानन ।
वरं ब्रूहि च दास्यामि त्यक्तोऽहं तव कार्तिक ॥ ३८ ॥
स चाऽऽगमो गतो दैत्यै गृहीत्वा क्षिप्त आर्णवे ।
तदा त्यक्तं मया देव न कृतं ग्रन्थशासनम् । ३९ ॥
तदाऽभवदीश्वराज्ञा आश्वानय जलाधिपम् ।
वरुणस्त्वाऽऽगतश्चाऽर्घ्यमीशायाऽदाच्च भक्तितः ॥ ४० ॥
सदामृतं ! वरुणेन्द्र ममाज्ञातस्त्वमाशु वै ।
त्वयि क्षिप्तं यथा ग्रन्थमर्पयस्वाऽन्यतोऽपि वा ॥ ४१ ॥
मैनाकः पर्वतो नामार्णवोपकण्ठवासवात् ।
ग्रन्थ स्तस्या करे क्षिप्तो रक्षणीयो भयातुरः ॥ ४२ ॥
तदानीय स्कन्दागमं पुराणलक्षणान्वितम् ।
समर्पयन्महादेवे भक्तिमांस्तु जलाधिपः ।
तुष्टोऽहं चाम्बुराजेन्द्र ग्रन्थो भक्त्या नगे धृतः ॥ ४३ ॥
वरं ब्रूहि च दास्यामि इच्छितं च मनःस्थितम् ।
नासत्यं नान्यथा चैव ददामि यत्त्वयेप्सितम् ॥ ४४ ॥
मत्सन्मुखे तथा चैव जल्पनीयं जलाधिप ।
अस्मद्भक्त्या यदा तुष्टो दास्यसि त्वमभीप्सितम् ॥ ४५ ॥
अस्माकमभिधानेन चेदं शास्त्रं महीतले ।
तथा चाऽस्तु शिवज्ञानं ( वाज्ञातः ) यावत्कल्पान्तमेव च ॥ ४६ ॥
स्कन्दपुराणोद्भवं स्यात्सामुद्रमभिधानतः ।
सर्वलक्षणमत्रोक्तं पुरुषादेस्तथैव च ॥ ४७ ॥
अश्वगजेन्द्रमहिष गोवृषादिकजन्मनाम् ।
आयुर्लक्षणकोपेतं मृत्य्वादि कालवञ्चना ॥ ४८ ॥

तीर्थयात्रादि नियमो व्रतानां सारमुद्धृतम् ।
कापालिकोद्भवं वेषं ? निष्कासदर्शनोद्भवम् ? ॥ ४९ ॥
अष्टादशैव भेदाश्च महाव्रतसमुद्भवाः ।
वाराणस्यां गङ्गातीरे कपर्दी कनकेश्वरः ॥ ५० ॥
महेशो मुक्तवान् ब्रह्मकपालं तत्र पाणितः ।
तत्रस्थ स्तु महादेवः कपालेश्वरनामकः ॥ ५१ ॥
तत्र स्नातो नरो यस्तु ज्ञानादज्ञानतोऽपि वा ।
समुक्तो नाऽत्र सन्देहो ब्रह्महत्यादिपातकैः ।
लभते धर्मार्थकाममोक्षांश्च मनसेप्सितान् ॥ ५२ ॥
तत्र काले समुद्भूत लिङ्गाकारस्वरूपिणः ।
ब्रह्मविष्ण्वादिका देवा भक्त्या वै पूजने रताः ॥ ५३ ॥
देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ।
सर्वे ते भक्तिमन्तश्च लिङ्गरूपैरलङ्कृताः ॥ ५४ ॥
न लिङ्गाच्चापरो देवो धर्मकामार्थमोक्षदः ।
इदं चैव जगत् सर्वं लिङ्गरूपे लयं गतम् ॥ ५५ ॥
लयंगताश्च कल्पान्ते लिङ्गे जीवानुरूपकाः ।
उद्भूतं च पुनर्लिङ्गाज्जगत्स्थावरजङ्गमम् ॥ ५६ ॥
भूयश्चकोद्भवा तु राज्ञा मुद्राभिधानवर्तकाः ? ।
यत्रोत्पन्नं सृष्टिरूपं तद्रूपाः सृष्टिकाधिपाः ॥ ५७ ॥
सयोनिलिङ्गसम्भूताः सर्वे जीवानुरूपकाः ।
सृष्ट्यधिपो महादेवो नाऽन्ये चैव दिवौकसः ॥ ५८ ॥
यदाकारो महादेव स्तद्रूपः सृष्टिसम्भवः ।
ज्ञानचक्षुर्विना वेद नाऽन्यदेवस्य भक्तकः ॥ ५९ ॥
लिङ्गसृष्ट्युद्भवं सर्वं लिङ्गरूपाश्च देवताः ।
तद्योनिमात्रसम्युक्तं धर्मकामार्थमोक्षदम् ॥ ६० ॥
लिङ्गोद्भूताः सर्वदेवा न कस्मालिङ्गसम्भवः ।
सृष्ट्युद्भवः सयोनिश्च शिवशक्त्या चराचरम् ॥ ६१ ॥
शिवलिङ्गोद्भवा शक्तिः शक्तिमांश्च शिवस्तथा ।
उभयोरपि संयोगा च्छिवशक्त्योश्चराचरम् ॥ ६२ ॥
शिवशक्तितश्च भवो देवतानामनुक्रमात् ।
तदुद्भवादिकं नैव विना लिङ्गं सृष्ट्यधिपम् ? ॥ ६३ ॥
आकाशं लिङ्गमित्याहुः क्षितिः स्याज्जलहारिका ।
तन्मध्ये सर्वभूतात्मलयनाल्लिङ्गमुच्यते ॥ ६४ ॥
उच्छ्रयो लिङ्गमित्याहुः पृथिवी तस्य पीठिका ।
उमा तु पीठिका ज्ञेया शङ्करो लिङ्गमुच्यते ॥ ६५ ॥

शङ्करस्य तु ये भक्ता योनिलिङ्गार्चने रताः ।
धर्मार्थकाममोक्षांस्ते प्राप्नुवन्ति च शाश्वतम् ॥ ६६ ॥
स्वेत कुण्डलिनं दृष्ट्वा संयग्रहरविमुदा ? ।
द्वितीयमिन्द्रमिन्द्रस्य ददोरक्ष कुण्डलिनं वसम् ? ६७ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां ब्रह्मविष्णुसंवादे लिङ्गाधिकारो नाम षण्णवत्युत्तरशततमं सूत्रम् ॥

# (१९७) लिङ्गार्चनविधिर्नाम सप्तनवत्युत्तरशततमं सूत्रम् ॥

विश्वकर्मोवाच—

पुरा चाऽऽराधितं लिङ्गं धर्मभक्तिरतैस्तथा ।
लिङ्गं भद्र स्वरूपे च सम्प्राप्तः परमां गतिम् ॥ १ ॥
शक्रेणाराधितो देवो लिङ्गं वज्रमयं स्मृतम् ।
सुरराजपदं प्राप्तं स्वभाशक्ति युतात्मभिः ? ॥ २ ॥
धनदाराधितो देवो लिङ्गं स्वर्णमयं तथा ।
सम्प्राप्तो धनदत्वं च स्वयोनौ नाऽत्र संशयः ॥ ३ ॥
विश्वेदेवाराधितो वै लिङ्गं रूप्यमयं स्मृतम् ।
प्राप्तः स विश्वेदेवत्वं स्वयोनौ नाऽत्र संशयः ॥ ४ ॥
मारुताराधितो देवो लिङ्गं वै पित्तलात्मकम् ।
पवनत्वं स्म प्राप्नोति स्वयोनौ नाऽत्र संशयः ॥ ५ ॥
आराधितोऽष्ट वसुभि लिङ्गं कांस्यमयं स्मृतम् ।
वसुत्वाद्य पदं प्राप्तं स्वयोनौ नाऽत्र संशयः ॥ ६ ॥
मरीच्यादिगणै देवः स्वल्प ? लिङ्गं पुरार्चितम् ।
शतार्धं विना त्वेकैश्च ? प्राप्ता देवपदं तथा ॥ ७ ॥
तथा व्यन्तरजै देवो लिङ्गं वै पित्तलात्मकम् ।
आराधितं ततस्ते वै मुक्तिं प्राप्ता स्वयोनितः ॥ ८ ॥
शिशकोद्भवलिङ्गं तु पैशाचै रर्चितं पुरा ।
मुक्तिं प्राप्ता स्तेन ते च स्वयोने र्नाऽत्र संशयः ॥ ९ ॥
वासुक्याद्यैश्च नागैश्च लिङ्गं तद्व्यमनोर्चितम् ? ।
ततः पातालराज्यं तु सम्प्राप्ताः कुलपन्नगाः ॥ १० ॥
दीप्तं वह्न्यर्चितं लिङ्गं ज्योतिर्मण्डलमध्यगम् ।
हुताशनः पदं प्राप्तः सर्वदेवमुखं तथा ॥ ११ ॥
सूर्यकान्तमयं लिङ्गमादित्येन पुरार्चितम् ।
सूर्यत्वं च पदं प्राप्तं स्वयोनौ नाऽत्र संशयः ॥ १२ ॥
चन्द्रकान्तमयं लिङ्गं सोमेन च पुरार्चितम् ।
प्राप्तं नक्षत्राधिपत्यं स्वयोनौ नाऽत्र संशयः ॥ १३ ॥
प्रवालकमयं लिङ्गं पुरा मङ्गलपूजितम् ।
बुधेनाराधितं लिङ्ग मिन्द्रनीलमयं पुरा ॥ १४ ॥
पुष्परागमयं लिङ्गं वाचस्पतिसुपूजितम् ।
शुक्रेण वै शङ्खमयं शनिना कृष्णनीलजम् ॥ १५ ॥
केतुना वैडूर्यमयं गोमेधीयं च राहुणा ।
आर्हतैः पूजितं लिङ्गं शुद्धस्फटिकजं तथा ॥ १६ ॥
महालिङ्गं हैमवतं ब्रह्मणा स्वयमर्चितम् ।
हेमकूटे विरूपाक्षं तज्जनार्दनपूजितम् ॥ १७ ॥

देवीभिश्च समस्ताभि रष्टलोहमयं तथा ।
भैरवैः क्षेत्रपालैश्च त्रिजयात्मकमर्चितम् ? ॥ १८ ॥
योगिनीभि र्दिव्यलिङ्गं ब्रह्मरन्ध्रे च ध्यानजम् ।
शैलजं पार्थिवं लिङ्गं धातुजं रत्नजं तथा ॥ १९ ॥
धर्मार्थकाममोक्षं च प्राप्नोति मनसि स्थितम् ।
लिङ्गं देवो रत्नजं च भुक्तिकामै र्नरेश्वरैः ।
धातुदं शान्तिदं पूज्यं राजभि र्मुक्तिकीर्तिदम् ॥ २० ॥
शैलजं च प्रवक्ष्यामि ह्यष्टवर्णमुदा हृतम् ।
श्वेतं च पद्मवर्णं च कुमुदाभं च मुद्गभम् ॥ २१ ॥
पाण्डुरं माक्षिकनिभं कपोताभं च भृङ्गभम् ।
श्वेतै र्विप्रा प्रवर्द्धन्ते राजानः पद्मवर्णकैः ॥ २२ ॥
वैश्याः कुमुदवर्णैश्च मुद्गाभैः शूद्रजातयः ।
शेषवर्णैस्तथा चैव सामान्याननुलक्षयेत् ॥ २३ ॥
आरोग्यं पाण्डुवर्णे स्यान् माक्षिके विजयः स्मृतः ।
कपोते चार्थवृद्धिश्च भृङ्गाभे सुप्रजाः स्त्रियः ॥ २४ ॥
पृथ्वीमयं पार्थिवं स्याद् द्विधा तच्चैव भेदतः ।
पक्वापक्व रेणुकाभिः सुखलिङ्गं प्रकीर्तितम् ॥ २५ ॥
सौभाग्यदं कुङ्कुमाढ्यैः कर्पूरैः कामदं तथा ।
कस्तूरिकाभवं लिङ्गं भुक्तिकामादिभोगदम् ॥ २६ ॥
मातुलिङ्गभवं पूज्यं भुक्तिकामैश्च राज्यदम् ।
मध्यगं करवीराणां पूजितं श्रीपदं भवेत् ॥ २७ ॥
सन्तानवृद्धिदं पूज्यं लिङ्गं सर्वफलोद्भवम् ।
यद्यत्फलोद्भवं लिङ्गं तैः फलै र्नोपजीवयेत् ॥ २८ ॥
चित्रेऽथवागमेवाऽपि नियमार्थे सुपूजितम् ।
तथाक्षतमयं पूज्यं मन्त्रलिङ्गं च पूजयेत् ॥ २९ ॥
उक्त्वा षडक्षरं मन्त्रं पुण्यं लिङ्गस्य दर्शनम् ।
पञ्चवारं समुच्चार्य लिङ्गवक्त्रादिदर्शनम् ॥ ३० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां लिङ्गार्चन विध्यधिकारो नाम सप्तनवत्युत्तरशततमं सूत्रम् ॥

---

## (१९८) रत्नज लिङ्गप्रमाणमष्टनवत्युत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच-

अत ऊर्ध्वं प्रवक्ष्यामि रत्नजादिकलक्षणम् ।
रत्नजं धातुजं चैव लोहाष्टकविनिर्मितम् ॥ १ ॥
तथाऽनुक्रमसूत्रं च प्रमाणं यस्य यादृशम् ।
यथाक्रमं ... तव्यं यथापङ्क्ति ? (प्राक्तं) पृथक् पृथक् ॥ २ ॥
मुद्गप्रमाणाद्योद्भव रुद्रभागेति सङ्ख्यया ? ।
येषां प्रविष्टमानाय ब्रह्माद्ये वैष्णवान्तिकम् ? ॥ ३ ॥
भद्रभागोद्भवा सङ्ख्या अङ्गुले वर्धयेत्त्रयम् ? ।
वललिङ्गस्य विधाख्या च ब्रह्मरुद्रां च कैतवम् ? ॥ ४ ॥
एकाद्यङ्गुलतो वृद्धिं नवान्तामुपलक्षयेत् ।
तदभिधानानुक्रमं कथयाम्यपराजित ॥ ५ ॥
शिवं शर्वं जयं लिङ्गं सुनाभं च जयावहम् ।
विजयं भासुरं मोक्षं सर्वज्ञं नवमं मतम् ॥ ६ ॥
अभिधानप्रमाणानि लिङ्गान्युक्तानि वै नव ।
अङ्गुलाङ्गुलान्तरतः लिङ्गानां वर्धते क्रमः ॥ ७ ॥
एकाङ्गुलोद्भवं मध्ये लिङ्गान्यष्टौ यथाक्रमम् ।
मुद्गप्रमाणान्यष्टौ च शास्त्रदृष्ट्या ततः क्रमात् ॥ ८ ॥
मनोहरं श्रीमुखाख्यं रुद्रतेजो महोत्सवम् ।
आनन्दं च सुवक्त्राख्यं श्रीपुञ्जं नन्दिवर्धनम् ॥ ९ ॥
इति मुद्गप्रमाणानि लिङ्गान्युक्तानि चाऽष्ट वै ।
अङ्गुलक्रमवृद्ध्याऽष्टावन्यानि कथितानि च ॥ १० ॥
द्वासप्ततिश्च लिङ्गानां सङ्ख्या चैव प्रमाणतः ।
अष्टाङ्गुलोद्भवान्तं च पुन र्नामानि पूर्ववत् ॥ ११ ॥
रत्नजानां तु नामानि कथितान्यपराजित ।
सर्वरत्नोद्भवं लिङ्गं कर्तव्यं सर्वकामदम् ॥ १२ ॥
वज्रवैडूर्यार्क कान्ति पुष्परागेन्दुकान्तिभिः ।
मणि मौक्तिकस्फाटिक राजावर्तप्रवालकैः ॥ १३ ॥
मरकतोत्पलनीलैः कर्कतै पुलकैस्तथा ।
महानीलैः सुनीलैश्च गिरिवज्रैश्च पीलुतैः ॥ १४ ॥
गोमेदैश्च शिखादीपै रितिरत्नाभिधानकैः ।
शङ्खाद्यै गजदन्तैश्च लिङ्गं कुर्याच्च कामदम् ॥ १५ ॥
सयोनिमानसंयुक्तं सर्वकामफलप्रदम् ।
विना योनिं न कर्तव्यं धातुजं रत्नजं तथा ॥ १६ ॥

धर्मकाम्यं चार्थकाम्यं तथेच्छामोक्षकाम्यके ।
चतुर्विधानि काम्यानि लिङ्गयोन्यादिभेदतः ॥ १७ ॥
यादृग्वर्णं भवेल्लिङ्गं तादृग्वर्णं च पीठकम् ।
धर्मकाम्यं च तद्यद्वै धर्मार्थं स्यात् सुपूजितम् ॥ १८ ॥
नीलमर्कतजं लिङ्गं पीठिका श्वेतवर्णिका ।
अर्थकाम्यं तु तन्नाम पूजितं चार्थहेतवे ॥ १९ ॥
श्वेतरक्ते यदा वर्णे इच्छाकाम्यं च नामतः ।
इच्छासिद्धिं स प्राप्नोति यस्तल्लिङ्गार्चने रतः ॥ २० ॥
धातुरत्नै विवर्णा च श्वेतपीतादित स्तथा ।
मोक्ष्यकाम्यं तु तत्प्रोक्तं मुक्तिमार्गप्रदायकम् ॥ २१ ॥
धमार्थकाममोक्षार्थं लिङ्गार्चा स्याच्चतुर्विधा ।
मूलागमे च निर्दिष्टं शास्त्रैरुक्तमेव च ॥ २२ ॥
सर्वरत्नजलिङ्गानि पाद्यस्नानैकसूत्रतः ? ।
ब्रह्मविष्णुरुद्रांशकैः क्रमाल्लिङ्गं त्रिधोदितम् ॥ २३ ॥
विना ब्रह्मविष्ण्वंशाभ्यां बाणं स्याद्रत्नधातुजम् ।
मुद्गाकार मिदं चैकरुद्रांशं च सुशोभनम् ॥ २४ ॥
लिङ्गमानेन पीठं स्यात् पीठमानेन रुद्रकः ।
भ्रामयेत् परिधौ वृत्तं रुद्रांशपङ्क्तिपार्श्वतः ॥ २५ ॥
तत्तुल्यमग्रमानं च कन्दव्यासोर्ध्वमग्रतः ? ।
समेखलाः प्रकर्तव्याः सव्रणा मार्गमूर्छिताः ? ॥ २६ ॥
एकादिहस्तप्रासादाः पञ्चाशद्धस्तकावधि ।
रत्नलिङ्गेषु कर्तव्या नन्यूनाधिकदूषणम् ॥ २७ ॥
रत्नधातुजलिङ्गानां बाणादेश्च स्वयंभुवः ।
निलयं न्यूनमधिकं कुर्याद्वै सर्वकामदम् ॥ २८ ॥
द्रव्यानुरूपतः कुर्यान्निलयं स्वेच्छया नरः ।
नागरा द्राविडाश्चैव वराटा मिश्रकास्तथा ॥ २९ ॥
लतिनाश्चैव सान्धारा विमाना भूमिजास्तथा ।
देशजातिकुलस्थानवर्णभेदानुरूपतः ॥ ३० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
रत्नजलिङ्गप्रमाणाधिकारो नामाष्टनवत्युत्तरशततमं सूत्रम् ॥

---

## (१९९) अष्टलोहमयलिङ्गनिर्णयो नाम नवनवत्युत्तरशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

लोहादिधातुजातानि वच्मि लिङ्गानि सम्प्रति ।
अष्टाङ्गुलं भवेदाद्यं त्रिहस्तान्तं च तद्भवेत् ॥ १ ॥
अष्टाङ्गुलादयो लिङ्गा वृद्धिरष्टाङ्गुलक्रमात् ।
इत्थं तु नवलिङ्गानि कनिष्ठं त्रिकरोच्छ्रितम् ॥ २ ॥
नवलिङ्गाभिधानानि कथयिष्याम्यनुक्रमात् ।
श्रियोद्भवं महाकान्तं प्रोद्यन्तं सम्भवं तथा ॥ ३ ॥
सोमराजं महाराजं राजलिङ्गं महान्तकम् ।
वृषध्वजं तथाख्यातं लिङ्गं च नवमं भवेत् ॥ ४ ॥
लिङ्गाष्टक निबन्धे तु धातुलिङ्गाङ्गुलान्तरे ? ।
कुर्यादाद्यं चाष्टकोर्ध्वे तथैकैकाङ्गुलान्तरे ॥ ५ ॥
अष्टाभिरष्टकैरेवं चतुःषष्टिश्च सङ्ख्यया ।
एकैकाङ्गुलमध्ये तु लिङ्गाष्टकमुदाहृतम् ॥ ६ ॥
शिवं शर्वं जयं चैव सुनाभं च जयावहम् ।
विजयं भासुरं साक्षमष्टलिङ्गाङ्गुलान्तरे ॥ ७ ॥
अष्टकोर्ध्वे पुनस्त्वेवमभिधानान्यष्टावधि ।
पुनश्चाङ्गुलमध्येऽष्टौ लिङ्गानि मुद्गमानतः ॥ ८ ॥
मनोहरं श्रीमुखाख्यं रुद्रतेजो महोत्सवम् ।
आनन्दं च सुवक्त्राख्यं श्रीपुञ्जम् नन्दिवर्द्धनम् ॥ ९ ॥
इत्युक्तान्यष्टलिङ्गानि मुद्गतुल्यानि मानतः ।
अङ्गुलाङ्गुलतो वृद्धि र्लिङ्गानां कथिता क्रमात् ॥ १० ॥
चतुः षष्टिश्च लिङ्गानिभूयोऽष्टाङ्गुलमध्यतः ।
इत्थं लिङ्गानि द्वादशो-त्तर पञ्चशतानि च ॥ ११ ॥
अष्टलोहमयानां च लिङ्गानां तु प्रमाणकम् ।
सयोनिमानसंयुक्ते सर्वकामार्थ साधकम् ॥ १२ ॥
हैमं रौप्यं तथा ताम्रं कांस्यं च पित्तलं तथा ।
त्रपु नागः सप्तमः स्यात्कृष्ण लोहं तथाऽष्टमम् ॥ १३ ॥
इति चाष्टौ लोहकाद्या धातवः परिकीर्तिताः ।
कामदानि च कार्याणि अष्टलोहमयानि च ॥ १४ ॥
लोहमिश्रं च कर्तव्यं सुधैव सर्वकामदम् ।
सयोनिमानसंयुक्तमिच्छाभुक्ति प्रदायकम् ॥ १५ ॥
लोहादिलिङ्गकायामप्रमाणं कामदं तथा ।
पुनर्विभक्तं च त्रिधा ब्रह्मविष्णुरुद्रांशकम् ॥ १६ ॥

ब्रह्मादौ मध्यमे विष्णू रुद्रश्चान्ते प्रकीर्तितः ।
कार्यस्त्र्यंस्तथायाम एकांशं च पृथुत्वकम् ॥ १७ ॥
मस्तकावर्त्तनं मध्ये बाह्ये वै राष्ट्रविभ्रमः ।
मस्तकान्तोद्भवं पीठं पार्श्वाङ्गे तु प्रदक्षिणम् ॥ १८ ॥
अष्टाङ्गुलभवं लिङ्गं पूज्यते चक्रवर्तिभिः ।
सप्ताङ्गुलं महाराजै र्महीपालैश्च भक्तितः ॥ १९ ॥
षडङ्गुलात्मकं लिङ्गं महामण्डलकेश्वरैः ।
पञ्चाङ्गुलं तथा लिङ्गमर्च्यं वै भुक्तिकामकैः ॥ २० ॥
महासामन्तसंज्ञैस्तु लिङ्गं वेदाङ्गुलोच्छ्रितम् ।
त्र्यङ्गुलं चैव सामन्तै र्भुक्तिकामैश्च पूजितम् ॥ २१ ॥
द्व्यङ्गुलात्मकमध्यं च तथैव द्व्यङ्गुलायतम् ।
मुक्त्यर्थं यतिभिश्चैव पूजनीयमशङ्कितैः ॥ २२ ॥
अङ्गुलद्वयमध्यं च जनैः सर्वै र्हितार्थदम् ।
तथैकाङ्गुलिकं मध्ये सर्वकामार्थमुक्तिदम् ॥ २३ ॥
मनोहरादितो लिङ्गं यावत्स्यान्नन्दिवर्धनम् ।
कार्यं रत्नमयं चैव धर्मकामार्थमोक्षदम् ॥ २४ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छाया- मष्टलोहमयलिङ्गनिर्णयाधिकारो नाम नवनवत्युत्तरशततमं सूत्रम् ॥

---

## (२००) दारुलिङ्ग निर्णयो नाम द्विशततमं सूत्रम् ॥

विश्वकर्मोवाच—

वक्ष्यामि दारुजं लिङ्गं धर्मकामार्थमोक्षदम् ।
तदनुक्रमयुक्तीश्च कथयाम्यपराजित ॥ १ ॥
द्व्यष्टकाङ्गुलमाद्यं स्यात् षड्हस्तान्तं समुच्छ्रितम् ।
तन्मध्यानुक्रमं वच्मि मुक्तिकामार्थहेतवे ॥ २ ॥
षोडशाङ्गुलमाद्यं स्यात् क्रमात् षोडशवृद्धितः ।
विधेयं लिङ्गनवकं षट्करान्तं प्रकीर्तितम् ॥ ३ ॥
मकरेन्दु स्यक्तमालं ? पुष्पाक्षं तु सिद्धार्थकम् ।
दण्डाख्यं पौरुषं काम्यं पुष्पकं च फलोद्भवम् ॥ ४ ॥
एवं च नवलिङ्गानि सर्वकामार्थदानि च ।
उक्तानि यानि वै दारु-मयानि शिवशासने ॥ ५ ॥
चन्दनो देवदारुश्च रक्तचन्दन एव च ।
सर्पश्च शिंशपाश्चैव शिरीषाशोककौ तथा ॥ ६ ॥
कर्पूरागरुकौ चैव हिन्तालमधुपादपाः ।
तथा खदिरकश्चैव पारिजातकपङ्कजाः ॥ ७ ॥
श्रीफललवङ्गाक्षोराञ्जनकाश्च तथै व च ।
बीजकार्जुनकौ वृक्षा अन्ये ये च दृढात्मकाः ॥ ८ ॥
निर्व्रणाः सुदृढाः कार्याः प्राञ्जला दोषवर्जिताः ।
शाखोद्भवादिक भेदग्रन्थिकोटरवर्जिताः ॥ ९ ॥
षोडशाङ्गुलतो हीनं लिङ्गं कुर्यान्न दारुजम् ।
षोडशाङ्गुलतो वृद्धि र्नवलिङ्गेषु कीर्तिता ॥ १० ॥
तथाष्टकनिबन्धे च षोडशाङ्गुलवृद्धितः ।
अष्टाविंशत्युत्तरञ्च शतं लिङ्गानि सङ्ख्यया ॥ ११ ॥
पुनश्चाङ्गुलमध्येऽष्टौ लिङ्गानि मुद्गमानतः ।
पञ्चविंशत्युत्तरकसहस्रं सङ्ख्यया भवेत् ॥ १२ ॥
निलयं दारुजं कुर्यादिष्टिकाभिस्तथोच्यते ।
निलयद्रव्यादिन्यूनं दारुजं न प्रकास्यते ॥ १३ ॥
शैलजे चाऽथ प्रासादे कुर्याल्लिङ्गं च शाश्वतम् ।
स्वभुबाणं तथ घाटयं रत्नजं धातुजं तथा ॥ १४ ॥
सर्वाणीमानि लिङ्गानि निलये शैलजे हि वै ।
दारुजे दारुजं शस्तं धातुजे धातुरत्नजम् ॥ १५ ॥
इत्येवं मानमुद्दिष्टं दारुलिङ्गप्रमाणतः ( कम् ) ।
द्वयष्टकाङ्गुलमाद्यं स्यात् षट्करं चान्ततस्तथा ॥ १६ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
दारुलिङ्गनिर्णयाधिकारो नाम द्विशततमं सूत्रम् ॥

## (२०१) शैलजलिङ्गहस्ताङ्गुलप्रमाण निर्णयो नामैकोत्तर द्विशततमं सूत्रम् ॥

---

विश्वकर्मोवाच–

अथातः सम्प्रवक्ष्यामि शैललिङ्गप्रमाणकम् ।
हस्तादि नवान्तं लिङ्गनवकं हस्तवृद्धितः ॥ १ ॥
हस्ताधश्च न कर्तव्यं लिङ्गं शैलमयं तथा ।
तदूर्ध्वं तु प्रकर्तव्यं प्रस्तारानुक्रमेण च ॥ २ ॥
सूत्रहस्तादथारभ्य पादवृद्ध्या त्रिहस्तकम् ।
कनिष्ठनवलिङ्गानां पादवृद्धिरनुक्रमात् ॥ ३ ॥
मध्यमानि च लिङ्गानि पादवृद्ध्या नव क्रमात् ।
युगहस्तादितश्चैवं तथा षड्ढस्तकावधि ॥ ४ ॥
आयामे सप्तहस्तं च नवहस्तान्तमेव च ।
उत्तमं लिङ्गनवकं पादवृद्ध्या यथक्रमम् ॥ ५ ॥
त्रिचतुर्हस्तयोर्मध्ये षट्सप्तकरयोरपि ।
पादवृद्ध्या त्रीणि त्रीणि षड्लिङ्गानां समुद्भवः ॥ ६ ॥
सङ्ख्यातानि त्रयस्त्रिंश लिङ्गानि पादवृद्धितः ।
हस्तादि नवहस्तान्तं त्रयस्त्रिंशच्च सङ्ख्यया ॥ ७ ॥
अभिधानक्रमं तेषां कथयाम्यपराजित ।
अनुक्रमेण ख्यातानि त्रयस्त्रिंशच्च सङ्ख्यया ॥ ८ ॥
भवं भवोद्भवं भावं संसारभयनाशनम् ।
पाशयुक्तं महातेजो महादेवं परात्परम् ॥ ९ ॥
ईश्वरं शेखरं शिवं शान्तं वै मनोह्लादकम् ।
रुद्रतेजः ( सदात्मकं ) वामदेवमघोरकम् ॥ १० ॥
तत्पुरुषं तथेशानं मृत्युञ्जयं च विजयम् ।
किरणाक्षमघोराख्यं श्रीकण्ठं पुण्यवर्द्धनम् ॥ ११ ॥
पुण्डरीकं सुवक्त्राख्यमुमातेजो विश्वेश्वरम् ।
त्रिनेत्रं त्र्यम्बकं नाम ( घोरं ) महाकालं च नामतः ॥ १२ ॥
त्रयस्त्रिंशत् पादवृद्ध्या हस्तादिक नवान्तकम् ।
पादार्धवृद्ध्या च पुनः पञ्चषष्टिश्च सङ्ख्या ॥ १३ ॥
त्रिकोनशतलिङ्गानि तथाद्व्यङ्गुलवृद्धितः ।
तथैकाङ्गुलवृद्ध्या तु त्रिनवत्यधिकं शतम् ॥ १४ ॥
एवमर्धाङ्गुलवृद्ध्या लिङ्गसङ्ख्या ह्यनुक्रमात् ।
पञ्चाशीत्यधिकं चैव शतत्रयमुदाहृतम् ॥ १५ ॥
अङ्गुलवेदांशयुक्त्या क्रमशो वृद्धितस्तथा ।
एकोनसप्तत्युत्तर-सप्तशतान्यनुक्रमात् ॥ १६ ॥

तथा मुद्गप्रमाणेन पूर्वमानविकल्पनात् ।
द्विचत्वारिंशदुत्तर चतुर्दश शतानि च ॥ १७ ॥
मुद्गप्रमाणलिङ्गानामेकैक दशभेदतः ।
चतुर्दशसहस्राग्रे सविंशतिचतुःशतम् ॥ १८ ॥
इति शास्त्रोक्तलिङ्गानां मानसङ्ख्या समीरिता ।
उक्तमन्तरमानं च निलयांश्च वदाम्यहम् ॥ १९ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां शैलजलिङ्गहस्ताङ्गुलप्रमाणनिर्णयाधिकारो नामैकोत्तरद्विशततमं सूत्रम् ॥

# (२०२) शैलजधाट्यादिलिङ्गनिर्णयो नाम द्व्युत्तरद्विशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

अथातः सम्प्रवक्ष्यामि लिङ्गपीठकलक्षणम् ।
लिङ्गासन निलयादि प्रमाणं सूत्रमार्गतः ॥ १ ॥
षट्त्रिंशत्करतो धस्तात् यावद्धस्त चतुष्टयम् ।
भवन्ति लिङ्गमानेन तदाधारादिकं विना ॥ २ ॥
चतुर्भ्योऽध एकहस्तं द्विहस्तं वा त्रिहस्तकम् ।
न कुर्याद् धात्व्यलिङ्गेषु शैलजं रत्नजं विना ॥ ३ ॥
हस्तमानं भवेल्लिङ्गं वेदहस्ते सुरालये ।
सप्तवेदांशं तु लिङ्गं षट्र्यंशेन हस्तकम् ॥ ४ ॥
पञ्चादि भूतवेदान्तं प्रासादहस्तसङ्ख्यया ।
मध्यमं पञ्चमांशेन हस्तादि नवान्तकम् ? ॥ ५ ॥
ऋत्वादि युगतत्त्वान्ता हस्तसङ्ख्या शिवालये ।
षडंशेन प्रकर्तव्या हस्तादि नव अन्तिकम् ? ॥ ६ ॥
ज्येष्ठलिङ्गे प्रकर्तव्याः प्रासादाश्च कनिष्ठकाः ।
मध्यमे मध्यमा युक्ताः कनिष्ठे लिङ्ग उत्तमाः ॥ ७ ॥
सीमामानेनेति लिङ्गमेकहस्तात् नवानाकम् ।
पुनश्चान्मदतोऽप्येवं गर्भमानादि कथ्यते ॥ ८ ॥
प्रासादमानतो लिङ्गं निलया लिङ्गमानतः ।
विधातव्यं मानयुक्तं दोषो न्यूनाधिके भवेत् ॥ ९ ॥
गर्भार्धेन तु यल्लिङ्गं तत्कनिष्ठमुदाहृतम् ।
विभक्ते पञ्चधा गर्भे ज्येष्ठं लिङ्गं त्रिभागतः ॥ १० ॥
नवधा भाजिते गर्भे मध्यमं पञ्चभागतः ।
कार्यं तदन्तरतो वै एकैकस्य त्रिकं त्रिकम् ॥ ११ ॥
ज्येष्ठाधश्च कनिष्ठोर्ध्वं विभक्तं च नवांशतः ।
त्रिकं ज्येष्ठं त्रिकं मध्यं त्रिकं चैव कनिष्ठकम् ॥ १२ ॥
त्रिधा विभक्तगर्भेषु चैकांशं गर्भमानतः ।
साधारणमिति प्रोक्तं ज्येष्ठमध्यकनिष्ठकम् ॥ १३ ॥

अपराजित उवाच-

न्यूनाधिकोक्त लिङ्गानि लयं वा तन्यूनाधिकम् ।
द्वारनिलयोद्भवाद्यस्तु ? तत्र दोषाः कथं प्रभो ॥ १४

विश्वकर्मोवाच-

अर्चालिङ्गोद्भवं मानं वेश्मांशे त्वपराजित ।
न्यूनाधिको न कर्तव्यः प्रासादः सूत्रतः क्रमात् ॥ १५ ॥

वेश्म न्यूनाधिकं शस्तं स्वभुवाणे च रत्नजे ।
घटितेषु विधिः ख्यातो ह्यर्चालिङ्गेषु तत्त्वतः ॥ १६ ॥
धातुजे रत्नजे चैव स्वभुबाणे च दारुजे ।
वेश्म न्यूनाधिकं प्रोक्तं वक्त्रलिङ्गे तु पार्थिवे ॥ १७ ॥
शैलजे घाट्यलिङ्गे तु विधिरुक्तश्च शास्त्रतः ।
कर्तव्यं सूत्रकारेण प्रमाणं चानुपूर्वशः ॥ १८ ॥
मृद्दारु शैललोहानामायामो युगनेत्रांशकैः (वेदयुग्मांशकैः)
रसैः सार्धसप्तभिश्च वसुभिरन्ध्रकैस्तथा ।। १९ ॥
चतुर्विधश्च विष्कम्भः कर्तव्यः शास्त्रपारगैः ।
सुरगणार्चिता नाद्यं आद्यं सर्वसमादि सैसकम् ॥ २० ॥
विष्कम्भं रहितायामं कृत्वा रुद्रांशमर्धतः ।
अष्टभि वैष्णवं ज्ञेयं चतुर्भि ब्रह्मणस्तथा ॥ २१ ॥
नाहपादेन विष्कंभ ऋषिभि र्ब्रह्मणः पदम् ।
अष्टभि वैष्णवं ज्ञेयं रुद्रांशं ग्रहसङ्ख्यया ॥ २२ ॥
इत्थमन्यच्च कर्तव्यं लिङ्गं सुरगणार्चितम् ।
तस्य तावत्पुनस्त्वेवं कर्तव्यं तत्त्वनाद्यकम् ॥ २३ ॥
विष्कम्भं सार्धसप्तांशं पादोनाष्टांशमाब्जजम् ।
अष्टभि वैष्णवं शैवं सपादाष्टभिरेव च ॥ २४ ॥
अनाद्यनामतः प्रोक्त मन्यद् मानं च वक्ष्यते ।
विष्कम्भं नवभागं स्यात् सार्धाष्टांशं " पितामहः " ॥ २५ ॥
अष्टभि वैष्णवं ज्ञेयं माहेशं सार्धसप्तकम् ।
इदमन्यच्च कर्तव्यमनाद्यलिङ्गलक्षणम् ॥ २६ ॥
मूले मध्ये तथाग्रे च विस्तारायामतः समम् ।
सर्वतः सदृशं चैव लिङ्गं वै सर्वतः समम् ॥ २७ ॥
विवर्ताख्यं वर्द्धमानं श्रीपुञ्जं नन्दिवर्धनम् ।
चत्वार्युत्तमलिङ्गानि क्रमो गुरूपदेशतः ॥ २८ ॥
वासुदेवादिकं लिङ्गं सप्तेन्दुभ्यां षडिन्दुतः ।
इषुशब्दायुगक्ष्माभ्यां पृथु युक्तं च लिङ्गकम् ॥ २९ ॥
सप्तेन्दुभ्यो विवर्ताख्यं षट्चन्द्रौ वर्धमानकम् ।
इषुशब्दौ च श्रीपुञ्जं युगक्ष्मे नन्दिवर्धनम् ॥ ३० ॥
विष्कम्भं रहितायामं शेषं ? ( शिवं ) चन्द्रांशमर्धतः ।
षट्चन्द्रायतो विष्णुः शेष ब्रह्मण उच्यते ॥ ३१ ॥
समस्तानां हि लिङ्गानां ब्रह्मादौ चतुरस्रकः ।
कर्णसूत्रात्मुक्तकोणे विष्णुरष्टाश्रको भवेत् ॥ ३२ ॥
ब्रह्मादिस्थानतो लुप्तो वृत्ताकारसमुद्भवः ।
पूजाभाग ऊर्ध्वतः स्याद्रुद्रांशो वृत्तसंज्ञकः ॥ ३३ ॥
विस्तारं चास्य लिङ्गस्य तदन्तमुपलक्षयेत् ।
विभक्ति मस्तके तेषां लिङ्गानां पञ्चधा भवेत् ॥ ३४ ॥

छत्राकारमष्टमांशे सार्धे द्व्यंशं षडंशके ।
त्रपुषाभं वेदभक्ते द्विभागं कुक्कुटाण्डभम् ॥ ३५ ॥
त्रिभक्ते लिङ्गविस्तारे चैकांशमर्धचन्द्रकम् ।
सार्धत्र्यंशेन तुल्यं स्यादष्टांशे बुद्बुदाकृति ॥ ३६ ॥
तस्याधो भवति व्याधी राष्ट्रभङ्गं च वक्रके ।
मध्यहीने च दुर्भिक्षमधोहीने प्रजाक्षोभः ॥ ३७ ॥
ऊर्ध्वहीने सर्वनाशो (ह्यङ्ग) हीने प्रजाक्षयः ।
पूजाहानि र्भागदीर्घे मध्यदीर्घे प्रजाक्षभः ॥ ३८ ॥
अनावृष्टिरधोदीर्घे राष्ट्रभङ्गोऽङ्गदीर्घतः ।
सन्धिरेखाबिन्दुजाल कीलकादि कलङ्ककैः ॥ ३९ ॥
गौर ! छिद्रतांध ? (व ?) धूलिकाकमार्जारपादतः ।
विनिर्मुक्तं चाऽथलिङ्गं भुक्तिमुक्तिप्रदं भवेत् ॥ ४० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां शैलजधात्वादिलिङ्गनिर्णयाधिकारो नाम द्व्युत्तरद्विशततमं सूत्रम ॥

---

## (२०३) लिङ्गपरीक्षानाम त्र्युत्तर द्विशततमं सूत्रम् ॥

विश्वकर्मोवाच—

शाणाविद्धं शितं कृत्वा चले रक्षादिभिः क्रमात् ।
यावन्निर्वाणतां याति तावत्कुर्याद्विचक्षणः ॥ १ ॥
शुद्धं तत् तु निरीक्षेत तस्मिंश्चिह्नं शुभाशुभम् ।
तस्य चिह्नानुक्रमं च प्रवक्ष्यामि च नामतः ॥ २ ॥
पद्माकारं स्वस्तिकं च शङ्खाभं चक्रसन्निभम् ।
छत्राकृति ध्वजाकारं त्रिशूलाकृति पार्वतम् ॥ ३ ॥
मत्स्यमकर कूर्माभं कलशाकृतिकं तथा ।
अर्धचन्द्राकृति तथा चैवं गोवृषभाकृति ॥ ४ ॥
वज्रखड्गाकृतिकं च दण्डभं चामराकृति ।
नृपावृति ! लिङ्गाकारं सयोनिमात्र (न) संयुतम् ॥ ५ ॥
स्थपतिस्थपकानां तु पुत्रपौत्रविवर्द्धकम् ।
बहूनि यत्र दृश्यन्ते लिङ्गे लिङ्गानि सर्वतः ॥ ६ ॥
पूर्वापरयाम्योत्तरे दृश्यते लिङ्गमुन्नतम् ।
राजा भृत्यैर्मन्त्रिभिश्च वर्द्धते प्रजया सह ॥ ७ ॥
दृश्यते पर्वतो यत्र ह्यनेकशिखराकृतिः ।
राजा सेनावधं कुर्यान्मासेनाऽत्र न संशयः ॥ ८ ॥
समुद्रवीचिसंकाशं मण्डलाकृतिकं तथा ।
राजा परगतं राष्ट्रमचिराद्विनिवर्तयेत् ॥ ९ ॥
गोब्राह्मणहितं चैव यजमानोऽपि वर्द्धते ।
सुखदं सर्ववर्णानां शान्तिपुष्टिप्रदायकम् ॥ १० ॥
इन्द्रायुधनिभा रेखा चतुर्वर्णोपशोभिता ।
शुक्ला विप्रस्य सुखदा रक्ता राज्ञो विधीयते ॥ ११ ॥
वैश्यस्य पीतिका रेखा कृष्णा शूद्रस्य शस्यते ।
अविच्छिन्ना भवेद्रेखा पुत्रपौत्रविवर्द्धिनी ॥ १२ ॥
विच्छिन्ना बिन्दुसंयुक्ता वर्जनीया प्रयत्नतः ।
कङ्कभासाकृतिश्चैव गृध्रकाकाकृतिस्तथा ॥ १३ ॥
वलयाद्याकृतिश्चैव कौशिकाकृतिरेव च ।
कीटसर्पपतङ्गाश्च दृश्यन्ते यत्र वर्णतः ॥ १४ ॥
अधमं तद्विजानीयात् प्रयत्नेन विवर्जयेत् ।
चिह्नं तु कथितं तेषां लाञ्छनानि ह्यतः शृणु ॥ १५ ॥
आवर्तं दक्षिणं श्रेष्ठं वामावर्तं विगर्हितम् ।
येनाभिदी(आवर्तो) दृश्यते यत्र विपुलो मेखलान्वितः ॥ १६ ॥
तल्लिङ्गं पूजयेन्नित्यं सर्वकामार्थ साधकम् ।

प्रासादो वा रथो वापि नन्द्यावर्तस्तथाङ्कुशम् ॥ १७ ॥
रम्भा कन्यायुक्त ! (पुष्प) माला शिवा च दर्पणं तथा ।
कलशं चैव हारं च अक्षसूत्रं पवित्रकम् ॥ १८ ॥
वस्त्रयुग्मं कुण्डलं च तारकाकृतिकं तथा
कुण्डलं चेति विज्ञेयं लाञ्छनं शोभनं खलु ॥ १९ ॥
सोमे सूर्ये वृषे पद्मे शङ्खे वै विपुलं धनम् ।
छत्रेषु चामरे चैव राज्यलाभं विनिर्दिशेत् ॥ २० ॥
मकरे चाक्षसूत्रे च कलशे च कमण्डलौ ।
हारे वस्त्रे भगे चैव स्वस्तिके विजय स्तथा ॥ २१ ॥
लाञ्छनाक्षरसंस्थाने शुभं वाप्यथवाशुभम् ।
वायव्याग्नेयमाहेन्द्रे वारुण्यां च यथाविधि ॥ २२ ॥
अकारश्च उकारश्च एऐ ओऔ अंअस्तथा ।
गजडदबं च ज्ञात्वा यथा तत्र च दृश्यते ॥ २३ ॥
एतेषु दृश्यमानेषु महाबन्धभयं भवेत् ।
आकारो दृश्यते यत्र अकारो वा तथैव च ॥ २४ ॥
ऋॠ च दृश्यते यत्र उजघटयषस्तथा ।
नरपदाश्चाक्षराणि आग्नेय्यां च प्रकीर्तिताः ॥ २५ ॥
एतेषु दृश्यमानेषु अग्निदोषभयं भवेत् ।
( उचकारो लकारश्च ) अनुनासिकसंज्ञकाः ॥ २६ ॥
यन्माहेन्द्राश्रितं ज्ञेयं लिङ्गे चिह्नं शुभप्रदम् ।
ककारश्च व (ल) कारश्च भूज ऊध ? (छजपथ ) स्तथापरः ॥ २७ ॥
शषसकारा विज्ञेयाः सकारश्च सुसम्भवः ।
एभिस्तु लाञ्छनै लिंङ्गं सर्वकामार्थ साधकम् ॥ २८ ॥
कथितानि लाञ्छनानि शल्यदोषमतः शृणु ।
सयोनिमात्र सम्युक्तं लक्षणीयं विपश्चिता ॥ २९ ॥
– – तस्मिंल्लिङ्गे चैव मण्डलं यत्र दृश्यते ।
सगर्भं तद्विजानीयाद् जीवशल्यं विचक्षणम् ॥ ३० ॥
मांजिष्ठाभे मण्डलं स्यात् हरिते कर्करो भवेत् ।
पीठे (ते) गोधां विजानीयात् कृष्णे विद्याद् भुजङ्गमम् ॥ ३१ ॥
कपिले मूषको ज्ञेयः श्यामे तु कृकलाशकः ।
अतिरक्ते च वर्णे तु इन्द्रगोपकमादिशेत् ॥ ३२ ॥
किंशुकाभे च खर्जूरः अतसीभे पिपीलिका ।
भस्मभे ? (स्मृमरो) ज्ञेयः वालिहका श्वेतभस्मभे ॥ ३३ ॥
विचित्रे वृश्चिकं विद्यात् खद्योतमग्निसन्निभे ।
चम्पाभे कृमयः ? प्रोक्ताः श्वेतवर्णे नरोत्तमः ॥ ३४ ॥
इति त्याज्या लिङ्गदोषा मूर्तिदोषं विवर्जयेत् ।
लक्षणोद्धरणं वक्ष्ये सर्वलिङ्गेषु कामदम् ॥ ३५ ॥
पूजा भागो मस्तकाद्यो विभक्तास्तु कलांशकैः ।

पीठोर्ध्वे दशमान्ते च लिङ्गाकृति च लक्षणम् ॥ ३६ ॥
पृथुत्वमष्टमांशेनो भयरेखान्तरे विदुः ।
मस्तकं लिङ्गकाकारं लक्षितं च चतुर्विधम् (पञ्चधा तथा) ॥ ३७ ॥
पक्षयोश्चतुर्भागोर्ध्वे रेखापार्श्वे लिङ्गाकृति : ।
पीठोर्ध्वे द्विभागे कुर्याद् भ्रम ( मणि ) रेखां प्रदक्षिणम् ॥ ३८ ॥
उभरेखान्तरं यद्वत् स्वाष्टमांशेत्यात्मकम् ? ।
एवं विधं प्रकर्तव्यं चतुर्धा ( पञ्चधा ) लिङ्गमानतः ॥ ३९ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
लिङ्गपरीक्षाधिकारो नाम त्र्युत्तर द्विशततमं सूत्रम् ॥

# (२०४) पार्थिवलिङ्गव्यक्ताव्यक्तनिर्णयो नाम चतुरुत्तर द्विशततमं सूत्रम् ॥

---

विश्वकर्मोवाच-

पार्थिवस्य प्रवक्ष्यामि विधानं परमं शुभम् ।
पक्वं चैवमपक्वं वा पार्थिवं द्विविधं स्मृतम् ॥ १ ॥
तत्राऽपक्वं प्रशंसन्ति आयुष्यं श्रीबलप्रदम् ।
तदनुक्रमयोगं च कथयामस्तवान्तिके ॥ २ ॥
श्वेतां पीतां तथा रक्तां मृत्तिकां च समाहरेत् ।
तथा गोधूमचूर्णं तु माक्षिकं चूर्णमेव तु ॥ ३ ॥
कपिलाया घृतं क्षीरं पञ्चक्षीरं च वृक्षजम् ।
गुडं च गुग्गुलं चैव चूर्णयित्वा च प्रक्षिपेत् ॥ ४ ॥
वर्जयित्वान्यद्रव्याणि लाक्षामयणकाम्बिकम् ? (लाक्षाकुद्दालकाम्बिकम्)
प्रतिक्षेपो वरण्डेषु मासं पक्षाधिकं तथा ॥ ५ ॥
ततस्तु कारयेलिङ्गं विधियुक्तिक्रमैस्तथा ।
व्यक्ताव्यक्तमिदं कुर्याच्छाश्वतं सर्वकामदम् ॥ ६ ॥
अव्यक्तमिदमुक्तं तु व्यक्तमानं प्रवक्ष्यते ।
पूजाभागस्त्रिभागे तु वक्त्रस्य निर्गमं विदुः ॥ ७ ॥
मृद्दारुलोहशैलैश्च श्वेतं लिङ्गं तु कामदम् ।
पार्श्वलिङ्गसमायुक्तं तत्तन्मानेन तत्कुरु ॥ ८ ॥
लिङ्गार्चा पृथुमानं तद्विभक्तं द्वादशाङ्गुलम् ।
चतुर्विंशतिकोच्छ्राये वक्त्रं वै द्वादशाङ्गुलम् ॥ ९ ॥
ललाटं द्व्यङ्गुलं प्रोक्तं भ्रूनेत्रं द्व्यङ्गुलं तथा ।
नासिका द्व्यङ्गुला प्रोक्ताऽधरौ चैकैककाङ्गुलौ ॥ १० ॥
शङ्खाकृतिः कण्ठरेखा हनुकाद्व्यङ्गुलायता ।
वेदाङ्गुलं पृथुवक्त्रं द्व्यङ्गुला नासिकापुटिः ॥ ११ ॥
द्व्यङ्गुलायतकं नेत्रं तन्मानं नेत्रकान्तरम् ।
चापाकारा च दृष्टिः स्याद् भ्रूलता चाङ्गुलायता ॥ १२ ॥
द्वादशाङ्गुलविस्तारे कर्णावेकैककाङ्गुलौ ।
भ्रूसमोत्सेधकौ चैव उभौ कर्णौ समानतः ॥ १३ ॥
जटामुकुटसंयुक्तं शशाङ्ककृतशेखरम् ।
शिवाननं कुण्डलादि दिव्याभरणभूषितम् ॥ १४ ॥

( शिवपञ्चवक्त्र ध्यानम् )

प्रालेयामलबिन्दुकुन्दधवलं गोक्षीरफेनप्रभम् ।
भस्माभ्यङ्गमनङ्गदेहदमनं ज्वालावलीलोचनम् ।

ब्रह्मेन्द्रादिमरुद्गणैः स्तुतिपरैरभ्यर्चितं ( परैः संसेवितं ) योगिभिः ।
वन्देऽहं सकलं कलङ्करहितं स्थाणोर्मुखं पश्चिमम् ॥ १५ ॥
इति सद्यः ॥
गौरंकुङ्कुमपिञ्जरं सुतिलकं, ( व्यालोल ) ह्यापाण्डु गण्डस्थलम् ।
भ्रविक्षेपकटाक्षवीक्षणलसत्संसिक्त (बिम्बे तु) कर्णोत्पलम् ( बिंबं सकर्णोत्पलम )।
स्निग्धं बिम्बफलाधरं प्रहासितं नीलालकालङ्कृतम् ।
वन्दे पूर्णशशाङ्कमण्डलनिभं वक्त्रं हरस्योत्तरम् ॥ १६ ॥
इति वामदेवः ॥
कालाभ्रभ्रमराञ्जनद्युतिनिभं (हरं) व्यावृत्तपिङ्गेक्षणम् ।
बालेन्दुद्वयनिःसृतं ( भालेन्दुद्युतिभासितं) सुदशनं प्रोद्भिन्नदंष्ट्राङ्कुरम् ।
सर्वप्रोतकपालशुक्तिसकलं ( शकलं ) व्याकीर्णमाशेखरम् ।
वन्दे दक्षिणमीश्वरस्य कुटिलं भ्रूभङ्गरौद्रं मुखम् ॥ १७ ॥
इत्यघोरः ॥
संवर्ताग्नितडित्प्रतप्तकनकप्रस्पर्द्धितेजोऽरुणम्
गम्भीरध्वनिनिःसृतं सुदशनं प्रोद्भासिताम्राधरम् ।
बालेन्दुद्युतिलोलपिङ्गलजटाभारप्रबद्धोरगम्
वन्दे सिद्धसुरासुरेन्द्रसुनुतं तत्पूरुषस्याऽऽननम् ॥ १८ ॥
इति तत्पूरुषः ॥
व्यक्ताव्यक्तगुणोत्तरं च वरदं षट्त्रिंशतत्त्वाधिकम् ।
तस्मादुत्तरतत्त्वमक्षरमिति ध्येयं सदा योगिभिः ।
वन्दे तामसवर्जितेन मनसा सूक्ष्मातिसूक्ष्मं परम् ।
शान्तं पञ्चममीश्वरस्य वदनं खव्यापि तेजोमयम ॥ १९ ॥
इतीशानः ॥
(इतः परमष्टा विंशतिपर्यन्तं श्लोका लुप्ताः)
शैलजोक्तलिङ्गानन्देशसहस्राद्यर्चना ? ।
स्वाद्योद्भवस्तथा पुण्य शतसहस्राद्यंतगा ?॥ २९ ॥
सर्वात्ममादि लिङ्गानां रुद्रवेदसमुच्छ्रिते ? ।
वृत्ते नागहते राम ( श्च ) शतमष्टोत्तरं चर्येत् ॥ ३० ॥ इति शतलिङ्गः
सर्वमयादि लिङ्गानां रुद्रोवेदसमुच्छ्रिते ।
एके नवति लिङ्गानि प्रत्येकं विषमैः पदैः ॥ ३१ ॥
घटितं सारितं चैव स्वयम्भु पार्थिवं तथा ।
शाणादि विहितं चाद्यं नर्दमध्याच्च सारितम् ॥ ३२ ॥
स्वभु स्वयं भूमिजातं पार्थिवं नगपृष्ठगम् ।
एवं चतुर्विधं लिङ्गं बाणलिङ्गमतः परम् ॥ ३३ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां पार्थिवलिङ्गव्यक्ताव्यक्तनिर्णयाधिकारो नाम चतुरुत्तरद्विशततमं सूत्रम् ॥

## (२०५) बाणलिङ्गोत्पत्तिर्नाम पञ्चोत्तर द्विशततमं सूत्रम् ॥

---

।विश्वकर्मोवाच—

बाणो नाम महादैत्यः पूर्वमाऽऽराध्यदेवताः ।
ब्रह्मविष्णु सुरेन्द्राश्च पुरार्थे तेन याचिताः ॥ १ ॥
तुष्टैश्च दत्तमेकैकं पुरं दिव्यं च काञ्चनम् ।
पुरत्रयं तु संयोज्य अन्तरिक्षगतः स च ॥ २ ॥
पुरैः पवनवेगैश्च भ्रमन्ति स्म प्रदक्षिणम् ।
पुरत्रयाधिपत्यं स प्राप्तस्त्रिपुरनामकः ॥ ३ ॥
जितवान् देवदैत्यादीन् यक्षविद्याधरोरगान् ।
चन्द्रसूर्यादिकांस्तेऽथ शम्भुं शरणमागताः ॥ ४ ॥
अभयं दत्तवान् देवोऽवदत्तांश्च तथागतान् ।
गङ्गानर्मदयो मध्ये त्रिपुरं पातयाम्यहम् ॥ ५ ॥
बाणायाऽथाक्षिपद् बाणं हरो बाणोऽप्यचिन्त्य च ।
बाणं चिक्षेप नष्टौ तौ बाणौ क्षिप्तौ परस्परम् ॥ ६ ॥
पुरं चाऽदृश्यगतिकं भ्रमन्तिष्ठत्क्षणे क्षणे ।
शून्यचेता दृढात्माऽपि हरो दृष्ट्वा च पूर्गतिम् ॥ ७ ॥
ईशेन चिन्त्यमानोऽथ वरदो मुनिपुङ्गवः ।
स गतो नारदस्तत्र यत्र तत्त्रिपुरं पुरम् ॥ ८ ॥
बाणेन चाऽर्घ्यमादाय नारदश्च सुपूजितः ।
बाणभार्या भानुमती तेजःस्था सत्पथे स्थिता ॥ ९ ॥
प्रणिपत्य मुनिं प्राह ब्रह्मपुत्रं तु नारदम् ।

राज्ञी उवाच—

स्त्रीणां ब्रूहि कथं सत्यं व्रतं च परमेश्वर ।
अस्माकं तु मुनीन्द्रस्त्वं सर्वसिद्धिप्रदायकः ॥ १० ॥

नारद उवाच—

स्त्रीभिश्चेदं व्रतं कार्यमनेकसिद्धिकारकम् ।
द्वादशमासोभपक्ष-तृतीयाः कामदा व्रते ॥ ११ ॥
चैत्रे वसन्तोत्सवाख्या कृष्णे धर्मप्रदायिनी ।
वैशाखे तृतीयाऽक्षया कृष्ण सन्ततिकारिणी ॥ १२ ॥
ज्येष्ठे गगनराज्ञी च कृष्णे शोकप्रणाशिनी ।
आषाढे दमती देवी (शान्तिदानाम) कृष्णे धर्मप्रकाशिनी ॥ १३
श्रावणे वै मधुमती कृष्णे स्याद्रूपदायिनी ।
हरिताली भाद्रपदे कृष्णे कज्जलकामिनी ॥ १४ ॥
आश्विनेऽभ्यस्तपत्रा ( ह्यनसूया ) च कृष्णे दशरथा तथा ।
कार्तिके कीर्तिदा नाम कृष्णे स्यात्कलिनाशिनी ॥ १५ ॥

मार्गशीर्षे अहिवन्ना ! कृष्णे च सुखदा तथा ।
पौषे च पार्वती देवी कृष्णे मोक्षप्रदायिनी ॥ १६ ॥
माघे माघेश्वरी ख्याता कृष्णे सौभाग्यदायिनी ।
फाल्गुने श्रीफलाख्या च कृष्णे च जातिका तथा ॥ १७ ॥
द्वादशमासना: ख्यातास्तृतीया: पार्वतीव्रतम् ।
गौर्याव्रतमुपोष्येदं यागं कृत्वा महोत्सवम् ॥ १८ ॥
ईप्सितं लभते कामं त्रिपुराधिपतिप्रिये ।
दूर्वाष्टमी बुधाष्टमी ललिता सर्वसुन्दरी ? ॥ १९ ॥
सर्वराजादिविप्रेण पत्योत्तरभुक्तचेतस्तम् ? ।
एवं तु त्रिपुरे छिद्रं सम्प्राप्तं त्रिदशैरपि ॥ २० ॥
आयातो नारदो भूयो यत्राऽऽसीच्छूलपाणिक: ।
रथे चारुह्य देवेशं गणं कृत्वा महेश्वर: ॥ २१ ॥
अथो मुमोचाग्निबाणं ज्वलितं ज्वालमालया ।
पातितं दिव्यबाणेन हाहाकारसमुद्भवम् ॥ २२ ॥
त्रिखण्डं त्रिपुरं कृत्वा पातितं धरणीतले ।
एकं च पतितं खण्डं श्रीशैले त्रिपुरान्तिके ॥ २३ ॥
तत्र वै कोटिलिङ्गानां सिद्धं क्षेत्रं प्रभावत: ।
द्वितीयं पतितं खण्डं पर्वतेऽमरकण्टके ॥ २४ ॥
अमरविद्योद्भवा ? कोटि: कोटि लिङ्गप्रभावत: ।
नर्मदायां च लिङ्गं त्वमरकण्टकनिर्मितम् ॥ २५ ॥
तृतीयं पतितं खण्डं वाराणस्यां तु पुत्रक ।
तत्र सार्धकोटि लिङ्गं ख्यातमुद्भवनाशकम् ॥ २६ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां बाणलिङ्गोत्पत्ति निर्णयाधिकारो नाम पञ्चोत्तरद्विशततमं सूत्रम् ॥

———

# (२०६) बाणलिङ्गं षडुत्तरद्विशततमं सूत्रम् ॥

विश्वकर्मोवाच—

अतःपरं प्रवक्ष्यामि बाणलिङ्गस्य लक्षणम् ।
पूर्वमाराधितश्चेशो भक्तैश्च त्रिदशैरपि ॥ १ ॥
( एकस्यादि सप्तानो आसीलश्चातदश्च लक्षणम् ? )
एकास्याद् द्विसप्तान्तमास्यभेदस्य लक्षणम् ।
एकास्रं च स्वयं देव त्रिनेत्रः शूलपाणिकः ॥ २ ॥
उमामहेश्वरं द्व्यस्रं ऽयस्रं त्रिपुरुषं तथा ।
ब्रह्मणा चाऽर्चितं लिङ्गं तथा वेदास्रसंज्ञकम् ॥ ३ ॥
पञ्चास्रं लोकपालैश्च षडश्रं शिखिकेतुना ।
सप्ताश्रं वरुणेनाऽथ चाष्टाश्रं वसुभिस्तथा ॥ ४ ॥
नवग्रहै नवाश्रं च दशाश्रं च दिशाधिपैः ।
एकादशास्रं विष्णुना सूर्येण द्वादशास्रकम् ॥ ५ ॥
त्रयोदशास्रं सर्वैश्च शक्रास्रं शक्रतस्तथा ।
एकाद्यं चतुर्दशान्तं कथितं च यथाक्रमम् ॥ ६ ॥
एकाश्रं स्थापितं लिङ्गं येन वै पृथिवीतले ।
मुच्यते सर्वपापेभ्यो ब्रह्महत्यादिभिश्च सः ॥ ७ ॥
द्व्यश्रकं च तथा लिङ्गं स्थापितं भक्ति तत्परैः ।
मोदते दिवि मुक्तः स्यात् स गोहत्यादि पातकैः ॥ ८ ॥
ऽयश्रकं च तथा लिङ्गं पूजितं च सुरासुरैः ।
अश्वमेधादिपुण्यं च लभते नाऽत्र संशयः ॥ ९ ॥
पुरुषमेधजं पुण्यं चतुराश्रे च पूजिते ।
अगम्यागमनान्मुक्तो ह्यभक्ष्यस्य च भक्षणात् ॥ १० ॥
मुक्तपापश्च विज्ञेयः पञ्चाश्रे पूजिते तथा ।
स्त्रीबालघाती शुद्धः स्याच्छिवलोकं षडश्रके ॥ ११ ॥
सप्तास्रे बाणलिङ्गे तु पृथ्वीदानफलं भवेत् ।
अष्टाश्रं तु यदा लिङ्गं पूजितं पृथिवीतले ॥ १२ ॥
गुरुस्त्रीपापमुक्तश्च लभते शिवलोकताम् ।
नवाश्रं तु यदा लिङ्गं पूजितं च प्रयत्नतः ।
समुक्तः सर्वपापेभ्यो बहुस्वर्णादिकं फलम् ॥ १३ ॥
सप्तकोटिजन्मपापं नश्येद्दर्शनतः क्षणात् ।
शिवलोकं दशाश्रे च लभतेनाऽत्र संशयः ॥ १४ ॥
एकादशाश्रं च तथा संसारभयनाशनम् ।
द्वादशाश्रं तथा लिङ्गं सूर्यतजः समप्रभम् ॥ १५ ॥

त्रयोदशार्धं लिङ्गं तु अर्चितं च सदाबुधैः ।
पृथ्वीदेवाधिपत्यं च प्राप्यते नाऽत्र संशयः ॥ १६ ॥
चतुर्दशास्त्रं लिङ्गं तु स्वर्गादौ देवपूजितम् ।
दशाश्वमेधजन्यं च फलं प्राप्नोति मानवः ॥ १७ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां बाणलिङ्गाधिकारो नाम षडुत्तरद्विशततमं सूत्रम् ॥

## (२०७) पीठिकालक्षणं सप्तोत्तर द्विशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

लिङ्गायामसमं पीठे पृथुत्वं तु प्रमाणतः ।
ब्रह्माद्यं चैव विष्ण्वन्तं विदुः पीठसमुच्छ्रयम् ॥ १ ॥
प्रणालं तु विभागेन स्कन्धतुल्यार्धकं तथा ।
त्रिधा विभक्तमग्रे वै मध्यांशे जलमार्गतः ॥ २ ॥
स्कन्धे तु पादमेकैकं मध्यवंशोद्भवाकृतिः ।
पृथुत्वे पीठसूर्यांशा मेखला भ्रमणाकृतिः ॥ ३ ॥
मेखलायास्त्रिभागेन पात्रं ! ( खातं ) कुर्यात्तथा परम् ।
याम्योत्तरं तत्सपादमग्रे वै सार्धभागिकम् ॥ ४ ॥
कूर्मपृष्ठोद्भवाकारं मस्तकं दर्पणोपमम् ।
मेखलामध्यतः कार्यं तावत् पीठं तु कामदम् ॥ ५ ॥
उच्छ्रये चैव पीठस्य त्रिंशद्धा प्रविभाजिते ।
एकांशा भूगतिः कार्या त्रिभागा कर्णपट्टिका ॥ ६ ॥
भागार्धे मुखपट्टी च त्रिभागा स्कन्धकोन्नतिः ।
स्कन्धस्य पट्टिका सार्धा भागार्धेऽन्तरपट्टिका ॥ ७ ॥
सार्धद्व्यंशं कर्णकं स्याद्देकभागा तु चिप्पिका ।
सार्धद्व्यंशा कपोताली चान्तःपट्टम् द्विभागकम् ॥ ८ ॥
सार्धाः पञ्च ग्रासपट्टिः कर्तव्यं विधिपूर्वकम् ।
अर्धे तु स्कन्धपट्टयाश्च त्रिभागं स्कन्धक्षोभणम् ॥ ९ ॥
अर्धे तु मुखपट्टयाश्च चतुर्भागं च कर्णकम् ।
क्षोभणस्याष्टभि र्भागैः कर्तव्यं तद्दशाङ्किते ॥ १० ॥
यावद्दीर्घं भवेल्लिङ्गं तावान् पीठस्य विस्तरः ।
उमा तु पीठिका ज्ञेया लिङ्गं शङ्कर उच्यते ॥ ११ ॥
न्यूनाधिकं न कर्तव्यमुमायाः शङ्करस्य च ।
न्यूनाधिके कृते दोषः कुरुते राष्ट्रविभ्रमम् ॥ १२ ॥

इति पीठिकालक्षणम् ॥

शुण्डिला (स्थण्डिला) च तथा वापी यक्षी वेदी तथैव च ।
मण्डला पूर्णचन्द्रा च वज्री पद्माकृतिस्तथा ॥ १३ ॥
अर्धचन्द्रा त्रिकोणा च विज्ञेया दशपीठिकाः ।
आसां तु रूपसंस्थानं कथयामि निबोध ते ॥ १४ ॥
स्थण्डिला चतुरश्रा च एकमेखलया युता ।
द्विमेखला भवेद्वापी यक्षी चैव त्रिमेखला ॥ १५ ॥
चतुरश्रायता चैव वेदी सर्वार्थशोभना ।
लिङ्गेष्वेताः प्रयत्नेन वर्जनीया सदा बुधैः ॥ १६ ॥

कार्या च मण्डलाकारा मेखलाभिरलङ्कृता ।
मण्डला सा तु विज्ञेया गणानां वृद्धिहेतवे ॥ १७ ॥
पूर्णचन्द्रसमाकारा मध्येन्यस्त त्रिमेखला ।
सा विज्ञेया पूर्णचन्द्रा रुद्राणां सततं प्रिया ॥ १८
षडश्रा च भवेद् वज्री मेखलात्रयभूषिता ।
षोडशाश्रा भवेत् पद्मा किञ्चिद्ह्रस्वा तु मूलतः ॥ १९ ॥
लग्नज्यधनुषाकारा अर्धचन्द्रा तु सा भवेत् ।
त्रिकोणा चोर्ध्वतो ह्रस्वा शकृत्या च सदृशी भवेत् ॥ २० ॥
न्यस्ता चोत्तरपूर्वेण प्रशस्ता लक्षणान्विता ।
लिङ्गस्यार्धत्रिभागेन बाहुल्यार्धसमन्विता ॥ २१ ॥
मेखलायास्त्रिभागेन खातं चैव प्रणालतः ।
अधस्तात् पादहीनं तु कारयेच्चैव शोभनम् ॥ २२ ॥
प्रमाणादधिकं कार्यं प्रणालं चोत्तरे तथा ।
पृथुपीठत्रिभागेन निष्काशं तस्य कारयेत् ॥ २३ ॥
विस्तारस्तत्प्रमाणेन मूलार्धे च तदग्रतः ।
जलमार्गविधानं तदग्रतश्च सुशोभनम् ॥ २४ ॥
ददाति स्थण्डिला चैव धनं धान्यं च पुष्कलम् ।
गोमहिषीप्रदा वापी यक्षी सर्वार्थसंपदम् ॥ २५ ॥
मण्डला कीर्तिबहुला पूर्णचन्द्रा तु शान्तिदा ।
वज्री शत्रुविनाशाय पद्मा सौभाग्यदायिनी ॥ २६ ॥
पुत्रं दद्यादर्धचन्द्रा त्रिकोणा शत्रुनाशनी ।
देवस्य योजनार्थं तु पीठिकास्तत्र कीर्तिताः ॥ २७ ॥
शैले नियोजयेच्छैलीं दारुजे दारुजां तथा ।
पार्थिवे पार्थिवा कार्या लोहजे लोहजोत्तमा ॥ २८ ॥
रत्नजे धातुजा शस्ता रत्नजा तु विशेषतः ।
नान्ययोनिं प्रकुर्वीत कृतायां वैरविग्रहे ॥ २९ ॥
यावद्दीर्घं भवेल्लिङ्गं तावान् पीठस्य विस्तरः ।
मानाधिकं न कुर्वित उमायाः शङ्करस्य च ॥ ३० ॥
उमा तु पीठिका ज्ञेया लिङ्गं शङ्कर उच्यते ।
एवमेव समाख्यातं पीठिकानां तु लक्षणम् ॥ ३१ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां पीठिकालक्षणाधिकारो नाम सप्तोत्तरद्विशततमं सूत्रम् ॥

# (२०८) नन्दीश्वर ( वृषभ ) लक्षणमष्टोत्तर द्विशततमं सूत्रम् ॥

विश्वकर्मोवाच–

अथातः सम्प्रवक्ष्यामि नन्दिकेश्वरलक्षणम् ।
पादोने वा त्रिभागोने पीठिकोच्छ्रयमानतः ॥ १ ॥
उच्छ्रयेचण्डकं कुर्यात् स्थूलं भीष्माननं तथा ।
पिबन्तं च तथा माक्षं विकृताननमूर्ध्वगम् ॥ २ ॥
चण्डिकाग्रकेशैश्चैव निबद्धोपरि चण्डिका ? ।
हारकेयूरसम्यक्तं कङ्कणाभ्यामलङ्कृतम् ॥ ३ ॥
पदतश्चाष्टमं गत्वा तपनाक्षं पद्मकृतिम् ।
रुचकं भद्रकं चैव हंसं वा वर्धमानकम् ॥ ४ ॥
जगत्युपरि कुर्याद्वै बाह्ये वै वामतस्तथा ।
एवं विधं तु कर्तव्यं चण्डनाथस्य लक्षणम् ॥ ५ ॥

इति चण्डनाथलक्षणम् ॥

नन्दीश्वरं ततो वक्ष्ये यदुक्तं पूर्वमेव हि ।
तस्य स्वरूपसंस्थानं कथयामि तु सम्प्रति ॥ ६ ॥
ब्रह्माद्यं विष्णुभागान्तं कल्पयेत्तस्य चोच्छ्रयम् ।
पादाधिको भवेज्ज्येष्ठः कनिष्ठः पादवर्जितः ॥ ७ ॥
तदुच्छ्रयं च विभजेद् भागैः पञ्चभिरेव च ।
तत्र भागप्रमाणेन सप्तभागायतो भवेत् ॥ ८ ॥
द्विभागं च भवेद् वक्त्रमायामे चोच्छ्रयं विदुः ।
अधोभागे मस्तकस्य भोगसूत्रे च सक्थिनी ॥ ९ ॥
शृङ्गं पादं तु विस्तारे विस्तारादुच्छ्रयोऽधिकः ।
शृङ्गाधश्चार्धभागेन कर्णः पादोनभागिकः ॥ १० ॥
भागमेकं भवेद्ग्रीवा पृथु कम्बलतः सह ।
अधोभागे मस्तकाच्च पृष्ठस्कन्धं च भागिकम् ॥ ११ ॥
त्रिभागायतकं पृष्ठं त्रिभागं पृथु कुक्षयोः ।
द्विभागमुच्चैरुदरं च परमारुतत्युत्तमम् ? ॥ १२ ॥
बाहुल्यं भागमेकं तु जङ्घा युग्मांशकायता ।
अर्धभागैक अग्रं च ? खुरिका चार्धभागतः ॥ १३ ॥
पुच्छमूलं भागपादमग्रं कुर्यात्तदर्धतः ।
चतुर्भागायतं पुच्छं भागैकं चाग्रचामरम् ॥ १४ ॥
तदुत्तमं च सोत्साहं पादैकं चोच्छ्रितं क्रमात् ।
घण्टाचामर घर्घरमालालङ्कार भूषितम् ॥ १५ ॥
शृङ्गाभरणमप्येवं कुडिकाग्रे समोदका ।
मोदका वृषवक्त्राग्रे तापसौवदुकाकारम् ॥ १६ ॥

प्रासादमान तश्चान्त-लिङ्गस्थानादि कल्पितम् ।
एकाद्वित्रि चतुःपञ्चषट्सप्ताङ्गुलकान्तरे ॥ १७ ॥
मूर्तिस्थाने तु कर्तव्या मूलस्तम्भैश्चतुष्किका ।
वृषस्य चोच्छ्रयः कार्यो विष्णुभागान्तदृष्टिकः ॥ १८ ॥
पादे जानु कटिं यावदर्चाया वाहनस्य दृक् ।
गुह्यनाभिस्तनान्तं वा सूर्ये व्योमस्तनान्तकम् ॥ १९ ॥
विलोमे कुरुते पीडामधोदृष्टिः सुखक्षयम् ।
स्थानं हन्यादूर्ध्वदृष्टिः स्वस्थाने मुक्तिदायिका ॥ २० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां चण्डीश्वर (नन्दीश्वर) वृषभ लक्षणाधिकारो नामाष्टोत्तरद्विशततमं सूत्रम् ॥

---

# (२०९) प्रतिमाप्रमाणं नवोत्तरद्विशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

प्रासादमानोद्भवार्चा प्रमाणे त्रिविधोदिता ।
सीमागर्भद्वारमानं तुर्यो हस्ताङ्गुलैर्विधिः ॥ १ ॥
आदौ सीमा पुनर्गर्भे द्वारमानं तृतीयकम् ।
हस्ताङ्गुलक्रमोक्तं च आर्चामानं चतुर्थकम् ॥ २ ॥
सीमार्धे च षडंशोनं हस्तात्तुर्यकरान्तगम् ।
इषुरसात्मकहस्ते स्थिता सीमा त्रिभागतः ॥ ३ ॥
पादोद्भवा दशान्तं च षडंशोना ह्यमा तथा ।
पञ्चमांशा च पादोना हस्तविंशतिकावधि ॥ ४ ॥
त्रिंशद्धस्ते षडंशेन त्रिभागोनं प्रकल्पयेत् ।
सप्तांशेऽर्चामानं त्यक्ता-र्धे चत्वारिंशदंशकैः ॥ ५ ॥
अष्टमांशां शतार्धे तु त्रिभागोनां प्रकल्पयेत् ।
सीमामानोद्भवाख्याता ऊर्ध्वार्चा तु तथोत्तमा ॥ ६ ॥
मध्यमा द्वादशांशोना अष्टांशोना कनिष्ठिका ।
ज्येष्ठमध्याधमाः ख्याताः सीमामाने त्रिधोदिताः ॥ ७ ॥

इति सीमामानोद्भवार्चा ॥

चतुरस्त्रीकृते क्षेत्रे दशधा प्रविभाजिते ।
चतुर्भागैश्च द्वे भित्ती शेषं गर्भगृहं मतम् ॥ ८ ॥
गर्भगृह त्रिभागैश्च ह्यर्चा कार्या सुशोभना ।
दशांशोना मध्यमा च पञ्चांशोना कनीयसी ॥ ९ ॥

इति गर्भमानम् ॥

द्वारमानोद्भवां वक्ष्ये ह्यर्चां सर्वत्र शोभनाम् ।
ऊर्ध्वाऽऽसनस्था शय्यास्था प्रत्येका मानसम्भवा ॥ १० ॥
तत्त्वयुग्मोद्भवे द्वारे ह्यर्चामानं त्रिधोदितम् ।
षट्चन्द्रौ तत्त्वेन्दू शक्राः ऊर्ध्वार्चा सङ्ख्या मता ॥ ११ ॥
आसनस्था पूर्वमाने शक्रविश्वसूर्यांशतः ।
स्थितासना च केशान्तं प्रमाणं सूत्रतः स्मृतम् ॥ १२ ॥

इति द्वारमानोद्भवार्चा ॥

हस्ताङ्गुलक्रमेणैव अर्चा प्रासादमानतः ।
तस्यानुक्रम उक्तश्च पङ्क्ति सोपानसंचयः ॥ १३ ॥
रुद्रादौ चैव दिग्वृद्धि हस्तैकाद्वेदहस्ततः ।
पक्षवृद्धादिषु भ्रान्त सनार्धान्तांगुलोद्भवा ? ॥ १४ ॥
एतन्मानोद्भवा ज्येष्ठा त्रिधोदितक्रमागता ।
त्यक्तविंशत्यंशा मध्या दशांशोना कनीयसी ॥ १५ ॥

उक्तमूर्ध्वार्चाप्रमाणं शय्यास्था त्वेकमानतः ।
न्यूना न्यूनाधिकार्चानां प्रमाणमिति सम्भवेत् ॥ १६ ॥
हस्तपादादिवृद्धिश्च क्रमेण परिकीर्तिता ।
हस्ताद्यं तुर्यपर्यन्तमतऊर्ध्वं न कारयेत् ॥ १७ ॥
त्र्यङ्गुलतो दिग् हस्तान्तं वृद्धिं कुर्यादनुक्रमात् ।
दिगुत्तरं शतार्धान्तमेकैकाङ्गुलवृद्धितः ॥ १८ ॥
विंशत्यंशैः कनिष्ठोना ज्येष्ठा तदंशवर्धनात् ।
इत्यादिकं तथा प्रोक्तं त्रिविधं मानमेव हि ॥ १९ ॥
आसनस्थोद्भवा ख्याता शयनस्था क्रमोद्भवा ? ।
स्थित्वा शयनकेशान्तं प्रमाणमेतत्सम्भवम् ? ॥ २० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां प्रतिमाप्रमाणाधिकारो नाम नवोत्तरद्विशततमं सूत्रम् ॥

---

# (२१०) प्रतिमालक्षणविधिर्नाम दशोत्तरद्विशततमं सूत्रम् ॥

विश्वकर्मोवाच—

यत् किञ्चित्प्रतिमायामं विभजेन्नवभागतः ।
स्वकीयाङ्गुलमानेन भागं वै द्वादशाङ्गुलम् ॥ १ ॥
अष्टोत्तरशतं सङ्ख्यैरङ्गुलैरुच्छ्रयो भवेत् ।
नवतालः स विज्ञेयो व्यवहारे प्रसिद्ध्यति ॥ २
नवताले ततो वृद्धौ मस्तोर्ध्वे चतुरङ्गुलैः ।
विख्यातोऽर्चायामको द्वा-दशोत्तरशताङ्गुलः ॥ ३ ॥
उष्णीषमङ्गुलं प्रोक्तं त्र्यङ्गुलं शिरउच्यते ।
तालो ललाटाद् गलान्तं सर्वत्रैव मुखे क्रमः ॥ ४ ॥
त्र्यङ्गुलं च ललाटं स्यादङ्गुलं नेत्रसूत्रकम् ।
नेत्रसूत्रे तु कर्तव्या नासिका चतुरङ्गुला ॥ ५ ॥
गोजका चैकमात्रा स्यादधरं त्रियवान्तरम् ।
ओष्ठो यवैः पञ्चभिः स्याद्धनुः सार्धाङ्गुला भवेत् ॥ ६ ॥
विस्तारे वै द्व्यङ्गुलं तु गलमर्धाङ्गुलं मतम् ।
ग्रीवा सार्धाङ्गुला स्तन-सूत्रं त्रयोदशाङ्गुलम् ॥ ७ ॥
द्वादशाङ्गुलका नाभि उदरं चतुरङ्गुलम् ।
वलिकात्रयसम्युक्तं गुह्यमष्टाङ्गुलं तथा ॥ ८ ॥
पञ्चमात्रोद्भवं मेढं वृषणश्चतुरङ्गुलः ।
.................................... ॥ ९ ॥
चतुर्विंशत्यङ्गुला स्याज्जङ्घा जानुयुगाङ्गुलम् ।
जङ्घामानेन नलको गुल्फः स्याच्चतुरङ्गुलः ॥ १० ॥
उच्छ्रयः कथितश्चैवं मस्तान्तो नवतालकः ।
षट् त्रिंशदङ्गुलो मध्यो विस्तरं शृणुसम्प्रति ॥ ११ ॥
चन्द्रोपमं ललाटं स्याद्विस्तारे चाष्टमात्रकम् ।
आयामे द्व्यङ्गुले नेत्रे विस्तारे चाङ्गुलायते ॥ १२ ॥
नासोर्ध्वे च भवेन्मात्रं द्विमात्रं नयनान्तरम् ।
सार्धाङ्गुला च नासा स्यात्पुटिः स्याद् द्वियवान्तरा ॥ १३ ॥
निष्पावसदृशी श्रोत्रपुटिरर्धाङ्गुला तथा ।
पिप्पली पुटितुल्या च पिच्छली (चम्पिका) चतुरङ्गुला ॥ १४ ॥
हनुका द्व्यङ्गुलायामे गण्डौ वृत्तौ षडङ्गुलौ ।
द्वादशाङ्गुले विस्तारे कर्णौ चैकैकमङ्गुलम् ॥ १५ ॥
कर्णपार्श्वे द्विमात्रं च तत्तुल्यं चान्यतो ? (चोभतो) भवेत् ।
अङ्गुष्ठाङ्गुलमायामे कर्णौ वै लक्षणान्वितः ॥ १६ ॥
हनुकेशान्तयोर्मध्ये मानं षट्त्रिंशदङ्गुलम् ।
ग्रीवाष्टांशा परिणाहे चतुर्विंशतिमात्रका ॥ १७ ॥

अष्टाङ्गुलौ तथा स्कन्धौ स्तनोर्ध्वे द्वादशाङ्गुले ।
कक्षास्थान प्रकोष्ठाभ्यां षाडशाङ्गुलमीरितम् ॥ १८ ॥
प्रकोष्ठान्मणिबन्धश्चाऽङ्गुलान्यष्टाऽथवा दश ।
सप्ताङ्गुलं करतलं मध्यमा पञ्चमात्रका ॥ १९ ॥
तर्जनी चाऽनामिका च हीना च स्याच्चतुर्यवैः ।
अनामिका पञ्चयवहीना सा स्यात्कनिष्ठिका ॥ २० ॥
अङ्गुष्ठं स्याच्चतुर्मात्रं तालार्धे च करोर्ध्वकम् ।
पञ्चाङ्गुलं च विस्तीर्णं कुर्यात्करतलं तथा ॥ २१ ॥
अष्टयवान्तरेऽङ्गुष्ठं तर्जनी षड्यवान्तरे ।
मध्याद्यान्तिमान्ताः सप्त षट्पञ्चयवान्तराः ॥ २२ ॥
त्रिपर्वकास्तथा सर्वा निम्ना अग्रे सुवृत्तकाः
पर्वार्धेन नखास्ताभ्यस्ताभिः सार्धं विनिर्गताः ॥ २३ ॥
सार्धद्विपर्वं चाङ्गुष्ठं पर्वार्धे च नखाः स्मृताः ।
कुलरेखा च कर्तव्या अङ्गुष्ठमनुवर्तते ॥ २४ ॥
कनिष्ठाधस्तर्जन्यन्तमायूरेखा समीरिता ।
मध्यमा च तथा रेखा धनरेखा तदूर्ध्वतः ॥ २५ ॥
त्र्यङ्गुलो मणिबन्धः स्याद्बाहे सार्धदशाङ्गुलम् ।
गजहस्तोपमौ बाहू संस्थितौ च मनोहरौ ॥ २६ ॥
विंशत्यङ्गुलकं चैव कक्षयोरुभयान्तरम् ।
सप्ताङ्गुलं भुजस्कन्धः कक्षे चैकैकमङ्गुलम् ॥ २७ ॥
चतुर्दशाङ्गुलो मध्यो नाभ्यूर्ध्वे च षडङ्गुलम् ।
अष्टादशाङ्गुलं नाभे द्विमुखं चोरुमूलकम् ॥ २८ ॥
एकादशाङ्गुला जङ्घा निम्नाग्रे च सुवर्तिता ।
सप्ताङ्गुलं जानुशिरो नलाग्रं निम्नमावृतम् ॥ २९ ॥
वेदाङ्गुलं गुल्फमूलं नाहं च द्वादशोद्भवम् ।
षडङ्गुलं पूर्वपादः तर्जन्याः पूर्वभागतः ॥ ३० ॥
सार्धत्र्यङ्गुलमङ्गुष्ठं तर्जनी चतुरङ्गुला ।
.................................... ... ॥ ३१ ॥
अङ्गुष्ठसार्धाङ्गुलोकं तर्जनी च तदर्धकम् ? ।
अङ्गुष्ठार्धे तु सूत्रेण कुर्यादग्रे कनिष्ठिकाम् ॥ ३२ ॥
निम्नमानक्रमः प्रोक्तः पर्वसङ्ख्याभिधीयते ।
त्रिपर्वकोद्भवाश्चान्या अङ्गुष्ठं च द्विपर्वकम् ॥ ३३ ॥
पर्वार्धे च नखं कुर्यात्स्मृतः सर्वेष्वयं विधिः ।
षण्मात्रः पादविस्तार श्चतुर्मात्रा च पार्ष्णिका ॥ ३४ ॥
पादमूलतले चापाकारे मध्योन्नते तथा ।
अक्षि ? गुल्फौ प्रकर्तव्यौ अर्धार्धमात्रकावुभौ ॥ ३५ ॥
स्कन्धौ समुन्नताकारौ पृष्ठमध्यस्तु वंशवत् ।
वंशक्षिप्तो व्रतपक्षौ ? सर्वावयवशोभनौ ॥ ३६ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां प्रतिमालक्षण-विधिनिर्णयाधिकारोनाम दशोत्तरद्विशततमं सूत्रम् ॥

## (२११) स्थानकविधिनिर्णयो नामैकादशोत्तर द्विशततमं सूत्रम् ॥

विश्वकर्मोवाच–

अथ वक्ष्ये स्थानविधिं क्रमयोगमुपागतम् ।
ऋज्वागतादि-स्थानानि पञ्च वै पूर्वभागतः ॥ १ ॥
कार्याण्यपराङ्मुखानि चतुर्वृत्ताभिधानि च ।
ब्रह्मसूत्रोद्भवं पूर्वं सन्मुखं चावलोकने ॥ २ ॥
अङ्गाभिधानसंज्ञे तु ऋज्वागतादिस्थानतः ।
ऋज्वागतं ध्रुवं पूर्वं तदाद्यं प्रवृत्तभ्रमः ॥ ३ ॥
स्वाङ्गुलोद्भवयुक्ता च पादयुक्ता त्रिशोभना ।
भ्रुकेशान्तयोर्मध्ये च शिरोवृत्ते तु मानतः ॥ ४ ॥
आद्यमृज्वागतं नाम अर्धर्जु च द्वितीयकम् ।
साचीकृतं तृतीयं तु द्वयर्धर्ज्वाख्यं चतुर्थकम् ॥ ५ ॥
उपर्य्यधो सूत्रधातैः पराङ्मुख ( वृत्त ) चतुष्टयम् ।
ऋज्वागतपरावृत्त मर्धर्जुपरावृत्तकम् ॥ ६ ॥
साचीकृतपरावृत्तं ततो द्वयर्धर्जुपूर्वकम् ।
इत्युक्तं परभागैश्च परावृत्तचतुष्टयम् ॥ ७ ॥
उभयर्ज्वागतमध्ये प्रत्यङ्गाङ्गकशोभनम् ॥
इति पार्श्वागतं प्रोक्तं स्थानकं नवमं विदुः ॥ ८ ॥
पिंपलीकण्ठमध्ये च बाह्वोश्च स्कन्धगर्भतः ।
अक्षसूत्रोद्भवाख्यं च पार्श्वसूत्रं प्रतिष्ठितम् ॥ ९ ॥
नासाग्रं दशनाग्रं च अङ्गुष्ठाग्रं तथैव च ।
पूर्वे प्रतिष्ठितं सूत्रं क्रमयुक्तिमुपागतम् ॥ १० ॥
ललाटनासिकामध्ये चिबुकस्तनयोस्तथा ।
मेढ्रं च गुह्यमूलं च वलसूत्रं प्रतिष्ठितम् ॥ ११ ॥
कुर्यात्स्थूलं च सूत्रस्थं नासाग्रमात्रनिर्गतम् ।
उच्छ्वासः सार्धद्वयाक्षोऽङ्गुष्ठमूलं वेदाङ्गुलम् ॥ १२ ॥
क्षिप्त्वा सङ्क्रमत्रियवं गोजिकामात्रमेव च ॥ १३ ॥
अधरान्तं गतं सूत्रं हनुकामात्रमेव च ।
ग्रीवा वेदाङ्गुलोत्क्षिप्ता आह्निका ? मात्रसंज्ञिका ।
जङ्घा मध्ये त्रिभागोक्ता द्विगुणं जानुमस्तके ॥ १४ ॥
षण्मात्रा गुल्फसूत्रे च प्रवेशो निर्गमस्तथा ।
निर्गमश्च प्रवेशश्च युक्तिमानं विधीयते ॥ १५ ॥
कार्यं पृष्ठं स्तनसूत्रे चतुर्दशाङ्गुलक्रमात् ।
नाभिदेशे तथा सङ्ख्याऽऽसनसूत्रे चतुर्दश ॥ १६ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां स्थानकविधिनिर्णयाधिकारो नामैकादशोत्तरद्विशततमं सूत्रम् ॥

## (२१२) एकादशरुद्रनिर्णयो नाम द्वादशोत्तर द्विशततमं सूत्रम् ॥

विश्वकर्मोवाच—

सद्यो वामोऽघोरतत्पुरुषावीशान एव च ।
मृत्युंजयश्च विजयः किरणाक्षोऽघोरास्त्रकः ॥ १ ॥
श्रीकण्ठश्च महादेवो रुद्राश्चैकादश स्मृताः ।
द्वादशकलासम्पूर्ण-मूर्तिश्चैवं सदाशिवः ॥ २ ॥
गणेशं च कुमारं च तथाऽष्टौ द्वारपालकान् ।
दिक्पालकसमायुक्तं नृत्यन्तं त्रिपुरान्तकम् ॥ ३ ॥
अर्धनारीश्वरं वक्ष्ये तथा चोमामहेश्वरम् ।
कृष्णशङ्करमेवं च हरिहरपितामहम् ॥ ४ ॥
हरिहरस्वर्णगर्भं सचन्द्रार्कं पितामहम् ।
त्रिपुरुषं ब्रह्म-विष्णुमहेशं तु त्रिमूर्तिभिः ॥ ५ ॥
भास्करं ग्रहसम्युक्तं कृष्णं च द्वारकास्थितम् ।
जैनेन्द्रं वच्मि चतुर्विं-शति तीर्थङ्करानपि ॥ ६ ॥
गौर्याश्चैव तथा मूर्तिं दुर्गानवकमेव च ।
श्रियस्तथा च भैरव्या मातॄणां च तथाष्टकम् ॥ ७ ॥
शुक्लाम्बरधरं देवं शुक्लमाल्यानुलेपनम् ।
शुक्लोष्णीषं शुक्लनेत्रं शुक्लयज्ञोपवीतिनम् ॥ ८ ॥
जटाभारसमायुक्तं बालेन्दुकृतशेखरम् ।
त्रिलोचनं सौम्यमुखं चतुःकुण्डलभूषितम् ? ॥ ९ ॥
दिव्यदेहं महाकायं नवयौवनमण्डितम् ।
महाभुजं महोत्साहं वरदाभयपाणिकम् ॥ १० ॥

इति सद्योजातः प्रथमो रुद्रः ॥

रक्ताम्बरधरं देवं रक्तयज्ञोपवीतिनम् ।
रक्तोष्णीषं रक्तनेत्रं रक्तमाल्यानुलेपनम् ॥ ११ ॥
जटायां कृतचंद्रं च त्रिनेत्रं तुङ्गनासिकम् ।
महारक्तं महाबाहुं शूल खट्वाङ्ग धारिणम् ॥ १२ ॥
रक्तास्यं रक्तनयनं ? रक्तकुण्डलधारिणम् ।
सर्वालङ्कारसम्युक्तं सर्वाभरणभूषितम् ॥ १३ ॥

इति वामदेवो द्वितीयो रुद्रः ॥

करालदंष्ट्रं विकटास्यं सर्पशीर्षं त्रिलोचनम् ।
मुण्डमालाधरं देवं सर्पकुण्डलमण्डितम् ॥ १४ ॥
भुजङ्गकेयूरधरं सर्पहारोपवीतिनम् ।
गोनसं कटिसूत्रं च गले वृश्चिकमालिकाम् ॥ १५ ॥

नीलोत्पलदलश्याममतसीपुष्पसन्निभम् ।
भुजगभूषणमजटिलं शशाङ्ककृतशेखरम् ॥१६॥
तक्षकं कर्कोटकं च पायूनेत्रे पुरौ कृतौ ।
अघोरसंज्ञकं हेतुं कालरूपमिवापरम् ॥ १७ ॥
महावीर्यं महोत्साहमष्टबाहुं महाबलम् ।
रिपुसैन्यं त्रासयन्तं निवेशो यत्र भूतले ॥ १८ ॥
खट्वाङ्गं च कपालं च खेटकं पाशमेव च ।
वामहस्तचतुष्कण शस्त्राणां च चतुष्टयम् ॥ १९ ॥
त्रिशूलं कलशं खड्गं दण्डश्चैवारिमर्दनम् ।
करेषु वै दक्षिणेषु चैतदस्त्रचतुष्टयम् ॥ २० ॥
इत्यघोर स्तृतीयो रुद्रः ॥

पीताम्बरधरं देवं पीतयज्ञोपवीतिनम् ।
मातुलिङ्गं करे वामे अक्षसूत्रं च दक्षिणे ॥ २१ ॥
इति तत्पुरुषश्चतुर्थो रुद्रः ॥

शुद्धस्फटिकसंकाशं जटाचन्द्रविभूषितम् ।
त्रिनेत्रं शूलहस्तं च वामे धृतकपालकम् ॥ २२ ॥
इतीशानः पञ्चमो रुद्रः ॥

कपालमालिनं श्वेतं शशाङ्ककृतशेखरम् ।
व्याघ्रचर्मधरं रुद्रं नागेन्द्रोरुविभूषितम् ॥ २३ ॥
त्रिशूलं चाक्षसूत्रं च विभर्ति दक्षिणे करे ।
कपालं कुण्डिकां वामे योगमुद्रां करद्वये ॥ २४ ॥
इति षड्भुजमृत्युञ्जयः षष्ठो रुद्रः ॥

एकवक्त्रं त्रिनेत्रं च शशाङ्ककृतशेखरम् ।
बृहल्ललाटकापोलं कम्बुग्रीवं सुशोभनम् ॥ २५ ॥
चतुर्भुजं महाबाहुं शूलपङ्कजधृत्करम् ।
दिव्यरूपधरं देवं वरदाभयपाणिकम् ॥ २६ ॥
इति विजयः सप्तमो रुद्रः ॥

चतुर्भुजं महावक्षः शुक्लाक्षं सूत्रपाणिकम् ।
पुस्तकाभयहस्तं च वरदाक्षं त्रिलोचनम् ॥ २७ ॥
इति किरणाक्षोऽष्टमो रुद्रः ॥

ज्वलत्पावकसंकाशं खड्गहस्तं त्रिशूलिनम् ।
महाक्रोधकरं देवं मायाकृतमहाग्रहम् ॥ २८ ॥
इत्यघोरास्त्रो नवमो रुद्रः ॥

चित्रसूत्रवस्त्रधरं चित्रयज्ञोपवीतिनम् ।
चित्ररूपं महासत्यं चित्रैश्वर्यसमन्वितम् ॥ २९ ॥
चतुर्बाहुं चैकवक्त्रं सर्वालङ्कारभूषितम् ।
खड्गं धनुः शरं खेटं शशाङ्ककृत शेखरम् ॥ ३० ॥
इति श्रीकण्ठो दशमो रुद्रः ॥

त्रिलोचनश्चतुर्बाहुः शुक्लाक्षः सुकरद्वयः ।
दक्षेणपाणिना पूर्ण वंशामृतरसं पिबत् ॥ ३१ ॥
धृतमुक्ताक्षसूत्रश्च महादेवो घनोर्जितः ।
महाश्चर्यप्रदायी च रुद्रश्चैकादशः स्मृतः ॥ ३२ ॥

इति महादेव एकादशो रुद्रः ।

पद्मासनेन संस्थाप्य ! योगासनकरद्वयम् ।
पञ्चवक्त्रं भयं शक्ति शूलखट्वाङ्गधृत्करम् ॥ ३३ ॥
भुजङ्गसूत्रडमरु बीजपूरधरं शुभम् ! ।
इच्छाज्ञानक्रियं चैव त्रिनेत्रं ज्ञानसागरम् ॥ ३४ ॥

इति द्वादशार्कलासम्पूर्णमूर्त्तिः सदाशिवः ॥

गजाननं चतुर्बाहुं त्र्यक्षं पुरुषरूपिणम् ।
एकदन्तं महाचण्डं व्यालयज्ञोपवीतिनम् ॥ ३५ ॥
स्वदन्तं दक्षिणे हस्ते परशुं चाऽपरे करे ।
उत्पलं चोर्ध्वतो वामे तस्याऽधो मोदकं स्थितम् ॥ ३६ ॥
सिन्दूर रक्तं कुम्भं च कुङ्कुमारुणविग्रहम् ।
कुर्याच्च मूषकारूढं सिद्धिदं सर्वकामदम् ॥ ३७ ॥

इति गणपतिः ॥

वरदं चाङ्कुशं दन्तं परशुं दक्षिणे करे ।
कपालं शराक्षमाले पाशं दण्डं च वामके ॥ ३८ ॥
पञ्चवक्त्रं त्रिनेत्रं च हरं रुद्रगणेश्वरम् ।
वृषभवाहनोपेतं सर्वकामार्थसाधनम् ॥ ३९ ॥

इति हरिहरमूर्तिः ॥

षड्वक्त्रं द्वादशभुजं लोचनत्रयसंयुतम् ।
शिख्यारूढं मांसलं च कुमारं कुमाराकृतिम् ॥ ४० ॥
शरं शक्तिं च खड्गं च अङ्कुशं दण्डमेव च ।
अक्षसूत्रं षडेतानि वामकेषु भुजेषु च ॥ ४१ ॥
शृङ्गं धनुः पाशखेटं वरदां च कमण्डलुम् ।
दक्षिणेषु भुजेष्वेव मन्त्राणां षट्कमेव च ॥ ४२ ॥

इति स्वामिकार्तिकेयः ॥

क्षीरोदार्णवमध्यस्थ मुद्भवेऽमृतरूपिणम् ।
विषजीर्णं भुजङ्गानां तस्य आदौ समुद्भवम् ! ॥ ४३ ॥
सर्वाश्चर्यमयं रूपं विबोधाद्विषहारकम् ।
दारिद्र्यकुष्ठहरं च धर्मार्थकाममोक्षदम् ॥ ४४ ॥
मुक्तामण्डलशोभाढ्यं तप्तकाञ्चनसप्रभम् ।
हारकेयूरसम्युक्तं प्रभामण्डलमण्डितम् ॥ ४५ ॥
त्रिनेत्रं षड्भुजं शुभ्रं जटाखण्डेन्दुभूषितम् ।
व्याघ्राजिनं सितं सौम्यं नागयज्ञोपवीतिनम् ॥ ४६ ॥

त्रिशूलं चाक्षसूत्रं च कपालं कुण्डिकां तथा ।
याम्ये सौम्ये च बिभ्राणं व्यालव्याप्तौ करौ तथा ॥ ४७ ॥
पद्मासनस्थितं देवं वैद्यनाथं हरं प्रभुम् ।
वनमालादिसंयुक्तं सूर्यकोटिसमप्रभम् ॥ ४८ ॥
महाकेयूरसम्युक्तं प्रभामण्डलमण्डितम् ।
वैद्यनाथं विजानीयात् शक्त्यारोग्यप्रदायकम् ॥ ४९ ॥

इति वैद्यनाथ मूर्तिः ॥

गोरशतां ? वरं शान्तं कमण्डल्वक्षपाणिकम् ।
धन्वन्तरिं सुषेणं च वानरास्यामराङ्कम् ॥ ५० ॥
अमृतागमहस्तं च कुर्यात्तत्पार्श्वयोः सदा ।
अवतारः कृतो येन रामलक्ष्मणतत्त्वतः ॥ ५१ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छाया-
मेकादशरुद्रनिर्णयाधिकारो नाम द्वादशोत्तरद्विशततमं सूत्रम् ॥

## (२१३) दिक्पालादिविविधमूर्तिलक्षणो नाम त्रयोदशोत्तर द्विशततमं सूत्रम् ॥

विश्वकर्मोवाच—

मातुलिङ्गं च नागेन्द्रं डमरुं शूलमेव च ।
नन्दी मुकुटशोभाढ्यः सर्वाभरणभूषितः ॥ १ ॥
खट्वाङ्गं च कपालं च डमरुं बीजपूरकम् ।
दंष्ट्राकरालवदनो महाकालस्तु दक्षिणे ॥ २ ॥

इति पूर्वप्रतिहारौ ॥

तर्जनी त्रिशूलं चैव गदां डमरुकं तथा ।
हेरम्बो वामभागे हि भृङ्गिणं दक्षिणे स्मृतः ॥ ३ ॥
गदाडमरुखट्वाङ्गं तर्जनी वामहस्तके ।
उभौ वा दक्षिणद्वारे भृङ्गी दक्षिणतः शुभः ॥ ४ ॥

इति दक्षिणप्रतिहारौ ॥

त्रिशूलं डमरुं चैव खट्वाङ्गं बीजपूरकम् ।
पश्चिमे दुर्मुखो वामे तद्वक्त्रं गोमुखाकृति ॥ ५ ॥
पश्चिमद्वारि कार्यः स पाण्डुरोऽस्याथ दक्षिणे ।
खट्वाङ्गं च कपालं च डमरुं बीजपूरकम् ॥ ६ ॥

इति दुर्मुखो वामे पाण्डुरो दक्षिणे ॥

मातुलिङ्गं मृणालं च खट्वाङ्गं पद्मदण्डकम् ।
सितश्चैवोत्तरे द्वारे वामे चैव व्यवस्थितः ॥ ७ ॥
पद्मखण्डं च खट्वाङ्गं मृणालं बीजपूरकम् ।
असितो दक्षिणे भागे उत्तरे द्वार एव च ॥ ८ ॥

इति सितो वामेऽसितश्च दक्षिणे ॥

वरं वज्राङ्कुशौ चैव कुण्डीं धत्ते करैस्तु यः ।
गजारूढः सहस्राक्ष इन्द्रो वै पूर्वतः स्थितः ॥ ९ ॥
वरदः शक्तिहस्तश्च समृणालकमण्डलुः ।
ज्वालापुञ्जनिभो देवो मेषारूढो हुताशनः १० ॥
लेखनीं पुस्तकं धत्ते कुक्कुटं दण्डमेव च ।
सुमहामहिषारूढो यमः कृष्णाङ्ग ईरितः ॥ ११ ॥
खड्गं च खेटकं हस्ते कर्त्रीं चैवारिमस्तकम् ।
दंष्ट्रालम्बमुखीं कुर्याच्छवानारूढां च निर्ऋतिम् ॥ १२ ॥
वरं पाशं च कमलं करै बिभ्रत्कमण्डलुम् ।
कर्तव्यो मकरारूढो वरुणः पश्चिमे तथा ॥ १३ ॥
वरं ध्वजं पताकां च दधद्धस्तैः कमण्डलुम् ।
मृगारूढो हरिद्वर्णः पवनो वायुदिक्पतिः ॥ १४ ॥

गदां निधिं बीजपूरं करैर्बिभ्रत्कमण्डलुम् ।
गजारूढः प्रकर्तव्यो धनदश्चोत्तरे तथा ॥ १५ ॥
वरदं च त्रिशूलं च नागेन्द्रं बीजपूरकम् ।
वृषारूढश्च कर्तव्य ईशानो धवलद्युतिः ॥ १६ ॥
एकवक्त्रं दशभुजं नृत्यन्तं त्रिपुरान्तकम् ।
सिंहचर्मपरिधानं मृगचर्मोत्तरीयकम् ॥ १७ ॥
रक्ताम्बरधरं देवं सूर्यकोटिसमप्रभम् ।
कपालमालाभरणं शशाङ्ककृतशेखरम् ॥ १८ ॥
खट्वाङ्गखेटकधरं धृतखड्गकपालकम् ।
त्रिशूलादिन कण्ठा च शरशार्ङ्गविधारिणम् ॥ ११ ॥
पाशाङ्कुशधरं देवं कुण्डलाभ्यामलङ्कृतम् ।
हरं संस्थाप्य नृत्यन्तं बलयाकारसंस्थितम् ॥ २० ॥

इति दिक्पालयुक्तत्रिपुरान्तकमूर्तिः ॥

अर्धनारीश्वरं वक्ष्ये उमादेहार्धधारिणम् ।
वामाङ्के व स्तनं कुर्यात् कर्णे वै ताडपत्रकम् ॥ २१ ॥
वालिका वामकर्णे तु दक्षिणे कुण्डलं तथा ।
मुकुटार्धे च माणिक्यं जटाभारं च दक्षिणे ॥ २२ ॥
अर्धे चैव स्त्रियो रूपं सर्वाभरणभूषितम् ।
पुरुषं दक्षिणे भागे कपालकटिमेखलम् ॥ २३ ॥
त्रिशूलं चाक्षसूत्रं च तद्दक्षिणकरोद्धृतम् ।
कमण्डलुं दर्पणं च गणेशं वामतस्तथा ॥ २४ ॥

इत्यर्धनारीश्वरः ॥

उमामहेश्वरं वक्ष्ये उमया सह शङ्करम् ।
मातुलिङ्गं त्रिशूलं च धृतं दक्षिणतः करे ॥ २५ ॥
आलिङ्गन् वामहस्तेन नागेन्द्रं च द्वितीयके ।
हरस्कन्धे उमाहस्तं दर्पणं द्वितीये करे ॥ २६ ॥
अधस्ताद्वृषभं कुर्यात् कुमारं च गणेश्वरम् ।
भृङ्गिरिटिं तथा कुर्यान् निर्मांसं नृत्यसंस्थितम् ॥ २७ ॥

इत्युमामहेश्वरमूर्तिः ॥

कृष्णशङ्करकं वक्ष्ये कृष्णार्धेन तु संस्थितम् ।
कृष्णार्धे मुकुटं कुर्याज्जटाभारं च दक्षिणे ॥ २८ ॥
कुण्डलं दक्षिणे कर्णे वामे मकरकुण्डलम् ।
अक्षमालां त्रिशूलं च चक्रं वै शङ्खमेव च ॥ २९ ॥

इति कृष्णशङ्करमूर्तिः ॥

एकपीठसमारूढमेकदेहनिवासिनम् ।
षड्भुजं च चतुर्वक्त्रं सर्वलक्षणसम्युतम् ॥ ३० ॥
अक्षसूत्रं त्रिशूलं च गदां चैव तु दक्षिणे ।
कमण्डलुं च खट्वाङ्गं चक्रं वामभुजे तथा ॥ ३१ ॥

इति हरिहरपितामहः ॥

चतुर्वक्त्रं चाष्टबाहुं चतुष्कैकनिवासनम् ।
ऋज्वागतो मुखः कार्यः पद्महस्तो दिवाकरः ॥ ३२ ॥
खट्वाङ्गत्रिशूलहस्तो रुद्रो दक्षिणतः शुभः ।
कमण्डलुं चाक्षसूत्रमपरे स्यात् पितामहः ॥ ३३ ॥
वामे तु संस्थितश्चैवं शङ्खचक्रधरो हरिः ।
एवं विधं प्रकर्तव्यं सर्वकामफलप्रदम् ॥ ३४ ॥

इति हरिहरहिरण्यगर्भः ॥

षड्भुजं च चतुर्वक्त्रं सर्वाभरणभूषितम् ।
कमण्डलुं चाक्षसूत्रमुभयोः पङ्कजद्वकरम् ? ॥ ३५ ॥
मृणालमूर्ध्वकरयोः कर्तव्यं शुभलक्षणम् ।
सर्वाभरणसम्युक्तं सर्वकामफलप्रदम् ॥ ३६ ॥

इति चन्द्रार्कपितामहः ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां-दिक्पालादिविविधमूर्तिलक्षणाधिकारो नाम त्रयोदशोत्तर द्विशततमं सूत्रम् ॥

## (२१४) ब्रह्मसूर्यादिनवग्रहा नाम चतुर्दशोत्तर द्विशततमं सूत्रम् ॥

---

विश्वकर्मोवाच–

ऋग्वेदादिविभेदेन कृतादियुगभेदतः ।
विप्रादिवर्णभेदेन चतुर्वक्त्रश्चतुर्भुजः ॥ १ ॥
ब्रह्मा पितामहश्चैव विरञ्चिः कमलासनः ।
एकैकस्य यथा प्रोक्ता मूर्तिः स्यात्परमेष्ठिनः ॥ २ ॥
अक्षसूत्रं करे दक्षे शुचिस्तस्योर्ध्वतः स्थिता ।
पुस्तकं वामहस्ते च तस्याधस्तात् कमण्डलुः ॥ ३ ॥
कमलासनमूर्तिः स्यात्सर्ववर्णहितप्रदा ।
कलौ युगे भवेच्चैवं कर्तृकप्रवरादिषु ॥ ४ ॥

इति कमलासनः ॥

अक्षसूत्रं पुस्तकं च शुचिश्चैव कमण्डलुः ।
विरञ्चेः सा भवेन्मूर्ति द्वापरे सुखदायिनी ॥ ५ ॥

इति विरञ्चिः ॥

कमण्डलुश्चाक्षसूत्रं श्रुवाश्च पुस्तकं तथा ।
पितामहस्य मूर्तिः स्यात् त्रेतायां सुखदायिनी ॥ ६ ॥

इति पितामहः ॥

पुस्तकं चाक्षसूत्रं च श्रुवाश्चैव कमण्डलु : ।
ब्रह्मणः सा भवेन्मूर्तिः कृते तु सुखदायिनी ॥ ७ ॥
ब्रह्मा सुवक्त्रः सुभावः कर्णसंस्थितकुण्डलः ।
किरीटमालाशोभाढ्य समांस गलकेशकः ॥ ८ ॥
तप्तकाञ्चनवर्णाभो मणिरत्नहारोज्ज्वलः ।
मुक्ताकटककेयूर सर्वाभरण भूषितः ॥ ९ ॥

इति ब्रह्मणो मूर्तिः ॥

आदित्यस्य प्रवक्ष्यामि मूर्तिं नवग्रहान्विताम् ।
रक्तवर्णो महातेजाः शतपद्मोपरिस्थितः ॥ १० ॥
सर्वलक्षणसंयुक्तः सर्वाभरणभूषितः ।
द्विभुजश्चैकवक्त्रश्च श्वेतपङ्कजधृत्करः ॥ ११ ॥
तेजोवर्तुलबिम्बस्य मध्यस्थो रक्तवाससः ।
इदमादित्यरूपं स्यात् सर्वपापप्रणाशनम् ॥ १२ ॥
श्वेतवर्णो भवेत्सोमो रक्तो ह्यङ्गारकस्तथा ।
बुधश्च पीतवर्णाभस्तादृग्रूपं गुरोस्तथा ॥ १३ ॥
गोक्षीरधवलः शुक्रः कृष्णवर्णः शनैश्चरः ।
राजावर्तनिभो राहुर्धूम्रः केतुः सदा भवेत् ॥ १४ ॥

**सोमः कमलहस्तः स्यात् कुजो दण्डकमण्डलू ।**
**योगासनस्थश्च बुधो गुरुश्चाऽक्षकमण्डलू ॥ १५ ॥**
**अक्षं कमण्डलुं शुक्रः शनिर्दण्डकमण्डलू ।**
**अर्धकायः स्थितो राहुः केतुः करपुटाकृतिः ॥ १६ ॥**
**सप्ताश्वरथआदित्यश्चन्द्रो दशाहयः स्मृतः ।**
**मेषारूढोऽङ्गारकश्च बुधः सर्पासनस्थितः ॥ १७ ॥**
**हंसारूढं गुरुं विद्यात् शुक्रं दर्दुरवाहनम् ।**
**शनिं च महिषारूढं राहुं वै कुण्डमध्यगम् ॥ १८ ॥**
**सर्पपुच्छाकृतिं केतुं शनिं दंष्ट्राकरालकम् ।**
**किरीटमाला शोभाढ्याः सर्वाभरणभूषिताः ॥ १९ ॥**

**इति ग्रहसहिता सूर्यमूर्तिः ॥**

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां ब्रह्मसूर्यादिनवग्रहाधिकारो नाम चतुर्दशोत्तर द्विशततमं सूत्रम् ॥

---

## (२१५) सर्वप्रतिमा नाम पञ्चदशोत्तर द्विशततमं सूत्रम् ॥

विश्वकर्मोवाच—

अथातः सम्प्रवक्ष्यामि विष्णुमूर्तेश्च लक्षणम् ।
वर्णभेदानुक्रमं च मूर्तीनां च पृथग्विधिम् ॥ १ ॥
केशवो नारायणश्च माधवो गोविन्दस्तथा ।
स्थापिता मूर्तयश्चैषां विप्राणां च सुखावहाः ॥ २ ॥
विष्णोर्मधुसूदनस्य क्षत्रियस्य फलप्रदे ।
त्रिविक्रमवामनयोः स्थापनं वैश्यसौख्यदम् ॥ ३ ॥
स्थापिताश्चैधरी मूर्तिः शूद्रस्याऽपि सुखावहा ।
रजकानां चर्मकारनटानां वरटस्य च ॥ ४ ॥
कैवर्तमेदभिल्लानां हृषीकेशः सुखावहः ।
कुम्भकारो वणिग्वेश्या चक्रिकध्वजिनावपि ॥ ५ ॥
एतेषां प्रकृतीनां च सर्वेषां च सुखावहः ।
पद्मनाभः सुविख्यातः स्थाप्यो देवश्चतुर्भुजः ॥ ६ ॥
वांछ्रम्बकः श्रीमान् दण्डिनां च विशेषतः ।
दामोदरः समाख्यातस्तथा च ब्रह्मचारिणाम् ॥ ७ ॥
यच्छन्त्येते शुभं राज्यं भृत्यपुत्रकलत्रकम् ।
हरिं हरं हेमगर्भं नारसिंहमतः परम् ॥ ८ ॥
वामनं चैव वाराहं सर्ववर्णेषु कारयेत् ।
धनं धान्यं च सौभाग्यं लभन्ते कर्तृकावराः ॥ ९ ॥
स्थापिता चैव यन्मूर्तिर्व्यङ्गिता चेद्विसर्जयेत् ।
तन्मूर्तिश्च प्रकर्तव्या नाऽन्यमूर्तिं प्रवेशयेत् ॥ १० ॥
नखकेशाद्यङ्गकैश्च हारैः कण्ठविभूषणैः ।
कङ्कणैः कटिसूत्रैश्च किरीटकुण्डलादिभिः ॥ ११ ॥
वनमाला तुरगाद्या ! नूपुरैः पादकङ्कणैः ।
शस्त्राद्यायुधभेदैश्च व्यङ्गितामपि तां त्यजेत् ॥ १२ ॥
नखकेशाभूषणादिशस्त्रवस्त्राद्यलङ्कृतिः ।
विषमा व्यङ्गिता नैव दूषयेन्मूर्तिमङ्गकम् ॥ १३ ॥
शान्तिपुष्ट्यादि कृत्यैश्च पुनः सा च समीकृता ।
पुनारथोत्सवं कृत्वा प्रतिमा अर्चयेच्छुभाः ॥ १४ ॥
अङ्गोपाङ्गैश्च प्रत्यङ्गैः कथंचित् व्यङ्गदूषिता ।
विसर्जयेत्तां प्रतिमामन्यमूर्तिं प्रवेशयेत् ॥ १५ ॥
जीर्णोद्धारक्रमयुक्तिं प्रतिष्ठादिभिराचरेत् ।
प्रतिष्ठानन्तरे प्राज्ञः कुर्यादष्टमहोत्सवान् ॥ १६ ॥
याः खण्डिताश्च दग्धाश्च विशीर्णाः स्फुटितास्तथा ।
न तासां मन्त्रसंस्कारो गतासुस्तत्र देवता ॥ १७ ॥

परे वर्षशताद्देवाः स्थापिताश्च महत्तरैः ।
सान्निध्यं सर्वकालं तु व्यङ्गितानपि न त्यजेत् ॥ १८ ॥
पतनाद् व्यङ्गिता देवास्तेषां दुरितमुद्धरेत् ।
स्नपनोत्सवयात्रासु पुनारूपाणि चाचरेत् ॥ १९ ॥
नवैरेवापि जीर्णैर्वा ह्यर्चा या चाऽपि शोभना ।
परिष्कारेऽपरिष्कारे तत्रदोषो न विद्यते ॥ २० ॥
चतुर्भुजे वा द्विभुजे तस्यान्ते वाहिका क्रमम् ।
युग्मतालौ पृथगेका वाहिका पृथुमानतः ॥ २१ ॥
तत्तुल्यं च भवेद्दैर्घ्यं वाहिकानां प्रमाणकम् ।
देवताक्रम तद्रूपं ? तोरणं छन्दमीदृशम् ॥ २२ ॥
वाहिका स्तोरणे ? कुर्याद् यस्य देवस्य ये गणाः ।
शान्तिदाः सर्वकालेषु सर्वविघ्नप्रणाशनाः ॥ २३ ॥
द्वारशाखाकारनिकराधेरथिकान्विताः ? ।
वाहिका बाह्यपक्षे तु गजैःसिंहैरलङ्कृताः ॥ २४ ॥
तदूर्ध्वे तोरणं कुर्यात् पञ्चधा प्रोच्यते बुधैः ।
लीलोदरं च ललितं श्रीपुञ्जं नन्दिवर्धनम् ॥ २५ ॥
चित्रकूटाभिधेयं च पञ्चमं तोरणं मतम् ।
ललितं चेलिकाकारं त्रिरथिकं लीलोदरम् ॥ २६ ॥
श्रीपुञ्जं पञ्चरथिकं सप्तभिर्नन्दिवर्धनम् ।
नवभिश्च रथैर्युक्तं चित्रकूटं च कामदम् ॥ २७ ॥
रथिका याम्योत्तरयोर्मकरी विकृतानना ।
रथिकोभयपक्षे तु ईलिका वलणैर्युता ॥ २८ ॥
ब्रह्मविष्णू रविं कुर्याद् भद्राद्या गौरिकास्तथा ।
चण्डिकां बुद्धमर्हन्तं गणनाथादि शोभनम् ॥ २९ ॥
यादृग्वर्णोद्भवा अर्चास्तादृक् परिकरादिकम् ।
विवर्णादौ महादोषो धात्व्यमाने तु सर्वतः ॥ ३० ॥
रत्नादिकोद्भवेष्वेवं मार्कतस्फाटिकादिषु ।
न वैवर्ण्याकीर्णदोषो ह्यर्चा परिकरादिषु ॥ ३१ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां सर्वप्रतिमाधिकारो नाम पञ्चदशोत्तर द्विशततमं सूत्रम् ॥

---

## (२१६) ऊर्ध्वासनस्थाशयनस्थार्चापरिकरो नाम षोडशोत्तर द्विशततमं सूत्रम् ॥

विश्वकर्मोवाच–

आसनस्था तथैवार्चा शयनस्था विशेषतः ।
तासामनुक्रमं युक्तिं वक्ष्ये परिकरादिकम् ॥ १ ॥
पूर्वमानान्विताः कुर्यादर्चा वै सर्वशोभनाः ।
पक्षद्वये भुजानां तु युग्मतालप्रविस्तरैः ॥ २ ॥
मकर्य्यरैः कर्णिका वृत्ताः सुरूपाः लक्षणान्विताः ।
तिलकोर्ध्वे मृगाङ्कः स्यान्मालाचयसमन्विताः ॥ ३ ॥
कामदा बाह्यपक्षे तु गजसिंहादितः क्रमात् ।
पृष्ठपट्टोद्भवा, कार्या वाहिकोभयमध्यतः ॥ ४ ॥
प्रतिमास्कन्धकोत्सेधपृष्ठपट्टान्तवाहिका ।
दोला च तोरणं कार्यं नेमिकाकाररूपके ॥ ५ ॥
त्रिरथिका तथा कार्या छत्रत्रयसमन्विता ।
अशोकपत्रकाकारा छत्रदण्डसमन्विता ॥ ६ ॥
अधस्तात् फणिमण्डपं मयूरकान्ति सन्निभम् ।
मयूरकस्य चाधस्तात् सिंहासनमलङ्कृतम् ॥ ७ ॥
अर्चा चोर्ध्वोदये कार्या सिंहासनसमन्विता ।
पक्षद्वये धर्मचक्रं गजसिंहैरलङ्कृतम् ॥ ८ ॥
यक्षाः शासनदेवश्च तस्य चोभयपक्षतः ।
एवमेव तथा कार्यं सिंहासनमलङ्कृतम् ॥ ९ ॥
ऊर्ध्वाऽऽसनस्था चैवं स्यादर्चा सर्वशोभना ।
तदुच्छ्रयत्रिभागेन जलपट्टस्य निर्गमः ॥ १० ॥
तस्योर्ध्वे पीठबन्धस्तु कर्तव्यो लक्षणान्वितः ।
एवमूर्ध्वासनस्थायाः कार्यः परिकरस्तथा ॥ ११ ॥
यथोदितं परिकरं शयनस्थां च वच्म्यहम् ।
तदनुक्रमयुक्तिं च कथयामि विशेषतः ॥ १२ ॥
शयनस्था तु या चाऽर्चा पर्यङ्कान्तं यथोदिता ।
कार्या तद्द्विगुणा चैव वाहिका शीर्षपदान्तिका ॥ १३ ॥
गजसिंहैरलङ्कृत्वा कर्तव्या सर्वकामदा ।
तस्योर्ध्वे तोरणं चैव सदोर्ध्वे ! चाधिकोदयम् ॥ १४ ॥
त्रिपञ्चसप्तान्ता पङ्क्तिरर्चा सर्वत्र शोभना ।
सप्तलोकादिक्रमैश्च कर्तव्यास्तत्र देवताः ॥ १५ ॥
भुवर्लोकोऽथस्वर्लोको महर्लोको जनोऽपरः ।
तपोलोको सत्यलोको ज्ञानलोकस्तु सप्तमः ॥ १६ ॥

पर्यङ्काद्यश्च कार्याणि नवनागकुलानि च ।
सप्ताब्धयोऽमृतकुम्भाः कर्तव्याः सर्वकामदाः ॥ १७ ॥
लक्ष्मीः पादतले लग्ना पक्षिराजः कृताञ्जलिः ।
ब्रह्माद्या ऋषिभिर्देवास्ते स्थिताश्च यथाक्रमम् ॥ १८ ॥
आसनस्था तु या ह्यर्चा तद्रूपं वाहिकाद्वयम् ।
मूलार्चा नेत्रतस्तत्र तयोर्दृष्टिं च योजयेत् ॥ १९ ॥
शयनस्था तत्तद्रूपैर्मूलदक्सूसमसूत्रतः ।
ऊर्ध्वे यावुश्चान्ते कुर्याद् दृष्टिनिकाररूपोद्भवा ! ॥ २० ॥
एवं विधं च कर्तव्यमर्चापरिकरादिकम् ।
न्यूनाधिकं न कुर्वीत कृते दोषो महाभयम् ॥ २१ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायामूर्ध्वासनस्था-शयनस्थार्चापरिकराधिकारो नाम षोडशोत्तर द्विशततमं सूत्रम् ॥

---

# (२१७) विष्णुमूर्तिलक्षणं सप्तदशोत्तर द्विशततमं सूत्रम्

---

विश्वकर्मोवाच—

अथातः सम्प्रवक्ष्यामि विष्णुमूर्तेश्च लक्षणम् ।
मूर्तयो वासुदेवाद्या युगादिवर्णभेदतः ॥ १ ॥
कृते युगे वासुदेवस्त्रेतायां कृष्ण एव च ।
प्रद्युम्नो द्वापरे चैवानिरुद्धश्च कलौ युगे ॥ २ ॥
वासुदेवो भवेद्विप्रे क्षत्रे संकर्षणः शुभः ।
प्रद्युम्नश्च तथा वैश्ये शूद्रे चैवानिरुद्धकः ॥ ३ ॥
शुद्धस्फटिकसंकाशं छत्राकारं तु मस्तके ।
दक्षिणे च करे शङ्खस्तस्याधस्ताद् गदा शुभा ॥ ४ ॥
वामे चोर्ध्वे तथा चक्रमधः पद्मं सुशोभनम् ।
स्याद्वासुदेवमूर्तिः स्वा पूजनीया द्विजोत्तमैः ॥ ५ ॥
रक्तवर्णं दिव्यदेहं मुकुटं चैव मस्तके ।
दक्षिणोर्ध्वे करे शङ्खं तस्याधश्च गदोत्तमा ॥ ६ ॥
वामोर्ध्वे तु भवेत्पद्मं तस्याधश्च सुदर्शनम् ।
साङ्कर्षणी भवेन्मूर्तिः क्षत्रियाणां वरप्रदा ॥ ७ ॥
पीतवर्णा महातेजः प्रमुखीकृतमस्तका ।
दक्षिणोर्ध्वकरे शङ्खं तस्याऽधश्चक्रमुत्तमम् ॥ ८ ॥
वामे कौमोदकी चोर्ध्वे तस्याऽधः पङ्कजं तथा ।
प्रद्युम्नस्य भवेन्मूर्तिर्वैश्यानां हितकामदा ॥ ९ ॥
अतसीपुष्पसंकाशा बालेन्दुकृतमस्तका ।
दक्षिणोर्ध्वे गदा चैव तस्याधश्चक्रमुत्तमम् ॥ १० ॥
वामोर्ध्वहस्ते शङ्खं च तस्याधः पङ्कजोत्तमम् ।
अनिरुद्धस्य मूर्तिः स्याच्छूद्राणां वरदायिनी ॥ ११ ॥
केशवो नारायणश्च माधवो वासुदेवकः ।
त्रिविक्रमो वामनश्च श्रीधरः प्रद्युम्नस्तथा ॥ १२ ॥
हृषीकेशः पद्मनाभो दामोदरोऽनिरुद्धकः ।
दक्षहस्तस्याध आद्यं दक्षिणोर्ध्वं पुनस्तथा ॥ १३ ॥
वामस्योर्ध्वमधश्चान्ते नाम्ना प्रदक्षिणक्रमः ॥ १४ ॥
अथासां सर्वमूर्तीनां शस्त्रभेदाः करक्रमात् ।
नापसव्येन कुर्वीत मूर्तीर्वै विष्णुरूपिकाः ॥ १५ ॥
पद्मशङ्खे चक्रगदे केशवे वासुदेवके ।
शङ्खाम्बुजगदाचक्रं नारायणे तत्संभवे ॥ १६ ॥

गदाचक्रे शंखपद्मे माधवे वासुदेवके ।
सालङ्कारं भवेद्रूपं श्वेतवर्णं तथैव च ॥ १७ ॥
इति वासुदेवत्रयम् ॥
चक्रं गदा पद्मशङ्खौ गोविन्दे गोपवर्द्धने ।
गदापद्मे शङ्खचक्रे विष्णौ स्युर्जगतीपतौ ॥ १८ ॥
चक्रशङ्खौ पद्मगदे तथा स्युर्मधुसूदने ।
साङ्कर्षणास्त्रयो भेदा विष्णुरूपादिकोद्भवाः ॥ १९ ॥
इति सङ्कर्षणादित्रयम्
पद्मं गदा चक्रशङ्खौ रूपे त्रैविक्रमे तथा ।
शङ्खचक्रगदापद्मं वामने बलिबन्धने ॥ २० ॥
पद्मं चक्रं गदा शङ्खं श्रीधरे श्रीनिकेतने ।
प्रद्युम्नस्य त्रयो भेदा विष्णुशास्त्रसमुद्भवाः ॥ २१
इति प्रद्युम्नादित्रयम् ॥
गदा चक्रं पद्मशङ्खौ हृषीकेशे उदाहृताः ।
शङ्खपद्मे चक्रगदे पद्मनाभे ब्रह्मोद्भवे ? ॥ २२ ॥
पद्मशङ्खगदाचक्रं दामोदर उदाहृतम् ।
अनिरुद्धस्य भेदाश्च पुराणैश्च प्रबोधिताः ॥ २३ ॥
इत्यनिरुद्धादित्रयम् ॥
अथान्याः सम्प्रवक्ष्यामि मूर्ती वै वासुदेवजाः ।
सङ्कर्षणश्च प्रद्युम्नोऽनिरुद्धश्च यथाक्रमम् ॥ २४ ॥
अधोक्षजः कृष्णकार्तिकेयश्च पुरुषोत्तमः ।
ताक्ष्यध्वजाच्युतोपेन्द्रा जयन्तो नारसिंहकः ॥ २५ ॥
जनार्दनो गोवर्धनो हरिः कृष्णस्तथैव च ।
पद्मं गदा शङ्खचक्रे तथैवाऽधोक्षजे सदा ॥ २६ ॥
पद्मं कृष्ण कार्तिकेये शक्तिखेटककम्बवः ।
चक्रपद्मे शङ्खगदे तथा च पुरुषोत्तमे ॥ २७ ॥
पद्मं शङ्खो ध्वजा गदा चिह्नं चक्रं ताक्ष्यस्थे गरुडध्वजे ।
गदा पद्मं चक्रशङ्खावच्युते विष्णुरूपके ॥ २८ ॥
उपेन्द्रमूर्तौ शङ्खोऽथ गदा चक्रं च पद्मकम् ।
अक्षचक्रदण्डपद्मं वादित्रैः परिवेष्टिते ॥ २९ ॥
जयन्तनामविख्याते रिपुसैन्यविमर्दने ।
चक्रपद्म गदाशङ्खा नारसिंहे तथैव च ॥ ३० ॥
पद्मं चक्रं शङ्खगदे तथैव च जनार्दने ।
गोवर्धने चाऽक्षचक्र शङ्खाब्जं गोपवल्लभे ॥ ३१ ॥

[illegible] चक्र पद्मगदे हरौ वै मोक्षदायके ।
शङ्खो गदा पद्मचक्रं कृष्णमूर्तौ तथैव च ॥ ३२ ॥
तिस्रस्तिस्रश्चतुर्भेदै रेवं द्वादशमूर्त्तयः ॥

इति विष्णुमूर्तयः ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां विष्णुमूर्तिलक्षणाधिकारो नाम सप्तदशोत्तरद्विशततमं सूत्रम् ॥

## (२१८) द्वारवती नामाष्टादशोत्तर द्विशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

द्वारकायाः प्रवक्ष्यामि छन्दान्पञ्च प्रकीर्तितान् ।
अनुक्रमादथैकैकं कथयिष्यामि च ध्रुवम् ॥ १ ॥
पद्मिनी विजयाख्या च श्रीतुङ्गा चैव शान्तिका ।
महोत्सवा च विज्ञेयाः पञ्चैव द्वारिका मताः ॥ २ ॥
पद्मिन्याख्या कृतयुगे त्रेतायां विजया तथा ।
श्रीतुङ्गाख्या द्वापरे च शान्तिका च कलौयुगे ॥ ३ ॥
चतुर्युगे चतुर्वर्णे प्रशस्ता च महोत्सवा ।
तलच्छन्दाश्चतस्रः स्युः पञ्चमी स्यान्महोत्सवा ? ॥ ४ ॥
सङ्कर्षणस्य विजया वासुदेवस्य पद्मिनी ।
प्रद्युम्नस्य च श्रीतुङ्गाऽनिरुद्धस्याऽथ शान्तिका ॥ ५ ॥
महोत्सवा च क्रियते सर्वमूर्तिषु कामदा ।
धर्मार्थकाममोक्षाणां प्रातिहेतव ईरिताः ॥ ६ ॥
चतुरश्रीकृते क्षेत्रे दशधा प्रविभाजिते ।
द्विभागा भित्तिरित्युक्ता गर्भः षड्भाग ईरितः ॥ ७ ॥
मध्यक्षेत्रत्रिभागस्तु ह्यर्चापीठः सुशोभनः ।
चतुरस्रे समेक्षेत्रेऽम्बुपट्टं वेदिकाकृति ॥ ८ ॥
प्रतिष्ठाप्यो वासुदेवः पूर्वदिङ्मुख एव च ।
सङ्कर्षणः स्यात्सुखदो दक्षिणाभिमुखस्थितः ॥ ९ ॥
प्रद्युम्नः सुखदो देवस्तथा वरुणदिङ्मुखः ।
कौबेरीमुखसंस्थश्च ह्यनिरुद्धस्तथोच्यते ॥ १० ॥
एकपीठसमारूढाश्चत्वारो हरयः स्थिताः ।
अपरप्रागग्निनिर्ऋत्याश्रिताः कृष्ण उच्यते ? ॥ ११ ॥
धर्मार्थकाममोक्षाश्च लभ्यन्ते कृष्णदेवतः ।
कृष्णदेवस्याऽऽदि मूर्तिः द्वारकादि जगत्पतेः ॥ १२ ॥
यथा प्रजा विना राज्ञा पुंभि र्हीनास्तु योषितः ।
द्वारिका कृष्णहीना तु विना कृष्णं न शोभते ॥ १३ ॥
एकया कृष्णमूर्त्या च लब्धपुण्या च द्वारिका ।
समस्तमूर्तियुक्ताऽपि विना कृष्णं न पुण्यभाक् ॥ १४ ॥
स्वप्ने वा मनसा वाऽपि द्वारिकां यस्तु कारयेत् ।
लभेत् विष्णुलोकं स यावदाभूतसंप्लवम् ॥ १५ ॥
वर्द्धमानापरं शिखरं ? कर्णानुगे कुछाकृति ? ।
प्राग्ग्रीवो भय कुक्ष्योश्च पाक्षिराजाधिप गृहे ॥ १६ ॥

इत्यादि मूर्तिः ॥

आदिमूर्तिर्यथा कृष्णस्ततो हीना समस्तकाः ।
विभक्त्यनुक्रमौ तासां कथयामि विशेषतः ॥ १७ ॥
पादेन वा त्रिभागेन न्यूनः स्याद्वासुदेवकः ।
आदिमूर्त्यर्धभागेन वाराहस्य तथोदयः ॥ १८ ॥
देवमानामिति ख्यातं भृत्यमानं च कथ्यते ।
कटिनाभिस्तनन्धूना नूनं भृत्यादि-देवताः ॥ १९ ॥
वैकुण्ठो विश्वरूपश्चाऽनन्तस्त्रैलोक्यमोहनः ।
एते स्कन्धसमानाश्च शेषा न्यूनास्ततोऽपि च ॥ २० ॥
प्रासादे देवतामध्ये मण्डपे गर्भमध्यतः ।
उदुम्बरोच्छ्र्यसमा वेदिका जलपीठिका ॥ २१ ॥
वेदार्थं वेदिकाकारं जलपट्टस्य निर्गमम् ।
वासुदेवादिक्रमेण स्थापयेच्चतुरो हरीन् ॥ २२ ॥
शुक्लाम्बरधरो देवः शुक्लमाल्यानुलेपनः ।
शुक्लध्वजपताकश्च शुक्लयज्ञोपवीतिकः ॥ २३ ॥
चतुःसहस्रगोपीयुक् कार्यः परिकरस्तथा ।
रुक्मिण्यादिगोपिकायुक् प्राङ्मुखो वासुदेवकः ॥ २४ ॥
रक्ताम्बरधरो देवो रक्तमाल्यानुलेपनः ।
रक्तध्वजपताकश्च रक्तयज्ञोपवीतिकः ॥ २५ ॥
रोहिण्यादिगोपिकायुगनन्तो दक्षिणामुखः ।
चतुःसहस्रगोपिकायुक् कार्यः परिकरस्तथा ॥ २६ ॥
पीताम्बरधरो देवः पीतमाल्यानुलेपनः ।
पीतध्वजपताकश्च पीतयज्ञोपवीतकः ॥ २७ ॥
रत्यादिगोपिकायुक्तः प्रद्युम्नः पश्चिमामुखः ।
चतुःसहस्रगोपिकायुक् कार्यः परिकरस्तथा ॥ २८ ॥
नीलाम्बरधरो देवश्चातसीपुष्पसन्निभः ।
नीलध्वजपताकश्च नीलयज्ञोपवीतकः ॥ २९ ॥
उषादिगोपिकायुक्तोऽनिरुद्धश्चोत्तरामुखः ।
चतुःसहस्रगोपिकायुक् कार्यः परिकरस्तथा ॥ ३० ॥
शेषाः पङ्क्तौ प्रकर्तव्याः केशवादिकमूर्तयः ।
पक्षभद्रे मण्डपस्य मध्योत्तमगवाक्षके ॥ ३१ ॥
वैकुण्ठो दक्षिणे स्थाप्यो वामतो विश्वरूपकः ।
मूलगर्भस्य मध्ये त्वनन्तत्रैलोक्यमोहनौ ॥ ३२ ॥
मण्डपाग्रे त्रिकं प्रोक्तं कर्तव्यं सर्वकामदम् ।
एकद्वित्रिक्षणाः कार्याः परितो मत्त वारणाः ॥ ३३ ॥
वाराहो मध्यदेशेतु पीठोदुम्बरतः समः ।
मेष ( शेषं ) कूर्म समायुक्तं लक्ष्मीं वै वामपार्श्वतः ॥ ३४ ॥

सन्मुखं च गवाक्षस्य द्वारस्य वामदक्षिणे ।
दुर्वासा नारदश्चैव ह्यगस्ति र्दण्डपाणिकः ॥ ३५ ॥
यथाविधि विधातव्या वत्सयुक्ता ? च द्वादशी ? ।
विताने गोकुलोद्भाव कालीयस्यायमिदायकम् ? ॥ ३६ ॥
एवं वै द्वारिका कार्या संसारे मोक्षदायिनी ।
धर्मार्थकाममोक्षाणां वाञ्छितार्थफलप्रदा ॥ ३७ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
द्वारवत्यधिकारो नामाष्टादशोत्तर द्विशततमं सूत्रम् ॥

## (२१९) विष्णुमूर्तयो नामैकोनविंशत्युत्तरद्विशततमं सूत्रम् ॥

विश्वकर्मोवाच—

अथातः सम्प्रवक्ष्यामि लक्षणं जलशायिनः ।
शयानः शेषपर्यङ्के शेषे तुल्यो ने धृतिः ? ॥ १ ॥
अष्टतालस्तथायामे तन्मानि धृ वृतोद्भवम् ? ।
नवतालः पूर्णवृत्ते लिङ्गरूपसुखासनम् ॥ २ ॥
तेनावर्त्तेन रूपं स्यात् गर्भे कुर्यात् शाश्वतम् ? ।
एकः शिरोधरो हस्तश्चैको हृत्कमलस्थितः ॥ ३ ॥
गदा वै वामतो हस्ते ऊर्ध्वे चैव सुदर्शनम् ।
किरीटमाला शोभाढ्यो वनमालाविभूषितः ॥ ४ ॥
हारकेयूरसंयुक्तः कुण्डलाभ्यामलङ्कृतः ।
माला तुल्याः सप्त फणा मुकुटान्ते व्यवस्थितः ॥ ५ ॥
भृतामृताः सप्तकुम्भा नवनागकुलान्यधः ।
लक्ष्मीः पादतले लग्ना तार्क्ष्यः करपुटाञ्जलिः ॥ ६ ॥
ब्रह्मा च नाभिकमले कमलयोनिसंज्ञकः ।
सप्तलोकाः परिकराः क्रमेण परिकीर्तिताः ॥ ७ ॥
दशावताराः कर्तव्याः मन्दरोन्मथनादिकम् ।
एवं विधः प्रकर्तव्यो विष्णु र्वै जलशायिकः ॥ ८ ॥
साहाय्ये केशवः कार्य स्त्रिविक्रमदामोदरौ ।
अधोक्षजस्तथैव स्यान्नाऽन्यमूर्तिः प्रशस्यते ॥ ९ ॥
इति जलशयनः ॥

सप्तभागोच्छ्रयं कुर्यान्नवभागायतो भवेत् ।
द्विभागं मस्तकं कुर्यात् तुण्डनाली द्विभागतः ॥ १० ॥
भागा पिण्डे तुण्डनाली ? ग्रीवास्थाने सार्धद्विकम् ।
त्रिवलीसहिता ग्रीवा सार्धांशद्विकवृत्तिका ॥ ११ ॥
मस्तकार्धभागः स्कन्धः पादाश्चतुर्भागतः ।
एवं पृष्ठोद्भवः कार्यो द्विरदाकारकस्तथा ॥ १२ ॥
सार्धद्व्यंशावग्रपादावपरौ च द्विभागकौ ।
त्रिभागं पिण्डकं कार्यं भागंस्याद्वक्षदेशकम् ॥ १३ ॥
भागार्धश्चाग्रपादश्च भागपादा खुरी मता ।
द्विभागं बाहुकं कार्यं सार्धस्याऽपि क्रमेण च ॥ १४ ॥
जानुभागं चार्धभागं शुण्डिका ? (क्षुरिका) पादभागिका ।
पिण्डभागे बाहुमध्ये एकभागं तथोदरम् ॥ १५ ॥
चतुर्भागौ च द्वौ कुक्षी सुवृत्तं जठरं तथा ।
पुष्करं भागपादोनं पादैका कोष्ठपालिका ॥ १६ ॥
पुष्करं समविस्तारं वृत्ताकारं सुसंस्थितम् ।
पुष्करे छिद्रयुग्मं च वक्त्रं दंष्ट्रा द्वयान्वितम् ॥ १७ ॥

भागत्रयात्पुष्करतोऽर्धभागं मस्तकं परे ।
सपादभागः कर्णश्च स तत्राग्रोन्नतो भवेत् ॥ १८ ॥
कर्णयोः समसूत्रे तु भागार्धे दृष्टिरेव च ।
गजनेत्रोपमा कार्या मस्तकं गजमस्तवत् ॥ १९ ॥
मस्तपुस्तकयोर्मध्ये भाग षंडश वृत्तकाः ।
उद्धृताग्रो वामपादोऽपरं स्याश्च क्रमम् ? ॥ २० ॥
मस्तकस्य भागपादे पृष्ठे मेरु लिङ्गाकृतिः ।
तत्प्रदक्षिणतः कुर्यात् त्रैलोक्यं सचराचरम् ॥ २१ ॥
पुच्छग्रीवाग्रन्थिहृद-याग्र वै शेषसंभवः ।
कार्यश्चाऽधस्तु कूर्मो वै तस्याऽधो जलपट्टकम् ॥ २२ ॥
एवमादि प्रकर्तव्यमुक्तं सौकरमानकम् ।
दंष्ट्राग्रे वै लक्ष्मी वामे दंष्ट्रायां दक्षिणः करः ॥ २३ ॥

इति वाराहप्रमाणम् ॥

वैकुण्ठो विश्वरूपश्चाऽनन्त त्रैलोक्यमोहनौ ।
पृथगेकैकमूर्तीश्च कथयिष्याम्यनुक्रमात् ॥ २४ ॥
प्रवक्ष्यथ वैकुण्ठं सोऽष्टबाहुर्महाबलः ।
गरुडस्थश्चतुर्वक्त्रः कर्तव्यः शान्तिमिच्छता ॥ २५ ॥
गदा खड्गो बाणचक्रे दक्षिणेऽस्त्रचतुष्टयम् ।
शङ्खः खेटो धनुः पद्मं वामे चाऽस्त्रचतुष्टयम् ॥ २६ ॥
पुरतः पुरुषाकारो नारसिंहश्च दक्षिणे ।
अपरे श्रीमुखाकारो वाराहास्यस्तथोत्तरे ॥ २७ ॥

इति वैकुण्ठः ॥

विश्वरूपो महातेजा विश्वज्ञः सृष्टिकारकः ।
तस्य चाऽनुक्रमं वक्ष्ये भुजानां विंशतिस्तथा ॥ २८ ॥
पताका हलशङ्खौ च वज्राङ्कुशशरास्तथा ।
चक्रं च बीजपूरं च वरो दक्षकरेषु च ॥ २९ ॥
पताका दण्डपाशौच गदाशार्ङ्गौ तथैव च ।
पद्मं शृङ्गी च मुशलमक्षं वामभुजेषु च ॥ ३० ॥
करयुग्मे योगमुद्रा वैनतेयोपरिस्थितः ।
नरश्च नारसिंहश्च श्रीमुखः सूकराननः ॥ ३१ ॥
स्रष्टा विश्वस्य जगतो विश्वमूर्ति महोद्भवः ।
शक्तिविंशतिसम्युक्तः कर्तव्यः सर्वकामदः ॥ ३२ ॥

इति विश्वरूपः ॥

अनन्तोऽनन्तरूपश्च यतोऽनन्तजगद्भवः ।
अनन्तशक्तिसंकीर्णोऽनन्तरूप समुद्भवः ॥ ३३ ॥
भुजैर्द्वादशकैर्युक्तश्चतुर्वक्त्रो महोत्सवः ।
सुपर्णकेतु राख्यातः कर्तव्यः सर्वकामदः ॥ ३४ ॥

गदा खड्गश्च चक्रं च वज्राङ्कुशवरास्तथा ।
भुजेषु दक्षिणेष्वेवमस्त्रषट्कं तथोत्तमम् ॥ ३५ ॥
शङ्खः खेटो धनुः पद्मं दण्डपाशौ तथैव च ।
भुजेषु चैव वामेषु ह्यस्त्रषट्कमितीरितम् ॥ ३६ ॥
नरास्यो नारसिंहास्यः श्रीमुखः सूकराननः ।
तेजःपुञ्जमयः कार्यो ह्यनन्तो नाम नामतः ॥ ३७ ॥
इत्यनन्तः ॥
त्रैलोक्यमोहनं वक्ष्ये संसारे मोहकारकः ।
स षोडशभुजैर्युक्तस्तार्क्ष्यस्थश्च महाबलः ॥ ३८ ॥
गदा वज्राङ्कुशौ बाणः शक्तिश्चक्रं तथा क्रमात् ।
वरदश्चेति हस्तेषु ह्यस्त्राणि दक्षिणेषु च ॥ ३९ ॥
मुद्गरः पाशशार्ङ्गे च शङ्खः पद्मं कमण्डलुः ।
शृङ्गी वामेषु हस्तेषु योगमुद्रा करद्वये ॥ ४० ॥
नरास्यो नारसिंहास्यः सूकरः कपिलाननः ।
श्रियष्टशक्तिसंयुक्तः कार्यस्त्रैलोक्यमोहनः ॥ ४१ ॥
इति त्रैलोक्यमोहनः ॥
वैनतेयं प्रवक्ष्यामि प्रमाणे स्वामिसन्निभः ।।
विष्णोरेवाग्रतः कार्यो नान्येषां च दिवौकसाम् ॥ ४२ ॥
मूले चार्चोद्भवं मानं नतां स्तासादत्वांसकै ? ।
नवतालोद्भवा कार्या अर्चा चायामतस्तथा ॥ ४३ ॥
पञ्चषट्सप्त द्विरंगुला नतो छाया ? ।
गुह्यनाभिस्तनं यावत् वाहनस्योच्छ्रयोऽग्रतः ॥ ४४ ॥
पादो जानु कटिर्यावदर्चाया वाहनस्य दृक् ।
करपुटाग्रस्थानं च कर्तव्यं वै भयात्मकम् ॥ ४५ ॥
नररूपसमाकारः तुङ्गतीक्ष्णोग्रनासिकः ।
भुजोपर्युभयपक्षो मुकुटालङ्कृतस्तथा ॥ ४६ ॥
तलजानुर्वामपादः पादो जानुपुटोऽपरः ।
पादपद्माग्रकं भव्यं पक्षोत्सेधसुशोभितः ॥ ४७ ॥
शिवाग्रे वृषभः स्थाप्यो विष्णोरग्रे च पक्षिराट् ।
ब्रह्मणोऽग्रे सदा चैवं श्वेताङ्गो हंस एव च ॥ ४८ ॥
सूर्याग्रे च भवेद् व्योम देव्यग्रे पादुका तथा ।
अर्चायाः पादपद्माग्रे पादुका तुल्यमुच्छ्रिता ॥ ४९ ॥
इति गरुडः ॥
प्रतीहारांस्ततो वक्ष्ये ह्यष्टौ चैव चतुर्दिशम् ।
तदनुक्रमरूपं च लक्षयेवक्ष्येऽहं यस्य यादृशम् ॥ ५० ॥
वामनाकाररूपाश्च कर्तव्याः सर्वथोत्तमाः ।
तर्जनी शङ्खचक्रे च दण्डश्च प्रथमो वरः ॥ ५१ ॥

चण्डाभिधानश्चाख्यातोऽसव्यासव्ये प्रचण्डकः ।
वामे चण्डः प्रकर्तव्यः प्रचण्डश्चैव दक्षिणे ॥ ५२ ॥
पद्मं खड्गः खेटकाख्यो गदा चैव प्रदक्षिणम् ।
जयोऽथ विजयः पद्मगदयोश्च विलोमतः ॥ ५३ ॥
तर्जनी बाणचापौ च गदा चैव प्रदक्षिणम् ।
धाता गदा चापसव्ये विधाता च तथोत्तमः ॥ ५४ ॥
तर्जनी पद्मशङ्खौ च गदा चैव प्रदक्षिणम् ।
भद्रश्च शङ्खापसव्ययोगे चैव सुभद्रकः ॥ ५५ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां विष्णुमूर्त्यधिकारो नामैकोनविंशत्युत्तरद्विशततमं सूत्रम् ॥

---

## (२२०) सर्वप्रतिहारनिर्णयो नाम विंशत्युत्तरद्विशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

ब्रह्मणोऽष्ट प्रतीहारान् कथयिष्याम्यनुक्रमात् ।
पुरुषाकारगम्भीराः सुकूर्चा मुकुटोज्ज्वलाः ॥ १ ॥
पद्मं स्रुक् पुस्तकं दण्डः वामे स्यात्सत्यनामकः ।
शास्त्रापसव्ययोगेन दक्षिणे धर्मको भवेत् ॥ २ ॥
अक्षपद्मागमा दण्डः वामे चैव प्रियोद्भवः ।
दण्डागमस्रुक् फलकं यज्ञः स्यात्सर्वकामदः ॥ ३ ॥
अक्षसूत्रं गदा खेटं दण्डो विजयनामकः ।
अधोहस्तापसव्येन फलयुक् यज्ञभद्रकः ॥ ४ ॥
अक्षपाशाङ्कुशदण्डा भवः स्यात्सर्वकामदः ।
दण्डाङ्कुश-पाशपद्मं विभवः सर्वशान्तिदः ॥ ५ ॥

इति ब्रह्मप्रतिहारा अष्ट ॥

दण्डी च पिङ्गलश्चैव ह्यानन्दो नन्दकस्तथा ।
चित्रो विचित्रो ज्ञातव्याः किरणाक्षः सुलोचनः ॥ ६ ॥
सर्वे ते पुरुषाकाराः कर्तव्याः शान्तिमिच्छता ।
अष्टौ स्युश्च चतुर्द्वारसु सव्यदक्षिणतः क्रमात् ॥ ७ ॥
तर्जनी किरणश्चैव ताम्रचूडश्च दण्डकः ।
दण्डी नाम तथा वामे शृणु पिङ्गलकस्य च ॥ ८ ॥
शक्तिश्च किरणस्थाने ताम्रचूडपदेऽशकः ।
पूर्ववत् तर्जनीदण्डौ पिङ्गलः पूर्वदक्षिणे ॥ ९ ॥
तर्जन्यौ द्वे वज्रदण्डावानन्दक इति स्मृतः ।
तर्जनी दण्डापसव्ये संभवे नन्तकस्तथा ॥ १० ॥
द्वे तर्जन्यौ पद्मदण्डौ वामतश्चित्रकः स्मृतः ।
तर्जनी दण्डापसव्ये विचित्रो दक्षिणे स्थितः ॥ ११ ॥
तर्जन्यौ किरणो दण्डः किरणाक्षस्तथैव च ।
तर्जनी दण्डापसव्यौ प्रतीहारः सुलोचनः ॥ १२ ॥
इत्यष्टौ च प्रतीहाराः सर्वविघ्नप्रणाशनाः ।
सर्वे तेजोमया नित्यं सूर्यदेवप्रत्यात्मकाः ॥ १३ ॥

इति भास्करस्याष्टौ प्रतिहाराः ॥

अविघ्नो विघ्नराजश्च सुवक्त्रो बलवानथ ।
गजकर्णश्च गोकर्णः सौम्यश्चभयदायकः ॥ १४ ॥
सर्वे तु वामनाकाराः सौख्यदाः पुरुषाननाः ।
तर्जनी परशुः पद्मं दण्डो हस्तेऽविघ्नकः ।

तर्जनी दण्डापसव्ये स भवेद्विघ्नराजकः ।
पूर्वद्वारोभयभागे सर्वविघ्नविनाशकः ॥ १६ ॥
तर्जनी खड्गखेटौ तु दण्डो हस्तैः सुवक्त्रकः ।
तर्जनी दण्डापसव्ये बलवांश्च समीरितः ॥ १७ ॥
तर्जनी बाणचापौ च दण्डश्चकाब्जकर्णकः ।
तर्जनी दण्डापसव्ये गोकर्णः पश्चिमस्थितः ॥ १८ ॥
तर्जनीपद्माङ्कुशाश्च दण्डश्चैव स सौम्यकः ।
शस्त्रापसव्ये च तथा भवेदभयदायकः ॥ १९ ॥
द्वारपक्षौ सर्वदिक्षु स्थाप्या विघ्नविनाशनाः ।
इत्यष्टौ च प्रतीहारा नृपाणां शान्तिमिच्छता ॥ २० ॥

इति गणेशप्रतिहाराः ॥

जया च विजया चैव अजिता चापराजिता ।
निभक्ता मङ्गला चैव मोहिनी स्तम्भनी तथा ॥ २१ ॥
अभयाङ्कुशपाशाश्च दण्डः प्रदक्षिणं जया ।
सव्यापसव्ये शस्त्राणां विजया सा प्रकीर्तिता ॥ २२ ॥
अभयाब्जपाशा दण्डोऽजिता सव्येऽपराजिता ।
अभीवज्राङ्कुशदण्डा विनिभक्ताऽसव्यैर्मङ्गला ? ॥ २३ ॥
अभयशङ्खाब्जदण्डा मोहिनीत्येव नामतः ।
शस्त्रापसव्ययोगेन सा भवेत् स्तम्भनी तथा ॥ २४ ॥
गौर्याश्चायतने शस्ता अष्टौ स्युर्द्वारपालिकाः ।

इति गौर्या द्वारपालिकाः ॥

चण्डिकायास्तथैवोक्तान् कथयिष्याम्यनुक्रमात् ॥ २५ ॥
वेतालः कोटरश्चैव पिङ्गाक्षो भृकुटिस्तथा ।
धूम्रकः कंकद(ट)श्चैव रक्ताक्षश्च सुलोचनः ॥ २६ ॥
दंष्ट्रास्यविकटाः कोपे स्फुरद्दशनकोज्ज्वलाः ।
बर्बरीकाश्च कृष्णाङ्गा मरक्ताक्षा महाबलाः ॥ २७ ॥
तर्जनी चैव खट्वाङ्गो डमरुर्दण्ड आयुधम् ।
वेतालः स समाख्यातो ह्यपसव्ये तु कोटरः ॥ २८ ॥
अभयखड्गखेटकं दण्डः पिङ्गाक्ष एव च ।
अभयापसव्ययोगे भवेद् भृकुटिनामकः ॥ २९ ॥
तर्जनी वज्राङ्कुशा वै दण्डो धूम्रकनामकः ।
सव्यापसव्ययोगेन भवेत् कंकदटनामकः ॥ ३० ॥
तर्जनी च त्रिशूलं च खट्वाङ्गो दण्ड एव च ।
रक्ताक्षस्स च नाम्ना वै वामे दक्षे त्रिलोचनः ॥ ३१ ॥
दिशाद्वारपक्षयुग्मो स्थिता विघ्नविनाशनाः ।
इत्यष्टौ च प्रतीहारा देवीनां सर्वसम्मताः ॥ ३२ ॥

इति चण्डिकाया अष्टौ प्रतिहाराः ॥

इन्द्र इन्द्रजयश्चैव महेन्द्रो विजयेन्द्रकः ।
धरणेन्द्रः पद्मकश्च सुनाभः सुरदुन्दुभिः ॥ ३३ ॥
इत्यष्टौ च प्रतीहाराः पीतरागादिशान्तिदाः ।
पृथगेकैकशश्चैव कथयिष्याम्यनुक्रमम् ॥ ३४ ॥
फलं वज्राङ्कुशौ दण्ड इन्द्रोऽसव्ये इन्द्रजयः ।
द्वौ वज्रौ फलदण्डौ च महेन्द्रोऽसव्ये विजयः ? ॥ ३५ ॥
तदायुधयोगोद्भवास्त्रिपञ्चाश्वफणा (ग्रहा) मताः ।
धरणेन्द्रः पद्मकश्च सर्वे शान्तिकराः स्मृताः ॥ ३६ ॥
यक्षरूपाधिकाराश्च निधिहस्ताः शुभोदराः ।
सर्वशान्तिप्रदावेवं सुनाभः सुरदुन्दुभिः ॥ ३७ ॥
इत्यष्टौ च जिनेन्द्रस्य प्रतिहाराश्च शान्तिदाः ।
नगरादौ पुरे ग्रामे सर्वविघ्नप्रणाशनाः ॥ ३८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां सर्वप्रतिहारनिर्णयाधिकारो नाम त्रिंशत्युत्तरद्विशततमं सूत्रम् ॥

---

## (२२१) जिनेन्द्रमूर्तिलक्षणमेकविंशत्युत्तरद्विशततमं सूत्रम् ॥

---

विश्वकर्मोवाच--

तीर्थङ्करान् प्रवक्ष्यामि चतुर्विंशतिसङ्ख्यकान् ।
नामवर्णलाञ्छनार्थ-देवी-यक्षादिकक्रमम् ॥ १ ॥
ऋषभश्चाजितश्चैव संभवश्चाभिनन्दनः ।
सुमतिः पद्मप्रभश्च सुपार्श्वः सप्रभोत्तमो मतः ॥ २ ॥
चन्द्रप्रभश्च सुविधिः शीतलो दशमो मतः ।
श्रेयांश्चसो वासुपूज्यश्च विमलोऽनन्तसंज्ञकः ॥ ३ ॥
धर्मः शान्तिः कुन्थुररो मल्लिनाथस्तथैव च ।
मुनिस्तथा सुव्रतश्च नमिश्चारिष्टनेमिकः ॥
पार्श्वनाथो वर्धमानश्चतुर्विंशतिरर्हताम् ॥ ४ ॥
चन्द्रप्रभः पुष्पदन्तः श्वेतौ वै क्रौञ्चसम्भवौ ? ।
पद्मप्रभो धर्मनाथो रक्तोत्पलनिभौ मतौ ॥ ५ ॥
सुपार्श्वः पार्श्वनाथश्च हरिद्वर्णौ प्रकीर्तितौ ।
नेमिश्च श्यामवर्णः स्यान्नीलो मल्लिः प्रकीर्तितः ॥ ६ ॥
शेषाः षोडश सम्प्रोक्तास्तप्तकाञ्चनसमप्रभाः ।
वर्णानि कथितान्यग्रे लाञ्छनानि ततः शृणु ॥ ७ ॥
वृषो गजाश्वकपयः क्रौञ्चपद्मकस्वस्तिकाः ।
चन्द्रो मकरश्रीवत्सौ गण्डको महिषस्तथा ॥ ८ ॥
शूकरः शशादनश्च वज्रश्च मृग आजकः ।
नन्द्यावर्तश्च कलशः कूर्मो नीलाब्ज-शङ्खकौ ॥ ९ ॥
सर्पः सिंहश्चर्षभादेर्लाञ्छनानीरितानि च ।
चतुर्विंशतिरुच्यन्ते क्रमाच्छासनदेविकाः ॥ १० ॥
चक्रेश्वरी रोहिणी च प्रज्ञा वै वज्रशृङ्खला ।
नरदत्ता मनोवेगा कालिका ज्वालमालिका ॥ ११ ॥
महाकाली मानवी च गौरी गान्धारिका तथा ।
विराटा तारिका चैवानन्तागतिश्च मानसी ॥ १२ ॥
महामानसी च जया विजया चापराजिता ।
बहुरूपा च चामुण्डाऽम्बिका पद्मावती तथा ॥ १३ ॥
सिद्धायिकेति देव्यस्तु चतुर्विंशतिरर्हताम् ।
कथितान्यभिधानानि शस्त्रभेदोऽत्र कथ्यते ॥ १४ ॥
षट्पादा द्वादशभुजा चक्राण्यष्टौ द्विवज्रकम् ।
मातुलिङ्गाभये चैव तथा पद्मासनाऽपि च ॥ १५ ॥
गरुडोपरिसंस्था च चक्रेशी हेमवर्णिका ।

इति चक्रेश्वरी ॥ १ ॥

चतुर्भुजा श्वेतवर्णा शङ्खचक्राभयवरा।
लोहासना च कर्तव्या रथारूढा च रोहिणी ॥ १६ ॥
इति रोहिणी ॥ २ ॥

प्रज्ञावती श्वेतवर्णा षड्भुजा चैव संश्रुता।
अभयवरदफल–चन्द्राः परशुरुत्पलम् ॥ १७ ॥
इति प्रज्ञावती ॥ ३ ॥

नागपाशाक्षफलकं वरदं हंसवाहिनी।
चतुर्भुजा तथैवोक्ता विख्याता वज्रशृङ्खला ॥ १८ ॥
इति वज्रशृङ्खला ॥ ४ ॥

चतुर्भुजा चक्रवज्र–फलानि वरदं तथा।
श्वेतहस्तिसमारूढा कर्तव्या नरदत्तिका ॥ १९ ॥
इति नरदत्ता ॥ ५ ॥

चतुर्वर्णा स्वर्णवर्णाऽशनि चक्रफलं वरम्।
अश्ववाहन संस्था च मनोवेगा तु कामदा ॥ २० ॥
इति मनोवेगा ॥ ६ ॥

कृष्णाऽष्टबाहुस्त्रिशूल–पाशाङ्कुशधनुःशरा।
चक्राभयवरदाश्च महिषस्था च कालिका ॥ २१ ॥
इति कालिका ॥ ७ ॥

कृष्णा चतुर्भुजा घण्टा त्रिशूलं च फलं वरम्।
पद्मासना वृषारूढा कामदा ज्वालमालिनी ॥ २२ ॥
इति ज्वालामालिनी ॥ ८ ॥

चतुर्भुजा कृष्णवर्णा वज्रगदावराभयाः।
कूर्मस्था च महाकाली सर्वशान्तिप्रदायिनी ॥ २३ ॥
इति महाकाली ॥ ९ ॥

चतुर्भुजा श्यामवर्णा पाशाङ्कुशफलं वरम्।
सूकरोपरिसंस्था च मानवी चार्थदायिनी ॥ २४ ॥
इति मानवी ॥ १० ॥

पाशाङ्कुशाब्जवरदाः कनकाभा चतुर्भुजा।
सा कृष्णहरिणारूढा कार्या गौरी च शान्तिदा ॥ २५ ॥
इति गौरी ॥ ११ ॥

करद्वये पद्मफले नक्रारूढा तथैव च।
श्यामवर्णा प्रकर्तव्या गान्धारी नामिका भवेत् ॥ २६ ॥
इति गान्धारी ॥ १२ ॥

श्यामवर्णा षड्भुजा द्वौ वरदौ खड्गखेटकौ।
धनुर्बाणौ विराटाख्या व्योमयानगता तथा ॥ २७ ॥
इति विराटाख्या ॥ १३ ॥

चतुर्भुजा स्वर्णवर्णा धनुर्बाणौ फलं वरम् ।
हंसासनाऽनन्तमतिः कर्तव्या शान्तिदायिनी ॥ २८ ॥
इत्यनन्तमतिः ॥ १४ ॥

षड्भुजा रक्तवर्णा च त्रिशूलं पाशचक्रके ।
डमरुर्वै फलवरे मानसी व्याघ्रवाहना ॥ २९ ॥
इति मानसी ॥ १५ ॥

चतुर्भुजा सुवर्णाभा शरः शार्ङ्गं च वज्रकम् ।
चक्रं महामानसी स्यात् पक्षिराजोपरिस्थिता ॥ ३० ॥
इति महामानसी ॥ १६ ॥

वज्रचक्रे पाशाङ्कुशौ फलं च वरदो जया ।
कनकाभा षड्भुजा च कृष्णशूकरसंस्थिता ॥ ३१ ॥
इति जया ॥ १७ ॥

सिंहासना चतुर्बाहुर्वज्रचक्रफलोरगाः ।
तेजोवती स्वर्णवर्णा नाम्ना सा विजया मता ॥ ३२ ॥
इति विजया ॥ १८ ॥

खड्गखेटौ फलवरौ श्यामवर्णा चतुर्भुजा ।
शान्तिदाऽष्टापदस्था च विख्याता ह्यपराजिता ॥ ३३ ॥
इत्यपराजिता ॥ १९ ॥

द्विभुजा स्वर्णवर्णा च खड्गखेटकधारिणी ।
सर्पासना च कर्तव्या बहुरूपा सुखावहा ॥ ३४ ॥
इति बहुरूपा ॥ २० ॥

रक्ताभाष्टभुजा शूल-खड्गौ मुद्गरपाशकौ ।
वज्रचक्रे डमर्वक्षौ चामुण्डा मर्कटासना ॥ ३५ ॥
इति चामुण्डा ॥ २१ ॥

हरिद्वर्णा सिंहसंस्था द्विभुजा च फलं वरम् ।
पुत्रेणोपास्यमाना च सुतोत्सङ्गा तथाऽम्बिका ॥ ३६ ॥
इत्यम्बिका ॥ २२ ॥

पाशाङ्कुशौ पद्मवरे रक्तवर्णा चतुर्भुजा ।
पद्मासना कुक्कुटस्था ख्याता पद्मावतीति च ॥ ३७ ॥
इति पद्मावती ॥ २३ ॥

द्विभुजा कनकाभा च पुस्तकं चाभयं तथा ।
सिद्धायिका तु कर्तव्या भद्रासनसमन्विता ॥ ३८ ॥
इति सिद्धायिका ॥ २४ ॥
इति चतुर्विंशतिः शासनदेव्यः ॥

वृषवक्त्रो महायक्षस्त्रिमुखश्चतुराननः ।
तुम्बुरुः कुसुमाख्यश्च मातङ्गो विजयस्तथा ॥ ३९ ॥
जयो ब्रह्मा किन्नरेशः कुमारश्च तथैव च ।
षण्मुखः पातालयक्षः किन्नरो गरुडस्तथा ॥ ४० ॥

गन्धर्वश्चैव यक्षेशः कुबेरो वरुणस्तथा ।
भृकुटिश्चैव गोमेधः पार्श्वो मातङ्ग एव च ॥ ४१ ॥
यक्षाश्चतुर्विंशतिकाः ऋषभादेर्यथाक्रमम् ।
भेदांश्च भुजशस्त्राणां कथयामि समासत : ॥ ४२ ॥
वराक्षसूत्रे पाशश्च मातुलिङ्गं चतुर्भुजः ।
श्वेतवर्णो वृषमुखो वृषभासनसंस्थितः ॥ ४३ ॥
इति वृषवक्त्रः ॥ १ ॥
श्यामोऽष्टबाहुर्हस्तिस्थो वरदाभयमुद्गराः ।
अक्षपाशाङ्कुशाः शक्तिं मातुलिङ्गं तथैव च ॥ ४४ ॥
इति महायक्षः ॥ २ ॥
मयूरस्थस्त्रिनेत्रश्च त्रिवक्त्रः श्यामवर्णकः ।
परश्वक्षगदाचक्र शङ्खा वरश्च षड्भुजः ॥ ४५ ॥
इति त्रिमुखः ॥ ३ ॥
नागपाशवज्राङ्कुशा हंसस्थश्चतुराननः ।
द्वौ सर्पौ फलवरदो तुम्बुरु गरुडासनः ॥ ४६ ॥
इति चतुरानन तुम्बुरू ॥ ४-५ ॥
कुसुमाख्यो गदाक्षौ च द्विभुजो मृगसंस्थितः ।
मातङ्गः स्याद् गदापाशौ द्विभुजो मेषवाहनः ॥ ४७ ॥
इति कुसुममातङ्गौ ॥ ६-७ ॥
परशुपाशाभयवराः कपोते विजयः स्थितः ।
शक्त्यक्ष फलवरदा जयः कूर्मासनस्थितः ॥ ४८ ॥
इति विजयजयौ ॥ ८-९ ॥
पाशाङ्कुशाभयवरा ब्रह्मा स्याद्धंसवाहनः ।
त्रिशूलाक्षफलवरा यक्षेट्श्वेतो वृषस्थितः ॥ ४९ ॥
इति ब्रह्मयक्षेशौ ॥ १०-११ ॥
धनुर्बाणफलवराः कुमारः शिखिवाहन : ।
षण्मुखः षड्भुजो वज्रो धनुर्बाणौ फलं वरः ॥ ५० ॥
इति कुमारषण्मुखौ ॥ १२-१३ ॥
किन्नरेशः पाशाङ्कुशौ धनुर्बाणौ फलं वरः ।
पातालश्च वज्राङ्कुशौ धनुर्बाणौ फलं वरः ॥ ५१ ॥
इति किन्नरपातालौ ॥ १४-१५ ॥
पाशाङ्कुशफलवरा गरुडःस्याच्छुकासनः ।
पद्माभयफलवरा गन्धर्वः स्याच्छुकासनः ॥ ५२ ॥
इति गरुडगन्धर्वौ ॥ १६-१७ ॥
यक्षेट् खरस्थो वज्रारि धनुर्बाणाः फलं वरः ।
पाशाङ्कुशफलवरा धनेट् सिंहे चतुर्मुखः ॥ ५३ ॥
इति यक्षेशकुबेरौ ॥ १८-१९ ॥

पाशाङ्कुश धनुबाण सर्पवज्रा ह्यपांपतिः ।
शूलशक्ति वज्रखेटा ? डमरुर्भृकुटिस्तथा ॥ ५४ ॥
इति वरुणभृकुटी ॥ २०-२१ ॥

पार्श्वौ धनुर्बाण भृण्डि मुद्गरश्च फलं वरः ।
सर्परूपः श्यामवर्णः कर्तव्यः शान्तिमिच्छता ॥ ५५ ॥
इति पार्श्वः ॥ २२ ॥

फलं वरोऽथ द्विभुजो मातङ्गो हस्तिसंस्थितः ।
यक्षाश्चतुर्विंशातिका स्तथर्षभादितः क्रमात् ॥ ५६ ॥
चामरेन्द्रच्छत्रत्रयमशोकः पुष्पवर्षणम् ।
ज्ञानं ध्वनि (ध्वजा) स्तथा यक्षदेवीनां लाञ्छनानि च ॥ ५७ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
जितेन्द्रमूर्तिलक्षणाधिकारो नामैकविंशत्युत्तरद्विशततमं सूत्रम् ॥

---

अरिहन्ताणं पवं कलिरहियं निष्कलं शुद्धं वयाण भयं
हिय पप्पकं प्रणाण निवसंत । जिणवै नमः ॥
नमो अरिहन्ताणं भगवन्ताणं आयगराणं तिथकराणं
नमो लोयेसा सव्वाहूयं । सव्वणा सव्वदेयं
चउद्धय भूयादेसीयं जीव दयादेसीयं ।
धम्मदायादेसीयं । सप्रदाया देसीयं स प्रजोवाण कम्मे
मयाणदेसीयं सयलमुहागे सुद्धादेयं ।
नमो हिरणां नमो हिं सिद्धाचार्यो या ध्यायसर्वे
साधुभ्य ॥ पुन मोचयेत् भोक्राणां ॥ ६६ ॥

---

## (२२२) गौरीललीया दुर्गामूर्तयो नाम द्वाविंशत्युत्तर द्विशततमं सूत्रम् ।

---

विश्वकर्मोवाच—

गौर्याश्च सम्प्रवक्ष्यामि प्रमाणं मूर्तिलक्षणम् ।
ब्रह्मसूत्रोद्भवं सर्वं भजेदेकशताङ्गुलम् ॥ १ ॥
त्रयोदशाङ्गुलं मुखं ग्रीवास्यादङ्गुलत्रयम् ।
अष्टाङ्गुलौ स्तनौ वृत्तौ हिक्का ? च चतुरङ्गुला ॥ २ ॥
द्वादशाङ्गुलिका नाभिरुदरं चतुरङ्गुलम् ।
वलिकात्रयसम्युक्तं गुह्यं सप्ताङ्गुलं तथा ॥ ३ ॥
द्वाविंशत्यङ्गुला जङ्घा जानु स्यादङ्गुल त्रयम् ।
जङ्घामानेन नलकः पादमूलं तु जानुवत् ॥ ४ ॥
चतुर्भुजा त्रिनेत्रा च सर्वाभरणभूषिता ।
गोधासनोपरिष्ठा च कर्तव्या सर्वकामदा ॥ ५ ॥
उमा च पार्वती गौरी ललिता च श्रियोत्तमा ।
कृष्णा हेमवती रम्भा सावित्री च तथैव च ॥ ६ ॥
त्रिषंडा ( श्रीखण्डा ) तोतला ( चोत्पला ) चैव त्रिपुरा द्वादशी मता
एवं द्वादशमूर्तिश्च कुर्याद्वै शिवशासनीः ॥ ७ ॥
अक्षसूत्रं चाम्बुजं च दर्पणश्च कमण्डलुः ।
एवं भवेदुमामूर्तिः पूजिता त्रिदशैरपि ॥ ८ ॥
अक्षसूत्रं शिवो देवो गणाध्यक्षः कमण्डलुः ।
पक्षद्वये चाग्निकुण्डं पार्वती पर्वतोद्भवा ॥ ९ ॥
अक्षसूत्राभयपद्मं तदधश्च कमण्डलुः ।
गौर्यामूर्तिस्तथा चैव कर्तव्या शिवशासनी ॥ १० ॥
शूलाक्षसूत्रवीणाश्च तथैव च कमण्डलुः ।
ललिता चैव तन्नाम सिद्धचारणसेविता ॥ ११ ॥
अक्षपद्माभयवरं गोधिकासनसंस्थिता ।
श्रियामूर्तिस्तु तन्नाम गृहे पूज्या श्रिये सदा ॥ १२ ॥
अक्षसूत्रं कमण्डलु हृदये संपुटाञ्जलिः ।
मध्ये पञ्चाग्निकुण्डानां कृष्णा नाम तु शोभना ॥ १३ ॥
हिमवान् शैलराजस्तु तस्यापत्यं गिरीन्द्रजा ।
पद्मदर्पणसम्युक्ता विवाहे तु महेश्वरी ॥ १४ ॥
कमण्डल्वक्षवज्राश्च अङ्कुशो गजसंस्थिता ।
तथाऽप्रतिमरूपा च रम्भा नाम तु कामदा ॥ १५ ॥
अक्षसूत्रं पुस्तकाब्जे तदधश्च कमण्डलुः ।
चतुर्वक्त्रा तु सावित्री श्रोत्रियाणां गृहे स्थिता ॥ १६ ॥

अक्षसूत्रं वज्रशक्ती तद्धश्च कमण्डलुः ।
त्रिषण्डा ( श्रीखण्डा ) वृद्धये पूज्या सर्वकामफलप्रदा ॥ १७ ॥
अक्षसूत्रं तथा दण्डः खेटकं चामरं तथा ।
श्वेता ध्यानार्चनाद्देवी तोतला विषनाशिनी ॥ १८ ॥
पाशाङ्कुशाभयवरा धनेस्या ? च चतुर्भुजा ।
त्रिपुरा नाम संपूज्या वन्दिता त्रिदशैरपि ॥ १९ ॥
इति गौर्या द्वादशमूर्त्तयः
ललीयाः पञ्च वक्ष्यामि शास्त्रभेदैः प्रभेदिताः ।
लीलया लीला लीलाङ्गी ललिता च लीलावती ॥ २० ॥
प्रोक्तास्तथाऽनुक्रमतः स्वासनस्था ? श्चतुर्भुजाः ।
तप्तकाञ्चनवर्णाभा बालसूर्यसमप्रभाः ॥ २१ ॥
सुवक्त्राश्च सुनेत्राश्च सुरूपा रूपदायिकाः ।
रक्तोष्ठाः कम्बुग्रीवाश्च कर्णपूरायतेक्षणाः ॥ २२ ॥
अक्षसूत्रकमण्डलू अधो हस्तेषु कामदाः ।
सर्वासामीदृशौ हस्तौ कथ्येते चोर्ध्वहस्तकौ ॥ २३ ॥
मृणालयुग्मं ललीया लीला पद्मं च पुस्तकम् ।
लीलाङ्गी पाशपद्मे च ललिता वज्रमङ्कुशम् ॥ २४ ॥
पाशाङ्कुशौ लीलावती ललीयाः पञ्च चेरिताः ।
इति पञ्चललीयाः ॥
अथाऽतोऽनन्तरं वक्ष्ये दुर्गाणां नवकं तथा ॥ २५ ॥
आदौ तत्र महालक्ष्मी नन्दा क्षेमकरी तथा ।
शिवदूती महार (च) ण्डा भ्रमरी सर्वमङ्गला ॥ २६ ॥
रेवती हरसिद्धिश्च नवदुर्गाः प्रकीर्तिताः ।
क्रमतः पृथगेकैकाः कथयाम्यपराजित ॥ २७ ॥
वरं त्रिशूलं खेटं च पानपात्रं च बिभ्रती ।
नागं तथा नीलकण्ठे महालक्ष्मीः सुखप्रदा ॥ २८ ॥
अक्षसूत्रं खड्गखेटौ पानपात्रं तथैव च ।
नन्दा नाम सुविख्याता पूज्या चानन्दहेतवे ॥ २९ ॥
वरं त्रिशूलं पद्मं च पानपात्रं करेषु च ।
क्षेमङ्करीति तन्नाम क्षेमारोग्य प्रदायिनी ॥ ३० ॥
कमण्डलुश्चक्रखेटौ पानपात्रं तथोत्तमम् ।
शिवदूतीति तन्नाम सर्ववृद्धिप्रदायिनी ॥ ३१ ॥
खड्गत्रिशूलौ घण्टा वै अथो चर्म तथोत्तमम् ।
महार (च) ण्डा तदा नाम वन्दिता त्रिदशैरपि ॥ ३२ ॥
खड्गं डमरुकं खेटं बिभ्रती पानपात्रकम् ।
भ्रमरी च तदा नाम भ्रामयेद्दुष्टचेतसः ॥ ३३ ॥
अक्षसूत्रं तथा वज्रं घण्टा पात्रं तथोत्तमम् ।
सर्वमङ्गलमाङ्गल्या सर्वविघ्नविनाशिनी ॥ ३४ ॥

दण्डं त्रिशूलं खट्वाङ्गं पानपात्रं च बिभ्रती ।
रेवतीति तदा नाम सर्वशान्तिप्रदायिनी ॥ ३५ ॥
कमण्डलुश्च खड्गश्च डमरुः पानपात्रकम् ।
हरसिद्धि रिति ख्याता सर्वेषां सिद्धिहेतुका ॥ ३६ ॥

इति नवदुर्गाः ॥

गोधासना भवेद् गौरी ललीया हंसवाहना ।
सिंहारूढा भवेद् दुर्गा कर्तव्याः सर्वकामदाः ॥ ३७ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां गौरीललीयादुर्गामूर्त्यधिकारो नाम द्वात्रिंशत्युत्तर द्विशततमं सूत्रम् ॥

## (२२३) देवीमूर्तिलक्षणं त्रयोविंशत्युत्तरद्विशततमं सूत्रम्

विश्वकर्मोवाच—

या चन्डघातिनीदेवी चामुण्डलक्षणं शृणु ।
निर्मांसा क्रूररूपाच उग्रनासा कृशोदरी ॥ १ ॥
कपिला चोर्ध्वकेशी च नीलाङ्गी रक्तलोचना ।
स्फुरन्नयनदंष्ट्रा च विकृत नखरानना ॥ २ ॥
त्रिशूलखड्गखेटाश्च धनुर्बाणश्च पाशकः ।
अङ्कुशश्चैव घण्टा च तथा दर्पणवज्रकौ ।
दण्डः कुठारशङ्खौ च चक्रं गदा च मुद्गरः ॥ ३ ॥
सृक्किणी कपालमालालङ्कृतिं बिभ्रती तथा ।
शवारूढा तु चामुण्डा जङ्घे घण्टावलम्बिके ॥ ४ ॥
व्याघ्रचर्मपरीधाना भुजङ्गाभरणान्विता ।
सुनूपुरा घननादा दैत्यकाल इवापरः ॥ ५ ॥

इति चामुण्डामूर्तिः ॥

कात्यायनीमितो वक्ष्ये क्षत्रयोद्गतशासनी ।
तेजः प्रतापदा नित्यं नृपाणां सुख-बोधिनी ॥ ६ ॥
शूलखड्गौ वज्रचक्रे बाणो दक्षिणबाहुषु ।
चापखेटकपाशश्च घण्टा वामेषु चाङ्कुशम् ॥ ७ ॥
अधस्तान्महिषं कुर्याद् विशिरस्कं च पादयोः ।
विद्याद्दक्षिणपादं तु महिषस्योपरिस्थितम् ॥ ८ ॥
पादपद्माय पादौ च वामपादं प्रदापयेत् ।
तथा छिन्नशिरस्कं च दैत्यन्तं रक्तवाससम् ॥ ९
गृहीत्वा चैव केशाग्रे वामकेन तथेश्वरी ।
हृदि शूलेन निर्भिन्नं महिष-कुक्षौ सुदर्शनम् ॥ १० ॥
देव्यास्तु वाहनं सिंहः संलग्नो महिषोपरि ।
कात्यायनी नामिका च कर्तव्या चैवमेव हि ॥ ११ ॥

इति कात्यायनी ॥

मातृणां च ततो वक्ष्ये भैरवादिगणांस्तथा ।
वीरेशं कारयेद्वत्स वीणाहस्तं सनर्त्तनम् ॥ १२ ॥
गणनाथं ततः कुर्यात् गजवक्त्रं महोत्कटम् ।
आदौ तु गणनाथं च ह्यन्ते कुर्यात्तु भैरवम् ॥ १३ ॥
मातृणां च तथा मध्ये पंक्तौ स्यु श्चण्डिकादयः ।
प्रवक्ष्येऽनुक्रमं तत्र शृणु चैकाग्रमानसः ॥ १४ ॥
कर्णे कपालमाला च मुण्डखट्वाङ्गशूलकाः ।
निर्मांसा क्रूररूपा च चामुण्डा दशनोज्ज्वला ॥ १५ ॥

अक्षसूत्रं च खड्गश्च घण्टा चैव कमण्डलुः ।
महिषस्था शूकरास्या वाराही सर्वकामदा ॥ १६ ॥
गजासना चाक्षसूत्रं दण्डः पाशः कमण्डलुः ।
ऐन्द्री देवी च कर्तव्या चामुण्डा प्रेतगा तथा ॥ १७ ॥
अक्षसूत्रं च शक्तिश्च ताम्रचूडः कमण्डलुः ।
मयूरस्था च कौमारी षड्वक्त्रा च प्रकीर्तिता ॥ १८ ॥
अक्षस्रचौ पुस्तकं च तथा चैव कमण्डलुः ।
चतुर्वक्त्रा च ब्रह्माणी हंसारूढा च कामदा ॥ १९ ॥
गदाचक्रे शङ्खपद्मे कुण्डलाभ्यामलङ्कृता ।
गरुडासन संस्था च वैष्णवी सर्वकामदा ॥ २० ॥
वृषस्थाक्षशूलखड्गाः खट्वाङ्गं मातुलिङ्गकम् ।
जटाकिरीटेन्दुयुक्ता श्वेताङ्गी च महेश्वरी ॥ २१ ॥

इति मातृकाणां मूर्तयः ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां देवीमूर्तिलक्षणाधिकारो नाम त्रयोविंशत्युत्तरद्विशततमं सूत्रम् ॥

---

## (२२४) चित्रसद्भावनिर्णयो नाम चतुर्विंशत्युत्तरद्विशततमं सूत्रम्

---

अपराजित उवाच ।

भुवनेशं देवदेवं सप्तलोकजगत्पतिम् ।
महातेजश्चित्ररूपमनाद्यं तु जिनेश्वरम् ? ( त्वजितेश्वरम् ) ॥ १ ॥
कृताञ्जलिपुटो भूत्वा पृच्छति त्वपराजितः ।
चित्रकाणां समुत्पत्तिं कथयस्व परेश्वर ॥ २ ॥
चित्रं कतिविधं प्रोक्तं विचित्रं कीदृशं भवेत् ।
चित्रभाः कथमुत्पन्ना कथयस्व प्रसादतः ॥ ३ ॥
चित्रावतारसद्भावमुत्पत्ति प्रलयादिकम् ।
अस्मन्मनोबोधनार्थं चित्ररूपं च कथ्यताम् ॥ ४ ॥

विश्वकर्मोवाच—

चित्रमूलोद्भवं सर्वं त्रैलोक्यं सचराचरम् ।
ब्रह्मविष्णुभवाद्याश्च सुरासुरनरोरगाः ॥ ५ ॥
स्थावरं जङ्गमं चैव सूर्यचन्द्रौ च (चित्रकाग च) मेदिनी ।
चित्रमूलोद्भवं सर्वं जगत्स्थावरजङ्गमम् ॥ ६ ॥
वृक्षगुल्मलतावल्ल्यः स्वेदजाण्डजरायुजाः ।
सर्वे चित्रोद्भवा वत्स भूधरा द्वीपसागराः ॥ ७ ॥
चतुरशीतिलक्षाणि जीवयोनिरनेकधा ।
चित्रमूलोद्भवाः सर्वे संसारद्वीपसागराः ॥ ८ ॥
श्वेतरक्तपीतकृष्णा वर्णा वै चित्ररूपकाः ।
तनौ च नखकेशादि चित्ररूपमिवाम्भसाम् ॥ ९ ॥
भगवान् भवरूपश्च पश्यतीदं परात्परम् ।
आत्मवद्वै सर्वमिदं ब्रह्मतेजोऽनुपश्यताम् ॥ १० ॥
पश्यन्ति भावरूपैश्च जले चन्द्रमसं यथा ।
तद्वच्चित्रमयं सर्वं पश्यन्ति ब्रह्मवादिनः ॥ ११ ॥
विश्वं विश्वावतारश्च त्वनाद्यन्तश्च सम्भवेत् ।
आदि चित्रमयं सर्वं पश्यन्ति ब्रह्मचक्षुषा ॥ १२ ॥
शिवशक्तेर्यथारूपं संसारे सृष्टिकोद्भवः ।
चित्ररूपमिदं सर्वं दिनं रात्रिस्तथैव च ॥ १३ ॥
निमिषश्च पलं घट्यो यामः पक्षक एव च ।
मासाश्च ऋतवश्चैव कालः संवत्सरादिकः ॥ १४ ॥
चित्ररूपमिदं सर्वं संवत्सरयुगादिकम् ।
कल्पादिकोद्भवं सर्वं सृष्ट्याद्यं सर्वकर्मणाम् ॥ १५ ॥
ब्रह्माण्डादिसमुत्पत्तौ रचितारचिता तथा ।
तेषां चित्रमिदं ज्ञेयं नानात्वं चित्रकर्मणाम् ॥ १६ ॥

ब्रह्माण्डादिगणाः सर्वे तद्रूपाः पिण्डमध्यगाः ।
आत्मा चात्मस्वरूपेण चित्रवत् सृष्टिकर्मणि ॥ १७ ॥
आत्मरूपमिदं पश्येद् दृश्यमानं चराचरम् ।
चित्रावतारे भावं च विधातु भावविवर्णतः ॥ १८ ॥
आत्मानं च शिवं पश्येद् यद्वत्य जलचन्द्रमाः ।
तद्वच्चित्रमयं सर्वं शिवशक्तिमयं परम् ॥ १९ ॥
ऊर्ध्वमूलमधः शाखं वृक्षं चित्रमयं तथा ।
शिवशक्त्यालयं चैव चन्द्रार्कपवनात्मकम् ॥ २० ॥
सूर्यपीठोद्भवा शक्तिः संलग्ना ब्रह्ममार्गतः ।
लीयमाना चन्द्रमध्ये चित्रकृत् सृष्टिकर्मणि ॥ २१ ॥
चित्रावतारूपं तु कथितं च परात्परम् ।
यतस्तु वर्तते चित्रे जगत्स्थावरजङ्गमम् ॥ २२ ॥
देवोदेवी शिवः शक्तिः व्याप्तं यतश्चराचरम् ।
चित्ररूपमिदं ज्ञेयं जीवमध्ये चः जीवकम् ॥ २३ ॥
कूपो जले जलं कूपे विधिपर्य्यायतस्तथा ।
तद्वच्चित्रमयं विश्वं चित्रं विश्वे तथैव च ॥ २४ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां-चित्रसद्भावनिर्णयाधिकारो नाम चतुर्विंशत्युत्तर द्विशततमं सूत्रम् ॥

## (२२५) चित्रप्रतिमातालनिर्णयो नाम पञ्चविंशत्युत्तर
## द्विशततमं सूत्रम् ॥

---

अपराजित उवाच—

हेमादावथलोहेषु रत्नधातुभवेषु च ।
पाषाणेष्टिककाष्ठेषु मृण्मयादौ समस्तके ॥ १ ॥
एतत्समस्तचित्रेषु चित्ररूपं तु कीदृशम् ।
कथयस्वप्रसादेन विश्वकृत् त्वं जगत्पते ॥ २ ॥

विश्वकर्मोवाच—

पट्टपाषाणफलके वास्तुवस्तु विशेषतः ।
मृत्तिकादौ दन्ते काष्ठे रत्नधातुद्भवे तथा ॥ ३ ॥
इत्थं समस्तद्रव्येषु चित्ररूपसमुद्भवः ।
तद्रूपक्रमयुक्तीश्च शृणु चैकाग्रमानसः ॥ ४ ॥
अपराजित भो प्राज्ञ सर्व शा ( शा ) स्त्रादिकौशलम् ।
चित्रं विचित्रागमतः सम्प्रोक्ताः प्रतिमास्तथा ॥ ५ ॥
भास्करोदयनादिष्ट-दीप्ति रश्मिप्रकाशतः ।
जालान्तरगतो रेणु र्दशने च पृथक् पृथक् ॥ ६ ॥
उद्दिष्टं परमाण्वादि-प्रमाणं च समन्ततः ।
परमाण्वष्टकं रेणुः केशाग्रं च तदष्टतः ॥ ७ ॥
अष्टाष्टगुणनादेवं केशाग्रं च प्रसिद्ध्यति ।
अष्टकेशाग्रतो लिक्षा यूका चैव तदष्टतः ॥ ८ ॥
अष्टाभिश्चैव यूकाभि र्यवश्चैवं प्रसिद्ध्यति ।
तथाङ्गुलं चाष्टयवः प्रतीतं तत् प्रागुवधः ॥ ९ ॥
रूपमानमितिप्रोक्तं परमाण्वादि कल्पितम् ।
मूलमानं प्रोक्तमथो तनुमानविनिर्णयम् ॥ १० ॥
अङ्गुलोद्भवमानं तु स्यान्मात्राङ्गुलसंज्ञकम् ।
कला द्विमात्रा कथिता सैव गोलक उच्यते ॥ ११ ॥
द्विमात्रं गोलकं विद्याद् भागं चैव द्विगोलतः ।
भागं त्रिगुणितं ताल स्तन्मानात् प्रतिमा त्रिधा ॥ १२ ॥
मानं तालात्मकं यत्तन् मूर्त्यार्ध्वसमुच्छ्रयः ।
पृष्ठाद्यङ्गुलतः कार्यं ताल सूत्रे प्रसिद्ध्यति ॥ १३ ॥
ज्ञेयं तालं कीर्तिवक्त्रं तथा जलचरा मताः ।
विहङ्गाश्च द्वितालाः स्युः कुञ्जराश्च त्रितालकाः ॥ १४ ॥
चतुस्तालाश्च तुरगाः किन्नराः पञ्चतालकाः ।
गणनाथश्च षट्तालो यक्षाश्चैवं प्रकीर्तिताः ॥ १५ ॥

सप्ततालाः मानवाश्च अष्टांशा दिव्ययोषितः ।
नवांशा सर्वदेवाश्च सम्प्रोक्ता वै तथैव च ॥ १६ ॥
दशतालो भवेद्रामो विष्णुर्वैरोचनस्तथा ।
सिद्धा स्तथा जिनवरा-स्तथा कार्या दशांशतः ॥ १७ ॥
एकादशांशा रुद्रश्च भूतानि च तथैव च ।
द्वादशांशा मधुमुरौ वैताला रूपतो मताः ॥ १८ ॥
त्रयोदश राक्षसानां दानवानां चतुर्दश ।
तालाः पञ्चदश प्रोक्ता श्चामुण्डा भृगुरूपकः ॥ १९ ॥
जटामुकुटचन्द्रालङ्कृताः षोडश तालतः ।
कार्याः षोडश तालान्ताः शास्त्रतो नाधिकास्ततः ॥ २० ॥
युगांजीव संख्यात् सागरात् पृथिव्यांत मध्यगा ? ।
वेद ब्रह्मा द्र धर्मज्ञानस्य साधनम् ? ॥ २१ ॥
जयतु सर्वशास्त्र धरित्र्यवेदिव्यधरा ? ।
कथयस्यानुगमनं च वर्णानुरूपकाः ? ॥ २२ ॥
अपराजित मद्वाक्यं हृदयानन्दनं शृणु ।
प्रतिमा लक्षणं प्रोक्तं कथयिष्यामि वर्णकम् ॥ २३ ॥
सौवर्णी राजती ताम्री पैत्तली रैतिकी तथा ।
शैशकी वै कांस्यमयी कृष्णलोहमयी तथा ॥ २४ ॥
अष्टधातु भवाः प्रोक्ताः कर्तव्याः सर्वकामदाः ।
तथा च मृत्तिकामय्यः काष्ठमय्यो यथाक्रमम् ॥ २५ ॥
पञ्चगव्यं चम्पपुष्पं श्रीखण्डं पायसं तथा ।
सौगन्धिकं चामरादि रक्तचन्दनमेव च ॥ २६ ॥
मद्दे चोमामहेशस्य शुभं कार्यं यथाक्रमम् ।
पूर्वोक्ताः काष्ठमय्यश्च शुचीकार्ये नियोजिताः ॥ २७ ॥
मणिरत्नप्रवालैश्च वज्र वैडूर्यमौक्तिकैः ।
हैमैस्तारैः शाणशुद्धै राजावर्तैश्च स्फाटिकैः ॥ २८ ॥
गृहेषु प्रतिमाः पूज्याः शेषाः प्रासादसंज्ञके ।
अर्चा सपीठिका कार्या वैपरीत्ये महद्भयम् ॥ २९ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां चित्रप्रतिमाताल निर्णयाधिकारो नाम पञ्चविंशत्युत्तरद्विशततमं सूत्रम् ॥

## (२२६) स्वच्छन्दभैरवावतारो नाम षड्विंशत्युत्तर द्विशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

स्वच्छन्दभैरवंवक्ष्ये आयुधानां तथा क्रमम् ।
गदा पट्टिशपर्शू च शक्तिर्बाणो धनुस्तथा ॥ १ ॥
पुष्पाक्षसूत्रसर्पाश्च बीजपूरकमुद्गरौ ।
चषकं अर्थ शतघ्नी कोशं डमरुमौशले ॥ २ ॥
शुचिस्तथा च खण्डेन्दुः पीयूषं दर्पणादिकम् ।
वामोर्ध्वक्रमेणैव गदाद्या दर्पणान्तगाः ॥ ३ ॥
वरदं शङ्खिनी खड्गश्चाङ्कुशं ज्ञानपुस्तकम् ।
चामरं पूर्णकलशं शूलं खट्वाङ्गमेव च ॥ ४ ॥
न च चक्षुः ? ( अभयं च ) विषं कुण्डी शङ्खं शूर्पश्च मोदकम्
मद्यपात्रं वस्त्रवजौ कमलं चक्रकीरके ॥ ५ ॥
वरदाद्याः शुकान्ताश्च दक्षिणेषु प्रदक्षिणम् ।
योनिमुद्रासंयुतौ द्वौ करौ सकरमुद्रिकौ ॥ ६ ॥
उपास्ते चाऽऽदिपुरुषं द्वौ भुजौ शिरसि स्थितौ ।
पञ्चास्यश्च त्रिनेत्रश्च शतार्धं भ्रामयन् करान् ॥ ७ ॥
अर्धद्वयमृजुगतं बद्धपद्मासनद्वयम् ।
स्वच्छन्दभैरवो माने तालानां त्वेकविंशतिः ॥ ८ ॥
ततस्तालांस्तु गुणयेद् द्वादशाङ्गुलैस्तथा ।
तदङ्गुलप्रमाणेन द्विपञ्चाशच्छतद्वयम् ॥ ९ ॥
प्रथम पङ्क्तौ नवास्यं जटायुक्तं द्वितालकम् ।
द्वितीयपङ्क्तौ तत्समा शिवयोनिः सदोदिता ॥ १० ॥
सप्तवक्त्राणि तस्योर्ध्वे तालमेकं द्विजोत्तम ।
शिरो विंशत्यङ्गुलकं ग्रीवा चाष्टाङ्गुला मता ॥ ११ ॥
द्वात्रिंशन्नाभिदेशस्तदधो गुह्यं तु विंशतिः ।
शून्य बाणा भवेज्जङ्घा गुल्फः पञ्चाङ्गुलस्तथा ॥ १२ ॥
पञ्चाशच्चैव नलकः सप्ताङ्गुलस्तलोच्छ्रयः ।
ऊर्ध्वमानं तु कथितं तिर्यक् च शृणु सम्प्रति ॥ १३ ॥
मुखं पूर्वोक्तमानेन द्वितालं चैव मध्यकम् ।
दशाङ्गुलं तनुबाह्ये बाहुः षोडश विस्तरे ॥ १४ ॥
चतुर्दश तथा चाष्टौ क्रमतो बाहु विस्तरः ।
नाना विस्तरितं कार्यमष्टाविंशतिभिस्तथा ॥ १५ ॥
सप्तवर्णाः कुशमानं कटिविस्तरतः शुभम् ।
द्वितालं जङ्घाविस्तारस्तन्मध्यं सार्धभागकम् ॥ १६ ॥

कणिबध ? तत्राऽधौ च चतुर्विंशतिराङ्घ्रिकम् ।
तोणी ? मात्रं तथाङ्गुष्ठं शीषाः सार्धाङ्गुला मता ॥ १७ ॥
षोडशाङ्गुलमंसःस्याद् भुजसन्धिर्मुनिद्वयम् ।
द्वात्रिंशच्च पुनर्वात्या चतुर्विंशतिकाग्रतः ॥ १८ ॥
पूर्वोक्तेन प्रमाणेन करं कुर्यात् प्रयत्नतः ।
द्वात्रिंशल्लक्षणोपेतो रुद्रः स्वच्छन्दभैरवः ॥ १९ ॥
पाशाङ्कुशधनुर्बाणाः शूलवज्रगदाभयम् ।
अष्टौ भैरवरूपाणि कुर्यादेव प्रदक्षिणम् ॥ २० ॥
सूत्रधारस्ततः प्राज्ञः शुक्लाम्बरधरः शुचिः ।
हविष्यनियताहारो जपहोमपरायणः ॥ २१ ॥
सुसमीक्ष्य प्रदेशं तु कुङ्कुमार्द्रं सुसिञ्चितम् ।
इमं मे गङ्गे यमुनेऽभिषिच्य सलिलैः शुभैः ॥ २२ ॥
कारयेन्मण्डपं पूर्वमार्द्रशाखाविनिर्मितम् ।
उत्तराभिमुखो विश्व कर्मरेखाकरो धृतिः ॥ २३ ॥
अग्न आयाहि मन्त्रेण रेखास्तत्र प्रयोजयेत् ।
योगायोगेति मन्त्रेण कर्मसूत्रंसमारभेत् ॥ २४ ॥
अग्निर्ज्योतिर्हि मन्त्रेण टङ्किकाग्रं च संस्पृशेत् ।
प्रज्वलद्भिन्पसेदस्त्रं टङ्काग्रे सर्वतोमुखम् ॥ २५ ॥
अमृतीशं हृग्यंदये न्यस्य ? अस्त्रेणोज्वलति तदा ।
आदेव इति मन्त्रेण पुनः पठति टङ्किकाम् ॥ २६ ॥
शिल्पिनो भोजयेत्तत्र वस्त्रालङ्कारसंयुतान् ।
ब्राह्मणान्भोजयेत्तत्र शुद्धसैन्यं तपस्विनाम् ॥ २७ ॥
भूरि ( मि ) दानं ततः कुर्याद् भूत्वा चाऽकृपणस्तथा ।
समाचरेत्कर्म तत्र कृत्वा पञ्च महोत्सवान् ॥ २८ ॥
यस्य देवस्य या मूर्तिश्चिन्तयेत्तां हृदम्बुजे ।
उमान्माहं देहिनां जन्त्रवाहक ॥ २९ ॥
व्याहरेत्त्रिषु लोकेषु यस्य कस्यचिदामयम् ।
तस्मात् सर्वेषुमन्त्रेषु हंसो बीजः स उच्यते ॥ ३० ॥
हंसः सदाशिवोदेवो हंसश्चैवेश्वरो हरिः ।
ब्रह्मा हंसो यमः सूर्योऽग्निर्हंसः सर्वदेवतम् ॥ ३१ ॥
आपो वायुश्च खं हंसो धर्मेन्द्रौ धनदः क्षितिः ।
ध्रुवं ते हंसमित्येव गतो हं मिगतानि च ? ॥ ३२ ॥
एवं स गतो हंसः सर्वात्मा परंपरा ? ।
हंसे लीना पराशक्तिरित्यर्थं व्याहरन्ति च ॥ ३३ ॥
वर्णा एकोनपञ्चाशन्निधनं यान्ति तत्र वै ।
निधनान्ते तु विज्ञेया वर्णास्ते तु महेश्वरः ( रात् ) ॥ ३४ ॥

निधनं तु गता शक्ति र्यदा मूर्ध्नि प्रलीयते ।
शून्यस्थानमिदं प्रोक्तं सेव्यते योगिभिः सदा ॥ ३५ ॥
मूर्ध्ना हृदयमायात्यमनस्कं परमं पदम् ।
स्थिरत्वासने सूत्रधारो जपेन्मन्त्रं सबीजकम् ॥ ३६ ॥
या मूर्त्तिर्यस्य देवस्य शक्तिं तस्यैव तां न्यसेत् ॥
मूर्तिप्रारम्भमन्त्रम् ।

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां स्वच्छन्दभैरवावताराधिकारो नामाषड्विंशत्युत्तर द्विशततमं सूत्रम् ॥

## (२२७) चित्रपत्रोत्पत्तिनिर्णयो नाम सप्तविंशत्युत्तर द्विशततमं सूत्रम् ॥

अपराजित उवाच—

चित्ररूपसमुद्भावाः सुरासुरनरोरगाः ।
त्वयैव कथितं पूर्वमुत्पत्ति प्रलयादिकम् ॥ १ ॥
पत्रोत्पत्तिः कथं देव चित्रमूलसमुद्भवा ।
कथयस्व प्रसादेन पत्रं चित्रं च कीदृशम् ॥ २ ॥
दिनपत्रं कथं प्रोक्तमृतुपत्रं च कीदृशम् ।
चन्द्रकलोद्भवं पत्रं षोडशात्मकमेव च ॥ ३ ॥
जलपत्रं स्थलपत्रं नरपत्रं गजोद्भवम् ।
मेघपत्रोद्भवं चैव कथयस्व परेश्वर ॥ ४ ॥
नागरं द्राविडं पत्रं व्यन्तरं वेसरं तथा ।
कालिङ्गं यामुनं पत्रं कदिक् चैतत्सुलक्षणम् ॥ ५ ॥
शिशुपत्रं च सकलं स्वस्तिकं वर्धमानकम् ।
सर्वतोभद्रकाकारं कथयस्व परेश्वर ॥ ६ ॥
पञ्चपत्राणि चान्मश्च षोडशात्मकमेव च ।
तत्तद्रूपोद्भवं चैव लक्षकोट्यादिसङ्ख्यकम् ॥ ७ ॥
पत्रस्थानानि वै सार्धं सुरसन्ध्यादिकोद्भवम् ।
कथयस्व प्रसादेन पत्रस्थानादिसाधनम् ॥ ८ ॥

विश्वकर्मोवाच—

शृणु वत्स महाभाग त्वमेवं प्रकटीकृतम् ।
पत्रोत्पत्तिं च वक्ष्येऽहं शृणु चैकाग्रमानसः ॥ ९ ॥
क्षीरोदार्णवके पूर्वं मथ्यमाने सुरासुरैः ।
तत्रोत्पन्नो महावृक्षो नाम्ना सुरतरुस्तदा ॥ १० ॥
नानापत्रसमाकीर्णो नानापुष्पसमाकुलः ।
नाना फलकसम्पुक्तो ललिताङ्गो मनोहरः ॥ ११ ॥
सुगन्धामोदबहुलः सुगन्धागन्धितोत्पलः ।
तद्गन्धमोहिताः सर्वे देवदैत्यादिकास्तदा ॥ १२ ॥
परस्परं देवदैत्या वृक्षार्थे लुब्धचेतसः ।
ईश्वरो ( अमृतो ) द्भवं मन्यन्ते दैत्याश्च त्रिदशा अपि ॥ १३ ॥
शाखापत्रोद्भवश्चतुर्दिक्षु मध्यत ऊर्ध्वतः ।
मानतः पत्रसंकीर्णो दिशाभेदैः परात्परम् ॥ १४ ॥
नागरं पूर्वशाखायां द्राविडं दक्षिणोद्भवम् ।
अपरे व्यन्तरं चैव वेशरं च तथोत्तरे ॥ १५ ॥
कालिङ्गमूर्ध्वतश्चैव शाखान्तर्जं च यामुनम् ।
षड्जात्युत्पत्तिभेदैश्च पत्रमेवं समुद्गतम् ॥ १६ ॥

नन्दादिक्रमयोगेन तथा चन्द्रकलाक्रमः ।
दिनपत्रोद्भवस्त्वेवं सङ्ख्यातो दशपञ्चभिः ॥ १७ ॥
नन्दा भद्रा जया रिक्ता पूर्णास्यात् पञ्चमी तथा ।
पञ्च पञ्च तथा पञ्च मासार्धे तु यथा यथा ॥ १८ ॥
नन्दायाः शिशुपत्रं च भद्रायाः सकलं तथा ।
स्वस्तिकं तु जयायाश्च रिक्ताया वर्धमानकम् ॥ १९ ॥
पूर्णायाः सर्वतोभद्रं पञ्चमं परिकीर्तित्तम् ।
षष्ठिकादि दशम्यन्तमन्यपञ्चसमुद्भवः ॥ २० ॥
जयं च विजयं चैव उद्रुतं पत्रमक्षयम् ।
सर्वमङ्गल भवाख्यं पञ्चान्ये च प्रकीर्तिताः ॥ २१ ॥
षष्ठ्याद्यं च दशम्यन्तं पत्राणां पञ्चकं तथा ।
पुनरन्यानि पञ्चैकादशाद्यं पूर्णान्तं तथा ॥ २२ ॥
श्रियं श्रियोद्भवाख्यं च रत्नगर्भं तेजोभवम् ।
सर्वानन्दं महोत्साहं पत्राणां दशपञ्चकम् ॥ २३ ॥
वसन्ते नागरं पत्रं द्राविडं ग्रीष्मके तथा ।
वर्षासु व्यन्तरभवं वेसरं च शारदतौ ॥ २४ ॥
हेमन्ते चैव कालिङ्गं यामुनं शिशिरोद्गतम् ।
षड्तूद्भवपत्राणि सर्वाणि शुभदानि च ॥ २५ ॥
तथा शाखोद्भवं पत्रमुक्तं दशविधं क्रमात् ।
शाखोद्भवानि पञ्चैव ( षट्चैव ) कन्दजानि तु षोडश ॥ २६ ॥
तथा चाकारपत्राणि लक्षकोट्यादिकानि च ।
पुनरन्यानि वक्ष्येऽहं प्रकारैः पञ्चतानि च ॥ २७ ॥
हंसपत्रं नक्रपत्रं मत्स्यपत्रं च कूर्मकम् ।
पद्मपत्रं तथा चैव पञ्चकं जलजं भवेत् ॥ २८ ॥
स्थलजं छन्दजाकारं प्रासादगृहकादिकम् ।
नरनार्यादिकं पत्रं नरपत्रं च पञ्चमम् ॥ २९ ॥
गजपत्रमश्वपत्रं जानुगं पद्मजं तथा ।
सिंहासनादिपत्रं च गजपत्रं तु पञ्चकम् ॥ ३० ॥
अनेकाकारपत्रं च मेघपत्रं तथैव च ।
पत्राकारास्तथा चैते कथितास्त्वपराजित ॥ ३१ ॥
पुनः स्थानेषु सर्वेषु तत्र पत्राणि योजयेत् ।
स्तम्भेषु द्वारपक्षेषु प्रासादेषु च सर्वतः ॥ ३२ ॥
षोडशाभरणैश्चैव तत्र पत्रं तु दापयेत् ।
हारकेयूर कङ्कणकटिसूत्रादिभिः समैः ॥ ३३ ॥
यत्र स्थाने भवेत्पत्रं लक्ष्मीस्तत्र हितेक्षणा ।
( नाभ्यचित्रोद्भवा ? ) नाऽपत्रतो भवेल्लक्ष्मीः शुभस्थानं च पत्रतः ॥ ३४ ॥

इति सूत्रसन्तानगुण कीर्तिप्रकाशप्रोक्तृ श्रीभुवनदेवाचार्योक्तापराजितपृच्छायां चित्रपत्रोत्पत्तिनिर्णयाधिकारो नाम सप्तविंशत्युत्तर द्विशततमं सूत्रम् ॥

# (२२८) पत्रजाति कण्टकभेद जीवसूत्रनिर्णयो नामाष्टाविंशत्युत्तरद्विशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

अथातः संप्रवक्ष्यामि कण्टकानां तु लक्षणम् ।
अष्टौ जातिक्रमच्छन्दात् कण्टका अभिधानतः ॥ १ ॥
कलिश्च कलिकश्चैव व्यामिश्रश्चित्रकोशलः ।
व्यावर्तश्चैव व्यावृत्तः सुभङ्गो भङ्गचित्रकः ॥ २ ॥
अगस्तिपुष्पकाकारः संभवेत् कलिकंटकः ।
वराहदंष्ट्राकृतिकः कलिकश्चेति संज्ञितः ॥ ३ ॥
बकुपुष्पोद्भयश्चैव व्यामिश्रो मध्यकेशरः ।
उकाराकारसदृशः स भवेच्चित्रकोशलः ॥ ४ ॥
व्यावर्तो व्याघ्रनखवद् व्यावृत्तः कलशाकृतिः ।
भङ्गचित्रोबदखत् सुभङ्गः कृतिकाकृतिः ॥ ५ ॥
नागरो व्याघ्रनखवद् द्राविडस्तदनन्तरम् ।
बदरीकेतकीनां च द्राविडः कण्टकैः समः ॥ ६ ॥
व्यन्तरो वराहदंष्ट्रो वेसरो मुनिपुष्पवत् ।
उकाराकारः कलिङ्गो यामुनः पुष्पगर्भकः ॥ ७ ॥
उक्ता अष्टविधाकारा पद्मजातीयाश्च कण्टकाः ।
कण्टकानां तथाकाराः कथिताः पूर्वमेव च ॥ ८ ॥
वेदाक्षरं पदं कृत्वा कण्टकावर्तनोद्गतम् ।
ब्रह्मस्थाने भवेद् बिन्दु र्वामावर्तेन वर्तितः ॥ ९ ॥
तद्वर्तिताग्रसंस्थाने बिन्दुःस्यादक्षरोद्भवः ।
तदूर्ध्वे भ्रमगर्भे च वृत्तमर्धे चन्द्राकृति ॥ १० ॥
ब्रह्मस्थानोर्ध्वगतं च दक्षिणोद्भवाकारकम् ।
कलिकोद्भवाक्षं वाराह कर्णसम्भवम् ॥ ११ ॥
तस्योर्ध्वेऽपरेद्गम्यं त तदान्यताग्रं कंटकोपमम् ।
अग्रस्याग्र पदवर्णेषु अपरानतः कर्णिकाकृतिः ॥ १२ ॥
तस्या यावत्याग्रेन मवधी पदपादो...... ।
पृथुग्रीवा त्रिपादे...पादोदर कंटका...? ॥ १३ ॥
........................................ ।
...त्र स्थानात्समुद्भव्यां म्रे निम्नाग्र धान्यांतकम् ? ॥ १४ ॥
चक्रग्रीवोद्गताऽकारिकं कलिकोद्भवं वाराहकर्णिकोद्गतम् ।
अग्राधारः पुनः पृष्ठे कलिका मुनिपुष्पवत् ॥ १५ ॥

कण्टकोदरमध्ये तु कलिका जीवसूत्रकम् ।
तदास्पदम्...............................॥ १६ ॥
रोमास्थिमांसत्वचाश्च एवं क्षितिगुणोद्भवाः ।
...............लक्ष्ये जीवसूत्रेण कथ्यते ॥ १७ ॥
रेखास्थिवर्णमांसानि चतुश्छायाः प्रकीर्तिताः ।
पादाद्यङ्गानि सर्वाणि नाडीरोमं च विदु वर्तया ॥ १८ ॥
मज्जा च क्षितिराख्याता राजेन्द्रन्यदय बीजकम् ? ।
..................अद्भ्यो रससमुद्भवः ॥ १९ ॥
........................तेजो द्रव्यस्य बीजकम् ।
........................वायुश्च वर्तनाकृतिः ॥ २० ॥
आकाशं..............पञ्चतत्त्वोद्भवं तथा ।
जीवसूत्रमिदं ज्ञेयं पत्राकारं प्रकथ्यते ॥ २१ ॥
घनघण्टाकुलाकीर्णमग्रे वलितकुञ्चिकम् ।
भङ्गे (अङ्गे) भङ्गोद्भवं भङ्ग मनेकाकाररूपकम् ॥ २२ ॥
शुकचञ्चुसमाकारं बदरीकण्टकाकृति ।
पलाल धूमसंकाशं द्राविडं पत्रमुच्यते ॥ २३ ॥
कुचिद् भिन्नं कुचिच्छन्नं कुचिदन्योन्यवेष्टितम् ।
मुनिपुष्पसमाकीर्णं वेशरं पत्रमुच्यते ॥ २४ ॥
उच्यते व्यन्तरं पत्रमूर्ध्वं भङ्गोद्भवाकृति ।
उकारकण्टकाकीर्णं कालिङ्गं पत्रमुच्यते ॥ २५ ॥
सुदीर्घं त (वि) रलभङ्गै रग्रे व्यावृत्तकैस्तथा ।
पुष्पगर्भोद्भवाकीर्णं यामुनं पत्रमुच्यते ॥ २६ ॥
ललितं कोमलं भङ्गै र्विषमे गर्भसंभवम् ।
सुकुमारगर्भोद्भवं वाह्यावर्ता (व्यावर्तस्या) कुलोद्भवम् ॥ २७ ॥
तरलं नागरं चैव वलितं व्यन्तरं तथा ।
आकुञ्चितं वेसरं च ऊर्ध्वं कालिङ्गकं भवेत् ॥ २८ ॥
पुनस्त्रिपञ्चसप्ताद्यं याव...........वधि ।
अतिवक्रकुलाकीर्णं द्राविडं कण्टकोद्भवम् ॥ २९. ॥
उदितं यामुनं वक्रैः कण्टकानां तु निर्णयः ।
देशजातिकुलस्थानं वर्णभेदास्तथापरः ॥ ३० ॥
पत्राकारो वर्णभेदो जीवसूत्रादि चोदितम् ॥

इति सूत्र सन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां पत्रजाति कण्टकभेद जीवसूत्रनिर्णयाधिकारो नामाष्टाविंशत्युत्तरद्विशततमं सूत्रम् ॥

———

## (१२९) देशजातिकुलस्थान वर्णभेदवर्णनं मैकोनत्रिंशदुत्तर-द्विशततमं सूत्रम् ॥

विश्वकर्मोवाच—

देशजातिकुलस्थानं वर्णभेदश्च कथ्यते ।
पूर्वोद्भवं नागरं च कर्णाटे द्राविडं स्मृतम् ॥ १ ॥

व्यन्तरं पश्चिमभवं वेशरं चोत्तरे तथा ।
कलिङ्गदेशे कालिङ्गं यामुनः सर्वतः स्थितम ॥ २ ॥

देशजातिश्च कथिता कुलस्थानं कुलोद्गतम् ।
नागरं विप्रजातिः स्याद् द्राविडं क्षत्रियस्तथा ॥ ३ ॥

व्यन्तरं वैश्यजातिश्च वेशरं च तथैव च ।
कालिङ्गं चित्र ! ( मिश्र ) वर्णाढ्यं यामुनं सर्वतः समम् ॥ ४ ॥

कुलस्थानोद्भवश्चेत्थं वर्णभेदश्चकथ्यते ।
नागरं श्वेतवर्णं स्याद् द्राविडं रक्त वर्णकम् ॥ ५ ॥

व्यन्तरं पीतसंकाशं हरिद्वर्णं तु वेशरम् ।
हरिद्वर्णं च कालिङ्गं यामुनं सर्ववर्णकम् ॥ ६ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां देशजातिकुलस्थान वर्णभेदवर्णनाधिकारो नामैकोनत्रिंशदुत्तरद्विशततमं सूत्रम् ॥

## (२३०) सरस्वत्यर्चन गुरुशिष्यसम्बन्धलक्षणं त्रिंशदुत्तर-द्विशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

सरस्वत्यर्चनं वत्स शृणु वक्ष्यामि साम्प्रतम् ।
आचार्यं क्रमयुक्तिं च दीक्षासारसमुच्चयम् ॥ १ ॥
आदौ परीक्षयेच्छिष्यं शकुनं च निरीक्षयेत् ।
लग्नशुद्धिं ग्रहयोगं ततो दीक्षा प्रदीयते ॥ २ ॥
विनीतं सोद्यमं धीरं शान्तं शीलगुणान्वितम् ।
विनयाचारसंयुक्तं गुरुपादार्चने रतम् ॥ ३ ॥
कुशलं सर्वशास्त्रेषु वास्तुवेदोद्भवादिषु ।
देवाग्निगुरुपूजासु रतं धर्मेषु नित्यशः ॥ ४ ॥
इत्यादिगुणसम्युक्तं दीक्षयेच्छिष्यकोत्तमम् ।
गुणाधिकश्च कथितो वर्ज्यदोषान्वदाम्यहम् ॥ ५ ॥
कुब्जं च बधिरं चैव चक्षुर्हीनं खल्वाटकम् ।
कुरूपं व्याधियुक्तं च कुदेहं कृष्णरूपकम् ॥ ६ ॥
कुसङ्गं पापनिरतं व्यङ्गादोषैश्च दूषितम् ।
वर्जयेदीदृशं शिष्यं दीक्षितो गुरुविघ्नकृत् ॥ ७ ॥
मठेऽथवा गृहे चोक्ता देवार्चा वेदिकोत्तमा ।
तत्रस्थां पूजयेद्देवीं वाग्वाणीं (वाग्देवीं) चैव भैरवीम् ॥ ८ ॥
भद्रकं मण्डलं कृत्वा सूर्यकोणैरलङ्कृतम् ।
तन्मध्यसूत्रतः कुर्याद् द्वाराणि च चतुर्दिशम् ॥ ९ ॥
द्वारपालाः प्रपूज्याश्च क्षेत्रपालास्ततो नृभिः ।
पूज्या स्तथाऽष्टदिक्पाला क्रमतश्च प्रदक्षिणम् ॥ १० ॥
महापद्मं चाऽष्टदलं तन्मध्ये कर्णिका तथा ।
पत्रान्तरे च भैरव्याः कुलदेव्याश्च कर्णिकाः ॥ ११ ॥
तत्केशरमध्यपङ्क्तौ चतुर्वर्णाः सितादिकाः ।
श्वेतरक्तपीतकृष्णाः पुनरप्येव वर्णकाः ॥ १२ ॥
षट्कोणकमिदं व्योम षड् दूतिकार्चने मतम् ।
तत्र मध्ये भवेच्छक्तिः पृथिवी सृष्टिरूपिका ॥ १३ ॥
कामाख्या निलयीभूता बद्धपद्मासना स्थिता ।
अक्षमाला तथा वीणा पुस्तकं च कमण्डलुः ॥ १४ ॥
नीलकण्ठी श्वेतभुजा श्वेताङ्गी चन्द्रशेखरा ।
महाविद्या महावाणी भारती च सरस्वती ॥ १५ ॥

सम्पूज्या मन्त्रतः कृत्वा तोरणानां चतुष्टयम् ।
वस्त्रान्ते (वेश्मान्ते) पीठिकायुक्तं वितानादि विभूषितम् ॥ १६ ॥
मुष्टिमात्रैकैकग्रासपरेणाग्रदिनेषु च ।
कार्यमेकाग्रमनसा प्रायश्चित्तं च धीमता ।
श्वेतवस्त्रान्तरे स्नाप्यं शुद्धे लग्ने दिने पुनः ॥ १७ ॥
श्वेतवस्त्रैर्युतं शिष्यमानयेत्तोरणान्तिकम् ।
सुलग्नवेलामुहूर्ते अन्तर्वेद्यां तु स्थापयेत् ॥ १८ ॥
निरीक्षयेतु वाग्देवीं प्रसीद परमेश्वरि ।
अर्चयित्वा ततो देवीं पुष्पाञ्जलिमथार्पयेत् ॥ १९ ॥

अत्रमन्त्रः—

ॐ ह्रीं कौशिनी पादान्नमः । ॐ ह्रीं उपकेशिनी पादान्नमः ।
आ ह्रीं सर्वकेशी पादान्नमः । ॐ ह्रां ह्रीं सरस्वती पादान्नमः ॥
मूलमन्त्रः ॥

आ ह्रीं हृदयायनमः । ॐ ह्रीं शिरसे स्वाहा ।
ॐ ह्रीं शिखाय वषट् । ॐ ह्रीं कवचाय हुम् ।
ऊ ह्रौं नत्रत्रयाय वौषट् । ॐ ह्रः अस्त्राय फट् ॥
इत्यङ्गन्यासः ॥

ॐ गं गणपतये नमः ॥ ॐ बं वटुकनाथाय नमः ॥
ॐ दिं दिक्पालेभ्यो नमः ॥ ॐ द्वं द्वारपालाय नमः ॥
ॐ क्षें क्षेत्रपालाय नमः ॥ ॐ कं कलविद्यायै नमः ॥
ॐ ह्रीं शक्तिबीजाय नमः ॥ ॐ राँरीं रूपायै नमः ॥
शक्तिबीजत्रयम् ॥

ॐ ह्रीं ह्रां ह्रीं ह्रूं हंसबीजाय नमः ॥ ॐ ह्रां ह्रीं नमः ॥ इतिजाप्य
आ ह्रीं वद वद वाग्वादिनि नमः ।
सारस्वतजपः १००००८ ॥ २४ ॥
होमं कुर्याद्दशांशेन पुष्पै वैं ब्रह्मवृक्षजैः ।
होमः १०००८ इति अन्यः स्यात् सारस्वतः ॥ २५ ॥
लिखितं पाठयेच्चैव चित्राद्यं रूपसाधकम् ।
दद्याच्छिष्यस्य हितवान् गुरुर्हस्तं च मस्तके ॥ २६ ॥
अवाप्नुहि स्वकर्मादि सामर्थ्यं त्वं च पुत्रक ।
गुरु माता पिता चैव देवदेवो गुरुस्तथा ॥ २७ ॥
ज्ञानकारणकं चैव इहलोके परत्र च ।
गुरु हर्षे हर्षितं तु गुरूणामिच्छया भवेत् ॥ २८ ॥
गुरुः सन्तोषितः सर्वं गुरूभक्त्या प्रयच्छति ।
गुरोः शिष्यस्य सम्बन्धः कर्मसाधनसाधकः ॥ २९ ॥

गुरोः शिष्यस्य सम्बन्धाद् ज्ञानं वै चित्रभूमिकम् ।
शेषा रजरसचित्रं ? सम्बन्धाच्च परस्परम् ॥ ३० ॥

× × ×

सविन्यासस्य संबन्धं सर्वं सर्वतोद्भवम् ? ॥ ३९ ॥
कुंलालस्य सम्बन्धं स्थानसाधन......... ।
धर्मार्थकाममोक्षाणां साधनम्........... ॥ ४० ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां सरस्वत्यर्चन गुरुशिष्यसम्बन्धलक्षणाधिकारो नाम त्रिंशदुत्तरद्विशततमं सूत्रम् ॥

## (२३१) पट्टपत्रवर्तनानिर्णयो नामैत्रिंशदुत्तरद्विशततमं सूत्रम् ॥

---

विश्वकर्मोवाच—

अतः परं प्रवक्ष्यामि चित्रादि पट्टसाधनम् ।
शाकवृक्षोद्भवाकार्या चित्राभ्यासार्थपट्टिका ॥ १ ॥

अत्यग्निमालिता या च इष्टिका आयसाकृतिः ।
रन्ध्रकीर्णकुलाया च गृहीतव्या लूणीकृता ॥ २ ॥

अतिसूक्ष्मा च कर्तव्या दीपशिखाकज्जलोपमा ।
गोधूमैः खलच्चूर्णं तु तक्रमध्ये तु प्रक्षिपेत् ॥ ३ ॥

तदनन्तरोद्भवं च सूक्ष्मवस्त्रेषु गालयेत् ।
भाण्डे तु तादृशं क्षिप्तं मृद्वग्निना शनैः शनैः ॥ ४ ॥

तथा दृढरसाकारं वज्रलेपसमं भवेत् ।
तेनाथ मर्दयेत्पट्टभित्रिका सूक्ष्मचूर्णतः ॥ ५ ॥

पक्षद्वये सुप्रलेपो ह्यन्तर्येन प्ररोहते ।
पट्टबन्धनमेवं तु कर्तव्यं चित्रहेतवे ॥ ६ ॥

( पत्रवर्तना निर्णयो लुप्तः स्यात् )

---

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां
पट्टपत्रवर्तनानिर्णयाधिकारो नामैकत्रिंशदुत्तरद्विशततमं सूत्रम् ॥

---

## (२३२) लेपकर्म द्वारेशानुत्तरदेशनवमं सूत्रम् ॥

विश्वकर्मोवाच—

लेपकर्म प्रवक्ष्यामि यदुक्तं पूर्वमेव हि ।
श्वेतां रक्तां तथा पीतां मृत्तिकां च समाहरेत् ॥ १ ॥

कापिलं तु घृतं क्षीरमतसीमाथ मेव च ।
यवगोधूमचूर्णं तु चर्णं च वसुकघृतम् ! ॥ २ ॥

क्षीरवृक्षत्वचा ..( मिश्रं ) बकुलं गुडसंयुतम् ।
सेन्द्रवृक्षं प्रेषणीयं मासं वा पक्षतोऽधिकम् ॥ ३ ॥

पाषाणगर्भचूर्णं तु सूक्ष्मं कृत्वा समस्तकम् ।
पट्टत उद्धरेल्लेपं ( कल्कं ) मर्दयेत्तैलवारिभिः ॥ ४ ॥

प्रक्षिप्तातसीतैलेन सुपिष्टं कज्जलोपमम् ।
पिण्डान्कृत्वा मुष्टिमात्रानातपैः शुष्कतापितान् ॥ ५ ॥

आस्फोटिते वज्रसमाः आतप: सिद्धिकामदः ।
अतस्तु स्फुटिते पिण्डे बन्धद्रव्यादिकं क्षिपेत् ॥ ६ ॥

शु (सु) द्धा (धा) याश्च प्रवक्ष्यामि बन्धनं दलनं तथा ।
शैलजा बन्धका वापि श्वेताः पाषाणकोत्तमाः ॥ ७ ॥

खण्डशश्चैव कर्तव्या प्रमाणे धात्रिकोपमाः ।
सुसंचिताः कर्मयुक्ता आर्णात्पलान्तरैः? ॥ ८ ॥

( आनेया उपलान्तरे ) इति स्यात् ॥

........................................ ।
........................................ ॥ ९ ॥
........................................ । ( लुप्ताः )
........................................ ॥ १० ॥

तथा वरेष्टिकामध्ये आधारानि सुवि......(क्षिपेत्) ।
समस्तं ज्वालयेन्मध्ये यावद्दशनिशान्तकम् ॥ ११ ॥

मल्लिकायावकं कृत्वा स्थूणिकाकारमस्तकम् ।
क्षिपेद्बिल्वरसाम्र च मासं वा पक्षतोऽधिकम् ॥ १२ ॥

शिलोत्थार्धकयुक्तं च ! मर्दयेच्छुद्धयोत्तमा (त्सुधयोत्तमा) ।
त्रिचारा उत्तमाख्याता रूपार्थेन चतुर्थिका ? ॥ १३ ॥

अर्चारूपोद्भवाकार्या मानयुक्तिश्च शास्त्रतः ।
सञ्चित्य त्विष्टिकाबन्धं हस्तपादशीर्षादितः ॥ १४ ॥

सूक्ष्मे तु वङ्गुलो लेपः स्थूले त्वङ्गुलमात्रकः ।
दिनेऽर्धे च दिनान्ते वा दद्याल्लेपानुलपनम् ॥ १५ ॥

सर्वाङ्गे लिप्तमात्रं च सूक्ष्मतेजः समुद्भवेत् ।
शीर्षे काचोत्तमखण्ड टीकाभरण संयुता ॥ १६ ॥
वर्णे रत्नविशेषां च मसिरेखां समुद्धरेत् ।
अङ्गप्रत्यङ्ग कोपाङ्गदृष्टिकाभिरनेकधा ॥ १७ ॥
विचित्रवस्त्रालङ्कारै भूषितां चित्रकोपमाम् ।
स्वभावजैरलङ्कार नखकेशादिभिः क्रमात् ॥ १८ ॥
भृङ्गहस्ता गजदन्ता बद्धपर्य्यङ्कसंस्थिता ।
योगमुद्रा करयुग्मे करोद्धृतगजादिका ॥ १९ ॥
हारकेयूरसम्युक्ता कुण्डलाभ्यामलङ्कृता ।
मालामुकुटशोभाढया कर्तव्या शान्तिमिच्छता ॥ २० ॥
भैरवी भैरवो देवः सर्वदेवादितः क्रमात् ।
शास्त्रप्रमाण युक्ता च शुभ्रवर्णा च तेजसा ॥ २१ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां लेपकर्माधिकारो नाम द्वात्रिंशदुत्तरद्विशततमं सूत्रम् ॥

---

# (२३३) चित्राभिधान निर्णयो नाम त्रयस्त्रिंशदुत्तरद्विशततमं सूत्रम्

विश्वकर्मोवाच—

चित्रकर्म प्रवक्ष्यामि रूपालङ्कारसंयुतम् ।
कीर्तिवक्त्रोद्भवाकारं ? कथये तव साम्प्रतम् ॥ १ ॥
भृकुटिकुटिलान्त्रनेत्र वाराहकर्णमेषशृङ्गोद्भवम् ।
मृगकपोलसिंहवक्त्रं कीर्तिः स्यान्मुखोपमाख्याता ! ॥ २ ॥
भृकुटिः स्याद् बद्धकर्णोऽश्वस्कन्धः केशरावृतः ।
क्रममध्ये परावृत्ता ह्रस्वपादः सिंहोत्तमः ॥ ३ ॥
सिंहव्यालं गजव्यालमश्वव्यालं नरादिकम् ।
वृषव्यालं मेषव्यालं शुकव्यालं च सौकरम् ॥ ४ ॥
माहिषं मूषकव्यालं कीटव्यालं च व्याक (वान) रम् ।
हंसकुक्कुटमायूरं त्रिपल्ली सर्थ (र्प) व्यालकम् ॥ ५ ॥
इति षोडश व्यालानि उक्तानि मुखभेदतः ।
शरीरं हि महद्रूपं(शरीरमहिवद्रूपं) हस्तपादपुच्छादिकम् ॥ ६ ॥
व्यालानन्तरतो रूपमनेकाकारतः स्मृतम् ।
त्रुटितं त्रिभङ्गि चैव ललितं कुञ्चितं तथा ॥ ७ ॥
गमितालीढ प्रत्यालीढावृत्तं परिवर्तकम् ।
उद्भिन्नं भिन्नसूत्रं च व्यावर्त्तं च महोद्भवम् ॥ ८ ॥
नानारूपं समाख्यातं शोकं च पद्मकेशरम् ।
द्विरष्टोक्तानि साकृतं रूपाणि विविधानि च ॥ ९ ॥
वैयाघ्रं समपादं च आलीढं च प्रत्यात्म (दि) कम् ।
पूर्वापरयास्योत्तर रहोबोधव्या च ममापतिः ? ॥ १० ॥
नवषणोक्तताक्षा लक्षयेच्चित्र सूत्रधानेन ।
वैरसाख्याता शान्तादि सहतोद्भवा ? ॥ ११ ॥
वृक्षगुल्मलतावल्ली रम्भास्तम्भा महोद्गताः ।
धवलोत्तुङ्गमाडानि वेश्मानि विविधानि च ॥ १२ ॥
नगरग्रामपुरादिदेशानां च पुनः क्रमम् ।
°पसागरोद्भवानि सर्वाणि मण्डलानि च ॥ १३ ॥
सर्वजीवोद्भवं पूर्वं लक्षयेच्चित्रसूत्रकम् ।
चित्राभ्यासोद्भवाः सर्वे सुरासुरनरोरगाः (समाः) ॥ १४ ॥
मेघाश्चित्रवर्णरूपा आदित्याश्चैव चन्द्रमाः ।
ग्रहनक्षत्राद्याः सर्वे अर्चिर्वाहन संयुताः ॥ १५ ॥

दिक्पालादिका लक्ष्या इन्द्राद्याः सुप्रदक्षिणम् ।
गजाश्वरथवरपादाद्या असङ्ख्यातास्तथैव च ॥ १६ ॥

.......................................।
सभादौ च विन्तेदार्थे युक्तं नृत्यनाट्यादिकम् ॥ १७ ॥

एवमादि समस्तं च चित्राभ्यासाच्च लक्षयेत् ।
तथा चित्राभ्यासरूपा ! त्रैलोक्यं सचराचरम् ॥ १८ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां चित्राभिधाननिर्णयाधिकारो नाम त्रयस्त्रिंशदुत्तरद्विशततमं सूत्रम् ॥

———

## (२३४) स्त्रीपुरुषलक्षणं चतुस्त्रिंशदुत्तरद्विशततमं सूत्रम् ॥

अपराजित उवाच—

लक्षणं स्त्रीपुरुषाणां बाह्यतोऽभ्यन्तरे तथा ।
कथयस्व प्रसादेन समुद्रोक्तं यथा पुरा ॥ १ ॥

विश्वकर्मोवाच—

अथातः सम्प्रवक्ष्यामि स्त्रीनरादेश्च लक्षणम् ।
तच्चानुक्रमतः पूर्वं यदुक्तं तु कलाबुधैः ॥ २ ॥
आदौ परीक्षयेदायुः पश्चाल्लक्षणमेव च ।
तच्च स्त्रीणां वामभागे पुरुषाणां च दक्षिणे ॥ ३ ॥
आदौ वक्ष्ये पूरुषाणां स्त्रीणां च तदनन्तरम् ।
दृष्ट्यवलोकमात्रेण लक्षयेत् स्त्रीनरादिकम् ॥ ४ ॥
पञ्चदीर्घं पञ्चहृस्वं पञ्चसूक्ष्मं षडुन्नतम् ।
सप्तरक्तं त्रिगम्भीरं त्रिविस्तीर्णं प्रशस्यते ॥ ५ ॥
हस्तयो नेत्रयोश्चैव नासायां चैव पञ्चमम् ।
एवमादिगुणोपेतं पञ्चदीर्घं प्रशस्यते ॥ ६ ॥
ग्रीवा चन्द्रकं जननं पृष्ठं जङ्घा तथैव च ।
———————————————— ॥ ७ ॥
———————————————— ।
———————————————— ॥ ८ ॥
———————————————— ।
———————————————— ॥ ९ ॥
———————————————— ।
———————————————— ॥ १० ॥

( ११-१२-१३ श्लोका लुप्ताः )

पूर्णचन्द्रमुखी कन्या बालसूर्यसमप्रभा ।
विशालनेत्रा बिम्बोष्ठी सा कन्या लभते सुखम् ॥ १४ ॥
गतौ हंसगति र्या च नातिहृस्वाति दीर्घिका ।
सुखिनी सा भवेल्लोके समुद्रकथितं तदा ॥ १५ ॥

( १६-१७-१८ श्लोका लुप्ताः ॥ )

यस्याः करतले छत्रं प्राकारस्तोरणं तथा ।
अपि दासकुले जाता राजपत्नी भविष्यति ॥ १९ ॥
यस्याः करतले रेखा अङ्कुशाकार शोभिता ।
गजाधिपस्य पत्नी सा भवत्येवं न संशयः ॥ २० ॥

छत्रं च चामरं चैव यस्याः करतले भवेत् ।
सार्वभौमनृपत्नी सा भवत्येवं न संशयः ॥ २१ ॥
यस्याः करतले रेखा खड्गाकारा प्रदृश्यते ।
पत्या पत्नी युध्यते साऽन्यत्र वै वैरकारिणी ॥ २२ ॥
यस्याः करतले पद्मं धनधान्यसमृद्धिनी ।
शङ्खाकारा यदा रेखा स्नानदेवार्चने रता ॥ २३ ॥
यस्याः शूलाकृती रेखा सा भवेच्च तपस्विनी ।
दीर्घकेशी भवेद् दुःखाद् व्रतिनी च प्रवासिनी ॥ २४ ॥
यस्याः करतले रेखा दीपाकारा च दृश्यते ।
सा पुत्रपौत्रसन्ताने भवेच्च कुलशालिनी ॥ २५ ॥
नन्द्यावर्तो यदा हस्ते नित्यं कल्याणकारिणी ।
षट्कोणायतहस्ता या पूज्या सा पूजनैः सदा ॥ २६ ॥
यस्या हस्ते ध्वजाकारा रेखा

( २७-२८ ..., ४२-श्लोका न लभ्यन्ते )

अशुभं परिवर्जयेत् ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां स्त्रीपुरुषलक्षणाधिकारो नाम चतुस्त्रिंशदुत्तरद्विशततमं सूत्रम् ॥

## (२३५) षट्त्रिंशदायुधनिर्णयो नाम पञ्चत्रिंशदुत्तरद्विशततमं सूत्रम् ॥

अपराजित उवाच—

कवचादीन्यायुधानि कथं लक्ष्याणि मानतः ।
तदनुक्रमयुक्तीं च कथय परमेश्वर ॥ १ ॥

विश्वकर्मोवाच—

कवचानां लक्ष्म वक्ष्ये वज्रदेहानुरूपिणाम् ।
शस्त्रोपघातके चैव युद्धकाले हितानि च ॥ २ ॥
आयसोद्भवपत्राणि कर्तव्यानि विचक्षणैः ।
द्व्यङ्गुलायतकं कुर्यात् पृथुत्वं चैकमङ्गुलम् ॥ ३ ॥
कवचं तेऽधुना वक्ष्ये वज्रदेहानुरूपिणम् ।
वृत्ताकारं तु स्वविवे ह्निसोर्धत ! ॥ ४ ॥
तनुत्राण देहदप्रि द्विगुणवस्त्रादिकोद्भव ! ।
कटिसूत्र सूत्रस्य संस्थाने अवलि भुजा ॥ ५ ॥
रक्षीवाग् छित्तिनानि कंटिकाकसिणैर्बिताः ।
शीर्षे तु मुकुटाकारमचलं सर्वतस्तथा ॥ ६ ॥
जङ्घा रेखा प्रकर्त्तव्याऽऽयामे तीर्थकलाकृतिः ।
पा—————————कृत्वा गजस्य गडमुखोद्गताः ॥ ७ ॥
पक्षिराजश्च पृष्ठे च धार्यं वै राजपुत्रकैः ।
—————————— —————————— ॥ ८ ॥
—————————— —————————— ।
—————————— —————————— ॥ ९ ॥ इतिकवचमाह ॥

आयुधानामतो वक्ष्ये नामसङ्ख्यावलिं क्रमात् ।
त्रिशूलच्छुरिकाखड्गखेटाः खट्वाङ्गकं धनुः ॥ १० ॥
बाणपाशाङ्कुशा घण्टारिष्टिदर्पणदण्डकाः ।
शङ्खश्चक्रं गदावज्रशक्तिमुद्गरभृशुण्डयः ॥ ११ ॥
मुशलः परशुश्चैव कर्त्तिका च कपालकम् ।
शिरः सर्पश्च शृङ्गं च हलः कुन्तस्तथैव च ॥ १२ ॥
पुस्तकाक्षकमण्डलु श्रुचयः पद्मपत्रके ।
योगमुद्रा तथा चैव षट्त्रिंशच्छत्रकाणि च ॥ १३ ॥
षोडशाख्यं पदं कृत्वा पदेन नाभिवृत्तकम् ।
तदूर्ध्वे चोभयपक्षौ भीषणाग्रौ प्रकीर्तितौ ॥ १४ ॥
पट्टाखांशाशक्तिपिण्डवलणं कण्टकावृतम् ।
उभयोः कटकोपेतो मध्ये शकयंश उन्नतः ॥ १५ ॥
दशभाग भवेद् दण्डं पृथुत्वं चैकभागिकम् ।

इति त्रिशूलः ॥

क्षुरिका लक्षणं वक्ष्ये यदुक्तं परमेश्वरैः ।
कौमारी चैव लक्ष्मीश्च शङ्खिनी तुन्दका तथा ॥ १७ ॥
पापिनी शुभगा ला (ल) क्षा षडङ्गुलादिकोद्भवाः ।
द्वादशान्तिमाङ्गुलान्यङ्गुलमानं प्रशस्यते ॥ १८ ॥
आदिहीना मतिभ्रंशं मध्यहीना धनक्षयम् ।
हन्याद्वंशं वंशहीना शूलाग्रे मृत्युसंभवः ॥ १९ ॥
चतुरङ्गुला भवेन्मुष्टि रूर्ध्वे द्व्यङ्गुलताडिता ।
मुष्टिकाधो यवाकारो जडनार्थे च कीलकम् ॥ २० ॥

इति छुरिका ॥

शस्त्रं शतार्धाङ्गुलं स्यान्मध्यमं तु द्विहीनतः ।
तद् द्विहीनं कनिष्ठं स्यात् त्रिविधः खड्ग उच्यते ॥ २१ ॥
——— —द्भवामूर्ध्वे तानिकोभयपक्षतः ।
पालिकोर्ध्वे यवं कुर्यात्ताडकाधस्तुग्राहकम् ॥ २२ ॥
जडिद्वयं ! ग्राहके च जवकः खड्ग उच्यते ।

इति खड्ग ॥

खड्गमानोद्भवो व्यासो द्व्यङ्गुलाभ्यां तथाधिकः ॥ २३ ॥
तद्वदग्रे पुनस्त्वेवं ज्येष्ठमध्यकनिष्ठकम् ।
उभयपक्षे चाऽन्तरं तु चतुर्दशाङ्गुले भवेत् ॥ २४ ॥
हस्ताधारद्वयं कुर्याद् वृत्ताकारं तु वारुणम् ।

इति खेटकम् ॥

२५

————धनिर्मासं निनेत्रशात्वावंडपम् । ?
श्वेतासं सृगस्र——? हेमदण्डविभूषितः ॥ २६ ॥

इति खट्वाङ्गः ॥

द्विमुष्ट्यन्त्यङ्गुलं मध्यं मध्योर्ध्वे च द्विहस्ततः ।
निम्नं चोभयतः कुर्याद् गुणाधारे तु कर्णिके ॥ २७ ॥
———गुलं मध्यदेशे चवमोने र्गुणैर्मतम् ? ।
समाग्रनवमुष्टिश्च बाणः पुष्प अद्गणैं ? युतः ॥ २८ ॥
कुम्भके कुम्भयेद् बाणं पूरकेण तु पूरयेत् ।
रेचके रेचयेद् बाणं त्रिविधं शरलक्षणम् ॥ २९ ॥

इति धनुर्बाणः ॥

मकरद्वित्रिकं वापि पाशो ग्रन्थिसमाकुलम् ? ।
अङ्कुशं चाऽङ्कुशाकारं तालमानसमावृतम् ॥ ३० ॥

इति पाशाङ्कुशौ ॥

घण्टां घण्टाकृतिं कुर्याच्चतुर्धारा च रिष्टिका ।
दर्पणं दर्शनार्थे च दण्डः स्यात्खड्गमानतः ॥ ३१ ॥

इति घण्टारिष्टिदर्पणदण्डम् ॥

शङ्खश्च दक्षिणावर्तश्चक्रं चाग्युतं तथा ।
गदा च खड्गमाना स्यात् पृथुनालं अर्कद्रणे त्रयम् ? ॥ ३२ ॥
इतिशङ्खचक्रगदा ॥

वज्रं शूलद्वयं दीर्घमेकविंशतिशूलतः ।
अर्धेन्दुनिभधाराग्रा शक्तिः स्याद् द्वादशाङ्गुला ॥ ३३ ॥
इतिवज्रशक्तिः ॥

हस्तग्राह्यश्चोर्ध्वतश्च मुद्गरः षोडशाङ्गुलिः ।
भृशुण्डी युग्मदोरास्या द्विहस्तान्ताग्रचालका ॥ ३४ ॥
इतिमुद्गरभृशुण्डी ॥

विंशत्यङ्गुलं मुशलं चतुरङ्गुलवृत्तकम् ।
अर्धचन्द्रोपमः पर्शु स्तद्दण्डः खड्गमध्यतः ॥ ३५ ॥
इति मुशलपर्शु ॥

कर्तिका छुरिकामाना चक्रे च त्रिसमाकृतिः ।
शिरोऽस्थिकं कपालं स्माच्छिन्नश्च रिपुशीर्षकम् ॥ ३६ ॥
इति कर्त्तिका कपालशीर्षकम् ॥

सर्पो भुजङ्गस्त्रिफणी शृङ्गं स्याद्धि गवादिजम् ।
हलं हलाकृतिः कुर्यात् कुन्तं वै पञ्चहस्तकम् ॥ ३७ ॥
इति सर्पशृङ्गहलकुन्तम् ॥

पुस्तकं युग्मतालं स्यात् जाप्यामालाऽक्षसूत्रकम् ।
कमण्डलुश्च पादोनः श्रुगेव षट्त्रिंशदङ्गुला ॥ ३८ ॥
इति पुस्तकाऽक्षमालाकमण्डलुश्रुचयः ॥

पद्मं च पद्मसंकाशं पत्रं मुक्तं च लोलकम् ।
पद्मासनार्धे युग्महस्ता योगमुद्रा तथोच्यते ॥ ३९ ॥
इति पद्म पत्रं योगमुद्रा ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तृश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां षट्त्रिंशदायुधनिर्णयाधिकारो नाम पञ्चत्रिंशदुत्तरद्विशततमं सूत्रम् ॥

# (२३६) षोडशाभरणलक्षणं षट्त्रिंशदुत्तरद्विशततमं सूत्रम् ॥

अपराजित उवाच—

सुरासुरनरादीनां भूषणानि कथं प्रभो ।
अतियुक्ततरं चैव शम्भुना यत्प्रकाशितम् ॥ १ ॥
वाद्यनर्तनगीताद्यं तालमूलसमुद्भवम् ।
कथयस्व प्रसादेन सर्वं विश्वजगत्पते ॥ २ ॥

विश्वकर्मोवाच—

भूषणं तात ते वक्ष्ये पादादौ षोडशात्मकम् ।
तथाभरणसूत्राणि कथये शृणु पुत्रक ॥ ३ ॥
मेरुद्वयं निगदितं पताका सूचिका तथा ।
दशादलितगुरूणोद्दिष्टं नष्टं च षष्टकम् ॥ ४ ॥
भवन्ति प्रस्तारगताः षडिमे प्रत्ययाः खलु ।
( चत्वार आद्यास्सुरवेश्मनां च ) कर्तारश्चामरवेश्मनां च दक्षाअपि प्रत्ययकान् षडेतान् ।
ये वै न जानन्ति गुरूपदिष्टास्ते सूत्रधारा रिपवः प्रजानाम् ॥

अपराजित उवाच—

सुरासुरनरादीनां भूषणानि कथं प्रभो ।
कथयस्व प्रसादेन सर्वं विश्वजगत्पते ॥ १ ॥

विश्वकर्मोवाच—

भूषणानि तात वक्ष्ये आपादतलमस्तकम् ।
षोडशाभरणानीह कथितानि च पुत्रक ॥ २ ॥
नूपूरः पादकटकः प्रलम्बोदकमेव च ।
मेखलोर्ध्वे कटिसूत्रं ( तथा कट्यां ) हारो वक्षःस्थलालयः ॥ ३ ॥
मुक्ताफलानि सर्वाणि शुद्धाकर भवानी च ।
पाण्ड्यमातङ्गसौराष्ट्रे हैम सौर्पार कौशले ॥ ४ ॥
वेण्वातटे कलिङ्गे च वज्राकरसमुद्भवः ।
पश्यो (एषु) मुक्तासमानानि शुद्धरत्नानि यानि च ॥ ५ ॥
अथवा चाहिमातङ्ग वाराहमत्स्यनक्रजाः ।
शङ्खजा वेणुजाश्चैव मुक्तानां (मध्ययोनता ?) योनय इमाः ॥ ६ ॥
निश्चलत्वमन्यूनत्वं निर्वाणत्वं सुगन्धिता ।
सुवेध्यं च मणिं वीक्ष्य कण्ठे धार्यं च भूभुजैः ॥ ७ ॥
व्यङ्गितानि यदा तानि त्यजेदेतानि भूपतिः ।
पुराणि (रत्नानि) सौम्यरूपाणि नृपार्थं हार उत्तमः ॥ ८ ॥

इति हारः ॥

पदकं संप्रवक्ष्यामि सर्वरत्नैरलङ्कृतम् ।
धूली ? मरकतं चाद्यं तथा चैवं सपत्रकम् ॥ ९ ॥
कीटपक्षोऽपरः प्रोक्तो गरुडागार एव च ।
चत्वारो मणयः प्रोक्ताः सर्वे दुःखप्रणाशनाः ॥ १० ॥
पञ्चधा भाजिते क्षेत्रे पुन ( र्नारद ? ) स्त्वेवं च पञ्चभिः ।
तन्मध्ये च महादिव्यं मरकं सुरवल्लभम् ॥ ११ ॥
माणिक्यं पूर्वतो देशे दाडिमीबीजसप्रभम् ।
उदिता कर्कटच्छाया ? (उदितार्कसमच्छायं) प्रभामण्डलमण्डितम् ॥ १२
दृश्यते तत्तु माणिक्यं दक्षिणं दिशमाश्रितम् ।
पद्मरागनिभं स्वच्छं दीपकांशु स्वभावकम ॥ १३ ॥
अपरं च महादिव्यं माणिक्यं ब्रह्मवल्लभम् ।
सुस्निग्धं दुग्धवत्स्वच्छं दाडिमी कुसुमप्रभम् ॥ १४ ॥
तन्माणिक्यं तु कौबेर्यां शाश्वतं शक्तिपूजने ।
दक्षिणोत्तरप्राचीषु नीलं वै वज्रवत् क्रमात् ॥ १५ ॥
तन्मध्ये विदिशायां च वज्रं शक्रस्य वल्लभम् ।
पद्माकारं घृतं दद्यात्परिधौ नालरूपकम् ॥ १६ ॥
विचित्रकण्टकैर्युक्तं पञ्चशाखा ( पत्रशाखा ) विभूषितम् ।
दण्डशृङ्खलरूपं च खचितं चित्ररत्नकैः ॥ १७ ॥
लशुनं मध्यभूमौ स्याद्धृदयानन्द कारकम् ।

इति पदकम् ॥

श्रीवत्सं संप्रवक्ष्यामि सदा विष्णोश्च वल्लभम् ॥ १८ ॥
चतुरस्रं समं कृत्वा रसभागविभाजितम् ।
चतुष्पदं च मध्यस्थं रमणं ? कलिकोद्भवम् ॥ १९ ॥
बाह्यपङ्क्तौ दिशायां च चतुर्भागैश्चतुर्दिशम् ।
कोणे पदानि चत्वारि दिशायां मूर्ध्नि पत्रकम् ॥ २० ॥
क्षिपेत्समस्तगर्तेषु शुचिर्वीराहकर्णिकाः ।
तन्मध्ये च महारत्नं सर्वलक्षण संयुतम् ॥ २१ ॥
तस्याऽधः पङ्कजं दिव्यमष्टपत्रं सकेसरम् ।
मृणालग्रन्थिवल्लीकं कन्दं कलिविभूषितम् ॥ २२ ॥
वर्तना कथिता सा तु कथ्यते तेऽधुना पुनः ।
क्षेपगर्भ (र्त्त) क मध्यस्थं मध्ये चोपाश्रयं क्षिपेत् ॥ २३ ॥
सोमकान्ति तस्योपरि सुधाधौतं सदासितम् ? ।
वर्णानुक्रमपरिधौ धूल्याद्यं गरुडान्तगम् ॥ २४ ॥
तदुपरि पत्रवल्ली पुष्पराग चतुष्टयम् ।
कोणस्थानेषु वैडूर्यचतुष्कं विघ्ननाशनम् ॥ २५ ॥

चक्रकोणेषु सर्वेषु निक्षिपेत् परिधौ क्रमात् ।
पौंड्र मातङ्गसौराष्ट्रहेमसापरिकोशलाः ॥ २६ ॥
वेण्वातरं कलिङ्गश्च वज्रस्याष्टौ तथा कराः ।
वर्णानुक्रमकं वक्ष्ये विप्रशूद्रान्तजातिषु ॥ २७ ॥
त्रासः ? (मुक्ताः) कलङ्कितदोषै.....रत्नदोषः (रत्नदोषस्तुदुःखदः) ।
पद्मरागस्तथा पुष्पं महानीलं सुनीलकम् ॥ २८ ॥

इतः परं ३८ श्लोकान्तं न लभ्यते ॥

.................................रायेत् ? ।
तदधस्तान्मृणालं च कण्टकैकलिक ? (कण्टककलि) भूषितम् ॥ ३९ ॥
मध्यभूमौ समस्तायां पत्रपङ्क्तिविराजितम् ।
दिक्स्थानेषु स्थितं बाह्ये पद्मराग चतुष्टयम् ॥ ४० ॥
महारत्नेन्द्रनीलाश्च चत्वारश्च चतुर्दिशम् ।
अष्टौ च कोणपत्रेषु पुष्परागास्तथोदिताः ॥ ४१ ॥
तन्मध्यतो वै शिरीषशाखापत्रविराजितम् ।
समस्तं हीरकैर्बद्धं मुक्ताभिर्मणिभिस्तथा ॥ ४२ ॥
विचित्रपत्रसंयुक्तमूर्ध्वे कुर्यात् सुरूकपम् ।
दण्डस्तु भागविस्तीर्णो द्विभागश्चोर्ध्वतो भवेत् ॥ ४३ ॥
उपान्तं गर्त्तसम्पन्नं हीरकैः खचितं तथा ।
अन्तरे तस्य माणिक्यमुदितार्कसमप्रभम् ॥ ४४ ॥
उपाश्रयं च संक्षिप्य न्युप्तं धाराभिवर्जितम् ? ।
दृढत्वं च मृदुत्वं च मृणालकमलोपमम् ॥ ४५ ॥
ईदृशं च महालिङ्गमपांपतिसमुद्भवम् ।
इ(त)त्पद्मोपरिस्थाप्यः सौम्यकान्तिश्चिन्तामणिः ॥ ४६ ॥
दुर्लभः कौस्तुभश्चायं सुरासुरनरोरगैः ।
सौम्यकान्ति विना विष्णुं नाऽपि देवैरवाप्यते ॥ ४७ ॥

इति कौस्तुभः ॥

प्रथमं शिशुपत्रं च सकलं च द्वितीयकम् ।
स्वस्तिकं तु तृतीयं च वर्द्धमानं चतुर्थकम् ॥ ४८ ॥
तथाऽन्यत्सर्वतोभद्रं पञ्चपत्रमिति स्मृतम् ।
क्षीरार्णवसमुत्पन्नं मुद्रारूपं तथोत्तमम् ॥ ४९ ॥
हेममयानि सर्वाणि चितानि मणिरत्नतः ।
हृदि कण्ठे तथा मूर्ध्नि सदा धार्याणि भूपते ॥ ५० ॥

इति पत्राभरणम् ॥

मुकुटं सम्प्रवक्ष्यामि ज्येष्ठमध्यकनिष्ठिकम् ।
शेखरं प्रथमं नाम किरीटं च द्वितीयकम् ॥ ५१ ॥

तृतीयं चाऽमलसारं मूले मुकुटमण्डनम् ।
शेखरं शिखराकारमङ्गत्रयविभूषितम् ॥ ५२ ॥
तन्मध्ये च महारत्नं वज्रं वै रुद्ररूपकम् ।
मरकतं वामदेशे च साक्षाद्वै विष्णुदैवतम् ॥ ५३ ॥
दक्षिणे पद्मरागं च पुरुषाख्यवपुः कृतम् ।
त्रिभिः शृङ्गै रत्नमयं मूलदेशे प्रपूजितम्[म] ॥ ५४ ॥
सदाशिवो मध्यपट्टे श्रेणीयुक्तश्च मण्डितः ।
पद्मरागैश्च मणिभि रिन्द्रनीलादिभिस्तथा ॥ ५५ ॥
पूरिताहीरककणैः समस्ता खचिता मही ।
पत्रवल्ली त्रिभङ्गी च कर्णिका कलिकैर्युतम् ॥ ५६ ॥
शेखरं शीर्षके पूज्यं नरेशस्य भवेत्सदा ।

इति शेखरः ॥

................................... ॥ ५७ ॥ (लुप्तम्)

अतो वक्ष्यामि मुकुटं तथा सुरगणार्चितम् ।
पट्टं शशिप्रभाभं च शृङ्गपञ्चकसंयुतम् ॥ ५८ ॥
शृङ्गाण्युपरि चत्वारि त्रीणि चैव तदूर्ध्वतः ।
शृङ्गद्वयं तत्परं तदुपर्येकं च शृङ्गकम् ॥ ५९ ॥
शृङ्गाणि चैव कार्याणि मणिभि र्भूषितानि च ।
हीरकेण समायोज्य पत्रवल्लीसमन्वितम् ॥ ६० ॥
तत्रमध्ये महादिव्यं सोमकान्तिमणिं तथा ।
धृतं (तद्वै) शिरसि सम्पूज्यं मुकुटं च किरीटकम् ॥ ६१ ॥

इति किरीटमुकुटः ॥

वक्ष्येऽथामलसारं च मुकुटं देवदुर्लभम् ।
अर्धचन्द्राकृतिपट्टं मुक्तापीडशाकावृतम् ॥ ६२ ॥
पञ्चाण्डकमयं दिव्यं सर्वरत्नविराजितम् ।
खचितं हीरकैः सर्वं वैडूर्यमणिमध्यगैः ॥ ६३ ॥
मुक्ताफलमयी श्रेणि रण्डकैरावृता सदा ।
वज्रवैडूर्यगोमेदपुष्परागेन्द्रनीलकाः ॥ ६४ ॥
एते पञ्च महापुण्या उपर्युपरितश्रिताः ।
पञ्चरत्नमिदं दिव्यं स्वयमेव सदाशिव. ॥ ६५ ॥
समस्तेषु च कोणेषु कर्केतं लशुनं तथा ।
वार्यन्तरे समस्ते च पत्रवल्ली विराजिता ॥ ६६ ॥
विद्रुमश्च महानीलं कोणगं (जं) खचितं सदा ।
महातेजः सूर्यकान्ति मौलिमध्ये च पुष्पकम् ॥ ६७ ॥
परीक्ष्येमानि रत्नानि यानि शुद्धानि तानि च ।
ग्राह्याणि सूत्रधारेण मुकुटार्थं नृपस्य च ॥ ६८ ॥

मुकुटं दिव्यरूपं च शिरस्युपरि धार्यते ।
सुरभूमिपतीनां च ह्यन्येषां मुकुटं न हि ॥ ६९ ॥

इत्यामलसारमुकुटः ॥

कण्ठाभरणकंज्ञेयं मुक्ताफलमयं शुभम् ।
तन्मध्ये पद्मरागं च सूर्यतेजः समप्रभम् ॥ ७० ॥

इति कण्ठः ॥

ततो बाहुबलं वक्ष्ये सर्वसौभाग्यदायकम् ।
मध्यदेशो मरकतः परिधौ सर्वरत्नकम् ॥ ७१ ॥
हीरकैः खचितं सर्वं शिशुपत्रविराजितम् ।
क्षिपेत्समस्तगर्तेषु माणिक्यमणिकादिकम् ॥ ७२ ॥
उपाश्रयस्य चोत्तङ्गे ? पद्मरागमधः स्थितम् ।
कोमलं ललितं नालं हीरकः खचितं तथा ॥ ७३ ॥
बद्धे बाहुबले चाऽरिक्षयो भूपस्य जायते ।
भुजे सम्पूज्य माणिक्यं सुर्यतेजो द्युतिः सदा ॥ ७४ ॥

इति बाहुबलः ॥

कुण्डले मुकुटं चैतच्छृङ्गारार्थं त्रिकं सदा ।
मुक्ताफलमयी वल्ली चामीकरं तस्यान्तरे ॥ ७५ ॥
एषां गर्तेषु सर्वेषु हीरकं क्षेपयेत्सदा ।
पद्मरागं तस्य मध्ये दिव्यकान्ति सुतेजसम् ॥ ७६ ॥

इति कुण्डली ॥

योज्यं च कङ्कणं बाह्वो नवरत्नमयं शुभम् ।
हीरकं पद्मरागंच महानीलंच मौक्तिकम् ॥ ७७ ॥
मरकं विद्रुमं पुष्पं गोमेदं हसनं (लशुनं) तथा ।
एतेभ्यश्च महादिव्या ग्रहाश्चैव यथा प्रभाः ॥ ७८ ॥
यद्धस्ते कङ्कणं दिव्यं शुद्धरत्नैः समावृतम् ।
तस्य गेहे महापीडा न भवन्ति कदाचन ॥ ७९ ॥
गाङ्गेयं निकषे शुद्धं दिव्यं........ग्रन्थितम् ।
महारत्नं तस्य मध्ये माणिक्यं वामदक्षिणे ॥ ८० ॥
परिधौ हीरकं चैव तीक्ष्णधाराविवर्जितम् ।
हस्तकंडं शशंभाव तंच पुरविश्वेक निर्मितम् ? ॥ ८१ ॥
तन्मध्ये पद्मरागं मरकं वामदक्षिणे ।
मुक्ताश्च वामदेशे तु शुद्धशृङ्खलमेवच ॥ ८२ ॥
हारकङ्कणनिबद्धं मध्यदण्डसकेवलम् ? ।
करपद्मं च तन्नाम करालङ्कार उत्तमः ॥ ८३ ॥

इतिनवग्रहकङ्कणम् ॥

रामचन्द्रं प्रवक्ष्यामि हस्तकाञ्चस्थितं सदा ।
तन्मध्ये च महादिव्यं माणिक्यं सूर्यसन्निभम् ॥ ८४ ॥
अष्टपत्रं क्षिपेद् गर्भे संकीर्णं हीरकैस्तथा ।
कर्णांश्च पूरयेत् सर्वं ? पत्रपत्रेष्वयं विधेः ॥ ८५ ॥
कलितं कलिकाभिश्च चामीकरं करं तथा ।
इदं खड्गं महादिव्यं सर्वपापप्रणाशनम् ॥ ८६ ॥
इतिरामचन्द्रखड्गम् ।

मस्तके मध्यतः कुर्यादुभयो र्हीरकं तथा ।
मृणालदण्डसदृशं कार्यं चैवाङ्गुलीयकम् ॥ ८७ ॥
इत्यङ्गुलिकम् ॥

मरकं पद्मरागं च हीरकं दक्षिणोत्तरे ।
हरिब्रह्मात्मकं नाम युगलं च तदुच्यते ॥ ८८ ॥
इति युगलाङ्गुलिकम् ॥

सोमकान्तिर्यदा मध्ये मरकं दक्षिणे स्थितम् ।
माणिक्यमुत्तरे देशे उक्तं त्रिपुरुषं च तत् ॥ ८९ ॥
इति टीकात्रिपुरुषम् ॥

मरकं पुष्परागश्च माणिक्यं मौक्तिकं तथा ।
हीरकं च यदा मध्ये आङ्गुष्ठं तत्सदाशिवः ॥ ९० ॥
इत्याङ्गुष्ठम् ॥

कनिष्ठां मुक्ताफलं चक्रसद्य इति प्रभा ।
मृणालदण्डसदृशं तदर्धाङ्गुलिकं कृतम् ॥ ९१ ॥
इत्यर्धाङ्गुलिकम् ॥

अन्योन्यतः स्थिते वज्रे तद्वारा प्राङ्मुखी तथा ।
सा विज्ञेया वज्रधारा इन्द्रकान्त ? द्युतिप्रभा ! ॥ ९२ ॥
इतिवज्रधारा ॥

शुद्धस्यान्ते मणी सर्वे निर्दोषा हेमसंयुताः ? ।
तस्यतुष्यन्ति देवा वै येन चाङ्गुलिका धृता ॥ ९३ ॥
इत्यङ्गुलिका ॥

सर्वरत्नमयं दिव्यं पूरितं हैरकैः कणैः ।
कुण्डलं तदिति प्राज्ञै र्वासुदे (स्तुवे) वे (दे) उदाहृतम् ॥ ९४ ॥
इतिकुण्डलम् ॥

पादाङ्गुलीषु सर्वासु मुद्रिका रत्नवर्जिताः ।
यः कुर्यादन्यथा मूढस्तत्पादौ छेदयेन्नृपः ॥ ९५ ॥
इति पादमुद्रिका ।

क्रोधलोभभयान्मोहात् पादे रत्नं करोति यः ।
करौ पादौ शिरस्तस्य छेद्यं भूपतिना तथा ॥ ९६ ॥

पादे तदा यदा राजा कुर्याद्रत्न विपर्ययम् ।
स पतेन्नरके घोरे यावद्‌भूतसंप्लवम् ॥ ९७ ॥
एतत्तु दक्षिणे भागे नृपै वै धार्यते सदा ।
कर्केतनं मरकतं लशुनं विद्रुमस्तथा ॥ ९८ ॥
धार्यते वामदेशे तु पूज्यं वै तत्तथा भवेत् ।
...................... ......गोसूत्रं मौक्तिकं तथा ॥ ९९ ॥
........................तथाऽन्यद्वज्रमुत्तमम् ।
एतत्तु सर्वदेहेषु धार्यमाणं न दुष्यते ॥ १०० ॥
मणी——————— तदूर्ध्वं चरणौ विना ।
पादेन स्पर्शयेद्रत्नं यो नरो देवनिर्मितम् ॥ १०१ ॥
स पतेन्नरके घोरे राजवध्यस्तथा भवेत् ।
——————————— ———— दीर्घजीवन: ॥ १०२ ॥
वनेचरा जलचरा कृमिकीटपतङ्गका: ।
कुर्यादाभरणं तेषु यदिच्छेज्जीवितं चिरम् ॥ १०३ ॥
——————————— ——————————— ।
——————————— ——————————— ॥ १०४ ॥
——————————— ——————————— ।
—————— ? लोमासुक्षितान्युत्क्षिप्तकानि च ॥ १०५ ॥
——————————— ——————————— ।
——————————— ——————————— ॥ १०६ ॥
——————————— ——————————— ।
——————————— ——————————— ॥ १०७ ॥
——————————— ——————————— ।
——————————— ——————————— ॥ १०८ ॥
मण्डलं देवरूपं च शान्तिमूर्तिः सदाशिवम् ।
उर: कण शिरो धार्यं तस्य तस्य———— ॥ १०९ ॥
——————————— ——————————— ।
———रूपाणि सर्वाणि आभरणान्यनेकधा ॥ ११० ॥
सूत्रधारेणाऽपि कार्यं शास्त्रेष्वभिहितं च यत् ।
हेमजं शुद्धसंबद्धं ग्राह्यं पत्रविचित्रकम् ॥ १११ ॥
शुद्धहेम तु तन्नाम ईदृग्मणिविभूषितम् ।
मुक्ताफलं तदा नाम द्विवृक्षं ? — सरे नृप: ? ॥ ११२ ॥
समस्तं हीरके बद्धं क्षेपकर्त ? मणाश्रयम् ? ।
हीरकं तु तदा नाम सदास्पदकरं नृपे ॥ ११३ ॥
पुष्पाकृति चेन्द्रतेजः सदा चेन्द्रस्य वल्लभम् ।
————सदागर्तेषु मरक्तं मणिपूरितम् ॥ ११४ ॥

हृत्कण्डमाग यस्य विपे तस्य विपो—— ?।
पुष्पाक्षं च तदा नाम देवस्यैव सदा प्रियम् ॥ ११५ ॥
गोमूत्रप्राशनं भस्म करे चैव तु मुद्रिका।
सुकाञ्चनं पार्थिवस्य पादलग्नं न दुष्यते ॥ ११६ ॥
————————— ——————————। (लुप्तम्)
षोडशाभरणान्येवं राजा वै धारयेत् सदा ॥ ११७ ॥

इति सूत्रसन्तानगुणकीर्तिप्रकाशप्रोक्तश्रीभुवनदेवाचार्योक्तापराजितपृच्छायां षोडशाभरणलक्षणाधिकारो नाम षट्त्रिंशदुत्तरद्विशततमं सूत्रम् ॥

# (२३७) तालवादित्रलक्षणं सप्तत्रिंशदुत्तरद्विशततमं सूत्रम् ॥

---

अपराजित उवाच—

पञ्चमोवेद इत्युक्तः श्रूयते गीतनामकः ।
तस्यानुक्रममाख्याहि प्राप्तिं रागगते स्तथा ॥ १ ॥
कतिभेदाश्च भावानां नादज्ञानामनुक्रमात् ।
प्रोक्तं नृत्यं कतिविधं कतिस्थानानि वारिका ? ॥ २ ॥
अङ्गानि चाङ्गहाराश्च कतितालाश्च हस्ततः ।
—————————— ———रसदृष्टिभिः ॥ ३ ॥
—————————— ——————————— ।
—————————— ——————————— ॥ ४ ॥
—————————— ——————————— ।
—————————— ——————————— ॥ ५ ॥
—————————— गीतनृत्यादिकं तथा ।
एतत्सर्वं समासेन कथयस्व प्रसादतः ॥ ६ ॥

विश्वकर्मोवाच—

शृणु वत्स प्रवक्ष्यामि परिपृष्टं च यत्त्वया ।
सर्वं च नृत्यगीतादे र्याथातथ्यं वदाम्यहम् ॥ ७ ॥
ऋग्वेदाद्याश्चतुर्वेदा गीतवेदोऽथ पञ्चमः ।
तस्यानुक्रमयुक्तिं च शृणु त्वेकाग्रमानसः ॥ ८ ॥
तमृते देवा न हर्षन्त्यानन्दानतमस्तकाः ।
अनङ्गागमरूपाख्यं महाशास्त्रमुदाहृतम् ॥ ९ ॥
नव नाट्ये रसा भिन्ना महामोहोत्सवात्मकाः ।
तदनुक्रमं प्रवक्ष्यामि भुवनदेवभाषितम् (विश्वकर्मप्रकाशितम्) ॥ १०
अनन्तरं ततो वक्ष्ये तालमानं च लक्षणम् ।
यतः प्रवर्तते वाद्यं रथे वै पथिका यथा ॥ ११ ॥
समस्तं वै तालवाद्यं तालहीनं न विद्यते ।
तालहीनं तथा वाद्यं चक्षुर्हीनो यथा नरः ॥ १२ ॥
करहीना यथा शक्तिं विना मन्त्रैश्च राज्यकम् ।
तालहीनं तथा वाद्यमावासो दीपकै विना ॥ १३ ॥
ताल आद्यः समस्तेषु रूपके नृत्यशासने ।
तालाश्चत्वार आद्यश्च प्रकृति र्मध्यमस्तथा ? ॥ १४ ॥
पादपाणिसुनुत्राणा देहदृष्टिविकारयोः ।
भंडवृत्त्योर्बलालक्ष्यं तालमानमविद्यते ॥ १५ ॥ ?

